उपसंहारः—

तस्मात्सत्यज्ञानानन्दात्मकं निर्गुणमुदासीनं ब्रह्म वेदान्तार्थ इति सिद्धम्। सत्यज्ञानसुखस्वरूपममृतं शुद्धाद्वितीयं परं वेदान्तैकविनिश्चयं हरिहरश्रुत्यादिसंशब्दितम्। ब्रह्माम्नायवचोविचारविदितं चिद्रूपमन्यादृशं तद्वेद्यो विभवः परं मरुपयस्तुल्यो दुरूहो हरेः॥ इति श्री तृतीयः परिच्छेदः।

प्रतिपाद्यविषयः—

2893 कोशवत्।

वक्तव्यविशेषः—

अत्र कोशे बहुषु स्थलेषु पत्रस्फोटो वर्तते।

## 1210 अद्वैतदीपिका

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—64 |
| प्रमाणम्—17 × 1½ अङ्गुलानि | कालः (कोशश्च)—प्राचीनः |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिलः [समग्रः |
| पत्राणि—64 | समग्रोऽसमग्रो वा—प्रथमः परिच्छेदः |

उपक्रमः—

शोकमात्मविदित्युपक्रान्तस्यात्मनो यः सत्येनातिवदतीति सत्यशब्देनानुकृष्टस्य तद्विज्ञानसाधारणाद्युपन्यासपूर्वकं सुखं त्वेव विजिज्ञासितव्यमिति सुखात्मतयोपन्यस्तस्य।

उपसंहारः—

योऽहमस्वाप्सं यस्य ममाज्ञानं संसारश्च सोऽहं निर्दुःखाद्भिन्न इत्यज्ञानसंसारयोराश्रयस्यैव ततो भेदावगमात् संसाराद्याधारानाधारयोरेव हि भेदे आवयोर्विवादः न तु चैतन्यः. . . .न्याद्भेदः,

ईश्वरस्यापि जीवाद्भेदे ममैवांशो जीवलोक इत्यादितद्वचनानुमित . . . प्रत्यक्षं प्रमाणम्। अनुमानमपि जीवब्रह्म . . .

प्रतिपाद्यविषयः—

2893 कोशवत्।

वक्तव्यविशेषः—

अत्यन्तशिथिलोऽयं कोशः, मध्ये पत्रस्फोटश्च विद्यते।

## 4645 अद्वैतदीपिका

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—100 |
| प्रमाणम्—$20\frac{3}{4} \times 1\frac{7}{8}$ अङ्गुलानि | कालः (कोशश्च)—प्राचीनः |
| लिपिः—आन्ध्रलिपिः | स्थितिः—मध्यमस्थितिः |
| पत्राणि—109 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

न चानुभवो नु गुणः कस्यचिद्गुणिनोऽनिरूपणात्। जानामीत्यहंकाराश्रयत्वप्रतीतेश्च वृत्तिविषयत्वात्। स्यादेतत्। अनुभव उपलब्धिरिति पर्यायः। उपलब्धिश्च।

उपसंहारः—

उद्देश्यविधेयभावाभावात् ब्रह्मस्वरूपासिद्धिरिति तन्न, यच्छिद्रं तत्सुखमित्यादिवत् भेदभ्रमदशायां यत्सत् ज्ञानमानन्द . . . . .

प्रतिपाद्यविषयः—

2893 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थोपक्रमो नास्ति। आदितस्त्रयः परिच्छेदाः वर्तन्ते। चतुर्थश्चासमग्रः।

## 3957/2 अद्वैतदीपिका

ग्रन्थकर्ता—नृसिंहाश्रमी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\frac{1}{4}\times1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—130-166
प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)—प्राचीनः
स्थितिः—किंचिच्छिथिलः
समग्रोऽसमग्रो वा—प्रथमपरिच्छेदे वृत्तिनिर्गमविचारान्तः

उपक्रमः—

2893 कोशवत्।

उपसंहारः—

एतेन कार्यत्वे सति विभुसमवेतत्वं सामान्यवत्त्वे सति विभुसमवेतत्त्वं वा ज्ञाने गुणत्वहेतुः प्रत्युक्तः नित्यानुभवस्य गुणत्वे वा तदाश्रया नित्यज्ञानसमवायो न स्यात्। प्रत्यक्षद्रव्ये एकजातीयप्रत्यक्षविशेषगुणद्वयस्य युगपदनेकावच्छेदेनैकत्रासमवायात्। अत एव न शब्दे व्यभिचारः। प्रत्यक्षात्मगुणस्य स्वसमानाधिकरणस्वसमा . . .

प्रतिपाद्यविषयः—

2893 कोशवत्।

वक्तव्यविशेषः—

2893 कोशवत्।

## 3562 अद्वैतदीपिकाविवरणम्

ग्रन्थकर्ता—नारायणाश्रमी
पत्रविशेषः— ताळपत्रात्मकः
प्रमाणम्—$19\times1\frac{5}{8}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—257
प्रतिपुटं पङ्क्तयः—28
प्रतिपङ्क्त्यक्षराणि—72
कालः (कोशस्य)—अतिप्राचीनः
स्थितिः—शिथिलः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यज्जिज्ञासा यज्ञदानादिभिः स्यात् श्रुत्या मत्या चिन्तया यत्प्रबोधः। यस्मिन्बुद्धे बाध्यतेऽनर्थमूलं तं भूमानं भावये स्वस्वरूपम् ॥ (1)

चेतश्चापलमिन्द्रियार्थविषयं त्यक्त्वा भजस्वाभयं संसारार्णवतारकं नरहरेः पादाब्जरेणुप्लवम्। यो ध्यातो दितिजेन्द्रजालकमयः सिन्दोर्गतं पर्वतैः आक्रान्तं सितमुग्रभोगिभिरनायासेन परोऽकरोत् ॥ (2) यत्पाद-सेवा वितनोति पापं पुण्यं रिपुं मित्रमनेकमेकम्। अणुं महान्तं तमाचिन्त्यवृत्तं श्रीनारसिंहं गुरुमानतोऽस्मि ॥ (3) . . . . (7) प्रारीप्सितस्य प्रकरणस्य निर्विघ्नपरिसमाप्तिप्रचयगमनाभ्यां शिष्टाचार-परिपालनाय च प्रकरणप्रतिपाद्याद्वितीयात्मतत्त्वस्य चेतस्याविर्भाव-प्रार्थनालक्षणं मङ्गळं कुर्वन्नर्थात्प्रकरणस्य संबन्धाधिकारिविषयप्रयोज-नानि निर्दिशति यस्मादिति।

उपसंहारः—

वस्तुतः अत्र मे न किंचिदेनोऽवद्यमित्यर्थः। नानावादिनिराकरणेन स्वमतनिष्कर्ष . . . .। ग्रन्थस्य गुर्वनुग्रहादेव समाप्तत्वात् गुरु—भिपूजयति कियदपीति। ईषदपीत्यर्थः। तदपि न श्रद्धया किं तु निमित्तान्तरादित्याह—प्रसङ्गादिति। यदम्भः परिपीतं एतच्छमयत्वि-त्यन्वयः। अन्येषां किमित्येतादृशगुर्वनुग्रहो नेति शङ्कां निराकुर्वन् तस्येश्वरप्रसादलभ्यतया अतिदुर्लभतामाह अहमिति। इति परमहंस-परिव्राजकाचार्यश्रीभगवन्नृसिंहाश्रमपूज्यपादशिष्यश्रीनारायणाश्रमिविर—चिते अद्वैतदीपिकाविवरणे आनन्ददीपिकाख्यश्चतुर्थः परिच्छेदः।

प्रतिपाद्यविषयः—

अद्वैतदीपिकाविवरणरूपेऽस्मिन् ग्रन्थेऽपि तत्प्रतिपाद्या एव "साक्षि-विवेकः, जीवेशादिभेदनिरासः, तत्पदार्थनिरूपणं, महावाक्यार्थमुख्य-तात्पर्यभूतब्रह्मनिरूपणं," इत्येते विषयाः परिच्छेदचतुष्टयेषु प्रतिपाद्यन्ते, ग्रन्थार्थश्च स्पष्टीक्रियते।

वक्तव्यविशेषः—

अयं ग्रन्थः मुद्रितः। एभिरेव भेदधिक्कारसत्क्रियाप्रभृतीनि ग्रन्थरत्नानि विरचितानीति प्रतिभाति। एते च श्रीमदप्पय्यदीक्षित-समकालीना इति सम्प्रदायाविदो वदन्ति।

## 171/1 अद्वैतदीपिकाविवरणम्

ग्रन्थकर्ता—नारयणाश्रमी
पत्रविशेष:—ताळपत्रात्मक:
प्रमाणम्—17×1½ अङ्गुलानि
लिपि:—आन्ध्रलिपि:
पत्राणि—96
प्रतिपुटं पङ्क्तय:—18
प्रतिपङ्क्त्यक्षराणि—78
काल: (कोशस्य)—प्राचीन:
स्थिति:—समीचीन:
समग्रोऽसमग्रो वा—द्वितीयपरिच्छेदमात्रम्

उपक्रम:—

आद्यपरिच्छेदे लाघवाद्युपोद्बलितानुमानादिना अहमर्थातिरिक्त एक: कूटस्थो निर्विकल्पश्चिद्रूप आत्मा इत्युक्तं तदयुक्तम्; जीवेश्वरयोर्जीवानां च परस्परं भेदग्राहकप्रत्यक्षादिप्रमाणविरोधेन लाघवाद्यनवतारात्, इत्याक्षेपनिरासाय भेदमिथ्यात्वं निरूपयितुं परिच्छेदान्तरमारभमाण: तदर्थं प्रदर्शयन् नृसिंहं प्रार्थयते—नरहरीति ।

उपसंहार:—

इत्येतद्द्योतयन् ईश्वरं भजते—यन्माययेति । वस्तुत: सदानन्दैकविग्रहो हरिरप्यहं यन्मायया पृथग्भूतस्तं भजे इत्यर्थ: । इति श्रीमत्परमहंसपरिव्राजकाचार्य भगवन्नृसिंहाश्रमपूज्यपादशिष्य नारायणाश्रमिविरचिते अद्वैतदीपिकाविवरणे द्वितीय: परिच्छेद: समाप्त: ॥

प्रतिपाद्यविषय:—

3562 कोशवत् ।

वक्तव्यविशेष:—

3562 कोशवत् ।

## 387 अद्वैतदीपिकाविवरणम्

ग्रन्थकर्ता—नारायणाश्रमी
पत्रविशेष:—ताळपत्रात्मक:
प्रमाणम्—15½×1½ अङ्गुलानि
लिपि:—आन्ध्रलिपि:
पत्राणि—187
प्रतिपुटं पङ्क्तय:—20
प्रतिपङ्क्त्यक्षराणि—66
काल: (कोशस्य)—प्राचीन:
स्थिति:—शिथिल:
समग्रोऽसमग्रो वा—समग्र:

उपक्रमः—

3562 कोशवत् ।

उपसंहारः—

3562 कोशवत् ।

प्रतिपाद्यविषयः—

3562 कोशवत् ।

वक्तव्यविशेषः—

3562 कोशवत् ।

## 3404 अद्वैतदीपिकाविवरणम्

| | |
|---|---|
| ग्रन्थकर्ता—नारायणाश्रमी | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—70 |
| प्रमाणम्—$14\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—प्राचीनः |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिलः |
| पत्राणि—144 | समग्रोऽसमग्रो वा —द्वितीयपरिच्छेदमात्रम् |

उपक्रमः—

त्वदीयपादाम्बुजयोर्मनो . . . मे भृङ्गायतां . . . . . .
किङ्करस्य । . . . . . . . . . . . तत एव भूयात् ॥ (1)
. . . . . स मे नृसिंहो यतिराट् परा गतिः ॥ अतीतपरिच्छेदे लाघवाद्युपोद्बलितानुमानादिना अहमर्थातिरिक्त एकः कूटस्थो निर्विशेषश्चिद्रूप आत्मेत्युक्तं तदयुक्तम् ।

उपसंहारः—

171/1 कोशवत् ।

प्रतिपाद्यविषयः—

3562 कोशवत् ।

वक्तव्यविशेषः—

3562 कोशवत् ।

## 3957/1 अद्वैतदीपिकाविवरणम्

ग्रन्थकर्ता—नारायणाश्रमी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—129

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)—प्राचीनः
स्थितिः—किंचिच्छिथिलः
समग्रोऽसमग्रो वा—प्रथमपरिच्छेदः समग्रः

उपक्रमः—

3562 कोशवत्।

उपसंहारः—

प्रति प्रातिलोम्येन अञ्चति प्रकाशते इति प्रत्यक्शब्दार्थः। स चा . . निरूपितस्वरूप एवेत्याह—अस्येवेति। त्वंपदार्थशोधन-मुपसंहरति तस्मादिति इति श्रीमत्परमहंसपरिव्राजकाचार्य भगवन्नरहर्याश्रमपूज्यपादशिष्यनारायणाश्रमिविरचिते अद्वैतदीपिकाविवरणे प्रथमः परिच्छेदः समाप्तः।

प्रतिपाद्यविषयः—

3562 कोशवत्।

वक्तव्यविशेषः—

3562 कोशवत्।

## 4653 अद्वैतदीपिकाविवरणम्

ग्रन्थकर्ता—नारायणाश्रमी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$14 \times 2\frac{3}{8}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—395

प्रतिपुटं पङ्क्तयः—30
प्रतिपङ्क्त्यक्षराणि—68
कालः (कोशस्य)—प्राचीनः
स्थितिः—समीचीनः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3562 कोशवत्।

उपसंहार:—

3562 कोशवत् ।

प्रतिपाद्यविषय:—

3562 कोशवत् ।

वक्तव्यविशेषः—

3562 कोशवत् ।

## 4870 अद्वैतप्रकाशप्रकरणम्

ग्रन्थकर्ता—महादेवः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—14 × 1¼ अङ्गुलानि
लिपि:—आन्ध्रलिपिः
पत्राणि—34
प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—68
कालः (कोशस्य)—
स्थितिः—समीचीनः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

अन्तर्यामितया स्वान्ते वहिराचार्यरूपधृत् ।
सर्वेषां प्रेरको यः स्यान्नियन्तारं नमाम्यहम् ॥
अगजाननपद्मार्कं गजाननमहर्निशम् ।
अनेकदं तं भक्तानामेकदन्तमुपास्महे ॥

वेदशास्त्रपुराणस्मृत्यादिषु यत्सारभूतोऽर्थः तत्सर्वजनानामवगतार्थं करतलामलकसद्गुरुशिष्यसंवादेन श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्यसंप्रदायकरघुनाथेन्द्रशिष्यरघुनायकस्य शिष्येण महादेवेन विरचितोऽयं ग्रन्थः ।

तापत्रयार्कसंतप्तः काश्चिदुद्विग्नमानसः ।
शमादिसाधनैर्युक्तः सद्गुरुं परिपृच्छति ॥
अनायासेन येनास्मान्मुच्येयं भवबन्धनात् ।
तन्मे संक्षिप्य भगवन् केवलं कृपया वद ॥
स्वाधीते वचनव्यक्तिः प्रतिभाति वदामि ते ।
परया मोक्षया बुद्धया सावधानमनाः शृणु ॥

हे शिष्य भवबन्धमोचनार्थं अपुनरावृत्तिमुक्तिप्राप्त्यर्थं साधनत्रयमस्ति। प्रथमसाधनं सत्कर्मानुष्ठानम्। द्वितीयं साधनमुपासना भगवद्भक्तिः। तृतीयसाधनं स्वस्वरूपविषयकज्ञानम्।

उपसंहारः—

यो मुमुक्षुः उक्तप्रकारेण वा गुरुमुखात् स्वस्वरूपं जानाति स सर्वदा स्वस्वरूपस्थितेनैव तिष्ठति। स एव शुद्धमोक्षज्ञानी। स एव लब्धसाक्षात्कारवान्। स एव धन्यः। स एव कृतकृत्य इत्यवगन्तव्यम्। इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्यशिष्यरघुनायकशिष्य शिवनुतमहादेवेन विरचितं सकलवेदान्तशास्त्रसिद्धान्ताद्वैतप्रकाशप्रकरणं समाप्तम्।

प्रतिपाद्यविषयः—

गुरुशिष्यसंवादरूपेण रचितेऽस्मिन्प्रकरणे सत्कर्मानुष्ठानं उपासना स्वस्वरूपज्ञानमित्येवमन्तरङ्गभूतसाधनत्रयेण उत्तरोत्तरं मुख्यभूतेन स्वरूपप्राप्तिलक्षणो मोक्षो भवतीति संक्षेपेण प्रतिपाद्यते।

वक्तव्यविशेषः—

गुरुशिष्यपरंपरया अयं ग्रन्थकर्ता उपक्रमग्रन्थानुसारेण श्रीमच्छंकराचार्यात् द्व्यन्तरित इति उपसंहारग्रन्थानुसारेण एकान्तरित इत्यपि प्रतिभाति। अयं ग्रन्थः अमुद्रितः।

## 4171 अद्वैतपञ्चरत्नम्

### (किरणावळीव्याख्यासमेतम्)

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः, व्याख्याता बालकृष्णानन्दसरस्वती | पत्राणि—1-13 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपुटं पङ्क्तयः—22 |
| प्रमाणम्—$13\frac{1}{2} \times 2\frac{1}{8}$ अङ्गुलानि | प्रतिपङ्क्त्यक्षराणि—68 |
| लिपिः—आन्ध्रलिपिः | कालः (कोशस्य)— |
| | स्थितिः—समीचीनः |
| | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मन्दस्मितमुखाम्भोजं रमालङ्कृतवक्षसम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

गुरुपादाम्बुजद्वन्द्वध्याननिर्मलमानसः ।
आरभे (आरचे) पञ्चरत्नस्य विवृत्तिं किरणावळीम् ॥

इह खलु परमकृपालवो भगवन्तो भगवत्पादाः निखिललोकं संसारदावानलपरिपीडितमुपलभ्यात्मज्ञानामृतमेव तदुपशमनं सुखसाधनं चाहुः। युक्तं च तत्। तस्यैव तन्मूलाविद्यानिवर्तकत्वेन तन्निवर्तकत्वात्। तदेव खलु साधकम्, अन्यस्य तत्साधकत्वानुपपत्तेः। तथाहि न धर्मः सुखसाधकः; तत्फलस्यानित्यत्वेनासुखत्वात्।

उपसंहारः—

नचानन्दस्य स्वतः सिद्धरूपत्वेन प्रारब्धस्य क्षयानन्तरं ब्रह्मानन्दात्मना स्थितिप्रतिपादकमूलकारवाक्यविरोध इति वाच्यम्; स्वत एव पूर्वं ब्रह्मात्मना स्थितस्यापि जीवस्य अविद्यामहिम्ना भिन्नवत् स्थितस्य सकार्यतन्निवृत्तौ "अथ परब्रह्मात्मना स्थीयतामिति वक्तुं शक्यत एव। पूर्वं तदवस्थाया एव शुक्तेः स्वाज्ञानमहिम्ना अतथाभूतवत्स्थितायाः तन्निवृत्तौ स्वरूपापत्तिरिवेति न कोऽपि दोष इति सङ्क्षेपः॥

अज्ञातं ब्रह्मतत्त्वं ये ज्ञातुमिच्छन्ति ते बुधाः (नराः)।
समाश्रयन्तु सततं किरणावळिमादरात् ॥

मदीयकृतिमध्ये यो भूषणं दूषणं जनः।
विचार्यैव वदेत्तस्मै महते विधये नमः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याद्वैतविद्याचार्य श्रीमत्सच्चिदानन्दयोगीन्द्रचरणकमलयुगभृङ्गायमानमानसबालकृष्णानन्दसरस्वती--विरचिता अद्वैतपञ्चरत्नव्याख्या किरणावळी संपूर्णा।"

प्रतिपाद्यविषयः—

श्रीमच्छंकराचार्यविरचितस्य "वेदो नित्यमधीयताम्" इत्यादेरद्वैतपञ्चरत्नस्य व्याख्यानरूपोऽयं ग्रन्थः। अस्मिन्ग्रन्थे धर्मादीनां

अज्ञाननिवृत्तौ साधनत्वं निराकृत्य ज्ञानस्यैव तत्साधनत्वं तत्संपादनप्रकारश्च सम्यक्प्रतिपाद्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## 5050 अद्वैतपञ्चरत्नम्

### (किरणावळीव्याख्यासमेतम्)

ग्रन्थकर्ता—शंकराचार्यः, व्याख्याता बालकृष्णानन्दसरस्वती
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$15\frac{3}{4} \times 8\frac{3}{8}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1–25
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)—
स्थितिः—समीचीनः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

4171 कोशवत्।

उपसंहारः—

4171 कोशवत्।

प्रतिपाद्यविषयः—

4171 कोशवत्।

वक्तव्यविशेषः—

4171 कोशवत्।

## 3342 अद्वैतभूषणम्

ग्रन्थकर्ता—बोधेन्द्रयतिः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—186
प्रतिपुटं पङ्क्तयः—60
प्रतिपङ्क्त्यक्षराणि—58
कालः (कोशस्य)—प्राचीनः
स्थितिः—किंचिच्छिथिलः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः--

यस्मिन्नध्यस्तमेतद्वियदनिलमुखं विश्वमाभात्यबोधात्
पाथःपूरो गभस्तिष्विव मरुधरणीसंश्रितेष्वब्जबन्धोः ।
तन्मे वेदान्तविद्या हृदि सततलसन्नित्यनिर्द्वन्द्वरत्नं
विद्यैकप्राप्यमाशु स्फुरतु हृदि सुखज्ञानसत्यात्मरूपम् ॥ (1)-(7)

टीकातन्मूलभाष्यादीन् सम्यग्बोधेन्द्रसंयमी ।
आलोच्य तत्त्वं संगृह्य करोत्यद्वैतभूषणम् ॥

ओं । धर्मजिज्ञासासूत्रे ह्येतदवस्थितम् । स्वाध्यायोऽध्येतव्य इत्यध्ययनविधेरदृष्टार्थत्वमुत दृष्टार्थत्वमिति विशये विधिवशाददृष्टार्थत्वम् । न च फलाभावः; विश्वजिन्नयायेन स्वर्गस्य, रात्रिसत्रन्यायेनार्थवादिकघृतकुल्यादेर्वा फलत्वोपपत्तेः ।

उपसंहारः—

नच वैपरीत्यम् ; वेदान्तानां तत्त्वावेदकत्वाभावे व्यवहारातीतत्वेनोभयथा प्रामाण्यहानिप्रसङ्गात् । कर्मकाण्डस्य तत्त्वावेदकत्वाभावेऽपि व्यावहारिकं प्रामाण्यमिति सर्ववेदप्रामाण्यसिद्धमित्यद्वैतस्य निरस्तसमस्तावद्यत्वात्तदेव श्रेयोऽर्थिभिरादरेणोपादेयमिति नवमवर्णकार्थनिरूपणं सिद्धम् । (1)-(2)

नवानां वर्णकानां च अकरोत्सारसंग्रहम् ।
अद्वैतभूषणं नाम विदुषां प्रीतयेऽधुना ॥ (3)

बोधेन्द्रयतिना सम्यक्कृतमद्वैतभूषणम् ।
श्रीकृष्णप्रीतये भूयाद्विदुषां कर्णभूषणम् ॥ (4)

गीर्वाणेन्द्राय यतये गुरवे परमात्मने ।
नमस्तुभ्यं नमस्तुभ्यं श्रेयसे भूयसे हि नः ॥ (5)

प्रतिपाद्यविषयः—

अथातो ब्रह्मजिज्ञासेत्यारभ्य, तत्तु समन्वयादित्यन्तेषु चतुर्ष्वधिकरणेषु वर्णकनवकात्मना भाष्यतद्व्याख्यानाभ्यां प्रतिपादितोऽर्थः अस्मिन्ग्रन्थे नवसु वर्णकेषु संगृह्य सुलभया शैल्या प्रतिपाद्यते ।

वक्तव्यविशेषः—

अयं ग्रन्थः अमुद्रितः भाष्यादिप्रतिपादितस्य तावतोऽप्यर्थस्य संग्राहको व्युत्पित्सूनामत्यन्तोपकारक इति च प्रतिभाति ।

## A/741 अद्वैतभूषणम्

ग्रन्थकर्ता—बोधेन्द्रयतिः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13 × 8 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—180

प्रतिपुटं पङ्क्तयः—40
प्रतिपङ्क्त्यक्षराणि—14
कालः (कोशस्य)—
स्थितिः—समीचीनः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3342 कोशवत् ।

उपसंहारः—

3342 कोशवत् ।

प्रतिपाद्यविषयः—

3342 कोशवत् ।

वक्तव्यविशेषः—

3342 कोशवत् ।

## 2293 अद्वैतमकरन्दव्याख्या (रसाभिव्यञ्जिकाख्या)

ग्रन्थकर्ता—स्वयंप्रकाशयतिः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—24

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—62
कालः (कोशस्य)—
स्थितिः—समीचीनः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

नित्यं निरन्तरानन्दं चिद्घनं ब्रह्म निर्भयम् ।
श्रुत्या तर्कानुभूतिभ्यामहमस्म्यद्वयं सदा ॥ 1-5

इह खलु लक्ष्मीधरो नाम कश्चित्कवीन्द्रो निरन्तरनित्यानुष्ठानशुद्धस्वान्ततया संजातविवेकवैराग्यशमदमादिमुमुक्षावतः आत्मविविदिषया संत्यक्तलोकवेदधर्मवतः गुरुवरचरणोपसर्पणपुरःसरं विधिवत्सम्यक् श्रुतवेदान्ततत्त्वेऽपि असंभावनया प्रतिबद्धज्ञानतया अपरितुष्यतः कांश्चित्पुरुषधौरेयान् उपलभ्य संजातकरुणः तेषां करतलबिल्वफलवत् स्फुटं दान्तप्रतिपाद्यं ब्रह्म सच्चिदानन्दलक्षणं सर्वज्ञं सर्वोपादानं नित्यं सर्वगम यं देहेन्द्रियप्राणमनोबुध्यहंकारसाक्षिप्रत्यगभिन्नतया तर्कैः संभावयितु किंचित्प्रकरणमद्वैतमकरन्दाख्यमारभमाणः चिकीर्षितस्य तस्य अविघ्नपरिसमाप्तये स्वेष्टदेवताप्रणामरूपं मङ्गळं स्वयमनुष्ठाय शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति—कटाक्षेति ।

उपसंहारः—

यद्यप्यत्र प्रतिश्लोकं बहुवक्तव्यमस्ति तथापि मन्दबुद्धीनामलसानां व्युत्पादनार्थं प्रवृत्तेन मया ग्रन्थकाठिन्यगौरवभयादुपरतमिति ।

अद्वैतमकरन्दस्य रसाभिव्यञ्जिका कृता ।
स्वयंप्रकाशयतिना पुरुषोत्तमशासनात् ॥ (1)
ब्रह्मानन्दरसास्वादमिच्छद्भिर्विबुधोत्तमैः ।
रसाभिव्यञ्जिका ह्येषा परिशील्य सदादरात् ॥ (2)
तापत्रयार्कसंतप्ता मोक्षकामा मुदा सदा ।
रासाभिव्यञ्जिकागङ्गामग्ना भवत सत्तमाः ॥ (3)

अद्वैतमकरन्दटीका समाप्ता ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे दृढवैराग्यवतः ज्ञानोत्पत्तिद्वारा मोक्षो भवतीत्येतत्संक्षिप्य प्रतिपाद्यते ।

वक्तव्यविशेषः—

श्रीलक्ष्मीधरकविविरचिताद्वैतमकरन्दग्रन्थस्य व्याख्यारूपोऽयं ग्रन्थः मुद्रितश्च दृश्यते । अत्र कोशे मूलं च वर्तते ।

## 2259/2 अद्वैतमकरन्दव्याख्या (रसाभिव्यञ्जिकाख्या)

ग्रन्थकर्ता—स्वयंप्रकाशयतिः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$14\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–20

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—प्राचीनः
स्थितिः—समीचीनः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

2293 कोशवत् ।

उपसंहारः—

2293 कोशवत् ।

प्रतिपाद्यविषयः—

2293 कोशवत् ।

वक्तव्यविशेषः—

2293 कोशवत् ।

## 999/3 अद्वैतमकरन्दव्याख्या (रसाभिव्यञ्जिकाख्या)

ग्रन्थकर्ता—स्वयंप्रकाशयतिः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$14\frac{1}{8} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—48–73

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—प्राचीनः
स्थितिः—समीचीनः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

2293 कोशवत् ।

उपसंहारः—

2293 कोशवत् ।

प्रतिपाद्यविषय:—

2293 कोशवत् ।

वक्तव्यविशेषः—

2293 कोशवत् ।

## C 1526 अद्वैतमकरन्दव्याख्या (रसाभिव्यञ्जिकाख्या)

ग्रन्थकर्ता—स्वयंप्रकाशयति:
पत्रविशेषः—कागदपत्रात्मक:
प्रमाणम्—$9\frac{1}{2} \times 5\frac{3}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपि:
पत्राणि—16
प्रतिपुटं पङ्क्तयः—36
प्रतिपङ्क्त्यक्षराणि—34
कालः (कोशस्य)—प्राचीन:
स्थितिः—समीचीन:
समग्रोऽसमग्रो वा—समग्र:

उपक्रम:—

2293 कोशवत् ।

उपसंहार:—

2293 कोशवत् ।

प्रतिपाद्यविषय:—

2293 कोशवत् ।

वक्तव्यविशेष:—

2293 कोशवत् ।

## B 278/2 अद्वैतमकरन्दः

ग्रन्थकर्ता—लक्ष्मीधरकवि:
पत्रविशेष:—कागदपत्रात्मक:
प्रमाणम्—$7\frac{1}{2} \times 4\frac{3}{4}$ अङ्गुलानि
लिपि:—मलयाळलिपि:
पत्राणि—33-50
प्रतिपुटं पङ्क्तय:—22
प्रतिपङ्क्त्यक्षराणि—14
काल: (कोशस्य)—प्राचीनः
स्थितिः—समीचीन:
समग्रोऽसमग्रो वा—समग्र:

उपक्रमः—

नित्यं निरन्तरानन्दं चिद्घनं ब्रह्म निर्मलम् ।
श्रुत्या तर्कानुभूतिभ्यामहमस्म्यद्वयं सदा ॥
कटाक्षकिरणाचान्तनमन्मोहाब्धये नमः ।
अनन्तानन्दकृष्णाय जगन्मङ्गळमूर्तये ॥
अहमस्मि सदा भामि कदाचिन्नाहमप्रियः ।
ब्रह्मैवाहमतः सिद्धः सच्चिदानन्दलक्षणम् ॥

उपसंहारः—

परोक्षतापरिच्छेदशाबल्यापोहनिर्मलम् ।
तदसीति गिरा लक्ष्यमहामेकरसं महः ॥ (27)
उपशान्तजगज्जीवशिष्याचार्येश्वरभ्रमम् ।
स्वतःसिद्धमनाद्यन्तं परिपूर्णमहं महः ॥ (28)
लक्ष्मीधरकवेः सूक्तिशरदम्भोजसंभृतः ।
अद्वैतमकरन्दोऽयं विद्वद्भृङ्गैर्निपीयताम् ॥ (29)

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे एकोनत्रिंशद्भिः श्लोकैः संक्षेपेण अद्वैतविषयः प्रतिपाद्यते ।

वक्तव्यविशेषः—

अत्र कोशे स्वयंप्रकाशयतिविरचितरसाभिव्यञ्जिकाख्यव्याख्यायाः मलयाळलिप्या द्राविडभाषया परिवर्तनं विद्यते मुद्रितश्च ।

## 3353 अद्वैतमुकुरः

| | |
|---|---|
| ग्रन्थकर्ता -- रङ्गराजदीक्षितः | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—$15 \times 1\frac{5}{8}$ अङ्गुलानि | कालः (कोशस्य)—प्राचीनः |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिलः |
| पत्राणि—6–95 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

प्राप्तप्रणयनान्तरपरत्वमितिचेत् मैवम्; युज्यते खल्वनुवादपरिहाराय द्वयोः प्रणयन्तीति . . . . . . . . . त्वद्वैतवाक्यविरोधान्न द्वैतवाक्यस्य परमार्थसत्यत्वपरत्वं कल्पयितुं युक्तम्, वैपरीत्यंश . . . . . . . . . करिष्यते । न चानुवादभयान्मानान्तर . . . . . . र्थपरत्वं कल्पयितुं शक्यम्, दृश्यते खल्वनुवादोऽपि "सूर्य एकाकी चरति, अग्निर्हिमस्य भेषजम्" इत्यादिः। न च "सत्यं ज्ञानमनन्तम्" इत्यादिश्रुतेः कालानवच्छेदेन सत्यत्वबो . . . . . यां परमार्थसत्यत्वपरत्वे किञ्चिन्मानं विरुद्ध्यते । न च भ्रमाधिष्ठानत्वादिलिङ्गसिद्धसत्यत्वानुवादकत्वं तत्सत्यमित्यादिश्रुतेरिति वाच्यम्; श्रुतिगस्येऽर्थे . . नुग्राहकतयैव लिङ्गप्रामाण्यस्वीकारेण स्वातन्त्र्यानभ्युपगमात् ।

उपसंहारः—

यत्पुनराह परः, अस्तु वा अनिरूप्यत्वाद्यनुमितेः प्रत्यक्षबाधकत्वमुपजीव्यव्याप्तिप्रत्यक्षाद्यविरुद्धत्वात् धर्मिग्राहकाबाधितत्वाच्च। प्रपञ्चमिथ्यात्वानुमितिस्तु उपजीव्यव्याप्तिप्रत्यक्षादिविरुद्धत्वात् धर्मिग्राहकमानबाधित्वाच्च न प्रत्यक्षबाधिकेति तदप्युक्तरीत्यैव निरस्तं हि नोपजीव्यविरोधो न धर्मिग्राहकमानबाधितश्चेति । तस्मात्प्रत्यक्षमपि सद्ग्राहि . . मते परम . . . . . . . स्य कटाक्षेणापि नेक्षितुम् । तदेवम्

प्रत्यक्षादनुमानाद्वा याच्चिकेतादिवाक्यतः ।
वियदादिप्रपञ्चस्य पारमार्थ्यं न सिध्यति ॥

इति श्रीसर्वतोमुखमहाव्रतयाजी श्रीमदाच्चादीक्षितसूनोः विश्वजिद्याजिनः श्रीरङ्गराजदीक्षितस्य कृतौ अद्वैतमुकुरे प्रमाणभावप्रतिफलनं नाम प्रथमः परिच्छेदः ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे प्रत्यक्षानुमानश्रुतिप्रमाणैः प्रपञ्चस्य सत्यत्वं आशङ्क्य, सत्यं ज्ञानमित्यादिप्रबलश्रुतिभिः स्वपक्षसाधकपरपक्षबाधकतर्कैश्च प्रपञ्चस्य मिथ्यात्वं समर्थ्यते ।

वक्तव्यविशेषः—

अयं ग्रन्थः श्रीमदप्पय्यदीक्षितपित्रा श्रीरङ्गराजाध्वरिणा विरचितः। अस्मिंश्च प्रपञ्चसत्यत्वे द्वैतिभिरुदाहृतानि प्रमाणानि प्रतिप्रमाणोपन्यास-पूर्वकं खण्डशः निराक्रियन्ते। प्रथमपरिच्छेदावसान एवोपरतोऽयं कोशः। कुत्राप्यमुद्रितः।

## A/769 अद्वैतमुकुरः

ग्रन्थकर्ता—रङ्गराजदीक्षितः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$13\frac{1}{4} \times 8\frac{1}{2}$ अङ्गुलानि
लिपिः—कन्नडलिपिः
पत्राणि—168
प्रतिपुटं पङ्क्तयः—21
प्रतिपङ्क्त्यक्षराणि—24
कालः (कोशस्य)—1933
स्थितिः—समीचीनः
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

3353 कोशवत्।

उपसंहारः—

3353 कोशवत्।

प्रतिपाद्यविषयः—

3353 कोशवत्।

वक्तव्यविशेषः—

3353 कोशवत्॥

## 431 अद्वैतरत्नकोशप्रकाशिका

ग्रन्थकर्ता—
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$18\frac{1}{4} \times 1\frac{5}{8}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-294
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—70
कालः (कोशस्य)—1933
स्थितिः—समीचीनः
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

. . . . . . . चित्ते हरिं चिन्तये ॥

सौदामिनीततिपिशङ्गजटाकलपं
प्रालेयभानुशकलाङ्कितमौलिभागम् ।
धीमुद्रिकाकलितत . . . .
. . . . . . . . . ॥

. . . . . न्द्रपदारविन्दं
वन्दामहे बोधमरन्दसान्द्रम् ।
यद्रेणुसंकीर्णपयो निपीय मूकोऽपि वाचां प्रभुतामुपैति ।
श्री . . . . . . . . . . . ।
अद्वैतरत्नस्य करोम्यशेषान् प्रकाशमालोच्य मुदे बुधानाम् ॥

प्रत्यगभिन्नब्रह्मानुचिन्तनरूपं पर . , . . . . . . . . ग्येत्यादिना । नृहरिमिति । जीवब्रह्मलक्षकनृहरिपदद्वयस्य समानाधिकरणसमासेन प्रत्यगभिन्नं ब्र . . . . . रमात्मा वा वन्दनीयो निर्दिष्टः । तस्य स्वरूपजिज्ञासायामाह—यदिति । यदिति सामान्ये नपुंसकम् । चैतन्य . . . . . . . या पुल्लिङ्गनिर्देशाविरोधः । यदित्यव्ययम् । यमित्यर्थ इत्यन्ये । यदालिङ्ग्य प्रमाणानीत्येकं पदम् . . . . ।

उपसंहारः—

अवस्थाज्ञानस्यापि पक्षत्वप्राप्तौ तस्य दृष्टान्तत्वेनोपन्यासविरोधः । किं च पूर्वोपन्यस्तमतेऽपि जीवाश्रितत्वमस्त्येव, चित्सामान्याश्रितत्वाभ्युपगमात् । अन्यथा जीवेऽज्ञानाननुभवप्रसङ्गाद . . पिरिति । नन्वात्माश्रयमात्मविषयमित्युक्त्या मतद्वयेऽप्यात्मत्वमेवाश्रयविषयतावच्छेदकमिति प्रतीयते । तदयुक्तम्; मिश्रमते जीवत्वपरमात्मत्वयोरेव तथात्वाभ्युपगमादित्यत्राह—मतान्तर इति । जीवत्वमाश्रयोपाधिरेव न तु विशेषणमिति स्फोरयितुं तथोक्तमित्यर्थः ।

प्रतिपाद्यविषयः —

2243 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमपरिच्छेदमात्रं विद्यते। व्याख्या चेयमतिविस्तृता, मीमांसान्यायोपगुम्फिता अत्यन्तमुपादेया अमुद्रिता च दृश्यते।

## 2243 अद्वैतरत्नकोशदीपिका

| | |
|---|---|
| ग्रन्थकर्ता—अखण्डानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—112 |
| प्रमाणम्—$18\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—1933 |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिलः |
| पत्राणि—181 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

. . . रोक्षार्थविषयकत्वेनापरोक्षरूपतया ततोऽविद्यानिवृत्त्यसम्भवेन अखण्डस्यापि ब्रह्मणः प्रतिबद्धप्रकाशत्वेन स्फुरणभावाद्वेन प्रहसन्मुखपङ्कज . . . . . स्फुरणसहकृततया . . . . रविद्यानिवर्तनक्षमत्वं वेदान्तिभिरङ्गीकृतमिति अविद्यानिवर्तनक्षमत्वं वृत्तेर्युक्तमेव ब्रह्मप्रकाशस्य मुखप्रसादहेतुत्वं स्पष्टयति—आनन्दात्मकेति। आनन्दात्मक . . . . . . . समित्यानेकार्थत्वसम्भवाद्विवक्षितमर्थमाह—महान्तमिति। गरीयांसमित्यस्यापि तथात्वादाह—गुरुमिति। जगत्पतिशब्दोऽत्र गुरुनामधेयपर इत्याह—जगन्नाथाश्रममिति। स्वग्रन्थे निःशङ्क . . . . . . सिद्ध्यर्थं गुरुप्रसादलब्धविद्यत्वेन स्वस्य सम्प्रदायाभिज्ञत्वं दर्शयन्नेव चिकीर्षितं प्रतिजानीते मूले गुरुणेति।

उपसंहारः—

किमभेदगोचरज्ञानं भेदविषयकतया भेदविरोधिनिवर्तकं, किं वा अभेदज्ञानत्वमात्रेण। नाद्यः; . . . ह—मूले तस्येति। अभेदज्ञानस्येत्यर्थः। मूले भेदाविरुद्धत्वेनेति। भेदाविरुद्धविषयकत्वेनेत्यर्थः। त्वं नयभे . . . . . . भेदयोर्विरोधानङ्गीकारादिति भावः। न द्वितीय; अन्यज्ञानानुस्यूतस्य निवर्तकत्वानियमात्। अन्यज्ञानादन्यनिवृत्त्यनियममेव लोके दर्शयति—मूले—न हीति। एतच्चोपलक्षणम्,

न हि घटज्ञानात् पटादयो निवर्तन्त इत्यपि द्रष्टव्यम् । . . . . . समानकालीनयोः सतोरभेदमात्रस्य साक्षात्कारविषयत्वायोगश्चेत्याह— मूले . . . . . . श्रुतिप्रमाणानुसारेणेति । तत्त्वमस्यादिश्रुति-प्रमाणानुसारेणेत्यर्थः । वस्तुसद्भेदेति ।

प्रतिपाद्यविषयः—

अद्वैतरत्नकोशव्याख्यारूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अमुद्रितः । आद्यन्तयोर्ग्रन्थभागयोर्लोपः । अस्मिन्कोशे किञ्चिन्न्यूनः समग्रो ग्रन्थो विद्यते ।

## 385 अद्वैतरत्नकोशपालिनी

ग्रन्थकर्ता—रामाध्वरी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—146

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—94
कालः (कोशस्य)—प्राचीनः
स्थितिः—अतिशिथिलः
समग्रोऽसमग्रो वा—समग्रः पञ्चपत्रलोपः

उपक्रमः—

वन्दे यशोदया श्लाघ्यं सत्यानन्दपदेरितम् ।
नारायणानन्दकृष्णं नरत्राणपरायणम् ॥ १ ॥

यद्भासा भासते लोको यत्प्रभावेन जायते ।
तं वन्दे प्रचुरानन्दं रामं दाशरथिं गुरुम् ॥ २ ॥

ब्रह्मादयोऽपि यद्भक्त्या प्रारम्भान्फलवत्तया ।
लभन्तेऽभीष्टवरदं तं वन्दे गणनायकम् ॥ ३ ॥

श्रीमद्रामाध्वरीन्द्रेण कृष्णयज्वेन्द्रसूनुना ।
अद्वैतरत्नकोशस्य विवृतिः क्रियतेऽधुना ॥ ४ ॥

प्रेक्षावत्प्रवृत्त्यर्थं विषयप्रयोजने दर्शयन् चिकीर्षितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यर्थं कृतमपि मङ्गळं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—यदा-

लिङ्गेति । नृहरिरिति । स्वविषयाखण्डाकारणज्ञानेन अज्ञानतत्कार्यं हरतीति हरिः परमात्मा ना जीवः ना चासौ हरिश्च इति नृहरिः । अनेन समासेन जीवब्रह्मणोरैक्यलक्षणः शास्त्रविषयो दर्शितः । स्वस्य ग्रन्थकरणादिसामर्थ्यं नृसिंहप्रसादायत्तमिति दर्शयति—गुरुमिति ।

उपसंहारः—

अत एवेति । प्रवृत्त्यङ्गसाध्यत्वं दर्शयति—यस्मिन्निति । प्रवृत्त्यङ्गमिति । अन्यथा दुःखानुत्पादार्थिनः प्रायश्चित्ते प्रवृत्तिर्न स्यादित्यर्थः । तत्पूर्वमिति । अविद्यानिवृत्तेरसत्त्वं तद्विरहः स च विद्यात्मकः साक्षात्कारात्पूर्वमस्त्येवेत्यर्थः । अभावेति । तथावस्थानाभावे हेतुमाह—प्रागिति । अत एवेति । साक्षात्कारात्पूर्वमविद्यायाः सत्त्वादेवेत्यर्थः । अभावप्रमादशायामिति मूलम् । अविद्यारूपप्रागभावप्रतियोगित्वप्रमादशायामित्यर्थः । प्रागभावप्रतियोगित्वज्ञानं अत एव प्रपञ्चस्य ब्रह्मविवर्तत्वमिति भावः । श्रीनृसिंहेति । नरमृगाकृतिपदस्य प्रत्यगभिन्नब्रह्मार्थत्वेऽपि तत्पदेनाकृत्युपादानं लीलाविग्रहोपहितस्वेष्टदेवतानुस्मरणार्थम् । तथा च प्रत्यगभिन्नसकलदुःखनिर्मुक्तचैतन्यात्माखण्डानन्दोऽस्माकमभिव्यज्यतामिति प्रार्थनार्थः । इति श्रीरामाध्वरीन्द्रेण विरचितायामद्वैतरत्नकोशपालिन्यां द्वितीयपरिच्छेदः समाप्तः ॥

द्वितीयोऽयं परिच्छेदो राघवेशे समर्पितः ।
तेन चित्सुखरूपोऽसौ प्रीयतां रघुनन्दनः ॥

प्रतिपाद्यविषयः—

प्रथमपरिच्छेदे साधनचतुष्टयसम्पन्नस्य श्रवणाधिकारित्वं, सन्न्यासस्वरूपं, त्वंपदार्थस्वरूपं, तस्य च परस्माद्भिन्नत्वं, जीवानेकत्वैकत्वादिकं विचार्यते, द्वितीयपरिच्छेदे, तत्पदार्थनिरूपणं जगत्कारणनिरूपणं अखण्डार्थवादः मुक्तिविचारश्च सम्यक्प्रमाणोपन्यासपूर्वकं क्रियते ।

वक्तव्यविशेषः—

नृसिंहाश्रमीविरचिताद्वैतवेदान्ततत्त्वविवेकाख्यग्रन्थस्य, व्याख्या तत्त्वविवेकदीपनाख्या रत्नकोशापरपर्याया नृसिंहाश्रममुनिविरचिता । तस्या इयं व्याख्या अद्वैतरत्नकोशपालिनीति । अस्मिन्ग्रन्थे व्याख्येयार्थः सुस्पष्टं नव्यरीतिमनुसृत्य प्रतिपाद्यते । अत्यन्तमुपादेयोऽयं ग्रन्थः ।

## 2206 अद्वैतरत्नकोशपालिनी

ग्रन्थकर्ता—रामाध्वरी
पत्रविशेष:—तालपत्रात्मक:
प्रमाणम्—$14\frac{3}{4}'' \times 1\frac{1}{2}''$
लिपि:—आन्ध्रलिपि:
पत्राणि—151

प्रतिपुटं पङ्क्तय:—14
प्रतिपङ्क्त्यक्षराणि—72
काल: (कोशस्य)—प्राचीन:
स्थिति:—शिथिला
समग्रोऽसमग्रो वा—असमग्र:

उपक्रम:—

385 कोशवत् ।

उपसंहार:—

न तु प्रत्यक्षेति । लाघवेन . . . . बुद्धिस्थ . . . . . वाचकत्वादित्यर्थः । किमाकाशस्यैवेत्यवधारणमाकाशपदं पवनादेरप्युपलक्षणं वा । नाद्य इत्याह—पवनेति । श्रुतीति । यतो वा इमानि भूतानीति कृत्स्नभूतसृष्टिस्थितेराकाशाद्वायुरित्यादिश्रुतेश्च बाधप्रसङ्गात् । द्वितीयाकाशादि . . . तत्तदवच्छिन्नब्रह्मपरतया ततो वाय्वादिसृष्टेः स्पष्टं प्रतिपादनादित्यर्थः । द्वितीयं निरस्यति—तत्सङ्ग्रह इति । तथा सति लक्षणादोषप्रसङ्गादिति भावः । ननु यतो वेति विषयवाक्ये ब्रह्मशब्दप्रयोगो . . . . . .

प्रतिपाद्यविषय:—

385 कोशवत् ।

वक्तव्यविशेष:—

अस्मिन्कोशे आदित एकः परिच्छेदो विद्यते ॥

## A 740 अद्वैतरत्नकोशपालिनी

ग्रन्थकर्ता—रामाध्वरी
पत्रविशेष:—कागदपत्रात्मक:
प्रमाणम्—13 × 8 अङ्गुलानि
लिपि:—आन्ध्रलिपि:
पत्राणि—233

प्रतिपुटं पङ्क्तय:—40
प्रतिपङ्क्त्यक्षराणि—16
काल: (कोशस्य)—1931
स्थिति:—समीचीना
समग्रोऽसमग्रो वा—असमग्र:

उपक्रमः—

385 कोशवत् ।

उपसंहारः—

अथवेति । स्वशरीरेऽपीति । बिम्बभूतेश्वरस्य प्रतिबिम्बाभेदस्य सर्वत्र सत्त्वादिति भावः । कबन्धाख्यायिकां दर्शयति—मन्द्रेष्विति । मन्द्रदेशेष्वित्यर्थः । सूत्रं हिरण्यगर्भम् । तस्मादीश्वर एवोपदेष्टेति सर्वानुपपत्तिपरिहारादेक एव जीव इति सिद्धः । एकजीववादः समाप्तः ।

प्रतिपाद्यविषयः—

385 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः द्वितीयपरिच्छेदे एकजीववादपर्यन्तं विद्यते ।

## A 766 अद्वैतरत्नकोशपालिनी

| | |
|---|---|
| ग्रन्थकर्ता—रामाध्वरी | प्रतिपुटं पङ्क्तयः—28 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—25 |
| प्रमाणम्—13¼″×8¼″ | कालः (कोशस्य)—1931 |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—69 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

अथ बिम्बप्रतिबिम्बवादः । ननु को जीवः कः परमेश्वरः यः उपदेश्यः यश्चोपदेष्टा । अत्र प्रकटार्थविवरणानुसारिणस्त्वाहुः—अनादिरनिर्वाच्या भूतप्रकृतिः चिन्मात्रसम्बन्धिनी माया तस्यां चित्प्रतिबिम्ब ईश्वरः । तस्या एव परिच्छिन्नानन्तप्रदेशेषु आवरणविक्षेपशक्तिमत्सु अविद्याभिधानेषु चित्प्रतिबिम्बो जीव इति, तच्चिन्त्यम् ।

उपसंहारः—

385 कोशवत् ।

प्रतिपाद्यविषयः—

385 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे बिम्बप्रतिबिम्बवादमारभ्य समाप्तिपर्यन्तं विद्यते।

## No. 3338 अद्वैतरत्नकोशभावप्रकाशिका

ग्रन्थकर्ता—काळहस्तीश्वरयज्वा
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—17×1½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–134
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—84
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

प्रणम्य दक्षिणामूर्तिं रघुनाथाश्रमान् गुरून्।
भावप्रकाशिकाद्वैतरत्नकोशस्य रच्यते॥

यदालिङ्ग्येति। यदित्यव्ययम्। यमित्यर्थः। यद्वा तमित्यत्र विधेयप्राधान्यात्पुल्लिङ्गनिर्देशः। प्रमाणं प्रत्यक्षादिप्रमितिः तत्करणं वा। आलिङ्गनं आश्रयता विषयता च। प्रत्यक्षादिप्रमितीनां चैतन्यविषयत्वं वक्ष्यते। वृत्तीद्धबोधस्य तदविषयत्वेऽपि बोधेद्धवृत्तेस्तद्विषयत्वात्। करणस्यापि तद्वारा तद्विषयत्वात्। अन्तःकरणस्य तत्र कल्पिततया तदाश्रयत्वात्। तत्परिणामवृत्तेस्तदाश्रयत्वं स्फुटमेव। प्रमितिपक्षे बोधयन्तीत्यत्र बोधनमावरणनिवृत्तिः स्फुटता च संशयनिवृत्तिः। तथा च बोधयन्ति चैतन्यमभिव्यञ्जयन्ति आवरणनिवृत्तिद्वारा अज्ञाननिवृत्तिं कुर्वन्तीति यावत्। करणपक्षे बोधनं बोधजनकं स्फुटता चावरणनिवृत्तिः साक्ष्यभेदो वा।

उपसंहारः—

किं चाकाशस्योक्तरीत्या साध्यत्वेऽपि उपेक्षणीयत्वान्न तदुद्देशेन प्रवृत्तिः। न चाकाशादेरपि शब्दादिद्वारा परंपरयेष्टत्वादुद्देश्यत्वम्;

प्रवृत्तिविषयप्रत्यक्षस्य प्रवृत्तिहेतुत्वादित्यभिप्रेत्याह—यद्वीति। आत्मनः आकाशवैलक्षण्यमाह—आनन्दात्मेति। न चैवं दुःखप्रागभावार्थिनः प्रायश्चित्ते प्रवृत्तिर्न स्यादिति वाच्यम्; दुरितध्वंसार्थिन एव तत्र प्रवृत्तेः। अत एवेष्टसाधनताज्ञानमेव सर्वत्र प्रवर्तकम्। यद्वा यद्व्यतिरेके चासत्त्वमित्यत्र कादाचित्काभावो विवक्षितः प्रायश्चित्तानुरोधादिति॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीरघुनाथाश्रमपूज्यपादशिष्य-
श्री काळहस्तीश्वरयज्वकृतायामद्वैतरत्नकोशभावप्रकाशिकायां
द्वितीयः परिच्छेदः॥

प्रतिपाद्यविषयः—

तत्त्वविवेकदीपनव्याख्यारूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च च दृश्यते।

## 2896 अद्वैतरत्नकोशभावप्रकाशिका

ग्रन्थकर्ता—काळहस्तीश्वरयज्वा
पत्रविशेषः— ताळपत्रात्मकः
प्रमाणम्—$16\frac{3}{4}\times1\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-48
प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—84
कालः (कोशस्य)—प्राचीनः
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

सङ्गतिमाह—एवं दशमस्त्वमसीति वाक्येनाहं दशम इति ज्ञानवत् तत्त्वमसीति वाक्येनाहं ब्रह्मास्मीति ज्ञानमधिकारिण उत्पादनीयम्। तत्र च त्वंपदस्याधिकारिस्वरूपबोधकत्वात्तदर्थविचारस्य प्राथम्यम्। अभ्यर्हितत्वादित्यर्थः। यद्वा—नात्र परिच्छेदभेदः। किं तु जीवस्याशनायाद्यतीतचैतन्यमात्रत्वे वेदान्तानां तात्पर्यमिति निरूपयितुं सूत्रचतुष्टयात्मकमिदं प्रकरणम्।

उपसंहारः—

3338 कोशवत्।

प्रतिपाद्यविषय:—

3338 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयपरिच्छेदमात्रं विद्यते ॥

## A 694 अद्वैतरत्नकोशभावप्रकाशिका

ग्रन्थकर्ता—काळहस्तीश्वरयज्वा
पत्रविशेषः—कागद्पत्रात्मकः
प्रमाणम्—13×8 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-50

प्रतिपुटं पङ्क्तयः—40
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

2896 कोशवत्।

उपसंहारः—

3338 कोशवत्।

प्रतिपाद्यविषयः—

3338 कोशवत्।

वक्तव्यविशेषः—

2896 कोशवत्।

## 508 अद्वैतरत्नकोशपूरणी

ग्रन्थकर्ता—अग्निहोत्रभट्टः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—17×1½ अङ्गुलानि
लिपिः—नागरलिपिः
पत्राणि—1-181

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—84
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

वन्देऽहं वन्दनीयानां वन्द्यां वाचामधीश्वरीम्।
कामिताशेषकल्याणकलनाकल्पवल्लिकाम् ॥

यद्वीक्षा जगदुत्पत्तिस्थितिसंहारकारणम् ।
यदात्मकमिदं वन्दे श्रीरामं तं पतञ्जलिम् ॥

ज्ञानेन्द्रापरनामानं दक्षिणामूर्तिदैवतम् ।
वासुदेवादिसच्छिष्यं नमामि परमं गुरुम् ॥

भक्तभीतिकरं रूपं त्यक्त्वा रूपान्तरं श्रितम् ।
वासुदेवाभिधं सौम्यं पतञ्जलिमहं भजे ॥

श्रीज्ञानेन्द्रकृपापात्रं कृत्स्नतन्त्रविवेचकम् ।
श्रीमद्दण्डनृसिंहाख्यं सूरिं संकलये गुरुम् ॥

नत्वा गुरूनयस्मर्तॄन् द्वादशाहेज्वसूनुना ।
विविच्यतेऽग्निहोत्रेण टीका तत्त्वविवेचनी ॥

नृहरिमिति विग्रहविशेषोपहितस्वेष्टदेवतावाचकपदेन जगत्कारणं ब्रह्म लक्षयति । गुरुं नृहरित्वेनोपास्त इत्यर्थः । गुरौ देवतात्वभावनायाः फलवत्त्वेन श्रवणात् । यद्वा . . .

उपसंहारः—

यदीक्षणेनेति । सन्नुन्ना सम्यक्प्रेरिता मायाप्रेरणस्य सम्यक्ता कायिकव्यापार (रादि) निरपेक्षणमात्राधीनतारूपाऽमोघता वा । तादृशमाया परिणामात्मकं (परिणामभूतं) जगदित्यर्थः । यद्वा सन्नुन्ना सदधिष्ठिता (माया जगदात्मनापरिणमत इत्यर्थः) पराभिमत (परमतसिद्धमायास्वातन्त्र्यनिरासाय सदधिष्ठानत्वोक्तिरिति सर्वं सुस्थम् ।

कृत्यानया रघुपतिः परात्मा कुलदैवतम् ।
सन्तुष्यतु शुकालापैस्तत्पोषकजनो यथा ॥

इति श्रीमत्ज्ञानेन्द्रसरस्वतीचरणारविन्दनिषेविणा श्रीरामान्वयप्रसूतद्वादशाहेज्वसूनुना अग्निहोत्रेण विरचितायां तत्त्वविवेकटिप्पण्यां द्वितीयः परिच्छेदः सम्पूर्णः ॥

प्रतिपाद्यविषयः—

तत्त्वविवेकदीपनव्याख्यारूपो ग्रन्थः ।

वक्तव्यविशेषः—

अमुद्रितः । अस्मिन्कोशे ग्रन्थः समग्रो वर्तते ।

## 2108 अद्वैतरत्नकोशपूरणी

ग्रन्थकर्ता—अग्निहोत्रभट्टः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\frac{1}{2}\times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—109–175
प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—74
कालः (कोशस्य)— ?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

अनिर्वचनीयस्था ..................

उपसंहारः—

. . . त्पद्यतां शुक्तिरजतादिवत्। किमविद्यावृत्तिकल्पनयेति चेत् नानिर्वचनीयस्थाणुत्वादेः शुक्तिरजतादाविव निश्चयात्मकस्फुरणप्रसङ्गात्। नच विरोधिकोटिद्वयस्फुरणादेव नैकतरनिश्चय इति वाच्यम्; धर्मद्वयस्य पुरोधर्मिनिष्ठत्वे पीतः शङ्ख इतिवत् विरुद्धधर्मनिश्चयस्यैवापातात्।

प्रतिपाद्यविषयः—

508 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमपरिच्छेदे अनिर्वचनीयविचारप्रभृति द्वितीयपरिच्छेदः समग्रो विद्यते ॥

## 3407 अद्वैतरत्नकोशपूरणी

ग्रन्थकर्ता—अग्निहोत्रभट्टः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–172
प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

508 कोशवत्।

उपसंहारः—

508 कोशवत् ।

प्रतिपाद्यविषयः—

508 कोशवत् ।

वक्तव्यविशेषः—

508 कोशवत् ।

## 2241 अद्वैतरत्नकोशपूरणी

ग्रन्थकर्ता—अग्निहोत्रभट्टः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\frac{3}{4}\times1$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-93
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—124
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

508 कोशवत् ।

उपसंहारः—

न च परध्वंसाजन्यपरत्वमवच्छेदकम् ; गौरवात्, अन्योन्याश्रयाच्च । सिद्धे खण्डद्रव्ये तदितरविशेषावच्छेदेन तद्धेतुता, तदितरविशेषावच्छेदेन तद्धेतुत्वे च तादृशद्रव्यान्तरसिद्धिरिति संक्षेपः । नाश्रयेन जीवस्य तदाश्रयता, जीवत्वस्य तदाश्रयतानवच्छेदकत्वेऽपि वस्तुतस्तदुपहितस्वरूपस्यैव तदाश्रयत्वादित्यर्थः । प्रामाण्यमिति । स्फटिकलौहित्यादिप्रत्ययवत्तज्ज्ञानस्याप्रमाणत्वादित्यर्थः । भेदवदिति । आत्मभिन्नतया निरूपिताज्ञानाद्याश्रयान्तःकरणाधीनेत्यर्थः ।

इति श्रीज्ञानेन्द्रसरस्वती श्रीचरणारविन्दनिरन्तरनिषेवकनिषेविणा श्रीरामान्वयप्रसूतद्वादशाहेज्यसूनुनाग्निहोत्रमनीषिणा विरचितायां तत्त्वविवेकटिप्पण्यां अद्वैतरत्नकोशपूरण्यां प्रथमः परिच्छेदः ॥

प्रतिपाद्यविषयः—

508 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमपरिच्छेदमात्रं विद्यते ।

## B 528 अद्वैतरत्नप्रकाशः

ग्रन्थकर्ता—अमरेश्वरशास्त्री
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8 × 6½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—189-199

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ओं—ब्रह्माण्डदेवालयमध्यसंस्थ-
पिण्डाण्डगर्भालयचित्तपीठे ।
विभासमानं विततं स्वकीय-
चैतन्यलिङ्गं शिवमाश्रयामः ॥
महामायागुहालीनं मायातीतं महत्तमम् ।
दक्षिणास्याभिधं ज्योतिराविरस्तु ममाग्रतः ॥

उपसंहारः—

सर्वदुर्वासनाजालं पादपांसुमिव त्यजन् ।
विधूयाज्ञानदुःखौघं मोक्षानन्दं समश्नुते ॥
सर्ववेदशिरोगूढाऽद्वैतरत्नप्रकाशिका ।
मया कृता शतश्लोकी वीक्ष्यतां वीतमत्सरैः ॥
देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिने-
त्येवं प्राञ्जलिना मया सविनयं स्वप्नेऽर्थितस्येशितुः ।
यस्य श्रीकरुणाकटाक्षविभवप्राप्तात्मविद्योऽस्म्यहं
तं वन्दे मुनिवन्दनीयचरणं श्रीदक्षिणास्यं गुरुम् ॥
प्रसादाद्दाक्षिणामूर्तान्मया सम्यक्प्रकाशितम् ।
गूढमद्वैतसद्रत्नं गृह्यतां ब्राह्मणोत्तमैः ॥
कम्भम्पापिकुलोद्भूतेनामरेश्वरशास्त्रिणा ।
प्रसादाद्दाक्षिणामूर्तात्कृताद्वैतप्रकाशिका ॥
समाप्तोऽयमद्वैतरत्नप्रकाशः

प्रतिपाद्यविषयः—

अस्मिन् ग्रन्थे मुमुक्षुः गुरोः सकाशात् आत्मविद्योपदेशं प्राप्य श्रवणमननादिसाधनैरात्मलिङ्गपूजां कुर्वन् मुक्तोभवतीत्ययमर्थः श्लोकशतेन सम्यक् प्रतिपादितः ।

वक्तव्यविशेषः—

कुत्राप्यमुदितो मुद्रणार्हश्चायं ग्रन्थः ।

## B 76 अद्वैतरक्षणम्

| | |
|---|---|
| ग्रन्थकर्ता—मधुसूदनसरस्वती | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$8\frac{1}{4} \times 6\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—162 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

बृन्दारण्यनिविष्टं विलुठितमाभीरवारनारीभिः ।
सत्यचिदानन्दघनं ब्रह्म नराकारमालम्बे ॥ १ ॥
निर्जित्य प्रतिपक्षान्द्वैतधियो दुष्टतार्किकंमन्यान् ।
अद्वैततत्त्वरत्नं रक्षितुमयमुद्यमः क्षमः स्यान्नः ॥ २ ॥

ननु प्रत्यक्षाद्यगोचरत्वात्सत्यज्ञानानन्तानन्दात्मस्वरूपमद्वैतं वस्तु वेदैकसमधिगम्यमिति भवतोऽभिमतम् । (तन्न सङ्गतम्) तस्य स्वाध्यायाध्ययनविधिप्रयुक्तविचारस्य धर्ममीमांसाशास्त्रेणैव विचारितत्वात् अर्थवादस्य च विधिशेषतया प्रामाण्यात् वेदान्तानां च सिद्धवस्तुबोधकत्वेनार्थवादरूपत्वात् । न च कर्मविधिशेषभूतानां वायुर्वै क्षेपिष्ठेत्यादीनां तत्र विचारितत्वेन न सदेवेत्यादिवाक्यानामिति युक्तम्; कर्तृस्तावकत्वेन तेषामपि विधिशेषत्वात् । "संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यत" इति न्यायात् ।

उपसंहारः—

अत्र सूत्रं प्रदीपवदादेशस्तथा हि दर्शयति । एवं सगुणविद्याविदामपि योगीश्वराणां निर्गुणविद्याविदां त्वनधिकारिकाणां वर्तमानदेहभावे जीवन्मुक्तिस्तदभावे च विदेहमुक्तिः । तत्र ज्ञानात्कर्मक्षयप्रतिपादके सूत्रे तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्, इतरस्याप्येवमसंश्लेषः पातेतु । इतरस्य सुकृतस्येत्यर्थः । तस्माज्ज्ञानिनः

कर्मभोगार्थमयोगिनोऽपि कायव्यूहकल्पनं मौढ्यमात्रेणैव। ज्ञानस्य प्रारब्धकर्मानाशकत्वे सूत्रं भोगेनत्वितरे क्षपयित्वा सम्पद्यते, इति प्रागेवोदाहृतम्—

अद्वैतरत्नमेतत्तु श्रीविश्वेश्वरपादयोः।
समर्पितमथैतेन प्रीयतां स दयानिधिः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीविश्वेश्वरपूज्यपादशिष्य-श्रीमधुसूदनसरस्वतीविरचितमद्वैतरत्नरक्षणं समाप्तम्—

प्रतिपाद्यविषयः —

अस्मिन्ग्रन्थे—शास्त्रारम्भसमर्थनं, वेदप्रामाण्योपपादनं, तेषां भेद-परत्वनिराकरणं, भेदपारमार्थिकत्वभङ्गः, अद्वैतस्य ब्रह्मनिष्ठत्वप्रतिपादनं अग्निहोत्रादिकर्मणामप्यद्वैते पर्यवसानं, श्रुत्यादिप्रमाणैरज्ञानस्वरूपसम-र्थनं, प्रपञ्चसत्यत्वानुमानभङ्गः इत्यादयो विषयाः प्रतिपाद्यन्ते॥

वक्तव्यविषयः—

अयं ग्रन्थः मुद्रितः, अस्मिन्कोशे समग्रश्च विद्यते।

## 2461 अद्वैतरत्नाकरः

ग्रन्थकर्ता—नारायणानन्दतीर्थः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—19 × 2 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—60

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—80
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

. . . . . प्रमाणं त्रिभुवनजनकं त्रिक्रमाक्रान्तलोकं
त्रैलोक्याकारमेकं हरिमखिलगुरुं घोरसंसारपारम्।
सर्वक्षेत्रज्ञभावं सततमनुभवानन्दमद्वैत-
. . . . जनकरुणावाप्तमूर्तिं स्वसिध्दै॥

अथातो ब्रह्मजिज्ञासा—

यज्ञार्थैः कर्मभिर्ये हरिमखिलगुरुं देवमाराधयन्तः
त्यक्ताशेषार्थकामास्त्वतिविमलधियस्तत्प्रसादान्महान्तः।
श्रान्ताः संसारधर्मे जनिमृतिभयदे नित्यमेवाप्तकामाः
पारिव्राज्यं भजन्तः शमदमगुणकाः सद्गुरुं ते भजन्ते ॥

उपसंहारः—

नैकस्मिन्नसंभवात्। पूर्वं सौगतसिद्धान्तो निरस्तोऽपि . . . . मिह। निरस्ते सविशेषेण सप्तभङ्गिनयोऽधुना ॥ अस्तिता नास्तितैकास्मिन् . . . . वाच्यतावाच्यते तथा। विरुद्धार्थानिलपयन्ति भ्रमात्। . . . . . . . . . . . . . . . . . . . . . . . . . . . . । . . . . . . . , . . . . . . . . ह्यमुक्तसङ्गैः परं ध्रुवम् "द्विरुक्तिरस्य शास्त्रस्य समाप्तिं द्योतयत्यथ"

इति श्री शिवरामानन्दपूज्यपादशिष्य श्रीनारायणानन्दतीर्थविरचितोऽद्वैतरत्नाकरः सम्पूर्णः॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मसूत्रार्थः संक्षिप्य विचार्यते।

वक्तव्यविशेषः—

अमुद्रितोयं ग्रन्थः।

## B 1051 अद्वैतरत्नाकरः

ग्रन्थकर्ता—नारायणानन्दतीर्थः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम् $8\frac{1}{4} \times 6\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-148

प्रतिपुटं पङ्क्तयः—30
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—1937
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

2461 कोशवत्।

उपसंहारः—

2461 कोशवत् ।

प्रतिपाद्यविषयः—

2461 कोशवत् ।

वक्तव्यविशेषः—

2461 कोशवत् ।

## 3439/3 अद्वैतरसमञ्जरी

ग्रन्थकर्ता—नल्लाकविः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16\frac{1}{2} \times 1\frac{3}{8}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–4
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—48
कालः — ?
स्थितिः—शिथिलः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

अद्वैतमेव परमार्थतया विवेक्तु-
मङ्गीकृतद्विपनराकृति..............शः ।
अद्वैतगोचरमशेषविशेषमन्त-
राविष्करोतु वरदो मम विघ्नराजः ॥

अध्यासविस्फुरदनेकविधात्मभेद-
मज्ञानमाश्रितवतः सुलभा न मुक्तिः ।
आदर्शगेहममितः प्रतिबिम्बितान्त-
र्द्वारं गतस्य न बहिर्गतिरर्भकस्य ॥

शान्त्यादिसाधनवता पुरुषोत्तमेन
संप्राप्यते निजपदं वरदेशिकोक्तथा ।
चोरैररण्यसरणिं गमितेन पुंसा
देशो निजो हि तदभिज्ञगिरैव गम्यः ॥

भूमा भवानिति गुरूपनिषद्वचोभिः
कर्त्रात्मता गलति सिद्ध्यति भूमभावः ।
राजात्मजस्य निजतत्त्वनिबोधनेन
व्याधात्मताविगलनादिव राजभावः ॥

कूटस्थनित्यसुखबोधतनोः प्रतीचो
बन्धो विमोचनमिति भ्रमदुर्विलासः ।
वन्ध्यासुतस्य वपुरादिगुणप्रपञ्च-
स्तत्पञ्चता च सुतरां परिकल्पनैव ॥

उपसंहारः—

अन्तर्निरन्तरनिरूढनिजात्मतत्त्वो
न प्रागिव व्यसनितां विषयेषु धत्ते ।
भाग्यात्कुतश्चिदपि लब्धनिधिर्मनस्वी
किंपूर्ववत्कृपणतामुररीकरोति ॥

अध्यक्षितस्वमहिमानमलङ्क्रियावदा-
ध्यात्मिकाः शुभगुणाः स्वयमाविशन्ति ।
स्वाधीनिते सुहृदि राजनि तस्य भृत्या
एतेऽपि च स्वयमुपेत्य तमाश्रयन्ते ॥

अज्ञानमेव न कुतो जगतः प्रसङ्गो
जीवेशदेशिकविकल्पकथा तु दूरे ।
एकान्तनिर्मलचिदेकरसस्वभावं
ब्रह्मैव केवलमहं परिपूर्णमस्मि ॥

समाध्यवस्थाविर्भूतश्रीविघ्नेशनिदेशतः ।
परमानन्दयोगीन्द्रपूज्यपादाभ्यनुज्ञया ॥

नल्लासुधीनिबध्देयमद्वैतरसमञ्जरी ।
अन्तर्मुखैर्विपश्चिद्भिरादरेणानुगृह्यताम् ॥

भवरोगस्यौषधमिति पातुं कटुमौपनिषद्भावमसौ ।
विरचय्यामृतघुटिकां वितरति नल्लाकविः करे सुधियाम् ॥

इति नल्लाकविविरचिताद्वैतमञ्जरी समाप्ता ॥

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे चिदेकरसं परं ब्रह्मैव सत्यं अन्यत्सर्वं प्रपञ्चजातमज्ञानकल्पितम्, परमात्मज्ञानेनाज्ञाननाशे विगलितसकलप्रपञ्चो सुखमक्षय्यमश्नुत इति स्पष्टं निरूप्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## 4731 अद्वैतरहस्यम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तय:—14 |
| पत्रविशेष:—ताळपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—74 |
| प्रमाणम्—17 × 1½ अङ्गुलानि | काल:—? |
| लिपि:—नागरीलिपि: | स्थितिः—नातिसमीचीना |
| पत्राणि—48 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रमः—

वेदान्तसागरसुधामयमद्वितीय-
मानन्दबोधपरिपूर्णमभीष्टदोहम् ।
स्वाबोधजृम्भितजगल्लयकृत्सुबोधं
श्रीकालहस्तिनिलयं मह आविरस्तु ॥

इह खलु जगति भगवत्पादमतानुरोधीन्यद्वैतप्रतिपादकानि परस्परमीषद्भेदवन्ति बहूनि निबन्धनानि वर्तन्ते । तत्र स्वमतिवैशद्यार्थं सविशेषशास्त्रानुरोधेनाद्वैतब्रह्मप्रतिपादकमद्वैतरहस्याख्यं प्रयोजनवत्प्रकरणं क्रियते । नन्वस्य प्रकरणस्य प्रयोजनवत्त्वमनुपपन्नम् । प्रयोजनस्य

दुर्निरूपत्वात् । अन्ततो विचार्यमाणे मूलनिबन्धनानामपि न प्रयोजनवत्त्वम् । न तावद्ब्रह्मैक्यविषयज्ञानप्रयोजनत्वम्; वेदान्तानामप्रामाण्यप्रसङ्गात् ।

उपसंहारः—

एवं समन्वयाविरोधब्रह्मविद्यासाधनफलानि क्रमेण निरूपितानि । तस्मादेतत्प्रकरणपरिशीलनवतां महात्मनां प्रपञ्चे दग्धपटसादृश्यविषयिणि शरीरे अहिनिर्ल्वयिनीसाम्यविषयिणि........भवेत् । तद्वारा अद्वितीयानन्तानन्दपरिपूर्णब्रह्मस्वरूपता च गुरुप्रसादाद्भविष्यतीति । तस्मादिदं प्रकरणं भवमूलतापदाहादिमोचकमनन्तसुखावबोधम् । सेव्यं मुमुक्षुभिरमत्सरिभिः प्रशान्तैर्भागीरथीपय इव प्रतिपत्तिपूर्वम् ॥ भूषणं विदुषां भूमब्रह्मणः प्रतिपादितम् । शुद्धाद्वैत .......... ...........परिच्छेदः ॥

प्रतिपाद्यविषयः—

प्रथमपरिच्छेदे प्रकरणानारम्भशङ्कां सयुक्तिकं निराकृत्य सर्वेषां वेदान्तानां ब्रह्मणि समन्वयः प्रतिपादितः । द्वितीये समन्वयस्य प्रमाणान्तरविरोधशङ्कायां तन्निरासपूर्वकमविरोधं प्रतिपाद्य अद्वैतबोधस्य मोक्षहेतुत्वं प्रतिपादितम् । तृतीये, साधनं निरूप्यते । चतुर्थे, किं साध्यरूपं फलं, किं वा कूटस्थनित्यस्वरूपमिति विचार्य कूटस्थनित्यं ब्रह्मस्वरूपमेव मुक्तिः फलमिति प्रतिपादितम् ।

वक्तव्यविशेषः—

एतद्ग्रन्थपरिशीलने कर्ता कः इति नोपलभ्यते । प्रकरणं तु, अतिसमीचीनं व्युत्पित्सूनामुपकारकं अमुद्रितमिति प्रतिभाति ।

## 1984/2 अद्वैतसिद्धान्तविद्योतनम्

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः – ग्रन्थलिपिः
पत्राणि—1–53

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—48
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

सदनन्तचिदानन्दे जगती यत्र जायते ।
रजतादीव शुक्त्यादौ तदेवाहं परा गतिः ॥

ननु देशान्तरीयरजतादेरेव भानोपपत्तौ इदं रजतमित्यादिभ्रमस्थले शुक्त्यादौ रजताद्युत्पत्तिकल्पने गौरवमिति चेन्न; रजतादौ चक्षुरादेः सन्निकर्षं विना चाक्षुषाद्यनुपपत्तेः । न च लौकिकविषयतासंबन्धेनैव चाक्षुषादिकं प्रति चक्षुरादिसंयोगस्य हेतुत्वादलौकिकचाक्षुषादिकमलौकिक ...नादि प्रयोगेन भविष्यतीति वाच्यम्, सुरभि चन्दनमित्यादौ सौरभं पश्यामीत्यादिप्रत्ययाभावेन विषयतासंबन्धे चाक्षुषत्वावच्छिन्नाधिकरणतायाः सौरभादौ सत्त्वे मानाभावेन लौकिकान्यविषयतासंबन्धेन चाक्षुषत्वाद्युत्पत्तये ज्ञानलक्षणादेः सन्निकर्षत्वस्य कल्पयितुमशक्यत्वात् ॥

उपसंहारः—

उक्तचरमपरिणामस्य तु पश्चादसत्तायां नियामकाभाव इति चेन्न, प्रारब्धभोगलत्तत्क्रमेण देहादिनिवृत्तौ प्रतिबन्धकत्वेन विदेहकैवल्यपर्यन्तं मनोवृत्त्यादिरूपस्य प्रारब्धभोगोपयुक्तस्य सत्त्वेऽप्यग्रे तदसत्तायां तत्त्वप्रमायास्तत्त्वज्ञानतत्प्रयुक्तपूर्वावस्थाननियतत्वादिति दिक्—

अद्वैतसिद्धान्तविद्योतने परमहंसपरिव्राजक श्री ब्रह्मानन्दसरस्वती विरचिते प्रथमः परिच्छेदः ॥

अनिर्वचनीयवादार्थः संपूर्णः ।

प्रतिपाद्यविषयः —

अनिर्वचनीयवादविचारः ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमपरिच्छेदमात्रं विद्यते । मुद्रितः ।

## No. (66) 4933 अद्वैतसिद्धान्तप्रकाशः

ग्रन्थकर्ता —
पत्रविशेषः — ताळपत्रात्मकः
प्रमाणम्—$13\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि — 220

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य) —?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

निरूप्यतां किं पदार्थनिरूपणेनेतिचेन्न; पदार्थावगमस्यान्वयव्यतिरेकाभ्यां वाक्यार्थावगतिहेतुत्वेन तन्निरूपणस्यावश्यकत्वात्। ननु पदस्य स्मारकत्वेन . . . . . . . व्यर्थमिति चेत्सत्यं, गामानयेत्यादौ गवादिपदानां प्रसिद्धार्थकत्वेऽपि तत्त्वमसीत्यत्र तत्पदार्थाद्वितीयं ब्रह्म यूपाहवनीयादिवत् प्रत्यक्षाद्यगोचर इति लक्षणप्रकरणाभ्याम्। . . . . तत्र संभावितः प्रतिज्ञायां पक्षः साध्येत हेतुना। न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः इति।

उपसंहारः—

आत्मनि कर्तृत्वाद्यध्यासोऽप्यन्तःकरणोपाधिकः। अहंकारो मिथ्या अनुभवात्, स धीः स्वप्नो भूत्वेमं लोकमनुसंचरतीति श्रुतेः . . . . . . . . . समस्तकर्तृत्वाद्यनर्थव्रातं निरतिशयानन्दात्मकचैतन्यं त्वंपदलक्ष्यं जीवस्वरूपमविद्ययाभिन्नामिव कर्तृत्वादियुक्तमिव प्रतीयत इति सर्वं समञ्जसम्। . . . . . . . . मद्वैतसिद्धान्तप्रकाशे प्रथमः परिच्छेदः।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे- -जगत्कारणविचारः मायावादः, अध्यासविचारः तत्त्वमस्यादिवाक्यार्थविचारः, आत्मन आनन्दत्वविचारश्च इत्थमन्येऽपि विचाराः खण्डशः क्रियन्ते।

वक्तव्यविशेषः—

अस्मिन्कोशे कानिचित्पत्राणि त्रुटितानि कानिचिल्लुप्तानि कानिचिद्व्यत्यस्तानि। पत्रसंख्यायाः अस्पष्टत्वात् तानि संगृह्य प्रतिपाद्यादिकं निर्देष्टुं न शक्यते। ग्रन्थस्त्वतिगम्भीरः उपयुक्तश्च दृश्यते असुद्रितश्च॥

## No. (67) C 791 अद्वैतसिद्धान्तरत्नमाला (सव्याख्या)

ग्रन्थकर्ता—विश्वनाथः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—6 × 5½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-11

प्रतिपुटं पङ्क्तयः—20
प्रतिपङ्क्त्यक्षराणि—24
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

यो ब्रह्माणं विधायादौ प्रादात्तस्मै ततः श्रुतीः ।
तं सर्वसाक्षिणं देवं मुमुक्षुः शरणं भजे ॥
नमामि गुरुपादाब्जं जिज्ञासुभ्रमरैर्वृतम् ।
संपूर्णं बोधमधुना सन्तोषितसुधीव्रजम् ॥
सूत्रभाष्यकृतौ नत्वा तद्व्याख्यानकृतस्तथा ।
सिद्धान्तान्ग्रथितान्पद्यैः व्याख्यानेन प्रकाशये ॥

प्रारप्स्यमानग्रन्थसमाप्त्यादिसाधनं परदेवताभजनरूपं मङ्गळं ग्रन्थतो निबध्नाति—

हिरण्यगर्भं प्रथमं विधाय यः श्रुतीश्च तस्मै प्रजिघाय सर्वतः ।
तमादिदेवं मन आदिसाक्षिणं मुमुक्षुगम्यं शरणं भजामहे ॥

यः परमात्मा आदौ हिरण्यगर्भं सर्वलोककर्तारं सृष्ट्वा तस्मै सर्वाः श्रुतीरुपदिदेश तं मन आदीनामिन्द्रियाणां साक्षिणं मुमुक्षुभिर्ज्ञेयमभेदेन आदिदेवं शरणं भजामहे । तथा च श्रुतिः—यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ इति ॥

उपसंहारः—

जीवमुख्यप्राणलिङ्गयोर्ब्रह्मणि सङ्गतिमाह—

जीवमुख्यप्राणलिङ्गे भवेतामौपचारिके ।
अन्यथोपासनात्रित्वमेकवाक्ये प्रसज्यते ॥

वक्तारं विद्यादिति जीवलिङ्गं, शरीरं परिगृह्योत्थापयतीति मुख्यप्राणलिङ्गं, तथा शरीरे द्वयोः सहवासः शरीरात्सहोत्क्रमणमित्यादिजीवमुख्यप्राणलिङ्गे ब्रह्मणि जीवमुख्यप्राणद्वारा औपचारिकौ भवेताम् । तद्व्यापाराणां ब्रह्मायत्तत्वात् । अन्यथा एकस्मिन्वाक्ये उपासनात्रयं प्रसज्यते । तथा सति वाक्यभेदः स्यादित्यर्थः । सूत्रम्—जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासत्रैविध्यादाश्रितत्त्वादिह तद्योगादिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमत्परमशिवेन्द्रसरस्वतीपादाब्जसेवापरायणेन विश्वनाथविदुषा विरचितायां सिद्धान्तरत्नमालायां व्याख्यानप्रकाशसहितायां प्रथमस्याध्यायस्य प्रथमः पादः ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मसूत्रभाष्यसिद्धान्तार्थः पद्यरूपेण सङ्गृह्य व्याख्यायते ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायप्रथमपादमात्रं विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (68) C 791 अद्वैतसिद्धान्तरत्नमाला

| | |
|---|---|
| ग्रन्थकर्ता—विश्वनाथः | प्रतिपुटं पङ्क्तयः—40 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपंक्त्यक्षराणि—24 |
| प्रमाणम्—6 × 5½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-11 | समग्रोऽसमग्रो वा—असमग्रः |

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे शारीरकमीमांसाशांकरभाष्यार्थसङ्ग्रहरूपे तद्वदेव प्रथमपादेन स्पष्टब्रह्मलिङ्गवाक्यानां ब्रह्मणि समन्वयः प्रतिपाद्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायप्रथमपादमात्रं विद्यते । अमुद्रितश्च दृश्यते ॥

## No. (69) A 34 अद्वैतसिद्धिः

| | |
|---|---|
| ग्रन्थकर्ता—मधुसूदनसरस्वती | प्रतिपुटं पङ्क्तयः—40 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—12×8 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-196 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः
सत्यज्ञानसुखात्मकः श्रुतिशिखोत्थाखण्डधीगोचरः।
मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं
मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः॥

श्रद्धाधनेन मुनिना मधुसूदनेन
संगृह्य शास्त्रनिचयं रचिताऽतियत्नात्।
बोधाय वादिविजयाय च सत्वराणा-
मद्वैतसिद्धिरियमस्तु मुदे बुधानाम्॥

अत्राद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वाद्द्वैतमिथ्यात्वमेव प्रथममुपपादनीयम्। उपपादनं च स्वपक्षसाधनपरपक्षनिराकरणाभ्यां भविष्यतीति तदुभयं वादजल्पवितण्डानामन्यतमां कथामाश्रित्य सम्पादनीयम्।

उपसंहारः—

सदसत्त्वोभयवृत्तित्वं, प्रपञ्चनिष्ठव्यतिरेकप्रतियोगित्ववृत्तिः सत्त्वासत्त्वोभयवृत्त्यशेषवृत्तित्वात् भेदप्रतियोगित्ववत्। अप्रयोजकत्वमनुकूलतर्कोक्त्या निरसिष्यते। तस्मादनुमानमत्र मानम् अनिर्वाच्यत्वसाधकानुमानम्।

प्रतिपाद्यविषयः—

प्रथमपरिच्छेदे, मिथ्यात्वविचारः, मिथ्यात्वहेतूपपादनं, मिथ्यात्वनिर्वचनं, प्रत्यक्षादिबाधोद्धारः, अद्वैतश्रुत्यर्थविचारः, दृष्टिसृष्टिवादविचारः अज्ञानवादविचारः, अनिर्वचनीयवादविचारः, एकानेकजीवविचारः इत्यादयो बहवो विषया विचार्यन्ते।

वक्तव्यविशेषः—

अस्मिन्कोशे अनिर्वाच्यत्वसाधकानुमाननिरूपणान्तो भागो विद्यते॥

## No. (70) A 35 अद्वैतसिद्धिः

| | |
|---|---|
| ग्रन्थकर्ता—मधुसूदनसरस्वती | प्रतिपुटं पङ्क्तयः—40 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—12×8 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—197-395 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

अर्थापत्तिरपि ख्यातिबाधान्यथानुपपत्तिरूपा तत्र प्रमाणम् । तथा हि—विमतं रूप्यादि, सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत, बाध्यते प्रतीयतेऽपि, तस्मात्सदसद्विलक्षणत्वादनिर्वचनीयम् ।

उपसंहारः—

अत एव दहरादिविद्यानामधिकाल्पगुणविषयत्वेन साधनतारतम्यं यत्पराभिमतं तदप्येवमिति न कश्चिद्दोषः ।

तस्मात्स्वरूपानन्दस्य स्वप्रकाशात्मरूपिणः ।
प्राप्तिर्मुक्तिर्न तत्रास्ति तारतम्यं कथंचन ॥

मुक्तौ तारतम्यभङ्गः ।

यो लक्ष्म्या निखिलानुपेक्ष्य विबुधानेको वृतः स्वेच्छया
यः सर्वान्स्मृतमात्र एव सततं सर्वात्मना रक्षति ।
यश्चक्रेण निकृत्य नक्रमकरोन्मुक्तं महाकुञ्जरं
द्वेषेणापि ददाति यो निजपदं तस्मै नमो विष्णवे ॥ 1-9

प्रतिपाद्यविषयः—

द्वितीयपरिच्छेदे प्रधानतः आत्मनिरूपणविचारः । तदुपष्टम्भकत्वेन अखण्डार्थलक्षणनिरूपणादयो बहवो विषयाः विचार्यन्ते । तृतीये श्रवणादिनिरूपणं तत्सम्बन्धिविषयान्तराणि च, चतुर्थे मुक्तिस्तत्सम्बन्धिविषयान्तराणि च विचार्यन्ते ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमपरिच्छेदे अनिर्वाच्यत्वसाधकार्थापत्तिप्रमाणनिरूपणप्रभृति सम्पूर्णो ग्रन्थभागः वर्तते ॥

## No. (71) 1889 अद्वैतसिद्धिः

| | |
|---|---|
| ग्रन्थकर्ता—मधुसूदनसरस्वती | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—76 |
| प्रमाणम्—15×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-159 | समग्रोऽसमग्रो वा—समग्रः पञ्चपत्रलोपः |

उपक्रमः—

A 34 कोशवत् ।

उपसंहारः—

तदेवं दृश्यस्य प्रपञ्चस्य मिथ्यात्वात्तदतिरिक्तब्रह्मरूपाखण्डार्थनिष्ठवेदितवाक्यं परं तत्त्वावेदकं सखण्डार्थविषयकं सर्वमतत्त्वावेदकमेवेति । (यद्यपीदं ब्रह्मज्ञानाव्यवहितभ्रमविषये प्रातिभासिके व्यावहारिकलक्षणमतिव्याप्तम्, प्रातिभासिकलक्षणं चाव्याप्तम्, तथापि करणसंसर्गिदोषप्रयुक्तत्वं तदसंसर्गिदोषप्रयुक्तत्वं च तयोर्लक्षणं निरवद्यम् ॥

इति सत्त्वत्रैविध्योपपत्तिः ॥

अविद्यातत्कार्यात्मकनिबिडबन्धव्यपगमे
यमद्वैतं सत्यं प्रततपरमानन्दममृतम् ।
भजन्ते भूमानं भवभयभिदं भव्यमतयः
नमस्तस्मै नित्यं निखिलनिगमेशाय हरये ॥
अनादिसुखरूपता निखिलदृश्यनिर्मुक्तता
निरन्तरमनन्तता स्फुरणरूपता च स्वतः ।
त्रिकालपरमार्थता त्रिविधभेदशून्यात्मता
मम श्रुतिशतार्पिता तदहमस्मि पूर्णो हरिः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीविश्वेश्वरसरस्वती श्रीचरण-शिष्य श्रीमधुसूदनसरस्वतीविरचितायामद्वैतसिद्धौ सपरिकर-प्रपञ्चमिथ्यात्वनिरूपणं नाम प्रथमः परिच्छेदः ॥

प्रतिपाद्यविषयः—

A 34 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमपरिच्छेदमात्रं विद्यते । मुद्रितः ॥

## No. (72) B 885 अद्वैतसिद्धिः

| | |
|---|---|
| ग्रन्थकर्ता—मधुसूदनसरस्वती | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—1933 |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-462 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

हेयं निरूप्य बन्धाख्यं तन्निवृत्तेर्निबन्धनम् ।
यज्ज्ञानं तदखण्डार्थमादेयमधुनोच्यते ॥

तच्चाखण्डार्थं द्विविधम् । एकं पदार्थनिष्ठमपरं वाक्यार्थनिष्ठम् । एकैकं च पुनर्वैदिकलौकिकभेदेन द्विविधम् । पदार्थनिष्ठं वैदिकमपि द्विविधम् । तत्पदार्थनिष्ठं, त्वंपदार्थनिष्ठं च । सत्यं ज्ञानमनन्तमित्यादि तत्पदार्थनिष्ठं, योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इत्यादि त्वंपदार्थनिष्ठम् ।

उपसंहारः—

न च घटो न शुक्ल इति प्रतीत्यापत्तिः, फलबलेन काल्पनिकभेदस्य सामानाधिकरण्यादिव्यवहारमात्रनिर्वाहकत्वकल्पनेन विपरीतोल्लेखनं प्रत्ययहेतुत्वात् ।

तस्मादेवं विशेषोऽयं न मानविषयः सखे ।
विषादं जहि मत्सिद्धाविद्यया सर्वसङ्गतिः ॥
विशेषखण्डनम् ।

प्रतिपाद्यविषयः—

A 35 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयपरिच्छेदे—आदितः विशेषखण्डनपर्यन्तो भागो वर्तते ॥

## No. (73) B 886 अद्वैतसिद्धिः

| | |
|---|---|
| ग्रन्थकर्ता—मधुसूदनसरस्वती | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—463-697, 1-200 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

एवं प्रत्यक्षतः प्राप्तभेदस्यैव निवारणात् ।
असाक्षात्कृतजीवेशभेदादौ का कथा तव ॥

तथा हि—ईश्वरस्याप्रत्यक्षत्वेन तद्धार्मिकस्य तत्प्रतियोगिकस्य वा भेदस्य गृहीतुमशक्यत्वात् । नन्वीशाधार्मिकभेदस्य जीवाप्रत्यक्षत्वेऽपि स्वधार्मिकभेदस्यापि तत्प्रत्यक्षः, नाहं सर्वज्ञो नाहं निर्दुःख इत्याद्यनुभवात् ।

उपसंहारः—

A 35 कोशवत् ।

प्रतिपाद्यविषयः—

A 35 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयपरिच्छेदे भेदपञ्चके प्रत्यक्षप्रमाणभङ्गनिरूपणमारभ्य ग्रन्थसमाप्तिपर्यन्तो भागो विद्यते ॥

## No. (74) B 883 अद्वैतसिद्धिः

| | |
|---|---|
| ग्रन्थकर्ता—मधुसूदनसरस्वती | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—560 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 1889 कोशवत्।

उपसंहारः—

तदेवं कृत्स्नस्य प्रपञ्चस्याद्वये ब्रह्मणि कल्पनोपपत्तेर्न प्रतिकूलतर्कपराहतिः।

इत्यद्वैतसिद्धौ ब्रह्मणि कृत्स्नकल्पनोपपादनेन प्रतिकूलतर्कनिराकरणम्॥

प्रतिपाद्यविषयः—

1889 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः प्रतिकूलतर्कनिराकरणान्तो भागो वर्तते॥

## No. (75) B 884 अद्वैतसिद्धिः

| | |
|---|---|
| ग्रन्थकर्ता—मधुसूदनसरस्वती | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—501-1069 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

अथ मिथ्यात्वश्रुत्युपपत्तिः।

एतदनुमानमेकमेवाद्वितीयमित्यादिश्रुतिरप्यनुगृह्णाति। ननु श्रुत्या स्वस्वरूपस्वप्रामाण्यस्वयोग्यतादेर्मिथ्यात्वावबोधनेन प्रत्यक्षादिसिद्धतत्सत्त्वोपजीवनेन च ब्रह्मेतरसकलमिथ्यात्वासिद्धिः।

उपसंहारः—

1889 कोशवत्।

प्रतिपाद्यविषयः—

1889 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे मिथ्यात्वश्रुत्युपपादनमारभ्य, प्रथमपरिच्छेदान्तो वर्तते॥

## No. (76) C 1770 अद्वैतसिद्धिः

| | |
|---|---|
| ग्रन्थकर्ता—मधुसूदनसरस्वती | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—45 |
| प्रमाणम्—11 × 5½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—141 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 885 कोशवत्।

उपसंहारः—

A 35 कोशवत्।

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीविश्वेश्वर श्रीचरणशिष्य-श्रीमधुसूदनसरस्वतीविरचितायामद्वैतसिद्धौ मुक्ति-निरूपणं नाम चतुर्थः परिच्छेदः समाप्तः॥

प्रतिपाद्यविषयः—

A 35 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे २, ३, ४ परिच्छेदाः संपूर्णा विद्यन्ते। अयं मुद्रितः।

## No. (77) 4122/1 अद्वैतानुभूतिः

| | |
|---|---|
| ग्रन्थकर्ता—श्रीशंकराचार्यः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—44 |
| प्रमाणम्—13½ × 1⅜ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—6 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

अहमानन्दसत्यादिलक्षणः केवलः शिवः।
अगानन्दादिरूपं यत्त ...... हमचलोऽद्वयः॥ १॥

अक्षिदोषाद्यथैकोऽपि द्वयवद्भाति चन्द्रमाः ।
एकोऽप्यात्मा तथा भाति द्वयवन्मायया मृषा ॥ २ ॥
अक्षिदोषविहीनानामेक एव यथा शशी ।
मायादोषविहीनानामात्मैवैकस्तथा सदा ॥ ३ ॥

उपसंहारः—

जाग्रदादित्रयं यस्मिन् प्रत्यगात्मनि सत्यवत् ।
स एवाहं प्रत्यगात्मा जाग्रदादिविलक्षणः ॥ ८३ ॥
विश्वादिकत्रयं यस्मिन् परमात्मनि सत्यवत् ।
स एव परमात्माहं विश्वादिकविलक्षणः ॥ ८४ ॥
विराडादित्रयं भाति यस्मिन्साक्षिणि सत्यवत् ।
स एव सच्चिदानन्दलक्षणोऽहं स्वयंप्रभः ॥ ८५ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीगोविन्दभगवत्पूज्यपादशिष्य श्रीशंकराचार्यविरचिता अद्वैतानुभूतिः समाप्ता ॥

प्रतिपाद्यविषयः —

अस्मिन्ग्रन्थे पञ्चाशीतिभिः श्लोकैः अद्वैतविषयः संक्षेपेण विचार्यते ।

वक्तव्यविशेषः—

अयं ग्रन्थः बालानामत्यन्तोपकारकः अमुद्रित इति च भाति ।

## No. (78) B. 413 अध्यात्मोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—श्रीअप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः— 12 |
| पत्रविशेषः-- कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—19 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः— आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—115 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

आध्यात्मोपनिषद्भाष्यप्रारम्भः ।

ओमित्यक्षरमुच्चरन्नहमथो श्रीसुन्दरेशं गुरुं
नत्वा पूर्णमदश्च शान्तिमिति तामेनां पठित्वा ततः ।

अध्यात्मोपनिषद्वचांसि सुलभानन्दप्रदान्यादरात्
व्याख्यास्ये विदुषां हिताय परमात्माऽतः प्रसीदत्वयम् ॥

अध्यात्मविद्याधिगमाय लोके
पठन्ति शास्त्राणि यजन्ति देवान् ।
अटन्ति तीर्थानि जपन्ति मन्त्रा-
नेनां श्रुतिं तैरलमीक्षितुस्तु ॥

अत्र खलु ईशादिमुक्तिकान्ताष्टोत्तरशतोपनिषत्सु काश्चिदुपनिषदो गुरुशिष्यक्रमं अवलम्ब्य प्रवृत्ता दृश्यन्ते ।

उपसंहारः—

गुह्याद्गुह्यतरं दृष्ट्वा सद्योमुक्तिप्रदं च यत् ।
कृतकृत्यो भवेद्विद्वानिदमध्यात्मदर्पणम् ॥

किमन्यशास्त्रकथनैः वेदान्तैरितरैश्च किम् ।
सकृद्वा येन नो दृष्टमिदमध्यात्मदर्पणम् ॥

यदेतत्सर्ववेदान्तरहस्यार्थप्रकाशकम् ।
अध्यात्मदर्पणं लोके दुर्लभं ह्याश्रयेत्सुधीः ।

सर्वशास्त्रकथाकन्थारोमन्थेन वृथैव किम् ।
अन्वेष्टव्यं प्रयत्नेन शास्त्रमेतन्मुमुक्षुणा ॥

इति श्रीमत्सुन्दरेश्वरतातपादाशिष्य अप्पय्यदीक्षिताचार्य-(कृत)
विरचितं अध्यात्मदर्पणं समाप्तम् ॥

प्रतिपाद्यविषयः—

लोके शास्त्रपठनदेवयजनतीर्थाटनानि सर्वाण्यपि अध्यात्मविद्या सम्पादनायैव । अस्यां उपनिषदि मनः शुद्धं, अशुद्धं इति द्विविधं प्रोक्तम् । श्रवणमनननिधिध्यासनसमाधिजं ज्ञानमेव सम्यज्ज्ञानमिति निश्चितम् । अयं विषयः दर्पणवत् सुष्ठु प्रतिपादितः ।

वक्तव्यविशेषः—

कोशेऽस्मिन् इयमुपनिषत् समग्रा दृश्यते मुद्रितश्च ।

## No. (79) 1972 अधिकरणरत्नमाला (वैयासिकन्यायमाला)

ग्रन्थकर्ता—भारतीतीर्थमुनिः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$13\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—139

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—52
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।
वैयासिकी न्यायमाला श्लोकैः संगृह्यते स्फुटम् ॥

प्रारीप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तये प्रचयगमनाय शिष्टाचारपरिपालनाय च विशिष्टेष्टदेवतातत्त्वं गुरुमूर्त्युपाधिकं नमस्कृत्य ग्रन्थं प्रतिजानीते प्रणम्येति ॥

उपसंहारः—

वियदादिजगत्सृष्टिप्रतिपादकेषु प्रकरणेषु सर्वत्र परमात्मैव स्रष्टृत्वेनावगम्यते । न क्वापि योगिनस्तथावगम्यन्ते । अतो न तेषां जगत्स्रष्टृत्वम् । अन्यथा अनेकेश्वरत्वे सति कश्चित्सिसृक्षति, कश्चित्संजिहीर्षतीति जगद्व्यवस्था न सिध्येत् । कथं तर्हि स्वाराज्यश्रुतिः ईश्वराधीनस्वाराज्याभिप्रायेणेति ब्रूमः । ईश्वरो ह्युपासनया तोषितस्तेषां भोगमार्गसिद्धये स्वाराज्यं ददौ मुक्तिं च तदर्थविद्योत्पादनेन दत्तवान् । तस्माज्जगत्सृष्टौ स्वातन्त्र्याभावेऽपि भोगमोक्षयोस्तेषां स्वातन्त्र्यमस्ति । अशेषमिति मङ्गलम् ॥

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीभारतीतीर्थमुनिविरचितायां
अधिकरणरत्नमालायां चतुर्थाध्याये चतुर्थः पादः ॥

प्रतिपाद्यविषयः—

ब्रह्मसूत्रतात्पर्यार्थः रत्नमालाविस्तराभ्यां विव्रियते ।

वक्तव्यविशेषः—

अयं ग्रन्थः मुद्रितः (आनन्दाश्रममुद्रणालये) । अस्मिन्कोशे समग्रश्च विद्यते ।

## No. (80) 990/1 अधिकरणरत्नमाला ( वैयासिकन्यायमाला )

ग्रन्थकर्ता—भारतीतीर्थमुनिः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–84

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—8
कालः (कोशस्य)—180
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

1972 कोशवत् ।

उपसंहारः—

1972 कोशवत् ।

प्रतिपाद्यविषयः—

1972 कोशवत् ।

वक्तव्यविशेषः—

1972 कोशवत् ।

## No. (81) 2355 अधिकरणरत्नमाला (वैयासिकन्यायमाला)

ग्रन्थकर्ता—भारतीतीर्थमुनिः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16 \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–74

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—62
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

1972 कोशवत् ।

उपसंहारः—

1972 कोशवत् ।

प्रतिपाद्यविषयः—

1972 कोशवत् ।

वक्तव्यविशेषः—

1972 कोशवत् ।

## No. (82) 4659/3 अधिष्ठानविवेकप्रकरणम्

ग्रन्थकर्ता—पूर्णप्रकाशानन्दसरस्वती
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 1$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—96–105
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रीकृष्णमच्युतं नत्वा श्रीगुरूंश्च गरीयसः ।
अधिष्ठानविवेकोऽयं क्रियते बोधसिद्धये ॥

"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति वृद्धवचनम् । अध्यारोपो नाम वस्तुन्यवस्त्वारोपः । वस्तु सच्चिदानन्दात्मकं ब्रह्म, अज्ञानादिसकलजडसमूहेऽवस्त्वित्यर्थः । अवस्तुस्वरूपस्य प्रपञ्चस्य आरोपो भ्रान्तिरित्यर्थः । वाचारम्भणमित्यादिश्रुत्या अज्ञानसहितकार्यप्रपञ्चः कारणब्रह्मव्यतिरेकेण नास्तीत्येवमधिष्ठानब्रह्ममात्रपर्यवशेषणमपवाद इत्यर्थः ।

उपसंहारः—

प्रारब्धावसाने प्रत्यगभिन्ने ब्रह्मणि प्राणे लीने सति अज्ञानतत्कार्यसंस्काराणामपि विनाशात्परमकैवल्यमात्मानन्दैकरसमखिलदेहजगत्प्रतिभासरहितमखण्डं ब्रह्मावतिष्ठते । तदास्य जीवन्मुक्तस्य ब्रह्मस्वरूपेणावस्थानरूपा विदेहमुक्तिर्भवति । तथा च श्रुतिः, न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते । विमुक्तश्च विमुच्यते इति च । तथाध्यारोपापवादजनितनिष्प्रपञ्चब्रह्मात्मैक्यज्ञानान्मुक्तिरिति सिद्धम् ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमदद्वैतानन्दसरस्वतीपूज्यपादशिष्य पूर्णप्रकाशानन्दसरस्वतीविरचितमधिष्ठानविवेकप्रकरणं समाप्तम् ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अध्यारोपापवादशब्दार्थः, स्थूलसूक्ष्मकारणप्रपञ्चसृष्टिक्रमः, विराडादिस्वरूपं, ब्रह्मस्वरूपं, अन्ते प्रपञ्चविलये अधिष्ठानब्रह्मस्वरूपेणावस्थानलक्षणमोक्षश्च प्रतिपाद्यते ।

वक्तव्यविशेषः—

अयं ग्रन्थः अमुद्रितः ।

## No. (83) B 408 अक्षमालिकोपनिषत् (भाष्यसहिता)

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8 \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-7

प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—शिथिलः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

(मूलम्) वाङ्मे मनसीति शान्तिः। अथ प्रजापतिर्गुहं पप्रच्छ—भो ब्रह्मन्नक्षमालाभेदविधिं ब्रूहीति। सा किं लक्षणा कति भेदा? अस्याः कानि सूत्राणि? कथं घटनाप्रकारः? के वर्णाः? का प्रतिष्ठा? कैषा अधिदेवता? किं फलं चेति? तं गुहः प्रत्युवाच—प्रवाळमौक्तिकस्फटिकशङ्खरजताष्टापदचन्दनपुत्रजीविकाब्जरुद्राक्षाणीति। आदिक्षान्तमूर्तिसंविधानुभावाः सौवर्णं राजतं ताम्रं चेति सूत्रत्रयम्—तद्विवरे सौवर्णम्, तद्दक्षपार्श्वे राजतम्, तद्वामे ताम्रम्। तन्मुखे मुखम्। तत्पुच्छे पुच्छम्॥

उपसंहारः—

(भाष्यम्) अकारादिक्षकारान्तेषु सर्वेषु चाक्षरेष्वक्षमालिकायां क्रमेण भाव्यमानेषु तत्र तत्र प्रणवस्याभिहितत्वात् निर्विशेषपरब्रह्मज्ञानानुभवार्थिकैर्वाक्षमालिकावगन्तव्या। रुद्राक्षरमालया मन्त्राणां जप्यत्वं तद्बहुमालानां धार्यत्वं च तदुपनिषद्यवगम्यते। अस्यां त्वक्षमालिकोपनिषद्यक्षमालया मन्त्राणां जप्यत्वं केवलमुच्यते। न तासां बह्वीनां धार्यत्वम्। लोके तु बह्वीर्मालाः केचन धरन्ति। तदुपनिषत्प्रमाणालम्बनमवगन्तव्यम्।

इत्यप्पयदीक्षिताचार्यकृतिषु अक्षमालिकोपनिषद्भाष्यं समाप्तम्।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अक्षमालया मन्त्राणां जप्यत्वं प्रतिपाद्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (84) B 409 अक्षिकोपनिषत् (सभाष्या)

ग्रन्थकर्ता—अप्पय्यदीक्षितः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8 × 6½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—10

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—14
कालः (कोशस्य)—प्राचीनः
स्थितिः—साधारणः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

अक्षिकोपनिषत्प्रारभ्यते। सहनाववत्विति शान्तिः। अथ ... ह ... साङ्कृतिः भगवान् आदित्यलोकं जगाम। तं आदित्यं नत्वा चाक्षुष्मतीविद्यया तमस्तुवत्। ॐ नमो भगवते सूर्यायाक्षितेजसे नमः।

ॐ खेचराय नमः। ओं महासेनाय नमः। ओं तमसे नमः। ओं रजसे नमः। ओं सत्वाय नमः। असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमय। विष्णुर्भगवान् शुचिरूपः हंसो भगवान् शुचिरूपः प्रतिरूपः एवं चाक्षुष्मतीविद्यया स्तुतस्सूर्यनारायणः सुप्रीतोऽब्रवीत्।

उपसंहारः—

आदिमध्यावसानेषु दुःखं सर्वमिदं यतः।
तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवानघ॥
अविद्यातिमिरातीतं सर्वाभासविवर्जितम्
आनन्दममलं शुद्धं मनो वाचामगोचरम्॥
प्रज्ञानघनमानन्दं ब्रह्मास्मीति विभावयेदित्युपनिषत।

अक्षिकोपनिषत्समाप्ता।

प्रतिपाद्यविषयः—

भगवान् आदित्यः सुदुर्लभं तत्त्वज्ञानं साङ्कृतायोपदिदेश "असङ्गसुखसौख्येन कालं नयति नीतिमान्" इत्यादिदिश।। द्विप्रकारको असंसर्गः तद्भेदः तत्क्रमश्च अस्यां उपनिषदि सम्यक् निरूपितः।

वक्तव्यविशेषः—

कोशेऽस्मिन् समग्रा दृश्यते मुद्रितश्च।

## No. (85) 4659/3 अधिष्ठानविवेकप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—पूर्णप्रकाशानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—12½ × 1 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—96-105 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

श्रीकृष्णमच्युतं नत्वा श्रीगुरूंश्च गरीयसः ।
अधिष्ठानविवेकोऽयं क्रियते बोधसिद्धये ॥

"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति वृद्धवचनम् । अध्यारोपो नाम वस्तुन्यवस्त्वारोपः । वस्तु सच्चिदानन्दात्मकं ब्रह्म, अज्ञानादिसकलजडसमूहोऽवस्त्वित्यर्थः । अवस्तुस्वरूपस्य प्रपञ्चस्य आरोपो भ्रान्तिरित्यर्थः । वाचारम्भणमित्यादिश्रुत्या अज्ञानसहितकार्यप्रपञ्चः कारणब्रह्मव्यतिरेकेण नास्तीत्येवमधिष्ठानब्रह्ममात्रपर्यवशेषणमपवाद इत्यर्थः ।

उपसंहारः—

प्रारब्धावसाने प्रत्यगभिन्ने ब्रह्मणि प्राणे लीने सति अज्ञानतत्कार्यसंस्काराणामपि विनाशात्परमकैवल्यमात्मानन्दैकरसमखिलदेहजगत्प्रतिभासरहितमखण्डं ब्रह्मावतिष्ठते । तदास्य जीवन्मुक्तस्य ब्रह्मस्वरूपेणावस्थानरूपा विदेहमुक्तिर्भवति । तथा च श्रुतिः, न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते, विमुक्तश्च विमुच्यते इति च । तथाध्यारोपापवादजनितनिष्प्रपञ्चब्रह्मात्मैक्यज्ञानान्मुक्तिरिति सिद्धम् ।

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीमदद्वैतानन्दसरस्वतीपूज्यपादशिष्य पूर्णप्रकाशानन्दसरस्वती विरचितमधिष्ठानविवेकप्रकरणं समाप्तम् ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अध्यारोपापवादशब्दार्थः, स्थूलसूक्ष्मकारणप्रपञ्चसृष्टिक्रमः, विराडादिस्वरूपं, ब्रह्मस्वरूपं, अन्ते प्रपञ्चविलये अधिष्ठानब्रह्मस्वरूपेणावस्थानलक्षणमोक्षश्च प्रतिपाद्यते ।

वक्तव्यविशेषः—

अयं ग्रन्थः अमुद्रितः ।

## No. (86) 4659/5 अनुभवपञ्चरत्नम्

ग्रन्थकर्ता—श्रीशङ्कराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$12\frac{1}{2}\times1$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—106

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

नाहं देहो नेन्द्रियाण्यन्तरङ्गं
नाहंकारः प्राणवर्गो न बुद्धिः ।
दारापत्यक्षेत्रवित्तादिदूरं
साक्षी नित्यः प्रत्यगात्मा शिवोऽहम् ॥
रज्ज्वज्ञानाद्भाति रज्जौ यथाहिः
स्वात्माज्ञानादात्मनो जीवभावः ।
आप्तोक्त्या हि भ्रान्तिनाशे स रज्जु-
र्नाहं जीवो देशिकोक्त्या शिवोऽहम् ॥

उपसंहारः—

मत्तो नान्यत्किंचिदत्रास्ति दृश्यं
सत्यं बाह्यं वस्तु मायोपक्लृप्तम् ।
आदर्शान्तर्भासमानस्य तुल्यं
मय्यद्वैते भाति तस्माच्छिवोऽहम् ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे देहेन्द्रियादिव्यतिरिक्तः केवलः शिव एवाहमिति स्वानुभवः प्रदर्श्यते ।

वक्तव्यविशेषः—

मुद्रितोऽयं ग्रन्थः

## No. (87) 1814 अनुभूतिप्रकाशः

ग्रन्थकर्ता—विद्यारण्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$18\frac{3}{4} \times 1\frac{5}{8}$ अङ्गुलानि
लिपिः— आन्ध्रलिपिः
पत्राणि—1-47

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—74
कालः (कोशस्य)—?
स्थितिः—समीचीनः
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

छान्दोग्ये श्वेतकेतुर्यामारुणेर्लब्धवानिमाम् ।
ब्रह्मविद्यां सङ्ग्रहेण वक्ष्येऽहं सुखबुद्धये ॥ १ ॥
वेदानधीत्य गर्वेण श्वेतकेतुः पराङ्मुखः ।
आसीत्प्रत्यङ्मुखीकर्तुं गुरुराहातिविस्मयम् ॥ २ ॥
एकतत्त्वे श्रुते सर्वमश्रुतं च श्रुतं भवेत् ।
अमतं च मतं तद्वदविज्ञातं च बुध्यते ॥ ३ ॥
न ऋग्वेदज्ञानमात्रेण यजुर्वेदादि बुध्यते ।
तस्मादेकधिया सर्वं ज्ञातं स्यादित्यलौकिकम् ॥ ४ ॥

उपसंहारः—

लिङ्गोपाधित्वतो जीवा अपीशाः सर्ववित्त्वतः ।
समष्टिसूत्रवज्ज्ञेयो ब्रह्माण्डाख्यवपुर्विराट् ॥
देवतिर्यङ्मनुष्यादिदेहो व्यष्टिरितीर्यते ।
परः प्रविश्य देहेषु मायया मूढवत्स्थितः ॥
द्वैतस्य मायिकत्वेन तत्त्वमद्वैतमिष्यताम् ।
सन्मात्रो नित्य इत्यादि श्रुत्या तत्तु स्फुटीकृतम् ॥
आथर्वणेऽस्मिन्कैवल्यप्रमुखाः श्रुतयः स्फुटाः ।
श्रुतिव्याख्यानतस्तुष्याद्विद्यातीर्थमहेश्वरः ॥

इत्यनुभूतिप्रकाशे देवविद्याख्यः दशमोऽध्यायः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे छान्दोग्य-मुण्डक-प्रश्न-कौषीतकि-मैत्रायणीय-कठ-श्वेताश्वतर-बृहदारण्यकाद्युपनिषदामर्थाः कारिकारूपेण स्पष्टं विव्रियन्ते ।

वक्तव्यविशेषः—

अयं ग्रन्थः मुद्रितः ।

## No. (88) A 735 अनुभूतिमीमांसाभाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13 × 8 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-512/2 1-99/1

प्रतिपुटं पङ्क्तयः—22
प्रतिपङ्क्त्यक्षराणि—17
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

A 168 कोशवत् ।

उपसंहारः—

A 168 कोशवत् ।

प्रतिपाद्यविषयः—

A 168 कोशवत् ।

वक्तव्यविशेषः—

A 168 कोशवत् ।

## No. (89) B 847 अनुभूतिमीमांसाभाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—654

प्रतिपुटं पङ्क्तयः—28
प्रतिपङ्क्त्यक्षराणि—24
कालः (कोशस्य)—प्राचीना
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

A 168 कोशवत् ।

उपसंहारः—

A 168 कोशवत् ।

प्रतिपाद्यविषयः—

A 168 कोशवत् ।

वक्तव्यविशेषः—

A 168 कोशवत्—

## No. (90) A 168 अनुभूतिमीमांसाभाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{3}{8} \times 7\frac{3}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-334
प्रतिपुटं पङ्क्तयः—46
प्रतिपङ्क्त्यक्षराणि—32
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ओं शंनो मित्र इत्यादयः शान्तिपाठाः। ओं षोडशयुष्मदस्मत्प्रत्ययगोचराणां षोडशविषयविषयिणां शेषशेषिणां तमःप्रकाशवद्विरुद्धस्वभावानां इतरेतरस्मिन्नितरेतरात्मकतामितरेतरधर्मांश्च नैसर्गिकतयाध्यस्येतरेतरविवेकग्रहणनिबन्धनो महान्प्रमादः पण्डितेष्वप्यवगम्यते। कोऽयं प्रमादो नाम।

उपसंहारः—

भविष्यत्येव ह्यस्या अनुभूतिमीमांसायाः वार्तिककारः स्वानुभूतिनिष्ठो महान् पुरुषः। तस्मात्सर्ववेदान्तरहस्यार्थायतनभूते अस्मिन्महानुभवशास्त्रे सर्वेऽप्यपरोक्षानुभवेच्छवो निरन्तरनिष्ठां कुर्वन्तोऽत्रैवादेहमुक्तत्वं गच्छन्तीति सिद्धम्। अदेहमुक्तिः शब्दादिति पदाभ्यासः अनुभूतिमीमांसाशास्त्रपरिसमाप्तिद्योतनार्थः।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतावनुभूतिमीमांसाभाष्ये
चतुर्थाध्यायस्य चतुर्थः पादः।

प्रतिपाद्यविषयः—

अनुभूतिमीमांसासूत्रविवरणविचारः।

वक्तव्यविशेषः—

एतत्सूत्रभाष्ययोरेक एव कर्ता, अयं ग्रन्थः कुत्राप्यमुद्रितः।

## No. (91) B 331 अनुभूतिमीमांसासूत्रपाठः

ग्रन्थकर्ता—अप्पयदीक्षितः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7 \times 5\frac{3}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—71
प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—15
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

अथात आत्मदिदृक्षा, सत्याद्यात्मक एषः। परमप्रेमास्पदत्वात्। प्रमाणानुसारात्। विज्ञाताचाकरणत्वात्। आश्रयत्वात्तु सूत्रवत्।

उपसंहारः—

अरूपाभिप्राया नव प्रतिषेधाः। अर्थान्तराणि तु। अशक्तस्तु पुरुषं गुरुं वा। ब्रह्मचर्याच्च। इन्द्रियाणां मन इत्यादिदर्शनात्। नोत्क्रान्तिस्तु तच्छ्रुतेः। अदेहमुक्तिः शब्दाददेहमुक्तिः शब्दात्। वेदान्तपञ्चत्रयोदश।

इति चतुर्थाध्यायस्य चतुर्थःपादः अध्यायश्च समाप्तः।

प्रतिपाद्यविषयः—

अनुभवाद्वैतप्रक्रियानुरोधेन, जीवन्मुक्तिविदेहमुक्तिप्रतिपादकः, अष्टोत्तरशतोपनिषदर्थनिर्णायकन्यायविचारात्मकोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अमुद्रितः।

## No. (92) B 333/1 अनुभूतिमीमांसासूत्रपाठः

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षितः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—10 |
| प्रमाणम्—$6\frac{1}{2} \times 4$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—40 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 331 कोशवत्।

उपसंहारः—

B 331 कोशवत्।

प्रतिपाद्यविषयः—

B 331 कोशवत्।

वक्तव्यविशेषः—

B 331 कोशवत्।

## No. (93) B 414 अन्नपूर्णोपनिषत् (सभाष्या)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षित: | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—प्राचीन: |
| लिपि—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—63 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

अन्नपूर्णोपनिषत्। ओं भद्रं कर्णेभिरिति शान्तिः।
निदाघो नाम योगेन्द्रो ऋभुं ब्रह्मविदां वरम्।
प्रणम्य दण्डवद्भूमौ उत्थाय स पुनर्मुनिः॥
आत्मतत्त्वं अनुब्रूहि इत्येवं पप्रच्छ सादरम्।
कयोपासनया ब्रह्मन्नीदृशं प्राप्तवानसि॥
तां मे ब्रूहि महाविद्यां मोक्षसाम्राज्यदायिनीम्।
निदाघत्वं कृतार्थोऽसि शृणु विद्यां सनातनाम्॥
यस्य विज्ञानमात्रेण जीवन्मुक्तो भविष्यसि।
मूलशृङ्गाटमध्यस्था बिन्दुनादकलाश्रया॥

उपसंहारः—

कथं तर्हि कर्मकर्तृत्वं प्रातिभासिकं वा जीवन्मुक्तस्य अभ्युपगम्य पाषाणसादृश्यं वक्तुं शक्यमिति चेत् नायं दोषः। ब्रह्मवरिष्ठपदाभिप्रायेण उक्तत्वात्। एतावता वरिष्ठपदप्राप्तिपर्यन्तेन आत्मयत्नेन निर्विकल्प-निस्सङ्कल्प-निवृत्तिक-निर्वासन-समाधिलक्षणो संसृतिर्निश्शेषं जिता भवति एतदुपनिषदध्ययनात् ब्रह्मैव भवतीति।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्य अप्पय्यदीक्षिताचार्यकृतिषु
अन्नपूर्णोपनिषद्भाष्यं समाप्तम्।

प्रतिपाद्यविषय:—

जगन्मातृकृपया ऋभुर्नाम योगीन्द्रः आत्मतत्त्वं विज्ञातवान्। स ब्रह्मवित् ऋभुः श्रद्धया सादरमागतं निदाघनामानं योगीन्द्रं प्रति पञ्चविध-भ्रमप्रकारनिरूपणपूर्वकं, तन्निरासेन सर्वं ब्रह्मवद्भासते इत्येतद्विषयं सम्यक् विशदयति।

वक्तव्यविशेष:—

सभाष्या अन्नपूर्णोपनिषत् समग्रा दृश्यते मुद्रिता च।

## No. (94) 4122 अपरोक्षानुभूतिः

ग्रन्थकर्ता—श्रीशंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$13\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–10
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—44
कालः (कोशस्य)—?
स्थितिः—किञ्चिच्छिथिलः
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रीरामं परमानन्दमुपदेष्टारमीश्वरम् ।
व्यापकं सर्वलोकानां (सर्वभूतानां) कारणं तं नमाम्यहम् ॥
अपरोक्षानुभूतिर्वै प्रोच्यते मोक्षसिद्धये ।
सद्भिरेव प्रयत्नेन वीक्षणीया मुहुर्मुहुः ॥
वर्णाश्रमादिधर्मेण तपसा हरितोषणात् ।
साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयम् ॥

उपसंहारः—

निर्वासनो निरालम्बः स्वच्छन्दो मुक्तबन्धनः ।
क्षिप्तसंस्कार . . तेन चेष्टते शुक्लवर्णात् ॥
मोक्षस्य नाभिधासोऽस्ति न ग्रामान्तमेव च ।
अज्ञानहृदयग्रन्थिनाशो मोक्ष इति स्मृतः ॥
अहमिव जनयोगं सर्वदा वर्जयेद्यः
कुणपमिव सुनारीं त्यक्तकामो विरागी ॥
विषमिव विषयार्थान्मन्यमानो दुरन्तान्
जयति परमहंसो मुक्तभावं स याति ॥

इति परमहंसपरिव्राजकाचार्य श्रीगोविन्दभगवत्पूज्यपादशिष्य श्रीशंकराचार्य-भगवत्पादविरचिता अपरोक्षानुभूतिः समाप्ता ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे साधनचतुष्टयं, आत्मनः स्वप्रकाशत्वं देहात्मवाद-निराकरणं, जीवत्वस्य मृषात्वं कार्यकारणयोरभेदः, प्राणायामलक्षण-स्वरूपे, इत्यादयो विषयाः स्पष्टं प्रतिपाद्यन्ते ।

वक्तव्यविशेषः—

अयं ग्रन्थः मुद्रितः ।

## No. (95) 1125 अपरोक्षानुभूतिः

| | |
|---|---|
| ग्रन्थकर्ता—श्रीशंकराचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—40 |
| प्रमाणम्—$8\frac{1}{2} \times 1\frac{1}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—18-29 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

4122 कोशवत्।

उपसंहारः—

4122 कोशवत्।

प्रतिपाद्यविषयः—

4122 कोशवत्।

वक्तव्यविशेषः—

4122 कोशवत्।

## No. (96) 39 अपरोक्षानुभूतिः

| | |
|---|---|
| ग्रन्थकर्ता—श्रीशंकराचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—30 |
| प्रमाणम्—$7\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—80-125 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

4122 कोशवत्।

उपसंहारः—

4122 कोशवत्।

प्रतिपाद्यविषयः—

4122 कोशवत्।

वक्तव्यविशेषः—

4122 कोशवत् ।

अस्मिन्कोशे कर्णाटकटीका च विद्यते ।

No. (97) B 416 अमृतबिन्दूपनिषत् (सभाष्या)

ग्रन्थकर्ता—?
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—5
प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—17
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यदक्षराणि सर्वाणि भान्त्येवामृतबिन्दुवत् ।
ये नाम अमृतबिन्द्वाभ्यां व्याख्यास्ये श्रुतिमादरात् ॥

अत्र शुद्धमनस एव तत्त्वज्ञानोपदेशाधिकारात् । तद्धि दर्शयिषुः आदौ मनसः द्विविधं स्वरूपं विवृणोति—मन इति ।

उपसंहारः—

केचिद्धि साधका अन्तरात्मानं गृह्णीयुः । केचित्तु बहिरात्मानम् । अतः सर्वानुग्राहकत्वेन अन्तर्बहिश्च अवतिष्ठत इत्युक्तोपनिषदं उपसंहरति—सर्वेति । सर्वभूताधिवासं सर्वेषां भूतानां अधिवासो यस्मिन् तत् तद्ब्रह्मैव वासुदेवः अहमस्मीति द्विर्वचनं उपनिषत्समाप्त्यर्थम् ।

इत्यमृतबिन्दूपनिषत् समाप्ता ।

प्रतिपाद्यविषयः—

अत्र मनसः द्वैविध्यं निरूप्य शुद्धमनःकरणकज्ञानध्यानाभ्यां प्रापणीयं हि ब्रह्म इत्येतन्निरूपितम् । विश्वतैजसप्राज्ञभेदेन जीवानां अनेकत्वेऽपि तत्प्रतियोगिकसाक्षी परमात्मा एक एव मन्तव्यः इति च निरूपितम् ।

वक्तव्यविशेषः—

भाष्यसहितः अमृतबिन्दूपनिषत्समग्रा दृश्यते अमुद्रितश्च ।

## No. (98) B 415 अमृतनादोपनिषत् (सभाष्या)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$8\times6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—10 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

अमृतनादोपनिषत्प्रारम्भः ।

सहनाववत्विति शान्तिः ।
शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ।
परमं ब्रह्म विज्ञाय उल्कावर्तान्यथा सृजेत् ॥
ओंकाररथमारुह्य विष्णुं कृत्वाथ सारथिम् ।
ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥
तावद्रथेन गन्तव्यं यावद्रथपथि स्थितः ।
स्थात्वा रथपथि स्थानं रथमुत्सृज्य गच्छति ॥

उपसंहारः—

यस्येदं मण्डलं भित्वा मारुतो याति मूर्धनि ।
यत्र यत्र म्रियेद्वापि न स भूयोऽभिजायते ॥

न सभूयोऽभिजायत इत्युपनिषत् ।

अरेफमक्षरमक्षरं ज्ञानमित्यर्थः । तस्माज्जातमक्षरं न क्षरते न विनश्यति नित्यत्वात् . . . . सप्तत्रिंशत् पर्यन्ताश्श्लोकास्स्पष्टार्थाः ब्रह्मरन्ध्रवायोर्न पुनर्जन्मेति . . . . . . .

इति अमृतनादोपनिषद्भाष्यं समाप्तम् ।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्य अप्पय्यदीक्षिताचार्यकृतौ अमृतनादोपनिषद्भाष्यं समाप्तम् ।

प्रतिपाद्यविषयः—

अस्यां उपनिषदि रेचक पूरक कुम्भक इत्यादि प्राणायामविधानस्वरूपं तत्फलं तथा योगिनां लक्षणानि आदर्शमार्गश्च प्रतिपादितः ।

वक्तव्यविशेषः—

भाष्यसहिता अमृननादोपनिषत् समग्रा दृश्यते मुद्रितश्च ।

## No. (99) 1319 अवधूतगीताव्याख्या (समूला)

| | |
|---|---|
| ग्रन्थकर्ता—परमानन्दतीर्थः | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—40 |
| प्रमाणम्—$12 \times 1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—मलयाळलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-162 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ईश्वरो गुरुरात्मेति मूर्तिभेदाद्विभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥
गोरक्षकस्य माहात्म्यं दत्तात्रेयस्य वैभवम् ।
संवादमुभयोश्चैव अद्भुतं ब्रह्मनिर्णयम् ॥
तस्य पट्टाभिषेकं च अखण्डरससाधने ।
प्रश्नोत्तराभ्यां प्रथमं वर्णानां सप्तमेन वै ॥
प्रथमं वाक्यसन्दर्भः नानावृत्तैश्च संक्रमैः ।
अनिर्देश्यमतीतं च वस्तु तत्र निरूप्यते ॥
अत्र दत्तात्रेयसंहितायां कथासन्दर्भः ।
अत्रिश्च भगवान्पूर्वमनपत्यस्तपश्चरन् ।
अनिर्दरूपमुद्दिश्य पुत्रार्थं भार्यया सह ॥ इत्यादि ।

उपसंहारः—

हे गोरक्षक ! अवधूतः समरसमग्नत्वात् भावितान्तरं–पूतः नास्त्येव । मग्नश्चेत्कथं वा मम उपदिष्टवानिति चेत्; महासमुद्रे मग्न इव एकरससागरे मग्नसमये प्रोक्तवाननन्तरं दर्शनाभावात् मग्नमात्रं न भवति । किं तु भावितभूतस्तेन प्रलपितम् । एतेन किमुक्तमिति चेत् अनुभवदृष्टेनात्मदर्शनं गतेन उक्तं असत्यं न भवति । प्रमाणत्वेनोक्तं एवं गीताप्रलपितं विद्धि । एवमेव सुखेन तिष्ठस्वेत्यर्थः ।

इति भारतीतीर्थशिष्यपरमानन्दतीर्थविरचिता टीकासमेता
अवधूतगीता समाप्ता ।

इत्यवधूतग्रन्थे दत्तात्रेयगोरक्षकसंवादे तृतीये तृतीयप्रकरणं समाप्तम् ।

प्रतिपाद्यविषयः—

अवधूतगीतार्थो विचार्यते ।

वक्तव्यविशेषः—

मूलमात्रं मुद्रितम् । व्याख्यात्वमुद्रिता भाति ।

## No. (100) A 105 अवधूतगीताव्याख्या (समूला)

ग्रन्थकर्ता—परमानन्दतीर्थः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 8$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-67

प्रतिपुटं पङ्क्तयः—40
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—45 (1895)
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

1319 कोशवत् ।

उपसंहारः—

विशुद्धं नामाखण्डवृत्तिरूपमेव । अत एव निर्गुणं ब्रह्म । गुणं नाम पञ्चपदार्थरूपं तदभावात् । अतो बद्धो मुक्तः कथं भवेत् ? न कथमपीति भावः । बद्धस्तु देहोऽहमिति निर्णीतश्चेद्बन्धः । अन्यथा ज्ञानरूपत्वान्मुक्तस्त्वहं ब्रह्मास्मीति निश्चयरूपत्वात् । एवं चेन्मुक्तिः तदुभयमपि नास्त्येवेत्यर्थः ।

इत्यवधूतग्रन्थे दत्तात्रेयगोरक्षकसंवादे पञ्चमप्रश्नप्रकरणम् ।

प्रतिपाद्यविषयः—

1319 कोशवत् ।

वक्तव्यविशेषः—

प्रथमाध्याये 59तमश्लोकपर्यन्तो भागः ।

## No. (101) C 2145 अवधूतगीताव्याख्या (समूला)

ग्रन्थकर्ता—परमानन्दतीर्थः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{1}{4} \times 4$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—3-130

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—32
कालः (कोशस्य)—दुर्मतिसं. (80)
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रम:—

इति विचिन्वानः कश्चिदपि दृष्टश्चेत्पश्यामि। वर्णेषु लिङ्गेष्वाश्रमादिषु अन्यजातिभेदेषु लीलया पश्यामीति तस्माद्विनिर्गत्य प्रथमं दक्षिणां दिशं विचिन्वानो नापश्यदधिकारिणम्। पश्चिमां दिशं विचिन्वानो नापश्यत्। उत्तरां दिशं विचिन्वानो नापश्यत्। मध्ये अवान्तरं च विचिन्वन् काश्चिदपि नापश्यत्—इत्यादिः।

उपसंहार:—

कथं वा एतत्प्रलपितमिति नाशङ्कनीयम्; किंतूक्त्वा निमग्नः ततः कथमवधूत अवधूत इति कुत्र वर्तते? एकरससागरे अवधूत इति त्वामिति अहमिति जगदिति भावनेति अतिपूत इति समुद्रे मग्न इति। कथं वा उच्यते नेत्येव, आत्मनोऽन्यस्यासत्यत्वात् हे गोरक्षक! एकरसे एतत्क्षणमारभ्य मन्त्रमपि त्यज तन्त्रमपि त्यज सर्वं त्यज सुखी भवेत्युपदेशः एवं तिष्ठस्वेत्यर्थः।

इत्यवधूतग्रन्थे दत्तात्रेयगोरक्षकसंवादे प्रथमप्रकरणं समाप्तम्।

प्रतिपाद्यविषय:—

1319 कोशवत्।

वक्तव्यविशेषः—

प्रथमप्रकरणं संपूर्णम्।

## No. (102) B 417 अवधूतोपनिषत् (सभाष्या)

ग्रन्थकर्ता—अप्पय्यदीक्षितः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8 \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—9

प्रतिपुटं पङ्क्तयः—13
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रम:—

अवधूतोपनिषत्प्रारम्भः ।

अथ याजुषे अवधूतोपनिषत् । सहनाववतु इति शान्तिः । अथ ह साङ्कृतिर्भगवन्तं अवधूतं दत्तात्रेयं परिसमेत्य पप्रच्छ । भगवन् । कोऽवधूतः? तस्य का स्थितिः? किं लक्ष्म? किं संसरणमिति । तं ह उवाच भगवान् दत्तात्रेयः परमकारुणिकः ।

अक्षरत्वात् वरेण्यत्वात् धूतसंसारबन्धनात् ।
तत्त्वमस्यादिलक्ष्यत्वात् अवधूत इतीर्यते ॥
यो विलङ्घ्य आश्रमान् वर्णान् आत्मन्येव स्थितः सदा ।
अतिवर्णाश्रमे योगे अवधूतस्स कथ्यते ॥

उपसंहार:—

न चैतेन वस्तुन आगन्तुकत्वदोषः आपद्येत । ब्रह्मानुभवात्मिकायास्तत्प्राप्तेः केवलमागन्तुकत्वात् । यद्वा भूतब्रह्मणो नित्यसाकारत्वेऽपि भव्यब्रह्मणो मुक्तसाकारतया आगन्तुकत्वमुपपद्यते । न च अस्यारब्धक्षये विनाशेऽपि कतकरेणुस्थानीयत्वान्मुक्तस्य . . . . भविष्यन्निष्प्रतियोगिकब्रह्मीभावात् पुनरुत्पत्तिप्रसङ्गः । तस्मादप्राप्तस्य प्राप्तव्यस्य प्राप्तिरेव सर्वशास्त्रयुक्त्यनुभवानुरोधिना इति मन्तव्यम् ।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पय्यदीक्षिताचार्यकृतिषु अवधूतोपनिषद्भाष्यं समाप्तम् ।

प्रतिपाद्यविषय:—

परमकारुणिको दत्तात्रेयः साङ्कृतिर्भगवन्तं प्रतिबोधितवान् । यथा रविः सर्वरसान् प्रभुङ्क्ते परन्तु न लिप्यते तथैव योगी विषयान् भुञ्जानोऽपि न लिप्यते पापपुण्यैः । ज्ञानयोगेन मनोबुद्ध्यन्तःकरणादिसर्वशुद्धिर्भवति । अस्मिन् ग्रन्थे योगस्य रीतिः तदुपयुक्तता च कथिता ।

वक्तव्यविशेष:—

कोशेऽस्मिन् इयमुपनिषत् समग्रा दृश्यते मुद्रिता च ।

## No. (103) B 527 अविद्यापिशाचीभञ्जनम्

ग्रन्थकर्ता—अमरेश्वरशास्त्री
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8 × 6½ अङ्गुलानि
लिपिः—कन्नडलिपिः
पत्राणि—123–188

प्रतिपुटं पङ्क्तयः—22
प्रतिपङ्क्त्यक्षराणि—24
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यत्तत्त्वं निखिलस्य यत्र निवसत्येतत्समस्तं जगत्
यत्सत्वान्वयतोऽस्य सत्वमिह यद्भासाखिलस्यास्य धीः ।
यत्साक्षात्कृतिरात्मतत्त्वविषयाज्ञानापहारक्षमा
तत्तेजो हृदि भावयेऽहमभयं श्रीदक्षिणास्यं गुरुम् ॥ (I-5)

इह खल्वनाद्यविद्याशक्तिप्रतिबन्धादनुत्पन्नब्रह्मसाक्षात्कारस्य आपातप्रतिपन्नब्रह्मात्मैक्यस्य निरतिशयपुरुषार्थकामस्य मोक्षसाधनब्रह्मतत्त्वज्ञानप्रयोजनकवेदान्तवाक्यविचारविधायकविद्वद्गुद्देशमूलकमिदं सूत्रं (अथातो ब्रह्मजिज्ञासेत्यादौ) चकार भगवान् सूत्रकारो बादरायणमुनिर्निरुपाधिकृपानिधिः क्रमेण सर्वाणि च सूत्राणि । सूत्रार्थस्तु दीनानुजिघृक्षया श्रीभाष्यकारैः सम्यग्विचारितः ।

उपसंहारः—

"यत्रोभयोः समो दोषः परिहारोऽपि वा समः" इति नात्रापवित्रविकल्पावकाशः । तस्मादादृताः सर्वेऽप्येते "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये कैवल्येनेत्यादिश्रुत्युक्तजीवन्मुक्तिर्युक्ता एवेति सर्वं रमणीयम् । देहाभासजगदाभासनिवृत्तौ अशरीरब्रह्मचैतन्यप्रकाशस्वरूपमात्रावस्थानमेव ब्रह्मविदां परममुक्तिरियं तु "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह," इत्यादिश्रुतेर्मनोवाग्विषयातीतत्वान्न कथंचिदपि वर्णयितुं शक्यत इत्युपरम्यते । "ब्रह्मविदाप्नोति परम्, ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतिसिद्धज्ञानफलं विचारितम् ॥

इति ब्रह्मज्ञानफलविचारः । पञ्चमं प्रकरणम् ॥

इति श्रीसर्वदेवतासार्वभौम श्रीमोक्षसाम्राज्याधीश्वर श्रीदक्षिणामूर्तीश्वरचरणप्रणिधानप्रभावपरिलब्धपरमभाग्यसत्फलभूताद्वैतब्रह्मविद्यामहाधनेन कर्म्भपाटिकुलजलधिपूर्णसुधाकरेणामरेश्वरशास्त्रिणा स्वानुभवानुरोधेन विरचितमविद्यापिशाचीभञ्जनसमाख्यं वेदान्तप्रकरणं समाप्तम् ।

प्रतिपाद्यविषयः—

अस्मिन् ग्रन्थे श्रवणविधिविचारः, अध्यारोपापवादविचारः, सांप्रुतानन्दविचारः, व्यष्टिसमष्ट्योरैक्यविचारः, ब्रह्मज्ञानफलरूपमोक्षविचारश्च, सम्यङ्निरूप्यते ।

वक्तव्यविशेषः—

अमुद्रितोऽयं ग्रन्थः ।

## No. (104) B 418 अव्यक्तोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-12 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू. आप्यायन्त्विति शान्तिः ।

ओं पुराकिलेदं न किंचनासीन्नत्र द्यौर्नान्तरिक्षं न पृथिवी केवलज्योतीरूपमनाद्यनन्तमनण्वस्थूलरूपमरूपं रूपवदविज्ञेयं ज्ञानरूपमानन्दमयमासीत् । तदनन्यत्तद्द्वेधाऽभूत् । हरितमेकं रक्तमेकम् । तत्र यद्रक्तं तत्पुंसो रूपमभूत् । यद्धरितं तन्मायायाः । तौ समागच्छतः । तयोर्वीर्यमेवमनन्दत् तदवर्धत तदण्डमभूद्धैमम् । तत्परिणममानमभूत् । ततः परमेष्ठी व्यजायत ।

उपसंहारः—

भा. नायं दोषः । एकादशरुद्राणां द्वादशसूर्यनारायणानां च अनेन प्रजापतिना सृष्टत्वस्यात्रैवाभिहितपूर्वत्वात् त्रिमूर्तीनामपि च कार्यकारणभेदेन षाड्विध्यमस्ति । तत्र कार्यान्यमूर्तेः कारणान्यमूर्तिरधिका स्यात् । प्रजापतिब्रह्मणोर्वा कार्यकारणत्वात् भेदोऽस्ति । यद्वा परस्य निर्विशेष-

ब्रह्मण एव सकाशात् स्वयंभुत्वात्। पावकविस्फुलिङ्गोदाहरणेन जीवब्रह्मणोरिव ब्रह्मब्रह्मणोश्चांशांशिभावस्य सुप्रसिद्धत्वादस्य नृसिंहजन्यत्वं गौणमेव मन्तव्यम्।

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे परब्रह्मनृसिंहयोर्भेदाभेदाभ्युपगमेन सूक्ष्मवीर्योत्पन्ननृसिंहाख्यब्रह्मणः सकाशात् प्रपञ्चसृष्टिः प्रतिपाद्यते।

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च।

No. (105) **B 1028** असङ्गात्मप्रकरणम् (सव्याख्यम्)

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहभारतीतीर्थः | प्रतिपुटं पङ्क्तय:—30 |
| व्याख्याता—शंकरभारतीतीर्थः | प्रतिपङ्क्त्यक्षराणि—20 |
| पत्रविशेष:—कागदपत्रात्मक: | काल: (कोशस्य)—? |
| प्रमाणम्—$8 \times 6\frac{1}{4}$ अङ्गुलानि | स्थितिः—समीचीना |
| लिपि:—कन्नडलिपि: | समग्रोऽसमग्रो वा—समग्र: |
| पत्राणि—25 | |

उपक्रम:—

B 151 कोशवत्।

उपसंहार:—

B 151 कोशवत्।

प्रतिपाद्यविषयः—

B 151 कोशवत्।

वक्तव्यविशेष:—

B 151 कोशवत्।

## No. (106) 4519/3 असङ्गात्मप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—नृसिंहभारतीतीर्थः
व्याख्याता—शंकरभारतीतीर्थः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15 \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1–15

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

B 151 कोशवत्।

उपसंहारः—

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्नृसिंहोक्तमसङ्गात्मप्रकरणं सम्पूर्णम्। शेषं B 151 कोशवत्।

प्रतिपाद्यविषयः—

B 151 कोशवत्।

वक्तव्यविशेषः—

B 151 कोशवत्।

## No. (107) B 151 असङ्गात्मप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—नृसिंहभारतीतीर्थः
व्याख्याता—शंकरभारतीतीर्थः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—6

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—45 वत्सराः
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ज्ञानज्ञेयात्मकं सर्वं जगदेतच्चराचरम्।
ज्ञानं ब्रह्मेति निश्चित्य ज्ञेयं मायेति निश्चिनु॥

(व्या) अवस्थात्रयनिर्मुक्तमवस्थात्रयसाक्षिणम् ।
तं वन्दे परमानन्दं प्रत्यक्चैतन्यरूपिणम् ॥
प्रणम्य स्वगुरुं भक्त्या श्रीनृसिंहाख्ययोगिनम् ।
असङ्गात्मप्रकरणं व्याकुर्वे बोधसिद्धये ॥

चिकीर्षितस्य ग्रन्थस्य अविघ्नेन परिसमाप्तये शिष्टाचारपरिपालनाय च ब्रह्मपदेनेष्टगुरुदेवतानमस्कारलक्षणं मङ्गलमाचरन् ग्रन्थारम्भं प्रतिजानीते—ज्ञानज्ञेयात्मकमिति ।

उपसंहारः—

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥

इति भगवद्वचनाच्च ।

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमन्नृसिंहभारतीतीर्थशिष्येण श्रीमच्छंकरभारतीतीर्थेन विरचितमसङ्गात्मप्रकरणं समाप्तिमगमत् ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे आत्मा असङ्गः, जाग्रदादिकं स्थानत्रयं मिथ्याभूतं प्रत्यगात्मनि कल्पितम्, वियदादिकं मिथ्या, इत्येवं ज्ञानी श्रुत्युक्तान्भोगान् भुञ्जानोऽपि तैर्नलिप्यत इति प्रतिपाद्यते ।

वक्तव्यविशेषः—

अमुद्रितोऽयं ग्रन्थः । यद्यप्यत्र उपसंहारानुसारेण सव्याख्यस्यास्य ग्रन्थस्य शंकरभारतीतीर्थः कर्तेति प्रतिभाति । 4915तमः कोशोपसंहारपर्यालोचनया मूलस्य नृसिंहभारतीतीर्थः कर्ता, व्याख्यानस्य शंकरभारतीतीर्थ इति निश्चीयते ।

## No. (108) 3937 आत्मतत्त्वपरीक्षा

ग्रन्थकर्ता—भास्करदीक्षित:
पत्रविशेष:—तालपत्रात्मक:
प्रमाणम्—15¼ × 1½ अङ्गुलानि
लिपि:—ग्रन्थलिपि:
पत्राणि—195-270

प्रतिपुटं पङ्क्तय:—10
प्रतिपङ्क्त्यक्षराणि—56
काल: (कोशस्य)—?
स्थिति:—शिथिला
समग्रोऽसमग्रो वा—असमग्र:

उपक्रम:—

ब्रह्मविद्याफलमाविद्यकशरीरेन्द्रियाद्युपाधिवि ............................... राहित्यरूपं च मोक्षं निरूपयितुमाम्नायते। यथा सैन्धवघनोऽनन्तरोऽबाह्य: कृत्स्नो रसघन एवै .................... ह्य: कृत्स्न: प्रज्ञानघन एवैतेभ्यो भूतेभ्य: समुत्थाय तान्येवानुविनश्यति। न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्य:। सा होवाच मैत्रेयी अत्रैव मा भगवान्मोहान्तमापीपिपन्न वा अहमिमं विजानामीति। स होवाच। न वा अरे अहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा। यत्र हि द्वैतमिव भवति।

उपसंहार:—

र्थस्तु त्वदुक्तशब्देनैव न ग्राह्य:। किं तु त्वदुक्तानि पदान्यर्थवन्ति, वाक्यत्वात्, कालिदासादिवाक्यवदित्यनुमानेनैव ग्राह्य:। न चैवमानुमानिकत्वदुक्तार्थज्ञाने सति कथं त्वदुक्तमर्थं न जानामीति व्यवहार इति वाच्यम्। आनुमानिकतज्ज्ञानसत्त्वेऽपि त्वदुक्तार्थगोचरज्ञानविशेषाभावस्यैव तद्व्यवहारविषयत्वोपगमात्। कोऽसौ त्वदुक्तार्थज्ञाने विशेष इति—शक्तितात्पर्यावधारणप्रयोज्याशाब्दत्वजातिरेव तत्र विशेष इत्यवैहि। तथा च त्वदुक्तार्थं न जानामीत्यस्य शब्दतस्त्वदु ... .................... ॥

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे प्रपञ्चमिथ्यात्वविचार:, साक्षिविचार:, विश्वं मिथ्या-दृश्यत्वात्, शुक्तिरूप्यवदिति दृष्टान्तभूतशुक्तिरूप्यविचार: अज्ञानविचार: इत्यादयो विषया: प्रतिपाद्यन्ते ॥

वक्तव्यविशेष:—

अमुद्रितोऽयं ग्रन्थ:। अत्र कोशे 4-6 प्रकरणानि विद्यन्ते ॥

## No. (109) 3225 आत्मतत्त्वविवेकसारः

ग्रन्थकर्ता—?
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—12×1½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—165

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—10
कालः (कोशस्य)—?
स्थितिः—अतिशिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

आधारं जगतामनन्तममलं ब्रह्मैकयोनिं गुरुं।
विष्णुब्रह्मश ........... यं विभ्रान्तकं स्व .............. ॥
नत्वा बुद्धिविशुद्धये मुहुरहं वक्ष्ये मुमुक्षोरिमं।
ग्रन्थं त्वात्मविवेकसारममलं श्रीदेशिकस्येक्षणात्।
अखण्डमखिलाकारं ब्रह्मयोनिं सदद्वयम्।
यो वेद गुरुमानेष वशी दुःखाद्विमुच्यते ॥
दुःखमस्य निजं रूपं किं वागन्तुकमेव तत्।
इति तस्येह निर्मुक्त्यै चिन्त्यते कृपया गुरोः ॥

अथेदं सर्वैरनुभूयमानं दुःखं सर्वस्य स्वाभाविकं रूपं किं वा आगन्तुकमेवेति विचारयामः ॥ किमनेन विचारेण काकदन्तपरीक्षावदिति चेन्न; अस्यैव विचारस्याखण्डसुखोत्पादनद्वारा मुमुक्षोः सर्वानर्थनिवारकत्वात् ॥ इत्यादिः।

उपसंहारः—

पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते। नीरो ........................................ .......................................................................... त्वेष प्राणान् भ्रान्तिर्न सर्वथा। इत्याचार्यवचनैश्च। तस्माद्येन केनापि यत्र कुत्र ..... त्यजतो विदुषः वस्तुतोऽद्वितीयात्मस्वरूपस्य विदेहमुक्तिः सिद्धैव। किं बहुनोक्तेन श्रुत्याद्य ... ....... साधनसम्पन्नस्य ईश्वरगुरुश्रुतिप्रसादलब्धज्ञानस्य तेनैव मुक्तिः, स एव कृतार्थ इति ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे आत्मनो दुःखादिकं भ्रमः तस्मादविवेकः तस्मादभिमानः इत्येवं परम्परया शरीरसंबन्धादेव भवति। स्वतस्त्वसङ्गोदासीन-

सुखरूपः पञ्चकोशाद्भिन्नः इत्यादिकं, शरीरत्रयं, पञ्चकोशाः, पञ्चभूतानि, पञ्चीकरणं, जगत्कारणं ब्रह्मेत्यादिकं विचार्यते ।

वक्तव्यविशेषः—

अमुद्रितोऽयं ग्रन्थः। अस्मिन्कोशे उपसंहारो लुप्तः, तत्र तत्र ग्रन्थपातश्च दृश्यते ।

## No. (110) A 796 आत्मतत्त्वविवेकसारः

ग्रन्थकर्ता— ?
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13½×8½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-82
प्रतिपुटं पङ्क्तयः—48
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—4 वत्सराः
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3225 कोशवत् ।

उपसंहारः—

3225 कोशवत् ।

प्रतिपाद्यविषयः—

3225 कोशवत् ।

वक्तव्यविशेषः—

3225 कोशवत् ।

## No. (111) 4168 आत्मतत्त्वविवेकसारः

ग्रन्थकर्ता— ?
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—17½×1½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-94
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3225 कोशवत्।

उपसंहारः—

स तु निर्मत्सरी चेदुन्मत्त एव न संशयः। न वित्पत्येदमु ........... ........... गुणी तुष्यतु मातृवत्। बालोक्तदूषणं कोऽपि विधं शक्यं प्रभाषितुम्। सारज्ञः सारमादत्ते सारङ्ग इव सर्वतः। श्रीगुरोर्दक्षिणामूर्तं ............................ समर्पितम्।

पञ्चदशवर्णात्मविवेकसाराख्यो ग्रन्थः सम ...............

प्रतिपाद्यविषयः—

3225 कोशवत्।

वक्तव्यविशेषः—

3225 कोशवत्।

## No. (112) B 357 आत्मपुराणम् (उपनिषद्रत्नम्)

ग्रन्थकर्ता—शंकरानन्दः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-158

प्रतिपुटं पङ्क्तयः—22
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

शिष्यो गुरुमुखाच्छ्रुत्वा ब्रह्माहमिति वेदनम्।
संसारशूलसन्तापनाशनं ह्यधिकारिणाम्॥
अधिकारस्य दौर्लभ्यं दृष्ट्वा प्रायः शरीरिणाम्।
कृपया परयाविष्टः पुनरित्थमभाषत॥
गुरुं स प्रणतो भूत्वा लोकानुग्रहकारकः।
भगवन् भवता ज्ञानमैतरेयादिकीर्तितम्॥

उक्तं संसारशूलस्य नाशनं ह्यधिकारिणाम् ।
मोक्षेच्छा सर्वजन्तूनां विद्यते दुःखतो यतः ॥

विवेकोपचयः कश्चिन्नित्येऽनित्ये च वस्तुनि ।
लोकद्वयसुखेनैव विरागः सर्वदेहिनाम् ॥

उपसंहारः —

अहमस्मीति सम्प्रोक्तं सामाहंपदसंस्थितम् ।
स ईर्गवंश किं साम प्रपद्ये तं प्रकीर्तितम् ॥

ब्रह्मादीनां नामजातं साम प्रोक्तं मनीषिभिः ।
प्रत्येकमक्षराणां हि गोपास्तुतिरथापि वा ॥

सम्प्रसादा हि शरणमक्षराणां तु सामसु ।
एवमन्यानि सामानि महाचक्रस्थितान्यपि ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्येण श्रीशंकरानन्दभगवता विरचिते उपनिषद्रत्ने तापनीयोपनिषदुक्ते उपासनाभागे त्रयस्त्रिंशत्तितमोऽध्यायः ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे निष्कामकर्मानुष्ठानेन चित्तशुद्धिद्वारा मोक्षप्राप्तिः, वागग्निप्राणाद्युपासनानि च प्रतिपाद्यन्ते ।

वक्तव्यविशेषः—

अमुद्रितोऽयं ग्रन्थः ।

## No. (113) 1789/1 आत्मपुराणम् (उपनिषद्रत्नम्)

| | |
|---|---|
| ग्रन्थकर्ता—शंकरानन्दः | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—112 |
| प्रमाणम्—$20\frac{1}{2} \times 1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः— नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—267-306 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 357 कोशवत्

उपसंहारः—

B 357 कोशवत्

प्रतिपाद्यविषयः—

B 357 कोशवत्

वक्तव्यविशेषः—

B 357 कोशवत्

## No. (114) 157 आत्मबोधः

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$12\frac{1}{2}\times1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-4

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—54
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम् ।
मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते ॥
बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् ।
पाकस्य वन्हिवज्ज्ञानं विना मोक्षो न सिध्यति ॥
अविरोधितया कर्म नाविद्यां विनिवर्तयेत् ।
विद्याविद्यां निहन्त्येव तेजस्तिमिरसङ्घवत् ॥
परिच्छिन्न इवाज्ञानात्तन्नाशे सति केवलः ।
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥
अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येत्स्वयं कतकरेणुवत् ॥

उपसंहारः—

सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्ष्यते ।
अज्ञानचक्षुर्नेक्षेत भास्वंतं भानुमन्धवत् ॥
श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापितः ।
जीवः सर्वमलान्मुक्तः स्वर्णवत् द्योतते स्वयम् ॥

हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोपहृत् ।
सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशते ॥
दिग्देशकालाद्यनपेक्षसर्वगं
शीतादिहृन्नित्यसुखं निरञ्जनम् ।
यः स्वात्मतीर्थं भजते विनिष्क्रियः
स सर्ववित्सर्वगतोऽमृतो भवेत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं आत्मबोधप्रकरणं सम्पूर्णम् ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे संसारः स्वप्नवन्निस्सारः । यावज्ज्ञानोदयं सत्यवद्भाति । जीवस्तु स्वप्रकाशः सर्वव्यापी, स च उपाधिभेदाद्भिन्न इव दृश्यते । ज्ञानेनोपाधिविलये सति स्वयं सदात्मनावतिष्ठत इत्येषोऽर्थः स्पष्टं प्रतिपाद्यते ।

वक्तव्यविशेषः—

मुद्रितः ।

No. (115) **1125/1** आत्मबोधः

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$8\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—5-10

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

157 कोशवत् ।

उपसंहारः—

157 कोशवत् ।

प्रतिपाद्यविषयः—

157 कोशवत् ।

वक्तव्यविशेषः—

157 कोशवत् ।

## No. (116) 4516/3 आत्मबोधः

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः— 16 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—$9\frac{3}{4} \times 1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—नागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—13-14 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

157 कोशवत् ।

उपसंहारः—

157 कोशवत् ।

प्रतिपाद्यविषयः—

157 कोशवत् ।

वक्तव्यविशेषः—

157 कोशवत् ।

## No. (117) 4119 आत्मबोधप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—32 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—42 |
| प्रमाणम्—$8\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—80-82 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

157 कोशवत् ।

उपसंहारः—

157 कोशवत् ।

प्रतिपाद्यविषयः—

157 कोशवत् ।

वक्तव्यविशेषः—

157 कोशवत् ।

## No. (118) C 425 आत्मबोधप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता विश्वेश्वरः)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7 \times 4\frac{3}{8}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1–36

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—प्राचीनः
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादं शंकरं लोकशंकरम् ॥

तत्र भगवान् शंकराचार्यः उत्तमाधिकारिणां वेदान्तप्रस्थानत्रयं निर्माय तदवलोकनासमर्थानां मन्दबुद्धीनां अनुग्रहार्थं सर्ववेदान्तसारसङ्ग्रहमात्मबोधाख्यं प्रकरणं प्रतिपिपादयिषुः प्रतिजानीते । तपोभिरिति ॥ टीका-कृच्छ्रचान्द्रायणमिताहारादिनैमित्तिककर्मानुरूपैस्तपोभिः क्षीणानि पापानि रागाद्यन्तःकरणदोषा येषां तेषाम् ।

उपसंहारः—

बाह्यतीर्थं शीतादिदुःखसहितम् । इदं तु तद्विपरीतम् । बाह्यतीर्थं घर्मकाले (क्षणिक) सुखकरम् । इदं तु नित्यसुखम् । बाह्यतीर्थमुत्तरोत्तरं सातिशयम् । इदं तु निरतिशयम् । बाह्यतीर्थस्नायिनस्तु क्षेत्रपिण्ड (ण्डादि) क्रियापेक्षा विद्यते । एतत्स्नायिनस्तु नास्ति । बाह्यतीर्थस्नायी किंचिज्ज्ञः प्रदेशिको मरणधर्मश्च भवति । एतत्स्नायी तद्विपरीतः । इति बाह्यतीर्थस्य वैलक्षण्यम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पादशिष्य श्रीशंकरभगवत्पादाचार्यविरचितात्मबोधप्रकरणस्य टीकाग्रन्थ समाप्तः

प्रतिपाद्यविषयः—

श्रीमच्छंकराचार्यकृतात्मबोधव्याख्यारूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अमुद्रितः ।

## No. (119) C 426 आत्मबोधप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता विश्वेश्वरः)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$6 \times 4\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—29

प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 425 कोशवत्।

उपसंहारः—

C 425 कोशवत्।

प्रतिपाद्यविषयः—

C 425 कोशवत्।

वक्तव्यविशेषः—

C 425 कोशवत्।

## No. (120) C 1772 आत्मबोधप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता विश्वेश्वरः)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 4\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-10

प्रतिपुटं पङ्क्तयः—26
प्रतिपङ्क्त्यक्षराणि—45
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 425 कोशवत्।

उपसंहारः—

कथंभूतं स्वात्मतीर्थं दिग्देशकालाद्यनपेक्षशीतादिहृत्। शीतादिभेददुःखानि हरतीति शीतादिहृत्। नित्यसुखं परमानन्दहेतुत्वात्।

अत एव निरञ्जनम् । इतरतीर्थेषु तद्वैपरीत्यं द्रष्टव्यम् । तस्मादात्मतीर्थे रतस्य न किंचिदवशिष्यत इति भावः ॥ शेषं C 425 कोशवत् ।

प्रतिपाद्यविषयः—

C 425 कोशवत् ।

वक्तव्यविशेषः—

C 425 कोशवत् ।

## No. (121) 280 आत्मबोधप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता विश्वेश्वरः)
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—10 × 1 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–21

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—36
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 425 कोशवत् ।

उपसंहारः—

C 1772 कोशवत् ।

प्रतिपाद्यविषयः—

C 425 कोशवत् ।

वक्तव्यविशेषः—

C 425 कोशवत् ।

## No. (122) 925 आत्मबोधप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता विश्वेश्वरः)
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—17 × 1⅝ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—3

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 425 कोशवत् ।

उपसंहारः—

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥

पञ्चप्राणेति । पञ्चप्राणाः एकस्यैव महाप्राणस्य प्राणादयो वृत्तयः ज्ञानेन्द्रियकर्मेन्द्रियभेदेन इन्द्रियाणि दश । मनःशब्देन सङ्कल्पविकल्पात्मकान्तःकरणवृत्तिः बुद्धिश्च निश्चयात्मा । एतैः संयुक्तमपञ्चीकृतसूक्ष्मभूतेभ्य इत्थं जातम् ।

प्रतिपाद्यविषयः—

C 425 कोशवत् ।

वक्तव्यविशेषः—

C 425 कोशवत् ।

## No. (123) 955 आत्मबोधप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता विश्वेश्वरः)
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-15

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—58
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 425 कोशवत् ।

उपसंहारः—

C 1772 कोशवत् ।

प्रतिपाद्यविषयः—

C 425 कोशवत् ।

वक्तव्यविशेषः—

C 425 कोशवत् ।

## No. (124) 999 आत्मबोधप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता विश्वेश्वरः)
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$14 \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-19

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—
C 425 कोशवत्।

उपसंहारः—
C 425 कोशवत्।

प्रतिपाद्यविषयः—
C 425 कोशवत्।

वक्तव्यविशेषः—
C 425 कोशवत्।

## No. (125) 1223 आत्मबोधप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता विश्वेश्वरः)
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$10\frac{1}{4} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-8

प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—
C 425 कोशवत्।

उपसंहारः—
C 425 कोशवत्।

प्रतिपाद्यविषयः—
C 425 कोशवत्।

वक्तव्यविशेषः—
C 425 कोशवत्।

## No. (126) 2283 आत्मबोधप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः (व्याख्याता विश्वेश्वरः)
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$16 \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—17-28

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 425 कोशवत्।

उपसंहारः—

C 425 कोशवत्।

प्रतिपाद्यविषयः—

C 425 कोशवत्।

वक्तव्यविशेषः—

C 425 कोशवत्।

## No. (127) 1539 आत्मबोधप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः (व्याख्याता)?
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$15 \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-36

प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम्।
मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते॥

अत्र नित्यानित्यवस्तुविवेकः इहामुत्रार्थफलभोगविरागः। शमादिषट्कसम्पत्तिः मुमुक्षुत्वं चेति प्रसिद्धम्। तपोभिः क्षीणपापानामित्यादि-

विशेषणचतुष्टयेन बोधितं यत्साधनचतुष्टयं तत्सम्पन्नानामात्मबोधो विधीयते विधिमुखेन प्रतिपाद्यत इति तात्पर्यार्थः। अत्रात्मबोधशब्देन प्रत्यगात्मज्ञानं वा विवक्षितम्, जीवपरयोरैक्यज्ञानं विवक्षितं वा औपचारिकतदभेदज्ञानं विवक्षितं वा। नाद्यः—

उपसंहारः—

बाह्यतीर्थस्नायिनस्तु क्षेत्रपिण्डादिक्रियापेक्षा विद्यन्ते। एतत्स्नायिनस्तु प्राज्ञाः। तत्स्नायिनस्तु किंचिज्ज्ञाः। प्रादेशिका मरणधर्माश्च भवन्ति। एतत्स्नायी तु तद्विपरीत इति आत्मतीर्थस्य बाह्यतीर्थस्य च वैलक्षण्यमवसेयम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादाचार्यशिष्य शंकरभगवत्पूज्यपादाचार्यविरचित सव्याख्यानमात्मबोधप्रकरणम्

प्रतिपाद्यविषयः—

आत्मबोधव्याख्यानरूपोऽयं ग्रन्थः।

## No. (128) 2347/8 आत्मविद्याविलासः

| | |
|---|---|
| ग्रन्थकर्ता—सदाशिवब्रह्मेन्द्रः | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—25 |
| प्रमाणम्—7 × 1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-9 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

चिन्मुद्रितकरकमलं चिन्तितभक्तेष्टदं विमलम्।
गुरुवरमाद्यं कञ्चन कैवल्यानन्दनिर्भरं वन्दे॥
वटतरुनिकटनिवासं पटुतरविज्ञानमुद्रितकराब्जम्॥
कंचन देशिकमाद्यं कैवल्यानन्दकन्दलं वन्दे॥
निरवधिसंसृतिनीरधिनिपतितजनतारणस्फुरन्नौकाम्।
परमतभेदनघुटिकापरमशिवेन्द्रार्यपादुकां नौमि॥
श्रीदेशिकपरमशिवादेशवशोद्बुद्धदिव्यमहिमाहम्।
स्वात्मनि विश्रान्तिकृते सरसं प्रस्तौमि किंचिदिदम्॥

उपसंहारः —

अक्षरमजरमजातं विरजस्कं सर्वसत्त्वमतमस्कम् ।
निरवधिनिर्भयतत्त्वं सत्किंचन धाम दीप्यते तत्त्वम् ॥
सुखतरममरमदूरं सारं संसारवारिधेस्तीरम् ।
विदळितसकलविभेदं पूर्णं तत्किमपि विभासते नित्यम् ॥
गुरुवरकरुणापाङ्गादार्याभिर्द्व्यधिकषष्टिसंख्याभिः ।
निरवद्याभिरवोचं निगमशिरस्तन्त्रसारभूतार्थम् ॥
गदितमिदमात्मविद्याविलासमनुवासरं स्मरन्विबुधः ।
परिणतपरार्थविद्यः प्रपद्यते सपदि परमार्थम् ॥

परमशिवेन्द्रश्रीगुरुशिष्येणेत्थं सदाशिवेन्द्रेण रचितेयमात्मविद्याविलासनाम्नी कृतिः पूर्णा

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मिथ्याभूतप्रपञ्चव्यतिरेकेण नित्यशुद्धबुद्धस्वभावं ब्रह्मात्मत्वेन पश्यन्मुक्तो भवतीति प्रतिपाद्यते ।

वक्तव्यविशेषः—

मुद्रितः ।

## No. (129) C 579 आत्मविद्याविलासः

| | |
|---|---|
| ग्रन्थकर्ता—सदाशिवब्रह्मेन्द्रः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—40 |
| प्रमाणम्—8×4 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-4 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

2347 कोशवत् ।

उपसंहारः—

2347 कोशवत् ।

प्रतिपाद्यविषयः—

2347 कोशवत् ।

वक्तव्यविशेषः—

2347 कोशवत् ।

## No. (130) B 836/1 आत्मविद्याविलासः

| | |
|---|---|
| ग्रन्थकर्ता—सदाशिवब्रह्मेन्द्रः | प्रतिपुटं पङ्क्तयः—54 |
| पत्रविशेषः— कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$8\frac{1}{4} \times 6\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-4 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

2347 कोशवत् ।

उपसंहारः—

2347 कोशवत् ।

प्रतिपाद्यविषयः—

2347 कोशवत् ।

वक्तव्यविशेषः—

2347 कोशवत् ।

## No. (131) B 287 आत्मविद्याविलासः (सकर्णाटकटीका)

| | |
|---|---|
| ग्रन्थकर्ता—सदाशिवब्रह्मेन्द्रः (व्याख्याता राजयोगशेषाद्रिशास्त्री) | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$8 \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-38 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

गुरुं गणपतिं दुर्गां वटुकं शिवमच्युतम् ।
ब्रह्माणं गिरिजां लक्ष्मीं वाणीं वन्दे विभूतये ।
नानानादानुसन्धानतत्परं शिवरूपिणम् ।
भवानीशंकरगुरुं नमामि सततं मुदा ॥
आत्मविद्याविलासस्य टीकां कर्णाटकां शुभाम् ।
श्रीराजयोगशेषाद्रिशास्त्रिणा तां वितन्वते ॥

ಟೀಕು—ಶ್ರೀಸದಾಶಿವ ಬ್ರಹ್ಮೇಂದ್ರರು ಆತ್ಮವಿದ್ಯಾವಿಲಾಸವೆಂಬ ಗ್ರಂಥ ಮಾಡುವಲ್ಲಿ ಪ್ರಥಮತಃ ಜಗದ್ಗುರುವಾದಂಥಾ ಶ್ರೀಗುರು ದಕ್ಷಿಣಾಮೂರ್ತಿಯನ್ನು ನಮಸ್ಕಾರಪೂರ್ವಕವಾಗಿ ಪ್ರಾರ್ಥನೆ ಮಾಡುವ ಪ್ರಕಾರಾ—

वटतरुनिकटनिवासं पटुतरविज्ञानमुद्रितकराब्जम् ।
कंचन देशिकमाद्यं कैवल्यानन्दकन्दलं वन्दे ॥

**उपसंहारः—**

परमशिवेन्द्रश्रीगुरुशिष्येणेत्थं सदाशिवेन्द्रेण ।
रचितेयमात्मविद्याविलासनामा कृतिः पूर्णा ॥

ಟೀಕು—ಪರಮಶಿವೇಂದ್ರಶ್ರೀಗುರುಶಿಷ್ಯೇಣ—ಪರಮಶಿವೇಂದ್ರರು ಎಂಬ ಗುರುಗಳ ಶಿಷ್ಯನಾದಂಥಾ, ಸದಾಶಿವೇಂದ್ರೇಣ—ಸದಾಶಿವ ಬ್ರಹ್ಮರಿಂದ, ಇತ್ಥಂ—ಈ ಪ್ರಕಾರದಲ್ಲಿ, ರಚಿತಾ—ವಿರಚಿತಾ, ಹೇಳಲ್ಪಟ್ಟ, ಇಯಮಾತ್ಮವಿದ್ಯಾವಿಲಾಸ ನಾಮಾ ಕೃತಿಃ—ಈ ಆತ್ಮವಿದ್ಯಾವಿಲಾಸವೆಂಬ ಹೆಸರುಳ್ಳಂಥಾ ಗ್ರಂಥವು ಪೂರ್ಣಾ—ಸಂಪೂರ್ಣವಾಯಿತು ಎಂಬ ತಾತ್ಪರ್ಯವು.

ಆತ್ಮವಿದ್ಯಾವಿಲಾಸಂ ಸಂಪೂರ್ಣಂ

**प्रतिपाद्यविषयः—**

2347 कोशवत् ।

**वक्तव्यविशेषः—**

टीका अमुद्रिता ।

## No. (132) **2283/4** आत्मानात्मविवेकः

| | |
|---|---|
| **ग्रन्थकर्ता**—? | **प्रतिपुटं पङ्क्तयः**—22 |
| **पत्रविशेषः**—तालपत्रात्मकः | **प्रतिपङ्क्त्यक्षराणि**—62 |
| **प्रमाणम्**—$8 \times 6\frac{1}{2}$ अङ्गुलानि | **कालः (कोशस्य)**—? |
| **लिपिः**—ग्रन्थलिपिः | **स्थितिः**—समीचीना |
| **पत्राणि**—43–45 | **समग्रोऽसमग्रो वा**—समग्रः |

**उपक्रमः—**

आत्मानात्मविवेकः कथ्यते । आत्मा स्थूलसूक्ष्मकारणशरीरेभ्यो व्यतिरिक्तः अवस्थात्रयस्य साक्षी । नित्यशुद्धबुद्धपरमानन्दस्वरूपः ।

अनात्मा स्थूलसूक्ष्मकारणशरीराणि। स्थूलशरीरं नाम पञ्चीकृतभूलकार्यम्। प्रारब्धकर्मणा सञ्चितं जीवस्य कर्मफलयोः सुखदुःखयोर्भोगस्यायतनम्। तदुक्तम्—

पञ्चीकृतमहाभूतसंभवं कर्मसञ्चितम्।
शरीरं सुखदुःखानां भोगायतनमुच्यते॥ इति॥

इदमेव स्थूलशरीरमन्नमयकोश इत्युच्यते॥

उपसंहार:—

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते। इति भगवद्वचनाच्च।

आत्मानात्मविवेकशून्यहृदयो ह्यत्यन्तमज्ञो जनः
स्वात्मानन्दमतिप्रसिद्धममलं अध्यस्य दारादिषु।
तद्भूतं मनुते सदात्र रमते श्वा वै यथा स्वादते
शुष्कास्थिप्रचये स्वदन्तविवराद्भूतरक्तादिकम्॥

आत्मानात्मविवेकं तु कृत्वा तिष्ठति यः पुमान्।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः॥

इत्यात्मानात्मविवेकप्रकरणं समाप्तम्।

प्रतिपाद्यविषय:—

अस्मिन् ग्रन्थे, आत्मनः अवस्थात्रयादिसाक्षित्वं, पञ्चभूतस्वरूपं, शरीरत्रयं, स्वेतरेभ्यः आत्मनो व्यतिरेकश्च प्रतिपाद्यते।

वक्तव्यविशेष:—

अमुद्रितः।

No. (133) 955/3 आत्मानात्मविवेकः

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेष:—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम्—16½×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—32-35 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यच्चैतन्यमनुस्यूतं जाग्रत्स्वप्नसुषुप्तिषु ।
तत्त्वमेव त्वमेवेदमितो नास्त्यधिकं परम् ॥

आत्मानात्मविवेकः कथ्यते । आत्मा स्थूलसूक्ष्मकारणशरीरेभ्यो व्यतिरिक्तः । अवस्थात्रयसाक्षी । कथम् ? आत्मैव बाह्याभ्यन्तरसापेक्षः सन् जाग्रदवस्थां वेत्ति । स्वप्नमन्तःकरणवृत्तिद्वारा वेत्ति । सुषुप्तिमन्यतरापेक्षया वेत्ति । तस्मादवस्थात्रयसाक्षी ॥

उपसंहारः—

अहंकारमध्यात्मं अहं कर्तव्यं चाधिभूतं रुद्रस्तत्राधिदैवतम् । चित्तमध्यात्मं चेतव्यमधिभूतं तु ईश्वरश्चाधिदैवतम् । एतत्सर्वं विविच्य यो जानाति स तु नित्यशुद्धमुक्तसच्चिदानन्दपरमात्मेति आत्मानात्मविवेकं यः सदा जपति स जीवन्मुक्तो भवति । तरति शोकमात्मविदिति श्रुतेः ॥

इत्यात्मानात्मविवेकः समाप्तः ।

प्रतिपाद्यविषयः—

2283/4 कोशवत् ।

वक्तव्यविशेषः—

अमुद्रितः, 228 तमकोशादपि विलक्षणः अयं ग्रन्थः ।

## No. (134) 492/2 आत्मानात्मविवेकः

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—70 |
| प्रमाणम्—15 × 1½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—2 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

तपोभिः क्षीणपापानां नराणां शुद्धचेतसाम् ।
विरक्तानां मुमुक्षूणां शास्त्रार्थानवगाहिनाम् ॥

आत्मानात्मविवेकोऽयं कथ्यते मुक्तिसाधनम् ।
आत्मा चेतनरूपः स्यादनात्मा जडमेवयत् ॥
देहत्रयमनात्मेदं तत्साक्षी चेतनात्मकः ।
देहत्रयं निरूप्यादौ स्थूलारुन्धतिन्यायतः ॥
निरूपयिष्ये चिद्रूपं सच्चिदात्मानमव्ययम् ।
स्थूलं सूक्ष्मं कारणं च देहत्रयामतीरितम् ॥
स्त्रीपुंनपुंसकाकारं पितृमातृसमुद्भवम् ।
पञ्चभूतात्मकं स्थूलं शरीरं धातुलक्षणम् ॥

उपसंहारः—

निष्कलोऽहं निष्क्रियोऽहं निःसङ्गोऽहमनामयः ।
प्रकाशरूपः सततमक्षरोऽहमजोऽस्म्यहम् ॥
अचलोऽहमनन्तोऽहमच्युतोऽहमनूपमः ।
निर्विकल्पो निराधारो निराकारोऽहमेव हि ॥
ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् ।
अशक्नुवन्भावयितुं वाक्यमेतत्समुच्चरेत् ॥
तस्यापि जायते ज्ञानं आत्मानात्मविभेदकम् ।

इत्यात्मानात्मविवेकः समाप्तः ॥

प्रतिपाद्यविषयः—

2283/4 कोशवत् ।

वक्तव्यविशेषः—

अमुद्रितः । पद्यरूपोऽयं ग्रन्थः 2283/4 955/3तमकोशाभ्यामपि भिन्नः ।

## No. (135) 2035/9 आत्मानात्मवैलक्षण्यप्रकरणम् (नित्यानित्यप्रकरणम्)

ग्रन्थकर्ता— ?
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—13×1½ अङ्गुलानि.
लिपिः—नागरीलिपिः
पत्राणि—160-161

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

देहेन्द्रियादेरनात्मनः आत्मनश्च वैलक्षण्यं निरूप्यते । देहेन्द्रियादिकमनित्यमात्मा नित्यः । देहेन्द्रियादिकमशुद्धमात्मा शुद्धः । देहेन्द्रियादिकं जडरूपमात्मा बोधस्वरूपः । इत्यादिः ।

उपसंहारः—

देहेन्द्रियादिकं सजातीयविजातीयस्वगतभेदसहितं, आत्मा सजातीयविजातीयस्वगतभेदरहितः । देहेन्द्रियादिकं कार्यं, आत्मा कारणम् । देहेन्द्रियादिकं गुणवदात्मा निर्गुणः । एवं देहेन्द्रियादिभ्यः आत्मनो वैलक्षण्यं विचार्य स एवात्माहमिति यो जानाति स एव जीवन्मुक्त इति सर्वं रमणीयम् ।

इत्यात्मानात्मवैलक्षण्यप्रकरणं समाप्तम् ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे आत्मानात्मनोरितरेतरवैलक्षण्यं निरूप्यते ।

वक्तव्यविशेषः—

अमुद्रितः ।

## No. (136) A 83/4 आत्मानुभवस्तुतिः

ग्रन्थकर्ता— ?
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{3}{4} \times 8$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—562-564

प्रतिपुटं पङ्क्तयः—30
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

कारणं खादिजगतां मारणार्थमनागसम् ।
वारणाननमात्मानमद्वयं समुपास्महे ॥

परापश्यन्त्यादिदेहां प्रणताभीष्टदायिनीम् ।
सत्यज्ञानानन्दरूपां ध्यायेऽनन्यां सरस्वतीम् ॥

अभिषिच्य कृपावर्षैरात्मानं यः करोति माम् ।
तं सर्वसाक्षिणं वन्दे वासुदेवं जगद्गुरुम् ॥
दृश्यं सर्वमनात्मा स्यात् दृगेवात्माविकारिणी ।
आत्मानात्मविकारोऽयं कथितो ग्रन्थकोटिभिः ॥

उपसंहार:—

माधुर्यद्रवशैत्यानि जलधर्मास्तरङ्गके ।
अनुगम्यातन्निष्ठे फेनेऽप्यनुगता यथा ॥
साक्षिस्थाः सच्चिदानन्दाः समन्ताद्व्यावहारिके ।
तद्द्वारेणानुगच्छन्ति तथैव प्रातिभासिके ॥
लये फेनस्य तद्धर्माः द्रवाद्यास्तु तरङ्गके ।
तस्यापि विलये नीरे तिष्ठन्त्येते यथा पुरा ॥
प्रातिभासिकजीवस्य लये स्युर्व्यावहारिके ।
तल्लये सच्चिदानन्दाः पर्यवस्यन्ति साक्षिणि ॥

इत्यात्मानुभवस्तुतिः समाप्ता ।

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे, नामरूपादिकं सर्वमनात्मा सदेवात्मा साक्षिस्था आनन्दादयस्तादात्म्यादहंकारादिषु प्रतीयन्ते । आत्मज्ञानेन अहंकारादीनां विलये फेनविलयानन्तरं तन्निष्ठानां आर्द्रत्वादीनां नीर इव आनन्दादीनां साक्षिणि लयः इत्येतत्प्रतिपाद्यते ।

वक्तव्यविशेष:—

अमुद्रितः ।

## No. (137) 419 आत्मोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—26 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–9 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं भद्रं कर्णेभिरिति शान्तिः। अथाङ्गिरास्त्रिविधः पुरुषोऽजायत। आत्मान्तरात्मा परमात्मा चेति। त्वक्चर्ममांसरोमाङ्गुष्ठाङ्गुल्यपृष्ठवंशनखगुल्फोदरनाभिमेढ्रकटयूरुकपोलश्रोत्रभ्रूललाटबाहुपार्श्वशिरोऽक्षीणि भवन्ति जायते म्रियते इत्येष आत्मा। अथान्तरात्मा नाम—पृथिव्यापस्तेजोवायुराकाशमिच्छाद्वेषसुखदुःखकाममोहविकल्पनादिस्मृतिलिङ्गउदात्तानुदात्तह्रस्वदीर्घप्लुतस्खलितगर्जितस्फुटितमुदितनृत्तगीतवादित्रप्रळयाविजृम्भितादिभिः श्रोता घ्राता रसयिता नेता बोद्धा कर्ता विज्ञानात्मा पुरुषः।

उपसंहार:—

घटादिषूपलभ्यमाना च सत्ता घटादिनामरूपपरित्यागद्वाराऽभिध्यानयोग्यत्वान्न निष्प्रतियोगिकस्य भवितुमर्हति। तस्य ध्यात्राद्यभावेन ध्येयत्वासिद्धेः। तथा चेह निष्प्रतियोगिकब्रह्मैव विवक्षितमिति सर्वद्वन्द्वापवादद्वारा परमार्थतोपसंहारश्लोकेन दर्शयति। तस्मादावृतेः सदसत्त्वाभ्यां बन्धमोक्षाविव बुद्धेः सदसत्त्वाभ्यामस्ति नास्तीति प्रत्ययौ। न तु नित्यस्येति युक्तमुक्तम्।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु आत्मोपनिषद्भाष्यं समाप्तम्।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे आत्मान्तरात्मप्रत्यगात्मनां स्वरूपं प्रतिपाद्य नित्यस्य परमात्मनः आवरणसत्त्वासत्त्वाभ्यां बन्धमोक्षव्यवहारः बुद्धिसत्त्वासत्त्वाभ्यां अस्ति नास्तीति व्यवहारो न स्वत इति निरूप्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (138) 140 आनन्ददीपिका (वेदान्तभूषणटीका)

| | |
|---|---|
| ग्रन्थकर्ता—वासुदेवेन्द्रयतिः | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—96 |
| प्रमाणम्—$17\frac{3}{8} \times 1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—प्राचीनः |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—129 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

न द्वितीयः हेतूपरागमपेक्ष्य विकारित्वे मृदादिवत्परिणामित्वापत्तिः विशिष्टस्य ब्रह्मत्वे निर्विकारश्रुतिविरोधः। अब्रह्मत्वे ब्रह्मणः कारणत्वासिद्धिः।...........मृदादिवत् धर्मिसमसत्ताकरूपान्तरापत्तिरूपपरिणामाद्विवर्त ....... विशिष्टः परिणामः।

उपसंहारः—

गगनपवनतेजोवारिपृथ्वीहिमांशु-
द्युमणिपुरुषमूर्तिं सर्ववेदान्तसारम्।
क्षपितमदनगर्वं पार्वतीप्राणनाथं
गुरुवरशिवमीशं दक्षिणामूर्तिमीडे॥

रुचिरकमलनेत्रं सर्वकल्याणपात्रं
परिचितजनमित्रं चन्दनालिप्तगात्रम्।
करतलकृतवेत्रं देवकीहृद्यपुत्रं
परिहृतरिपुमात्रं भावये सच्चरित्रम्॥

आनन्ददीपिकाग्रन्थपुष्पाञ्जलिसमर्पितः।
श्रीकृष्णः प्रीयतां मह्यं सर्वमङ्गलभाजनम्॥

भामासंज्ञा संश्रिता वामपार्श्वे ..................।
ब्रह्मेन्द्राद्यैरीड्यमानं सुरौघैः सूर्यं वन्दे सर्वलोकप्रकाशम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीज्ञानेन्द्रसरस्वतीपूज्यपादशिष्य श्रीवासुदेवेन्द्रसरस्वतीविरचितायामानन्ददीपिकायां वेदान्तभूषणव्याख्यायां द्वितीयः परिच्छेदः॥ आनन्ददीपिका समाप्ता

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे परिच्छेदद्वयं विद्यते। तत्र प्रथमे श्रवणमनननिदिध्यासनविचारं श्रवणे उत्पत्त्यादिविधित्रयविचारं च कृत्वा अन्ते अज्ञाननिवर्तनशक्तं ज्ञानमुद्दिश्य श्रवणं नामाङ्गी विधीयत इति प्रतिपादितम्। तत्र तत्र मीमांसान्यायाश्च सुस्पष्टं विचारिताः द्वितीये अज्ञानस्वरूपादिविचारः ज्ञानस्वरूपविचारः मोक्षविचारश्च तत्र तत्र संभावितद्वैतमतीयशंकानिरासपूर्वकं कृतः।

वक्तव्यविशेषः—

अयं ग्रन्थः अमुद्रितः। अत्र च सामान्यतः भेदवादी खण्ड्यते। अत्यन्तोपकारकोऽयं ग्रन्थः इति प्रतिभाति। अस्मिश्च मूलं नास्ति।

No. (139) B 1074 आनन्ददीपिका (वेदान्तभूषणव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—वासुदेवेन्द्रसरस्वती | प्रतिपुटं पङ्क्तयः—15 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$8\frac{1}{2} \times 6\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—1941 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-292 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

140 कोशवत्।

उपसंहारः—

140 कोशवत्।

प्रतिपाद्यविषयः—

140 कोशवत्।

वक्तव्यविशेषः—

140 कोशवत्।

## No. (140) B 840 आनन्दलहरी चन्द्रिकासहिता

ग्रन्थकर्ता—अप्पय्यदीक्षितः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×7 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-120

प्रतिपुटं पङ्क्तयः—42
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

आनन्दलहरीं विद्यामस्माभिरनुसंहिताम् ।
व्याख्यास्यामः स्फुटीकर्तुं व्याससूत्रानुसारिणीम् ॥

अस्तितावदनतिशयानन्दरूपा चिच्छक्तिः शैवी उपनिषत्परिबृंहणसिद्धा। तत्प्रतिपादकानामुपनिषद्भागानां संभावितसकलशङ्कानिरासेन तत्प्रतिपादकत्वोपपादनार्थमिदं प्रकरणमारब्धम् । अत्र तावत्तैत्तरीयाणामुपनिषदि ब्रह्मविदाप्नोति परमित्युपक्रम्य समाम्नातायामानन्दवल्ल्यामन्नमयादिक्रमेण, तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय इत्यानन्दमयाम्नानस्य चिच्छक्तिप्रतिपादनेन प्रपवादयते (प्रतिपादनं क्रियते)॥

उपसंहारः—

तामेव शैलीमनुसृत्यास्माभिरपि निर्गुण (द्योतांशके शिवप्रसादस्वीकारमधिकृत्य –

"मच्चिन्हधारिणो लोके देशिका मत्परायणाः ।
मदेकशरणास्तेषु योग्यान्येवान्यजन्तुषु" ॥
खाद्यानि चादनीयानि पेयाण्यन्यानि यानि च ।
देयानि तानि वै शम्भोः प्रक्षयाद्दासभावतः ॥
सन्मार्गमवपन्ना ये शैवे पाशुपते स्थिताः ।
तैरेव पेयं भोज्यं च घ्रातव्यं च मुमुक्षुभिः ॥

इति वायुसंहितायामपि—"निवेदितं वा भुञ्जीत तच्छेषंवात्मशुद्धये"। इत्याधिकृत्योक्तम्—न तु तत्र शिवोऽस्मीति बुद्धिं कुर्यात् विचक्षणः। इत्यादि पुटद्वयं अन्यदेव विलिख्य – तदनुगुणकानि भाष्यवाक्यानि प्रायः

सगुणानुकूलतया यत्नेन शिवादित्यमणिदीपिकायां योजितानि । इहापि विशिष्टाद्वैतनिरूपणप्रकरणे सैव री(त्या)तिरनुसृता । इह तु शुद्धाद्वैताभिमत्याविष्करणप्रकरणे तानि भाष्यवाक्यानि विशुद्धब्रह्मस्वरूपाविष्करणार्थतयाऽस्येन योजितानीति सर्वं समञ्जसम् ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य श्रीरङ्गराजाध्वरिसूनोरप्पयदीक्षितकृतौ आनन्दलहरीचन्द्रिका सम्पूर्णा ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे आनन्दमयशब्दार्थः चिच्छक्तिरेव, सैव जगत्कारणम्, आकाशशब्दप्रतिपाद्या च सैव, इत्येवं चिच्छक्तेः प्राधान्यं, तत्र च श्रुतिस्मृतिवचनानि उदाहृत्य विस्पष्टं विचार्यते । शिवाद्वैतप्रतिपादकोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

मुद्रितः । अस्मिन्कोशे "कर्मानुष्ठानभूम्ना भवभयहारिणी" इति श्लोकचन्द्रिकासमाप्तिपर्यन्तमेव विद्यते ॥

## No. (141) B 420 आरुणिकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—109-113 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू॥ ओं आप्यायन्त्विति शान्तिः ।

आरुणिः प्राजापत्यः प्रजापतेर्लोकं जगाम । तं होवाच केन भगवन् कर्माण्यशेषतो विसृजानीति । तं होवाच प्रजापतिः । तव पुत्रान् भ्रातॄन् बन्ध्वादीन् शिखां यज्ञोपवीतं यागसूत्रं स्वाध्यायं च भूलोकभुवर्लोकसुवर्लोकमहोलोकजनोलोकतपोलोकसत्यलोकं, चातलवितल-

सुतलपातालरसातलतलातलमहातलब्रह्माण्डं च, विसृजेद्दण्डमाच्छादनं कौपीनं परिग्रहेच्छेषं विसृजेत् ॥

उपसंहार:—

य एवं वेद स विद्वान् पालाशदण्डमौञ्जीमेखलोपवीतादिकं त्यक्त्वा शूरः सर्वविषयपरित्यागसमर्थः सन् तद्विष्णोः परमं पदं परमात्मानं सन्निधत्ते सम्यगपरोक्षतः प्राप्नोति । एवं निर्वाणस्य नित्यशुद्धबुद्धमुक्त-स्वभावपरब्रह्मात्मैक्यावस्थानलक्षणकैवल्यमोक्षस्यानुशासनप्रतिष्ठापन-मित्युपनिषत् ॥

इति श्रीमत्सुंदरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ आरुणिकोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे सन्यासिनस्त्यागप्रकारः अशनासनादिकं च प्रदर्श्यते ॥

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ॥

## No. (142) C 1536 आरुणिकोपनिषद्दीपिका

| | |
|---|---|
| ग्रन्थकर्ता—शंकरानन्दः | प्रतिपुटं पङ्क्तयः—34 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—30 |
| प्रमाणम्—9×5 अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-7 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रम:—

आरुणेरुपनिषदं व्याख्यास्ये न्यासमार्गगाम् ।
आनन्दात्मानमायान्तीं गङ्गामिव पयोनिधिम् ॥

विषयादेश्च सर्वोपनिषदां साधारण्याच्च पृथग्वर्णनीयता । आत्म-ज्ञाने सन्यासेचात्यन्तमास्तिक्यं जनयितुमाख्यायिकामवतारयति । आरुणिर्नामतः प्राजापत्यः सौपर्णेयः । प्रजापतेः प्रजानां पालयितुः

स्वपितुः । लोकं निवासस्थानम् । जगाम गतवान्, तं लोकं गत्वा प्राप्य उवाच प्रजापतिं पितरमुक्तवान् ॥

उपसंहारः—

सदा कालत्रयेऽपि । पश्यन्ति विष्णोस्तत्पदं वयं स्म इति साक्षात्कुर्वन्ति । सूरयः कृतसन्यासाः पण्डिताः । दिवीव स्वयंप्रकाशे स्वरूपे वर्तन्ते । इवकार आधाराधेयनिराकरणार्थः चक्षुः चष्ट । इति स्वयंप्रकाश इत्यर्थः । आततं विस्तृतं देशकालवस्तुपरिच्छेदशून्यमित्यर्थः । तदुक्तं वैष्णवं दण्डम वि . . . . . ॥

प्रतिपाद्यविषयः—

आरुणिकोपनिषद्विवरणरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

मुद्रितः ॥

## No. (143) 3709 आर्यापञ्चाशीतिः (परमार्थसारम्)

| | |
|---|---|
| ग्रन्थकर्ता—शेषः | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—64 |
| प्रमाणम्—18×1½ अङ्गुलानि | कालः—कोशस्थ ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः – किंचिच्छिथिला |
| पत्राणि—1-5 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

परं परस्याः प्रकृतेरनादिं एकं निविष्टं बहुधा गुहासु ।
सर्वालयं सर्वचराचरस्थं त्वामेव विष्णुं शरणं प्रपद्ये ॥

आत्माम्बुराशौ निखिलोऽपि लोको मग्नोऽपि नाचामति नेक्षते च ।
आश्चर्यमेतन्मृगतृष्णिकाभे भवाम्बुराशौ रमते मृषैव ॥

गर्भगृहवाससम्भवजन्मजरामरणवियोगाब्धौ ।
जगदालोक्य निमग्नं प्राह गुरुं प्राञ्जलिः शिष्यः ॥

त्वं साङ्गवेदवेत्ता संशयगणस्य कृतवक्ता ।
संसारार्णवतरणप्रश्नं पृच्छाम्यहं भगवन् ॥

दीर्घेऽस्मिन्संसारे संसरतः कस्य केन संबन्धः ।
कर्म शुभाशुभफलप्रदमनुभवति गतागतैरिह कः ॥

उपसंहारः—

वृक्षाग्राच्च्युतपादो यद्वदनिच्छन्नरः क्षितौ पतति ।
तद्वद्गुणपुरुषज्ञोऽनिच्छन्नपि केवली भवति ॥
परमार्थमार्गसाधनमारभ्य प्राप्यते यागमपि नाम ।
सुरलोकभोगभोगी मुदितमना मोदते सुचिरम् ॥
विषयेषु सार्वभौमः सर्वजनैः पूज्यते यथा राजा ।
भुवनेषु सर्वदेवैर्योगभ्रष्टस्तथा पूज्यः ॥
महता कालेन पुमान् मानुष्यं प्राप्य योगमासाद्य ।
प्राप्नोति दिव्यममृतं यत्तत परमं परं विष्णोः ॥
वेदान्तशास्त्रमखिलं विलोक्य शेषस्तु जगदाधारः ।
आर्यापञ्चाशीत्या बबन्ध परमार्थसारमिदम् ॥

शेषार्या समाप्ता ।

प्रतिपाद्यविषयः—

अस्मिन् अव्यक्तादिसृष्टिमुक्त्वा, कर्तृत्वभोक्तृत्वादिकं सर्वमन्तःकरणधर्माः, आत्मा केवलं द्रष्टैव अन्योन्याध्यासात् आत्मनि भासन्ते । शमादिसम्पन्नस्तत्त्वमस्यादिवाक्यार्थज्ञानात् असङ्गमात्मानं स्वस्वरूपत्वेन ज्ञात्वा संसारान्मुच्यत इत्येषोऽर्थः गुरुशिष्यप्रश्नप्रतिवचनरूपेण प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अमुद्रितः ।

## No. (144) B 231 आर्यास्वात्मनिरूपणम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6½
लिपिः—देवनागरीलिपिः
पत्राणि—1-10

प्रतिपुटं पङ्क्तयः—17
प्रतिपङ्क्त्यक्षराणि—20
कालः—(कोशस्य) ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रीगुरुचरणद्वन्द्वं वन्देऽहं मथितदुःसहद्वन्द्वम् ।
श्रान्तिग्रहोपशान्तिं पांसुमयं यस्य भसितमातनुते ॥
देशिकवरं दयालुं वन्देऽहं निहतसकलसन्देहम् ।
यच्चरणद्वयमद्वयमनुभवमुपदिशति तत्पदस्यार्थम् ॥
संसारदावपावकसन्तप्तः सकलसाधनोपेतः ।
स्वात्मनिरूपणनिपुणैर्वाक्यैः शिष्यः प्रबोध्यते गुरुणा ॥
अस्ति स्वयमित्यस्मिन्नर्थे कस्यास्ति संशयः पुंसः ।
अत्रापि संशयश्चेत्संशयिता यः स एव भवसि त्वम् ॥
नाहमिति वेत्ति योऽसौ सत्यं ब्रह्मैव वेत्ति नास्तीति ।
अहमस्मीति विजानन्ब्रह्मैवासौ स्वयं विजानाति ॥

उपसंहारः—

सति तमसि मोहरूपे विश्वमपश्यंस्तदेतदित्यखिलम् ।
उदितवति बोधभानौ विश्वमपश्यामि किं त्विदं चित्रम् ॥
नाहं नमामि देवान् देवानतीत्य न सेवते देवम् ।
तदनुकरोति विधानं तस्मै यतते नमो नमो मह्यम् ॥
इत्यात्मबोधलाभं मुहुरनुचिन्त्य मोदमानानाम् (मोदमानेन)
प्रारब्धकर्मणोऽन्ते तेन परं प्राप्यते स्म कैवल्यम् ॥
मोहान्धकारहरणं संसारोद्वेलसागरोत्तरणम् ।
स्वात्मनिरूपणमेतत्प्रकरणमकृत दक्षिणामूर्तिः ।
अज्ञानान्ध्यविहन्ता विरचितविज्ञानपङ्कजोल्लासः ।
मानसगगनतलं मे भासयति श्रीनिवासगुरुभानुः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य (श्रीसदानन्द) श्रीमच्छङ्कराचार्यकृतं
आर्यावृत्त्या स्वात्मनिरूपणं सम्पूर्णम् ॥

प्रतिपाद्यविषयः—

अस्मिन् ग्रन्थे तत्पदार्थस्वरूपं पञ्चकोशेभ्यो व्यतिरिक्तमात्मानं च निरूप्य, तादृशतत्पदार्थमात्मत्वेन जानतः शमादिसम्पन्नस्य संसारान्निवृत्तिर्भवतीति स्पष्टं प्रतिपाद्यते । स्वात्मस्तुतिरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

मुद्रितः ।

## No. (145) C 580 आर्याख्यात्मनिरूपणम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—34 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—30 |
| प्रमाणम्—7¾×4½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-8 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 231 कोशवत् ।

उपसंहारः—

B 231 कोशवत् ।

प्रतिपाद्यविषयः—

B 231 कोशवत् ।

नक्रम्यविशेषः—

B 231 कोशवत् ।

## No. (146) B 233 आर्याख्यात्मनिरूपणव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—सच्चिदानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—21 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम् 8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—कर्णाटलिपिः | स्थितिः—समीचीना |
| पत्राणि—11-61 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

प्रचण्डपाषण्डविखण्डनोद्यतं त्रयीशिरोऽर्थप्रतिपादने रतम् ।
बुधैर्नुतं योगकलाभिरावृतं नमामि तं शंकरदेशिकं गुरुम् ॥

इह खलु सकलशिष्टाग्रणीर्भगवान् शंकराचार्यः जिज्ञासुजनानुकम्पया सकलवेदान्तसिद्धान्तरहस्यप्रदर्शनपरं वेदान्तप्रकरणमारभमाणस्तत्रादौ गुरुनमस्कारलक्षणं मङ्गळाचरणमार्यावृत्तद्वयेनाकरोत्—श्रीगुरुमिति । श्रीगुरुचरणद्वन्द्वं श्रीगुरूणां पदसरोजद्वयं वन्दे नमस्करोमि ॥

उपसंहार:—

अज्ञानान्ध्यविहन्ता–अज्ञानमेवान्ध्यमन्धत्वं तस्य विहन्ता हरणसमर्थः। विरचितविज्ञानपङ्कजोल्लासः–विरचितः कृतः विज्ञानमेव पङ्कजं कमलं तस्योल्लासो विकासो येन सः। मानसगगनतलं मे–मानसं मनस्तदेव गगनतलं व्योमतलं मम। श्रीनिवासगुरुभानुः–श्रीनिवासः श्रीमहाविष्णुगुरुः स एव भानुः सहस्रकिरणः। भासयति प्रकाशयति। एतावता गुरुदेवतयोरैक्यभावनमेवाऽऽत्मप्रकाशसाधनमिति प्रतिपादितं भवति॥

चैतन्यद्युतिरुचिराङ्गो दूरनिरस्तश्यामतासङ्गः।
हृदयसरोजे विरजे भ्रमति भ्रमरो विलक्षणं कश्चित्॥

इति श्रीसच्चिदानन्दसरस्वतीविरचिता आर्याव्याख्या समाप्ता।

प्रतिपाद्यविषयः—

आर्यास्वात्मनिरूपणविवरणरूपोऽयं ग्रन्थः॥

वक्तव्यविशेष:—

मुद्रितः॥

## No. (147) C 505 आर्यास्वात्मनिरूपणव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—सच्चिदानन्दसरस्वती | प्रतिपुट पङ्क्तयः—38 |
| पत्रविशेष: —कागदपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—62 |
| प्रमाणम—$12\frac{3}{4} \times 5$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—देवनागरीलिपि: | स्थिति:—समीचीना |
| पत्राणि—1-17 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रम:—

B 233 कोशवत्।

उपसंहारः—

B 233 कोशवत्।

प्रतिपाद्यविषय:—

B 233 कोशवत्।

वक्तव्यविशेषः—

B 233 कोशवत्।

## No. (148) 2035/17 आसुखासनाप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13 × 1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरलिपिः | स्थितिः—समीचीना |
| पत्राणि—180-187 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

इदानीमासुखासनाप्रतिबन्धो निरूप्यते। स च प्रतिबन्धः स्वस्मिन्नविद्यमान इव भासमानोऽपि, कदाचित्परशास्त्रदर्शनानन्तरमाक्षेपादिभिः प्रकटीभवति। तथाहि—

उपसंहारः—

प्रतिबन्धविचारं कृत्वा प्रतिबन्धं निराकृत्य श्रवणादिकं कृत्वा ज्ञानं सम्पादितं चेन्मुक्तो भवतीति सकलश्रुतिस्मृतीतिहासपुराणा वदन्ति। एवं प्रतिबन्धं विचार्य प्रतिबन्धनिर्मूलनं कृत्वा श्रवणादिज्ञानं यः सम्पादयति स एव जीवन्मुक्त इति सर्ववेदान्तसिद्धान्त इति सर्वं रमणीयम् ॥

इत्यासुखासनाप्रकरणं समाप्तम्।

प्रतिपाद्यविषयः—

अस्मिन् ग्रन्थे आसुखासनास्वरूपं तन्निरसनप्रकारश्च प्रतिपाद्यते॥

वक्तव्यविशेषः—

अमुद्रितः ॥

## No. (149) A 209 इष्टसिद्धिः

| | |
|---|---|
| ग्रन्थकर्ता—विमुक्ता(त्मा)चार्यः | प्रतिपुटं पङ्क्तयः—33 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—12½ × 7¾ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-96 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यानुभूतिरजामेयानन्तात्मानन्दविग्रहा ।
महदादिजगन्मायाचित्रभित्तिं नमामि ताम् ॥
इष्टानिष्टाप्तिहानीच्छोस्तत्सिद्धिर्यद्दृशा श्रुतेः ।
तस्मात्तत्त्वेष्टसिध्यर्थं विवृणोत्यात्मसन्दृशे ॥

येति स्वतःसिद्धतां द्योतयति । अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गात् । न च स्वतःसिद्ध(स्य) मलप्रागभावादयः स्वतोऽन्यतो वा सिध्यन्ति । ततोऽजा । अतोऽस्या नान्येऽपि भावविकाराः । जन्मादीत्यादि तेषां (जन्मादिस्यात्तेषां ।) चेत्यानां च न चिद्धर्मत्वम् रूपादिवत् । अतोऽमेया ॥

उपसंहारः—

धर्मार्थकाममोक्षाख्याश्चत्वार इतरेऽपि च ।
इष्टानिष्टाश्च सिध्यन्ति सर्वतीर्थदृशां तथा ॥
दर्शनानि विरुद्धानि जगद्वैचित्र्यमेव च ।
तस्मात्सर्वस्य सिध्यर्थं विचार्य निरधारि सा ॥
अस्ति मुक्तिस्त्वसौ बोधात् बोधोऽनिर्बोधनुत्फलः ।
आत्मन्यबोधस्तस्यैव तन्नाशोऽस्यात्मशेषता ॥
आत्मैको निष्क्रियोऽनन्तोऽद्वयोऽनुभवविग्रहः ।
अतस्तज्जन्म आत्मस्थो ज्योतिषां ज्योतिरात्मभाः ॥
सर्वेष्टं परमानन्दो वेदान्तात्मप्रमाण (प्रकाशकः) गः ।
इत्येषोऽर्थो विशेषेण मयेष्टो वेदविन्मतः ॥
अर्थश्चागमनिर्वाक्या यद्यविद्या प्रसिध्यति ।
व्यत्वीत्वरमविद्यां तामत इष्टार्थसिद्धये ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याव्ययात्मभगवत्पादशिष्यस्य विमुक्तात्माचार्यस्य
(विमुक्तात्मभगवतः) कृताविष्टसिद्धावष्टमोऽध्यायः ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे दृग्दृश्यभेदनिरसनम्, भेदादिदुर्निरूपत्वम्, क्षणिकस्य कारणत्वनिरासः, अज्ञानविचारः, असत्ख्यातिनिरासः । परिणाम-

पादखण्डनम्, ब्रह्मणः सप्रपञ्चत्वखण्डनम्। आत्मख्यातिखण्डनम्। देहात्मवादनिरासः। इत्यादयो विषया विचारिताः॥

वक्तव्यविशेषः—

अयं ग्रन्थो मुद्रितो दृश्यते॥

## No. (150) A 730 इष्टसिद्धिः

ग्रन्थकर्ता—विमुक्तात्मा
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13 × 8 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-277
प्रतिपुटं पङ्क्तयः—42
प्रतिपङ्क्त्यक्षराणि—14
कालः (कोशस्य)—15 वत्सराः
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

A 209 कोशवत्।

उपसंहारः—

A 209 कोशवत्।

प्रतिपाद्यविषयः—

A 209 कोशवत्।

वक्तव्यविशेषः—

A 209 कोशवत्।

## No. (151) A 738 इष्टसिद्धिः

ग्रन्थकर्ता—विमुक्तात्मा
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13 × 8 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-302
प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—30
कालः (कोशस्य)—15 वत्सराः
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

A 209 कोशवत्।

उपसंहारः—

A 209 कोशवत्।

प्रतिपाद्यविषयः—

A 209 कोशवत्।

वक्तव्यविशेषः—

A 209 कोशवत्।

## No. (152) A 756 इष्टसिद्धिः

ग्रन्थकर्ता—विमुक्तात्मा
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13 × 8 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-142
प्रतिपुटं पङ्क्तयः—32
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—15 वत्सराः
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

A 209 कोशवत्।

उपसंहारः—

A 209 कोशवत्।

प्रतिपाद्यविषयः—

A 209 कोशवत्।

वक्तव्यविशेषः—

A 209 कोशवत्।

## No. (153) A 757 इष्टसिद्धिः

ग्रन्थकर्ता—विमुक्तात्मा
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—10×8¾ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-239
प्रतिपुटं पङ्क्तयः—20
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—20 वत्सराः स्युः
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

A 209 कोशवत्।

उपसंहार:—

दोषाभावादंशाग्रहे भ्रमोऽर्थाभावात् स्वप्नावधीरिति चेत् न ह्यग्रहो दोषास्वयेष्टः । किं तु भ्रमः ।

न च ग्रहः स्वतः शुक्तेर्येन दोषात्तदग्रहः ।
स्वतोऽग्रहे .......... ........ ॥

प्रतिपाद्यविषय:—

A 209 कोशवत् ।

वक्तव्यविशेष:—

A 209 कोशवत् ।

## No. (154) A 772 इष्टसिद्धिः

| | |
|---|---|
| ग्रन्थकर्ता—विमुक्तात्मा | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—26 |
| प्रमाणम्—10 × 8¾ अङ्गुलानि | कालः (कोशस्य)—15 वत्सराः |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-109 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

न च ग्रहः स्वतः शुक्तेर्येन दोषात्तदग्रहः ।
स्वतो ग्रहे ग्रहो न स्यात् शैत्यमग्नेरिवान्यतः ॥

मायां विनेति वाक्यशेषः । दशो .... .... .. शग्रहशक्तिः ग्रन् दोषो भ्रान्तिं करोति चेत् स ........ वान्यथाख्यातावाग्रहः कोपयोक्ष्यते ॥

उपसंहार:—

A 209 कोशवत् ।

प्रतिपाद्यविषय:—

A 209 कोशवत् ।

वक्तव्यविशेष:—

A 209 कोशवत् ।

## No. (155) A 553 ईशाद्यष्टोत्तरशतोपनिषद्विवरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—$8\frac{1}{2}\times13\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—प्राचीनः |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—24 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

ॐ श्रीमद्विश्वाधिष्ठान परमहंस सद्गुरु श्री रामचन्द्राय नमः श्री रामचन्द्र परब्रह्मणे नमः ।

ईशाद्यष्टोत्तरशतवेदान्तपटलाशयं—

त्रैपदानन्दसाम्राज्यं कलये स्वादशेषतः
नत्वा त्रिपाद्गुरुं सद्यः कैवल्यानन्दं इच्छताम् ।
ईशाद्यष्टोत्तरशतवेदान्तार्थोऽभिगद्यते
लीलात्रिभूतिनिश्वास निगमान्तार्थसंचयम् ॥

लीलया लीलाविभूतिरेव जानाति तत्त्वतः कृत्वा मां लेखकं लीलाभूते मय्यनुकम्पया ईशाद्यष्टोत्तरशतवेदान्तार्थं स्फुटीकुरु ॥

उपसंहारः—

"यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा वृणुते तनूं स्वां" इति ऋगादिचतुर्वेदपठनपाठनाद्यमानप्रवचनेन अयमात्मा न लभ्यः नापि ग्रन्थार्थधारणपटुशक्तिरूपमेधया नापि बहुभ्यो बहुधाश्रुतश्रवणेन तदा-चेत् मनोपायेन लभ्यत इत्यताह । यमिति एष साधको मुमुक्षुरियं परमात्मानं सर्वापह्नवसिद्धिनिष्प्रतियोगिकस्वमात्मतया वृणुते जाना-तीति तेनैव ज्ञानस्वाविशेषतया अयमात्मा लभ्यः स्यात् अशेषधिया जानाति स्वात्मा लभ्यत इत्यताह । तस्येति तस्य ब्रह्मवत् वरिष्ठस्य एष परमात्मा स्वां तनूं निष्प्रतियोगिकपरमात्मा स्वमात्ममिति स्वधीय-याथात्म्यं वृणुते प्रकाशयतीत्यर्थः ज्ञातरूपेण ॥

प्रतिपाद्यविषयः—

अस्मिन् ग्रन्थे मुख्यानि उपनिषद्वाक्यानि विशेषरूपेण विचारितानि ॥

वक्तव्यविशेषः—

अष्टोत्तरशतोपनिषद्विवरणं सुष्ठुर्वर्तते अमुद्रितश्च ॥

No. (156) **B 245 ईशाद्युपनिषद्भाष्यम् (मूलसहितम्)**

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—64 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-42 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

पूर्णमद इति शान्तिः ॥

ईशावास्यमिदं सर्वं यत्किं च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥

भाष्यम्—

सुन्दरं सुन्दराचार्यं प्रणम्य पुरुषोत्तमम् ।
ईशावास्योपनिषद्भाष्यं त्वारभतेऽधुना ॥

ईशावास्यमित्यादयो मन्त्राः प्रायेण कर्मब्रह्मात्मैक्याद्यवबोधनपरा अपि प्रतिपत्तिविधिशेषतयैव ब्रह्मात्मानमवगमयन्तीति गम्यते। यतः इह साधनचतुष्टयसम्पन्नाधिकारिविषये वेदान्तशास्त्रे पूर्वकाण्डप्रधानां मन्त्रां वैलक्षण्येनवावगम्यते। तथा ह्याद्ये यतिविषये मन्त्रे मा गृधः कस्यस्विद्धनमिति धनग्रहणप्रतिषेधः। द्वितीये गृहिविषये मन्त्रे कुर्वन्नेव जिजीविषेदिति नित्यकर्मकरणविधिः ॥

उपसंहारः—

एतावदेवाहमेतत्परं ब्रह्म वेद। तर्हीतः परं वेद्यं किंचिदस्ति किमित्यत आह—नातः परमस्तीति। विदितं श्रुतवन्तस्ते शिष्यास्तमाचार्यं

विविधैः पुष्पादिभिरर्चयन्तः सन्तः एवमूचुः। योऽस्माकमस्मान् अविद्याया अनादिसंसारबीजभूतायाः परं पारं परमात्मानं तारयसि। प्रापयसि। हि यस्मात्तस्मात् त्वमेव नोऽस्माकं पिता रक्षकः। नमः परमर्षिभ्यः ब्रह्मविद्यासम्प्रदायकर्तृभ्यः। नमः परमर्षिभ्य इति द्विर्वचनं प्रश्नपरिसमाप्त्यर्थम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ

प्रश्नोपनिषद्भाष्ये षष्ठः प्रश्नः ॥

प्रश्नोपनिषद्भाष्यं समाप्तम्।

प्रतिपाद्यविषयः—

ईशाद्युपनिषद्व्याख्यानरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ईश-केन-कठ-प्रश्नोपनिषदां भाष्यं समग्रं विद्यते। अमुद्रितश्च ज्ञायते।

## No. (157) C 1810 ईशावास्यभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—कृष्णानन्दः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—46 |
| प्रमाणम्—12×4¼ अङ्गुलानि | कालः (कोशस्य)—200 वत्सराः |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-43 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

चिदानन्दो हंसश्चिरपरिचितो मानसतटे
चमत्कारान्कुर्वन्मतिवरस्याचारवपटुः।
विलासाच्छिन्वानश्चरमचरमुच्चावचमिदं
विलीनीकुर्वंश्चासकृदपि परेशो विजयते ॥

वन्दे वृन्दारुवृन्दान्तरघनतिमिरे चण्डभानुं प्रचण्डं
काण्वानां मन्त्रमध्यामुपनिषदि सदा मोदकह्लारलक्ष्म्याम्।
श्यायां . . . वुलसन्त्याममृतसरसगो कौमुदीसंभृताङ्गं
चन्द्रं सान्द्रं कलाभिः सततमपि शिवं देशिकेन्द्रं पतीन्द्रम् ॥

ईशावास्यमित्याद्या वाजसनेयिशाखान्तर्गतकाण्वमाध्यन्दिनयोश्चत्वारिंशत्तमात्मकोपनिषन्मन्त्रमयी। तत्र काण्वोपनिषदो माध्यन्दिनोपनिषदमनुरुध्य अल्पग्रन्था विविक्तिरारभ्यते॥

उपसंहारः—

अग्ने नय इति मन्त्रविवेचनानन्तरं हिरण्मयेनेत्यादित्योपासनमिति सूत्ररचनं माध्यन्दिनपाठाभिप्रायेण। तेषां पश्चादेव पाठात् कृतविवरणोऽयं मन्त्रः पूर्वमेव पाठक्रमेण माध्यन्दिनान्तिममन्त्रस्यौं खं ब्रह्मेत्यस्यार्थं निर्दिशति—ओमित्यादिना। ओमिति ब्रह्मणो नामनिर्देशः। अन्ते हृदयमध्ये खं चिदाकाशं शोधितजीवं ब्रह्म शोधिततत्पदार्थं ध्यायेदित्यर्थः। अयं मन्त्रो बृहदारण्यसप्तमाध्यायप्रथमब्राह्मणेन विवृत इति प्रागेव प्रसङ्गान्निरूपितम्॥

इतीशावास्यमन्त्रभाष्यं समाप्तम्

प्रतिपाद्यविषयः—

ईशावास्योपनिषद्विवरणरूपोऽयं ग्रन्थः॥

वक्तव्यविशेषः—

अमुद्रितः॥

## No. (158) C 512 ईशावास्योपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{4} \times 5\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-6

प्रतिपुटं पङ्क्तयः—34
प्रतिपङ्क्त्यक्षराणि—58
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ईशावास्यमित्यादयो मन्त्राः कर्मस्वविनियुक्तास्तेषामकर्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वात्। याथात्म्यं चात्मनः शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादि वक्ष्यमाणम्। तच्च कर्मणा विरुध्यत

इति युक्त एवैषां कर्मस्वविनियोगः । न ह्येवं लक्षणमात्मनो याथात्म्यमुत्पाद्यं विकार्यमाप्यं संस्कार्यं वा कर्तृभोक्तृरूपं वा येन कर्मशेषता स्यात् ॥

उपसंहारः—

अमृतमश्नुत इत्यापेक्षिकममृतत्वम् । विद्याशब्देन परमात्मविद्याग्रहणे हिरण्मयादिना द्वारमार्गादियाचनमनुपपन्नं स्यात् । तस्मादुपासनया समुच्चयो न परमात्मविज्ञानेनेति यथाव्याख्यात एव मन्त्राणामर्थ इत्युपरम्यते ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्येण श्रीशंकराचार्येण कृतमिदं भाष्यं समाप्तम् ॥

प्रतिपाद्यविषयः—

ईशावास्योपनिषद्विवरणरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

मुद्रितः ॥

## No. (159) B 421 ईशावास्योपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-17 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ओं शान्तिः शान्तिः शान्तिः

ईशावास्यमिदं सर्वं यत्किं च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ।
भा—सुन्दरं सुन्दराचार्यं प्रणम्य पुरुषोत्तमम् ।
ईशावास्याद्युपनिषद्भाष्यं त्वारभतेऽधुना ॥

ईशावास्यमित्यादयो मन्त्राः प्रायेणाकर्मब्रह्मात्मैक्यावबोधनपरा अपि प्रतिपत्तिविधिशेषतयैव ब्रह्मात्मानमवगमयन्तीति गम्यते ॥

उपसंहारः—

उत् उपरि रिच्यते अवशिष्यते। उच्यत इति वा पाठान्तरम्। तस्य पूर्णस्य सप्रतियोगिकस्य पूर्णं निष्प्रतियोगिकं स उ प्राणस्य प्राण इतिवत्। तदादाय स्वरूपत्वेनाभिनिष्पद्यतेत्यर्थः। परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रुतेः। परं ज्योतिःस्वरूपयोः सप्रतियोगिक-निष्प्रतियोगिकब्रह्मणोरवगम्यमानत्वात्। तत् निष्प्रतियोगिकं ब्रह्मैव सर्वस्मादपि पूर्णमवशिष्यते। परिशिष्यत इत्यर्थः। करणत्रयदोष-शान्त्यर्थोऽवस्थात्रयशान्त्यर्थो वा त्रिवारशान्तिपाठः ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पय्यदीक्षिताचार्यकृतौ ईशावास्योपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

ईशोपनिषद्विवरणरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (160) 30 उत्तरगीताव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—गौडपादाचार्यः | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—92 |
| प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—21-36 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

अखण्डं सच्चिदानन्दं अवाङ्मनसगोचरम्।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥

इह खलु भगवानर्जुनः धर्मक्षेत्रे कुरुक्षेत्रे भगवदुपदिष्टमात्मतत्त्वोप-देशं विषयभोगप्रावीण्येन विस्मृत्य पुनस्तदेवात्मतत्त्वं ज्ञातुं भगवन्तं पृच्छति अर्जुनः—

यदेकं निष्कळं ब्रह्म ज्ञेयातीतं निरञ्जनम् ।
अप्रतर्क्यमविज्ञेयं विनाशोत्पत्तिवर्जितम् ॥
कारणं योगनिर्मुक्तं हेतुसाधनवर्जितम् ।
हृदयाम्बुजमध्यस्थं ज्ञानज्ञेयस्वरूपकम् ॥

उपसंहार: —

किं च "भूतवस्तुन्यशोचित्वे पुनर्जन्म न विद्यत" इति। भूतवस्तुनि। निर्गतवस्तुनि अशोचित्वे गतमिति दुःखराहित्ये सिद्धे उपलक्षणमेतत् आगामिवस्तुनि निरपेक्षत्वे सिद्धे वर्तमानवस्तुनि लब्धे हर्षराहित्ये सिद्धे पुनर्जन्म न विद्यत इति ॥

आत्मयोगमवोचद्यो भक्तियोगशिरोमणिम् ।
तं वन्दे परमानन्दं नन्दनन्दनमीश्वरम् ॥

इति श्रीगौडपादाचार्यविरचितायामुत्तरगीतायां तृतीयोऽध्याय: ॥

प्रतिपाद्यविषय: —

उत्तरगीतार्थविवरणाविचार: ॥

वक्तव्यविशेष: —

मुद्रित: ॥

## No. (161) 874 उत्तरगीताव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—गौडपादाचार्य: | प्रतिपुटं पङ्क्तय:—18 |
| पत्रविशेष: —तालपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—64 |
| प्रमाणम्—15×1½ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि: —नागरीलिपि: | स्थिति: —किंचिच्छिथिला |
| पत्राणि—1-22 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रम: —

30 कोशवत् ।

उपसंहार: —

30 कोशवत् ।

प्रतिपाद्यविषयः—

30 कोशवत् ।

वक्तव्यविशेषः—

30 कोशवत् ।

## No. (162) 1321 उत्तरगीताव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—गौडपादाचार्यः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—30 |
| प्रमाणम्—$8\frac{3}{4} \times 1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—मलयाळलिपिः | स्थितिः—समीचीना |
| पत्राणि—40 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

30 कोशवत् ।

उपसंहारः—

30 कोशवत् ।

प्रतिपाद्यविषयः—

30 कोशवत् ।

वक्तव्यविशेषः—

30 कोशवत् ।

## No. (163) 447 उत्तरगीताव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—गौडपादाचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—58 |
| प्रमाणम्—$15\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-27 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

30 कोशवत्।

उपसंहारः—

30 कोशवत्।

प्रतिपाद्यविषयः—

30 कोशवत्

वक्तव्यविशेषः—

30 कोशवत्

## No. (164) C 404 उत्तरगीताव्याख्या

ग्रन्थकर्ता—गौडपादाचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—11 × 5½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—67-110
प्रतिपुटं पङ्क्तयः—38
प्रतिपङ्क्त्यक्षराणि—44
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

30 कोशवत्।

उपसंहारः—

30 कोशवत्।

प्रतिपाद्यविषयः—

30 कोशवत्।

वक्तव्यविशेषः—

30 कोशवत्।

## No. (165) C 252 उत्तरगीताव्याख्या

ग्रन्थकर्ता—गौडपादाचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—6 × 4½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—21-66
प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

.... पि न लिप्तःस्यात् । सुखदुःखादिसंबन्धरहिता इत्यर्थः । कायस्थोऽपि मरणधर्मवद्देहस्थोऽपि न बाध्यते । न म्रियत इत्यर्थः । अनेन जन्मादिषड्भावविकारशून्यत्वं दर्शितम् ॥ यदध्यासेनात्ममोहः संसृतिस्तदपवादेन तथैवात्मा विचारणीयः देहान्तःकरणादावित्याह—

तिलमध्ये यथा तैलं क्षीरमध्ये यथा घृतम् ।
पुष्पमध्ये यथा गन्धः फलमध्ये यथा रसः ॥ इति ॥

उपसंहारः—

30 कोशवत् ।

प्रतिपाद्यविषयः—

30 कोशवत् ।

वक्तव्यविशेषः—

30 कोशवत् ।

## No. (166) 4118/2 उत्तरगीताव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—गौडपादाचार्यः | प्रतिपुटं पङ्क्तयः—52 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—$9\frac{1}{4} \times 2\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—57-67 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

30 कोशवत् ।

उपसंहारः—

30 कोशवत् ।

प्रतिपाद्यविषयः—

उत्तरगीतार्थविवरणविचारः ।

वक्तव्यविशेषः—

30 कोशवत् ।

## No. (167) C 273 उत्तरगीताव्याख्या (कन्नड)

| | |
|---|---|
| ग्रन्थकर्ता — ? | प्रतिपुटं पङ्क्तय:—26 |
| पत्रविशेष:—कागदपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—26 |
| प्रमाणम् —7¼×4½ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—नागरीलिपि: | स्थिति:—मध्यमरीतिः |
| पत्राणि—1-46 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रम:—

ಭಗವದ್ಗೀತೆಯಲ್ಲಿ ತತ್ವದಾರ್ಥ ವ್ಯಾಖ್ಯಾನುಸಂಧಾನವನ್ನು ಮನೋವಿಕ್ಷೇಪದಿಂದ ಮರೆತು ಅರ್ಜುನನು ಶ್ರೀಕೃಷ್ಣದೇವರ ಕುರಿತು ಬಿನ್ನಹಂ ಮಾಡಲಾಗಿ ಉತ್ತರಗೀತೆಯಿಂದ ನಿರೂಪಿಸಿದ ಅರ್ಥವನ್ನು ಕನ್ನಡಿಸಿ ನಿರೂಪಿಸಿದ್ದಾರೆ.

अर्जुन उवाच —

यदेकं निष्कलं ब्रह्म व्योमातीतं निरञ्जनम् ।
अप्रतर्क्यमविज्ञेयं विनाशोत्पत्तिवर्जितम् ॥
कारणं योगनिर्मुक्तं हेतुसाधनवर्जितम् ।
हृदयाम्बुजमध्यस्थं ज्ञानज्ञेयस्वरूपकम् ॥

उपसंहार:—

ಅದು ತತ್ತ್ವವೆ ತಾನೆಂಬ ಭಾವದಿಂದ ಏಕಸ್ವರೂಪವು ಆಗುತ್ತಿದ್ದಿತು. ಅದು ಕಾರಣ ಜ್ಞಾನಾಮೃತವನ್ನು ಆ ಯತಿಗೆ ಸಮರ್ಪಿಸಿದಂಥ ತ್ವಂ ಪದಾರ್ಥವೆಂಬ ಗೃಹಸ್ಥನು ಮೊದಲು ಜನ್ಮವನ್ನು ಶುದ್ಧಮಾಡುವನು.

इति श्रीमदुत्तरगीतासूपनिषत्सु परब्रह्मविद्यायां योगशास्त्रे कृष्णार्जुनसंवादे कर्णाटकभाषाविरचितायां तृतीयोऽध्याय समाप्त: ॥

प्रतिपाद्यविषय:—

गौडपादाचार्यकृतोत्तरगीताव्याख्यायाः परिवर्तनमिदम् ॥

वक्तव्यविशेषः—

अमुद्रितः । 4609 तमग्रन्थादन्योऽयं ग्रन्थः ॥

## No. (168) 4609 उत्तरगीताव्याख्या (कन्नड)

ग्रन्थकर्ता —गौडपादाचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$14 \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—ग्रन्थनागरलिपिश्च
पत्राणि – 1-48

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥

ಷಡ್ಗುಣಪರಿಪೂರ್ಣನಾದ ಅರ್ಜುನನು ಕುರುಕ್ಷೇತ್ರದಲ್ಲಿ ಉಭಯಸೇನಾ ಮಧ್ಯದಲ್ಲಿ ಭಗವಂತನಿಂದ ಉಪದೇಶಿಸಲ್ಪಟ್ಟ ಆತ್ಮೋಪದೇಶವನ್ನು ವಿಷಯಭೋಗಪ್ರಾಬಲ್ಯದಿಂದ ಮರೆತುಬಿಟ್ಟು ತಿರುಗಿ ಆತ್ಮತತ್ತ್ವವನ್ನು ತಿಳಿಯುವದಕ್ಕೋಸ್ಕರ ಷಡ್ಗುಣಪರಿಪೂರ್ಣನಾದ ಶ್ರೀಕೃಷ್ಣನನ್ನು ಪ್ರಶ್ನೆ ಮಾಡುತ್ತಿದ್ದನು.

अर्जुन उवाच—

यदेकं निष्कळं ब्रह्म व्योमातीतं निरञ्जनम् ।
अप्रतर्क्यमविज्ञेयं विनाशोत्पत्तिवर्जितम् ॥

उपसंहारः—

ವರ್ತಮಾನ ವಸ್ತುವು ಪ್ರಾಪ್ತವಾದಲ್ಲಿ ಭೇದರಾಹಿತ್ಯವು ಸಿದ್ಧವಾಗುತ್ತಿರಲಾಗಿ ಪುನರ್ಜನ್ಮ—ಪುನರ್ಜನ್ಮವು ನ ವಿದ್ಯತೆ—ಆಗುವದಿಲ್ಲ.

आत्मयोगमवोचद्यो भक्तियोगशिरोमणिम् ।
तं वन्दे परमात्मानं नन्दनन्दनमीश्वरम् ॥

इति श्रीगौडपादाचार्यविरचितायां अश्वमेधपर्वण्युत्तरगीताव्याख्यायां
तृतीयोऽध्यायः ॥

प्रतिपाद्यविषयः—

30 कोशवत् ।

वक्तव्यविशेषः—

अमुद्रितः ।

## No. (169) 4659/2 उपदेशपञ्चकम्

ग्रन्थकर्ता—?
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—12½ × 1 अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

वेदो नित्यमधीयतां तदुदितं कर्मस्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
पापौघः परिभूयतां भवसुखे दोषोऽनुसन्धीयताम्
आत्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥ १ ॥
सङ्गः सत्सु विधीयतां भगवतो भक्तिः दृढाऽऽधीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु सन्त्यज्यताम् ।
सद्विद्वानुपसर्प्यतामनुदिनं तत्पादुका सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥
वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां
दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम् ।
ब्रह्मास्मीति विभाव्यतां अहरहर्गर्वः परित्यज्यतां
देहेऽहंमतिरुज्झ्यतां बुधजनैर्वादः समुत्सृज्यताम् ॥ ३ ॥

उपसंहारः—

क्षुद्व्याधिश्च चिकित्स्यतामनुदिनं भिक्षौषधं भुज्यतां
स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन संतुष्यताम् ।
औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यतां
शीतोष्णादि विषह्यतां न तु वृथावाक्यं समुच्चार्यताम् ॥ ४ ॥
एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥ ५ ॥

इत्युपदेशपञ्चकम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे उपदेशक्रमेण अद्वैतविषयः प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अमुद्रित इति दृश्यते ॥

## No. (170) C 879 उपदेशसाहस्री (सव्याख्या)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता रामतीर्थः)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—11 × 5½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-139

प्रतिपुटं पङ्क्तयः—30
प्रतिपङ्क्त्यक्षराणि—42
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यत्राध्यस्तमिदं सर्वं मेयमात्राद्यविद्यया ।
भाति, नो भाति यज्ज्ञानात् तदस्मि ब्रह्म चित्सुखम् ॥

तदेवं सर्वोपनिषत्सारसङ्ग्रहं गद्यबन्धप्रबन्धेन संक्षेपतो युक्त्योपदिश्य पुनरप्युक्तमेवार्थजातं पद्यबन्धप्रबन्धेन सोपस्करं विस्तरेणोपदेष्टुकामो भगवान्भाष्यकारः पद्यग्रन्थारम्भे ग्रन्थप्रतिपाद्यपरदेवतानमस्काररूपं मङ्गलं कृतं शिष्यशिक्षार्थं श्लोकेनोपनिबध्नाति चैतन्यमिति। तस्मै प्रसिद्धाय नमः प्रह्वीभावो भूयादित्यर्थः। तस्य विशेषजिज्ञासायां लक्षणमाह—सर्वविद इति। सर्वं वेत्तीति सर्ववित् तस्मै।

उपसंहारः—

विमथ्य वेदोदधितः समुद्धृतं
सुरैर्महाब्धेस्तु यथा महात्मभिः ।
तथामृतं ज्ञानमिदं हि यैः पुरा
नमो गुरुभ्यः परमीक्षितं च यैः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविन्दभगवत्पूज्यपादशिष्य श्रीशंकरभगवतः कृतिः सकलवेदोपनिषत्सारोपदेशसाहस्री समाप्ता

उपदेशसहस्रीयं विवृता हि महात्मभिः ।
श्रद्धावेशान्मयाऽप्यस्याः पदयोजनिका कृता ।
समस्तवेदार्थरहस्यगद्यपद्यप्रबन्धार्थतयाऽवबोधः ।
कथं नु माहङ्मतिबिम्बितः स्यात् अथापि भक्त्याहमिहास्मि नुन्नः ॥
हृद्यन्तराविष्कृतराममूर्तेस्तथा गुरूणां विपुलप्रसादात् ।
यथाकथंचिद्रचितेन विष्णुरनेन तृप्यत्वखिलान्तरात्मा ॥

इति श्रीशंकराचार्यकृतोपदेशसाहस्र्याः पदयोजनिकानाम टीका कृष्णतीर्थशिष्यरामतीर्थविरचिता समाप्ता

प्रतिपाद्यविषयः—

अस्मिन् ग्रन्थे एकोनविंशतिप्रकरणानि विद्यन्ते। तेषु च ज्ञानस्यैव मोक्षहेतुत्वं, ज्ञानकर्मसमुच्चयशङ्कानिरासौ, अज्ञानविचारः, जीवब्रह्मणोरभेदनिरूपणं, वाक्यादात्मज्ञानस्यानुत्पत्तिशङ्कातत्परिहारौ, आत्मनः स्वतःसिद्धत्वं, अद्वितीयत्वं, शुद्धत्वमित्यादयो विषयाः प्रतिपाद्यन्ते॥

वक्तव्यविशेषः—

मुद्रितः।

## No. (171) A 155 उपदेशसाहस्रीव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—रामतीर्थः | प्रतिपुटं पङ्क्तयः—60 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—32 |
| प्रमाणम्—13×8 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–130 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

प्रणम्य रामाभिधमात्मधीपदं जगत्प्रसूतिस्थितिसंयमायनम्।
तदात्मकाञ्शङ्करपूर्वकान्गुरून् मयोपदेशार्थविभाग उच्यते॥

इह भगवत्पादाभिधो भगवान् भाष्यकारः सर्वोपनिषदर्थसारसंग्राहिकां उपदेशसाहस्रीं गद्यपद्यविभागग्रन्थरचनया प्रकटीकुर्वन् आदौ गद्यप्रबन्धमारभमाणः प्रारीप्सितपरिसमाप्तिप्रचयगमनादिप्रयोजनं शिष्टाचारविशेषपरिप्राप्तं मङ्गलमाचरति—अथेति। अथ मोक्षसाधनज्ञानोपदेशविधिं व्याख्यास्यामः मुमुक्षूणां श्रद्दधानानामर्थिनामर्थाय—

उपसंहारः—

C 879 कोशवत्।

प्रतिपाद्यविषयः—

C 879 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे गद्यप्रबन्धश्च विद्यते।

## No. (172) A 176 उपदेशसाहस्री (सव्याख्या)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता बोधनिधिः)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13 × 8½ अङ्गुलानि
लिपिः—कन्नडलिपिः
पत्राणि—1-74, 1-77

प्रतिपुटं पङ्क्तयः—40
प्रतिपङ्क्त्यक्षराणि—34
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

विष्णुं पञ्चात्मकं वन्दे भक्त्याष्टादशभेदया ।
साङ्गवर्गोनविंशत्या भक्तैर्नवभिराश्रितम् ॥
चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।
यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥

चेतनमेव चैतन्यं ज्ञप्तिस्वरूपम् । सर्वगं स्वाविद्याकल्पितदिक्कालाकाशादि सर्वं व्याप्नोतीति सर्वगम् । सर्वगमित्युक्ते परमार्थतः सर्वं तद्व्यमस्तीत्याशङ्का मा भूदित्याह—सर्वमिति । अविद्याकल्पितस्य स्वतोऽन्यत्वानुपपत्तेः । सर्वभूतगुहाशयं—सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां गुहासु बुद्धिषु साक्षितया स्वाभासद्वारेण शेत इति । यदेवंलक्षणं सर्वविषयातीतं परमार्थतोऽविद्यातत्कार्यरहितं, सर्वं वेत्तीति सर्ववित् स्वाभासाविद्याद्वारेण तस्मै सर्वविदे नमः प्रह्वीभावः ॥ स्वरूपानुसन्धानमेव नमस्कारः ॥

उपसंहारः—

इति सप्तशतश्लोका यतीन्द्रश्रीमुखोद्गताः ।
विवृता गुरुभक्तेन मया ब्रह्मात्मबोधकाः ॥
उपास्य श्रद्धया श्रीमद्विद्याधाममुनीश्वरम् ।
श्रीमत्पदाम्बुजं तस्य प्रसादाच्च स्वबुद्धितः ॥
येन मे सकलाद्वैतादाकृष्य मन आत्मनि ।
स्थापितं मुनिमुख्येन यावज्जीवं नमामि तम् ॥

यद्धाव्यसागरजमुक्तिमणीन् प्रकीर्णान्
प्राप्याधुना कतिपयान् कवयो भवन्ति ।
तस्मै नमो जनमनोऽब्धिदिवाकराय
कृत्स्नागमार्थनिलयाय यतीश्वराय ॥

इति श्रीमद्विद्याधामशिष्येण बोधनिधिना श्रद्धाभक्तिमात्रप्रेरितेन कृतमुपदेशग्रन्थविवरणं समाप्तम्

प्रतिपाद्यविषयः—

C 879 कोशवत् ।

वक्तव्यविशेषः—

C 879 कोशवत् ।

## No. (173) 2967 उपदेशसाहस्री (सव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—बोधनिधिः (व्याख्याता) | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—80 |
| प्रमाणम्—17 × 1½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-111 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

A 176 कोशवत् ।

उपसंहारः—

A 176 कोशवत् ।

प्रतिपाद्यविषयः—

C 879 कोशवत् ।

वक्तव्यविशेषः—

C 879 कोशवत् ।

## No. (174) C 781 उपदेशसाहस्री (सव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—बोधनिधिः (व्याख्याता) | प्रतिपुटं पङ्क्तयः—30 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—40 |
| प्रमाणम्—10 × 5½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-156 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

वन्देवरप्रदमहं वरवारणेन्द्रवक्त्रं सदा क्षितिभृदीश्वरजाततनूजम् ।
विघ्नेश्वरं विबुधवन्दितपादपद्मं संसारसंभवभयापहमानतानाम् ॥
शतमखपूजितपादं शतपथमनसाप्यगोचराकारम् ।
सितजलरुहनिभनेत्रं सीतावामाङ्कमाश्रये रामम् ॥
शेषः A 176 कोशवत् ।

उपसंहारः —

A 176 कोशवत् ।

प्रतिपाद्यविषयः—

C 879 कोशवत् ।

वक्तव्यविशेषः—

C 879 कोशवत् ।

## No. (175) 1614 उपदेशसाहस्री (सव्याख्या)

ग्रन्थकर्ता—बोधनिधिः (व्याख्याता)
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम् —15¼×2 अङ्गुलानि
लिपि —ग्रन्थलिपिः
पत्राणि — 1–112

प्रतिपुटं पङ्क्तयः—30
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः —शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

A 176 कोशवत् ।

उपसंहारः—

प्रसिद्धिमूढलोकस्य यदि ग्राह्या निरात्मता । लोका . . . . . . निष्टः प्रसज्जते ॥ प्रसिद्धिः प्राकृतस्य मूढलोकस्य यद्यभ्युपगम्यते देहा . . . . . . हितता, सा च नाभ्युपगन्तुं शक्यते । कस्माल्लोकायतिकसिद्धान्तत्वात् । स च लो . . . . . . . . . . . . . अनभिप्रेतः प्रसज्यते । तस्मात्प्राकृत-सिध्याश्रयणे निश्चयाभावः ॥

प्रतिपाद्यविषयः—

C 879 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे तत्त्वमसीतिप्रकरणपर्यन्तं विद्यते ॥

## No. (176) 336 उपदेशसाहस्री (सव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः (व्याख्याता आनन्दज्ञानयतिः) | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$7\frac{1}{4} \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–215 and 1–57 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

प्रणम्य कृष्णं प्रणतार्तिहारिणं गुरूनपि स्वात्मपरमार्थरूपिणः ।
मया सहस्रीविवृतिर्विधीयते कृतापि मन्दोपकृतिप्रसिद्धये ॥

सकलोपनिषदर्थसारसङ्ग्राहिकामुपदेशसहस्रीं गद्यपद्यात्मिकां प्रारभमाणो भगवान् भाष्यकारः चिकीर्षितस्य ग्रन्थस्याविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनपरिलब्धादृष्टसिद्धये च विशिष्टदेवतातत्त्वानुस्मरणपूर्वकं तन्नमस्काररूपं मङ्गळाचारं मुखतः सम्पादयन् अस्य शारीरकप्रकरणस्य तदीयमेवानुबन्धजातं सूचयति—

चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।
यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥

उपसंहारः—

आत्मनश्चाद्वयत्वविषयाणि द्वयस्यासत्वार्थानि च सर्वाण्युपनिषद्वाक्यानि विस्तरशः समीक्षितव्यानि । समीक्षितव्यमनेनेति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतमुपदेशसहस्रिकाख्यपरिसङ्ख्याप्रकरणं द्वाविंशं समाप्तम् "अभ्यासो ग्रन्थस्य गद्यपद्यात्मनः समाप्तः"

उपदेशसहस्रीयं गद्यपद्यमयी मया ।
व्याकृताप्यन्यैर्मन्दानुग्रहसिद्धये ॥
व्याक्रिया सत्क्रिया सेयं कुर्वन्ति शर्म निरलङ्कृता ।
. . . . . . . . . विद्यानामाक्षिता पुरुषोत्तमं ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्यभगवदानन्दज्ञानकृता श्रीमदुपदेशसाहस्रिकाटीका समाप्ता

यत्पादाम्बुजचञ्चरीकधिषणानिर्वाणमार्गादिगा
पङ्क्तिर्मुक्तिनिसर्गदुर्गदुरिता वाचंमयानामियम् ।
तस्मिन्नित्यमिदं शमादि समभौद्बोधाङ्कुरो मे यतः
शुद्धानन्दमुनीश्वराय गुरवे तस्मै परस्मै नमः ॥

सूर्यानलानिलजलेशसुरेशदस्रदिग्यक्षमृत्युपरमेष्ठिशशाङ्करूपैः ।
भिन्नस्त्वमेव कुरुषे सकलं विधातः स्थानं कथं तव भयं दधतो मम स्यात् ॥

मनसा चिन्तितं यन्मे वाचा यद्भाषितं पुनः ।
कायेन यत्कृतं कर्म तत्तद्ब्रह्मार्पणं भवेत् ॥

प्रतिपाद्यविषयः—

C 879 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे गद्यग्रन्थः पद्यप्रबन्धश्च विद्यते ।

## No. (177) 1796 उपदेशसाहस्री (सव्याख्या)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता आनन्दज्ञानयतिः)
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$19\frac{1}{4} \times 1\frac{7}{8}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-50, 1-18

प्रतिपुटं पङ्क्तयः— 18
प्रतिपङ्क्त्यक्षराणि—10
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा— समग्रः

उपक्रमः—

B 336 कोशवत् ।

उपसंहारः—

B 336 कोशवत् ।

प्रतिपाद्यविषयः—

C 879 कोशवत् ।

वक्तव्यविशेषः—

B 336 कोशवत् ।

## No. (178) 1218 उपदेशसाहस्री (सकर्नाटकटीका)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता पुरुषोत्तमसाक्षी)
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—18×1¼ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-124

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—102
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

हयग्रीवाङ्घ्रिपादाब्जपांसवः पान्तु सन्ततम् ।
अनिशं प्रणतानस्मान्योजयन्तः सुखे पदे ॥

कृष्णतीर्थपदाम्भोजद्वन्द्वं वन्देऽद्भुतं रविम् ।
यस्य संस्मरणादेति विकासं हृदयाम्बुजम् ॥

. . . . . . स्तदाकृतिमुखो वेदात्मकैर्बाहुभिर्युक्तः ।
शास्त्रपुराणनिर्मिततनुः स्वात्मान्धकारापनुत् ।
सोऽयं शास्त्रकथाविचारचतुरो ज्ञानात्मको मामके ।
जिह्वारङ्गतले सदैव रमतां पञ्चास्यरूपो हरिः ॥

कृपया शंकरेणादावुपदेशसहस्रिका ।
मुमुक्षुहितसिध्यर्थं रचिताचार्यरूपिणा ।
टीकेयं क्रियते तस्याः पुरुषोत्तमसाक्षिणा ।
अव्युत्पन्नप्रबोधाय युता कर्णाटभाषया ॥

चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।
यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥

ವೇದಾನ್ತ ತಾತ್ಪರ್ಯ್ಯಮಂ ಪ್ರತಿಪಾದಿಸುವ ನ್ಯಾಯ ಸಂಗ್ರಹ ಪರಮಪ್ಪ ಉಪದೇಶಸಹಸ್ರಿಯೆಂಬ ಪ್ರಕರಣವನಾರಂಭಿಸುವಾಚಾರ್ಯ್ಯನು ಆ ಪ್ರಕರಣಕ್ಕೆ ನಿರ್ವಿಘ್ನ ದಿಂದ ಪರಿಸಮಾಪ್ತಿಗಂ ಶಿಷ್ಯಪ್ರಶಿಷ್ಯಕ್ರಮದಿಂದ ಲೋಕದೊಳು ಗ್ರಂಥವ್ಯಾಪ್ತಿಗಂ ಪರದೇವತಾ ತತ್ತ್ವಾನುಸ್ಮರಣಪುರಸ್ಸರವಾಗಿ ನಮಸ್ಕಾರಮಪ್ಪ ಮಂಗಳಾಚರಣದ ಮುಖದಿಂದ ಮಾಡುತ ಪ್ರತಿಪಾದ್ಯವಪ್ಪ ವಿಷಯಪ್ರಯೋಜನಾದಿಗಳನಾರ್ಥಿಕವಾಗಿ ತೋರಿಸಿಹನು—

उपसंहारः—

ಅಕ್ಷುದ್ರಸ್ವಾಭಾವ್ಯರಹ ದೇವರ್ಗಳಿಂದ ಕ್ಷೀರಸಾಗರದ ದೆಸೆಯಿಂದ ಅಮೃತವನು ದ್ಧರಿಸಲುಪಟ್ಟಪರಿಯಲೆ ವೇದೋದಧಿಯು ದೆಸೆಯಿಂದ ಜ್ಞಾನಾಮೃತವು ಆಚಾರ್ಯ ರಿಂದ ಉದ್ಧರಿಸಲು ...... ಅದ ಆಚಾರ್ಯರಿಂದ ಪರಬ್ರಹ್ಮ ಸಾಕ್ಷಾತ್ಕರಿಸಲ್ಪಟ್ಟದು, ಅಂಥಾ ಪರಮ ಗುರುಗಳಿಗೆ ನಮಸ್ಕಾರ.

यो वेदान्तशिरस्तथोक्तिमुखो वेदात्मकैर्बाहुभि-
र्युक्तः शास्त्रपुराणनिर्मिततनुः स्वात्मान्धकारापनुत् ।
सोऽयं शास्त्रकलाविचारचतुरो ज्ञानात्मको मामके
जिह्वारङ्गतले सदैव रमतां पञ्चास्यरूपो हरिः ॥
हयग्रीवाङ्घ्रिपादाब्जपांसवः पान्तु सन्ततम् ।
अनिशं प्रणतानस्मान्योजयन्तु सुखे पदे ॥
कृष्णतीर्थपदाम्भोजद्वन्द्वं वन्देऽद्भुतं रविम् ।
यस्य संस्मरणादेति विकासं हृदयाम्बुजम् ॥

प्रतिपाद्यविषयः—

C 879 कोशवत् ।

वक्तव्यविशेषः—

अमुद्रितः । आनन्दज्ञानयतिकृतटीकायाः परिवर्तनरूपोऽयं ग्रन्थः । अस्मिन्कोशे पद्यप्रबन्धमात्रस्य टीका विद्यते ।

## No. (179) 21/5 उपनिषद्दीपिका

ग्रन्थकर्ता—शंकरानन्दः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—17×1¾ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—48—67 ।

प्रतिपुटं पङ्क्तयः—20
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)— ?
स्थितिः—अत्यन्तशिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

ईशावास्यादयो मन्त्रा विनियुक्ता न कर्मणि ।
प्रमाणाभावतस्तेषां कुर्वे व्याख्यामकर्मणि ॥

ईश ईष्ट इति ईश्वर आनन्दात्मा तेन आवास्यमाच्छादनीयं वा इदं विविध ........ सर्वं निखिलम्। सर्वशब्दार्थमाह--यत्किं च यत्किञ्चित् भूतभौतिकं जगत्यां ब्रह्माण्डकटाहभूमौ जगत् चेतनाचेतनात्मकं ईश्वर एवेदमिति बुद्धिः करणीया इत्यर्थः। तद्बुध्युत्पादे कारणमाह—तेन जगतात्यक्तेन तद्बुध्या गृहीतेन भुञ्जीथाः ईश्वरतत्त्वसाक्षात्कारलक्षणं भोजनं कुर्वीथाः।

उपसंहारः—

ओंकारव्याप्तिज्ञानवान् एतेनैव सर्ववेदप्रसिद्धेनोक्तेनोंकारेणैव न त्वन्येनैवायतनेन आश्रयणेन एकतरं स्वाभिप्रेतं परमपरं वा ब्रह्मपरा परयोर्ब्रह्मणोर्मध्ये अन्वेति शास्त्रोपदिष्टेन मार्गेणोपास्य पश्चाद्गच्छति। इदानीं मात्राभेदज्ञानाद्विशेषफलान्याह—सः अभिध्याता यदि पक्षान्तरे, एकमात्रं ............।

प्रतिपाद्यविषयः---

भगवच्छंकरानन्दकृतः उपनिषद्व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ईशकेनोपनिषदौ समग्रे प्रश्नोपनिषच्चासमग्रा विद्यते, अमुद्रितश्च ज्ञायते।

## No. (180) 1655/1 उपनिषद्दीपिका

ग्रन्थकर्ता---शंकरानन्दः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—18 × 1¼ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–35

प्रतिपुटं पङ्क्तयः—16
प्रतिपंक्त्यक्षराणि—74
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

नारायणोपनिषदं मेदपर्वतमेदिनीम्।
व्याख्यास्ये ब्रह्मविद्यायाः जनसंतापहारिणीम्॥

संबन्धो विषयस्तद्वत्साधिकारिप्रयोजनः ।
सर्वोपनिषदां तुल्यस्तस्मान्नात्रोच्यते पृथक् ॥

पुरुषः परिपूर्णः देशकालवस्तुपरिच्छेदशून्य इत्यर्थः । प्रसिद्धः सर्वासूपनिषत्सु ............... माणः । नारायणः आपो नारास्ता अयनं आयतनं यस्य स नारायणः । अथ वा नाराः प्रतिबिम्बकल्पा अयनमात्मत्वेनाश्रयो यस्य स नारायणः । नारायण एव नारायणः । अथ वा नारा विक्षिप्तचित्तास्तेषामयनमाश्रयाविद्या नारायणं तस्यायनमाश्रयत्वेन विषयत्वेन च संबन्धान्नारायणः । अथ वा आरा दुःखकारणानि न आरा नाराः । ब्रह्मचर्यादीनि साधनान्युदर्कसुखानि तान्ययनं प्राप्तिसाधनानि यस्य स नारायणः । अथ वा आराः संसारचक्रस्य कामक्रोधादयः तेषामयनमविद्या येषां जीवानां ते आरायणा आत्मबोधशून्याः । तद्विपरीत आनन्दात्मा नारायणः अथ वा नरनारायणावतारो नारायणो मुनिः निवृत्तिमार्गरतानां परमो गुरुः अकामयत कामनामकुरुत ॥

उपसंहारः —

ननु कस्येदमनुशासनमित्यत आह—वेदानुशासनं वेदस्य भगवतः शब्दराशेः सर्वज्ञस्य वर्णाश्रमादिव्यवस्थाहेतो राजकल्पस्यानुशासनं वेदानुशासनम् । अभ्यास उपनिषत्समाप्त्यर्थः । इत्युपनिषदन्तरस्याप्येतावदर्थपर्यवसायित्वमित्येतदर्थमितिशब्दः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यश्रीशंकरानन्दभगवतः कृतिष्वारण्योपनिषद्दीपिका समाप्ता ।

प्रतिपाद्यविषयः—

महानारायणाद्युपनिषद्व्याख्यारूपो ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे महानारायण, कैवल्य, ब्रह्म, गर्भ, ईश, महो. आरुणिकोपनिषदां दीपिका विद्यते। प्रायो मुद्रिताः।

## No. (181) B 246 उपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—64 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—43–105 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

नत्वा श्रीसुन्दराचार्यं प्रसन्नमुखपङ्कजम् ।
मुण्डकोपनिषद्भाष्यं संग्रहाद्रचयाम्यहम् ॥

भद्रं कर्णेभिरित्यादिशान्तिः। ब्रह्मा हिरण्यगर्भः। देवानामिन्द्रादीनां प्रथमः पूर्विकः गुणैः प्रधानो वा। संबभूव यः कश्चन जीव एव प्रबलतरज्ञानकर्मसमुच्चयानुष्ठानैर्विश्वस्य समस्तस्य प्रपञ्चस्य कर्ता स्रष्टा भुवनस्य पञ्चीकृतस्य तस्य गोप्ता रक्षकः सः सर्वविद्यानां सत्त्वदहराद्यानां प्रतिष्ठां सिद्धान्तभूतां ब्रह्मविद्यां निर्विशेषपरब्रह्मविद्यां ज्येष्ठपुत्राय ज्येष्ठश्चासौ पुत्रश्च तस्मै अथर्वाख्याय प्राह उवाच ॥

उपसंहारः—

स सत्याभिसन्धः यथा तत्र तप्तपरशुग्रहणकर्मणि न दाह्येन दह्येतेत्येतत्। एवं ब्रह्मात्मैक्यापरोक्षविद्वान् सत्याभिसन्धः पुत्राद्यभिमानजनितसंसारदुःखाग्निना न दह्यते वर्तमानदेहपातानन्तरं यमदूतैर्मुच्यते च। अविद्वांस्त्वनृताभिसन्धः उक्तदुःखाग्निना दह्यते। देहपातानन्तरं यमदूतैर्हन्यते चेत्यतोऽयं विद्वानयमविद्वानिति प्रत्यक्षशास्त्रीयलिङ्गैर्विभज्य ज्ञातुं शक्यत एव ऐतदात्म्यमिदं सर्वमित्यादि व्याख्यातम्। तद्वास्य विजिज्ञाविति विजिज्ञाविति द्विरुक्तिरध्यायपरिसमाप्त्यर्था।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ छान्दोग्योपनिषद्भाष्ये
षष्ठः प्रपाठकः समाप्तः।

प्रतिपाद्यविषयः—

B 245 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे मुण्डक-माण्डूक्य-तैत्तरीय-ऐतरेयोपनिषदः समग्राः, छान्दोग्ये षष्ठाध्यायमात्रं च विद्यन्ते।

## No. (182) A 166 उपनिषद्भाष्यम्

ग्रन्थकर्ता - अप्पय्यदीक्षिताचार्यः
पत्रविशेषः— कागदपत्रात्मकः
प्रमाणम्—12½×8 अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि —1–173

प्रतिपुटं पङ्क्तयः—46
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्थ)—?
स्थितिः—शिथिलः
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

ब्रह्माख्यं परमं सूत्रं प्रोच्यते यत्र पावनम् ।
एतां ब्रह्मोपनिषदं व्याख्यास्येऽन्वर्थसंज्ञकाम् ॥

अथेति मङ्गलार्थः शब्दः। पुरुषस्य शिरःपाण्यादिमतः शरीरस्येत्यर्थः। नाभ्यादीन्युक्तानि चत्वारि स्थानानि भवन्ति। तत्र स्थानेषु चतुष्पादं "पादोऽस्य विश्वा भूतानीति" श्रुत्यन्तरोक्तमखण्डं ब्रह्म खण्डत्वेन विभाति। ननु जागरितादिचतुष्पादं ब्रह्मैव नाभ्यादिषु विभातीति युक्तमिति चेन्न; नेत्रस्थं जागरितं विद्यादित्यादिना अन्यथा वक्ष्यमाणत्वात् तर्हि ब्रह्मविष्णुरुद्राक्षरात्मकचतुष्पादं ब्रह्मैव नाभ्यादिषु विवक्षितमित्यत आह—जागरित इति। ब्रह्मादीनां जागरितादिषु विद्यमानत्वाभिधानात्। आदित्यविष्णवीश्वरज्योतींषि च जागरितादिषु क्रमाद्भवितुमर्हन्ति। यत्रामनस्कत्वाद्युक्तलक्षणे तुरीये ज्योतिषि परब्रह्मणि तादात्म्यं गतस्य लोकाः परिदृश्यमानाः न लोकाः लोकनानर्हाः। दीव्यन्त इति देवास्ते च न भवन्ति ॥

उपसंहारः—

ब्रह्मण आत्मनैक्यं पश्यन्तीत्यवगन्तव्यत्वात्। आत्मनोऽपि हि त्रैविध्यं पाञ्चविध्यं च प्रसिद्धम्। अतस्तत्तदात्मब्रह्मणोरैक्येऽपि भेदसिद्धिः। यस्मिन्निति। भावाः विकारपदार्थाः। यस्मिन्नुत्पद्यन्ते प्रलीयन्ते च तं क्षेत्रज्ञे जीवात्मन्यधिष्ठितं साक्षित्वेन विद्यमानं प्रत्यगात्मानं स भगवान् सर्वज्ञत्वादिगुणकः परमेश्वरः कारणैरव्यक्तादिभिः सह विद्यते अन्ये जीवाः पुनःपुनरेतदुत्पत्तिप्रळयवज्जगत्पश्यन्ति। अथ सृष्टिकाले आयान्ति ये ब्रह्म सगुणं ब्रह्म निर्गुणमिति विदुस्ते ब्राह्मणा अत्रैव लयं यान्ति ॥

इति मन्त्रिकोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

B 245 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे—ब्रह्म-कैवल्य-जाबाल-श्वेताश्वतर-हंस-आरुणिक-गर्भ-नारायण-परमहंस-अमृतबिन्दु-अमृतनाद-अथर्वशिरः-अथर्वशिखा-मैत्रायणीय-कौषीतकी-बृहज्जाबाल—नृसिंहतापनी—कालाग्निरुद्र—मैत्रेयी-सुबाल-क्षुरिका-मन्त्रिकोपनिषदः समग्रा विद्यन्ते॥

## No. (183) A 167 उपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—46 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—$12\frac{1}{2} \times 8$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-114 | समग्रोऽसमग्रो वा—असमग्र. |

उपक्रमः—

नत्वा श्रीसद्गुरुं शान्तं पठित्वा सहनाविति।
सर्वसारोपनिषदं व्याख्यास्ये संग्रहादहम्॥

इह खल्वष्टोत्तरशतसंख्यासु षट्सप्ततिसंख्यासूपनिषत्सु प्राथमिकां सर्वसाराख्यामुपनिषदं व्याख्यातुं प्रयत्यते—कथमिति। कथं बन्धः दुःखनिमित्तसंसारबन्धः कीदृशः। कथं मोक्षः सुखनिमित्तसंसारमोक्षः कीदृशः। का अविद्या वस्तुतो विद्यमानसत्तारहिता। का विद्या वस्तुतो विद्यमानसत्तासहिता। जाग्रदाद्यवस्थाचतुष्टयं कथं, अन्नमयादयः पञ्च कोशाश्च कथं, कर्माकर्मकृत्कथं, जीवः देहादिजीवनहेतुः कथं, पञ्चवर्गाः पञ्चानां समूहाः कथं, क्षेत्रज्ञः क्षेत्रं शरीरं जानातीति स कथम्....।

उपसंहारः—

शब्दब्रह्मणि निष्णातो न निष्णायात्परे यदि।
श्रमः श्रमफलं तस्य ह्यधेनुमिव रक्षतः॥

परब्रह्मज्ञानहीनस्याधीतशब्दब्रह्मणोऽपि श्रममात्रफलत्वश्रवणात् ये पुनस्तत्परब्रह्म इत् इत्थं पूर्वोक्तप्रकारेण विदुर्विदितवन्तः त इमे वर्तमाना जीवन्मुक्ता एव समासते परब्रह्मणि सम्यगासीना भवन्तीत्यर्थः। अयं भावः—लोके अधीतसमस्तवेदमन्त्रोऽपि पुरुषस्तत्परमतात्पर्यभूतपरब्रह्मात्मैक्यापरोक्षज्ञानानुभवहीनश्चेत् तदा तदध्ययनश्चित्तशुद्धिमात्रप्रयोजनो भवेत्। न तु सद्योमुक्तिप्रयोजन इति ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ बह्वृचोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

B 245 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे सर्वसार-निरालम्ब-रहस्य-वज्रसूची-तेजोबिन्दु-दर्शन-तारसार-महावाक्य - पञ्चब्रह्म-प्राणाग्निहोत्र-गोपालतापनी-कृष्ण-हयग्रीव-दत्तात्रेय-गरुड-कलिसन्तारण--जाबालि--सौभाग्यलक्ष्मी--सरस्वतीरहस्य-बह्वृचोपनिषदो विद्यन्ते ॥

## No. (184) B 247 उपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–68, 1–38, 1–46, 1–120, 1–74, 1–92.

प्रतिपुटं पङ्क्तयः—32
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—अत्यन्तशिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ब्रह्मनादोद्भवो यस्यामुच्यते योगनिष्ठया।
नादबिन्दूपनिषदस्त्वेषा व्याख्या विधीयते ॥

ननु तैत्तरीयोपनिषदि पुच्छभूतस्य ब्रह्मणः प्रतिष्ठात्वमुक्तम्। इहत्वर्धमात्रायाः प्रतिष्ठाभूतायाः शिरस्स्थानीयत्वमुच्यते। कुत एवं

वैषम्यमिति चेन्नायं दोषः; "सर्वस्य गात्रस्य शिरः प्रधान"मिति न्याय-मनुसृत्यात्रोक्तत्वान्मस्तकादिषु प्रणवावयवेषु भूरादिलोकानां विद्यमान-त्वावगमात्। शरीरं तत्त्वमुच्यते इत्यनेन ब्रह्मतत्त्वस्यैव प्रणवस्वरूपत्वाव-गमाच्च कार्यकारणीभूतजगद्ब्रह्मोभयप्रतिपादकत्वेन प्रणवस्य सर्वात्मकत्वं प्रदर्शितमित्यवगन्तव्यम्।

उपसंहारः—

न तस्य कदाप्यपायो भवितुमर्हति। तज्ज्ञानवतो नैसर्गिक-कृतज्ञत्वेन गुर्वपराधगन्धस्याप्यप्रवृत्तेः। अन्यस्यत्वनास्वादितब्रह्मरसत्वेन विषयासक्तमनस्कतयाऽधीतपूर्वशास्त्रविस्मृतिसंभवात्। गुर्वपराध-मूलकस्तज्ज्ञानापायोऽवश्यभाव्येव। लौकिकचोरादिदृष्टान्तस्तवदृष्टान्तः। स्वानुभूतिचौराणामज्ञानादीनां मूलतोनष्टत्वात्। तस्मादपरोक्षज्ञानस्याप्य-पायः स्यादित्यनुपपन्नम्। तर्हि कीदृशगुरुभक्तिमतः परब्रह्मप्राप्तिरित्यत आह—यस्येति। यस्य प्राग्गुरूपसरणाद्देवे सगुणेश्वरे परा भक्तिर्यथास्ति तथा गुरौ भवेद्यदि स सप्रतियोगिकब्रह्मापरोक्षज्ञानी प्रारब्धक्षये परं निष्प्रतियोगिकं ब्रह्म प्रेयात्। ब्रह्मविदाप्नोति परमिति श्रुत्यन्तरात्।

इत्यप्पय्यदीक्षिताचार्यकृतिषु शाट्यायनीयोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

B 245 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे नाद-ध्यान-ब्रह्मविद्या-योगतत्व-त्रिशिखिब्राह्मण-सीता-योगचूडामणि-मण्डलब्राह्मण-दक्षिणामूर्ति-निर्वाणस्कन्द शरभ-महानारा-यण-अद्वय-तारक-रामरहस्य-रामतापनी-वासुदेव-मुद्गल-शाण्डिल्य-पैङ्गल-भिक्षुक-महा-शारीरक-योगशिखा-तुरीयातीत-सन्न्यास-परमहंस–परिव्रा-जक-अक्षमालिका-अव्यक्त–एकाक्षर-अन्नपूर्णा–सूर्य-अक्षिक-कुण्डिका-सा-वित्री–आत्म–पाशुपत–परब्रह्म–अवधूत–त्रिपुरातापनी–देवीत्रिपुरा–कठ-भावना–रुद्रहृदय–योगकुण्डली–भस्मजाबाल–रुद्राक्षजाबाल–गणपति–याज्ञवल्क्य-शाट्यायनीयोपनिषदः समग्रा विद्यन्ते।

## No. (185) 1277/2 उपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—132 |
| प्रमाणम्—$21\frac{3}{4} \times 2\frac{1}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–38 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ओमादौ सह नाववत्विति वरां शान्तिं पठित्वा ततः
श्रीमत्सुन्दरसद्गुरोः पदयुगं स्मृत्वा च नत्वाङ्गकैः।
वाराहोपनिषद्वचांसि मधुराण्यात्मैक्यबोधीनि च
व्याख्यास्ये भगवान्प्रसीदतु शिवो वाराहमूर्तिर्हरिः॥

सारात्सारतरानुभूतिमदतिश्लाघ्या श्रुतिर्दुर्लभा
सर्वासूपनिषत्सु केवलचिदानन्दानुभूतिप्रदा।
जीवन्मुक्तिविदेहमुक्तिविषया मेदाय यैव स्वयं
साध्यासं विशदीकृताश्च सरळाप्युक्तया दुरीहार्थतः॥

इह खलु निष्प्रतियोगिकशुद्धचैतन्यविवर्तचिच्छक्तिविलासपरिणतसच्चिदानन्दघनीभूत दिव्यमङ्गळविग्रहायमानो भगवान् शङ्खचक्रगदाधरः सर्वज्ञत्व सर्वेश्वरत्व सर्वनियन्तृत्व सर्वान्तर्यामित्वाद्यनन्तकल्याणगुणगणाभिरामः परमकारुणिको भक्तवत्सलो महाविष्णुः—

उपसंहारः—

गुह्याद्गुह्यतरं दृष्ट्वा सद्यो मुक्तिप्रदं च यत्।
कृतकृत्यो भवेद्विद्वानिदमध्यात्मदर्पणम्॥
किमन्यशास्त्रकथनैर्वेदान्तैरितरैश्च किम्।
सकृद्वा येन नो दृष्टमिदमध्यात्मदर्पणम्॥
यदेतत्सर्ववेदान्तरहस्यार्थप्रकाशकम्।
अध्यात्मदर्पणं लोके दुर्लभं ह्याश्रयेत्सुधीः॥
सर्वशास्त्रकलाकन्थारोमन्थेन वृथैव किम्।
अन्वेष्टव्यं प्रयत्नेन शास्त्रमेतन्मुमुक्षुणा॥

इति श्रीमत्सुन्दरेश्वरनातपादशिष्याप्पय्यदीक्षिताचार्यविरचितमध्यात्मदर्पणं समाप्तम्

प्रतिपाद्यविषयः—

B 245 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे वराहाध्यात्मोपनिषदोर्भाष्यं सम्पूर्णं विद्यते। अमुद्रितश्च ज्ञायते।

## No. (186) B 244 उपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—26 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$7\frac{3}{4} \times 6$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-56, 1-48 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

ओमित्युच्चार्य मन्त्रं प्रथममथ गुरुं सुन्दरेशं च नत्वा
भद्रं कर्णेभिरित्यप्यधिकनियमतः शान्तिमेकां पठित्वा।
व्याख्यास्ये नारदीयां श्रुतिमिह तु परिव्राजकाख्यां रहस्यां
तेनायं सुप्रसन्नो भवतु विधरणस्सेतुरेषां परात्मा॥

यस्यां ब्रह्मप्रणवविवृतब्रह्मनिष्ठा सुसूक्ष्मा
धर्मः सर्वोऽत्यधिकममलो मोक्षहेतुर्यतीनाम्।
संप्रोच्यन्ते निखिलनिगमान्तैकसारात्मिकां तां
एनां नित्यामहमुपनिषन्मातरं त्वां नमामि॥

कुर्वन्त्वस्मिन्भूषणं दूषणं वा सन्तोऽसंतो मे न मानावमाने।
आत्मैकत्वज्ञानतो नित्यतृप्तो ऽस्स्येवं लोकक्षेमहेतोऽस्तु वृत्तिः॥

यामालोक्य कृतार्थाः स्युर्यतयः स्वात्मनिष्ठया।
अमुं पश्यन्त्विह परिव्राजकाभरणाभिधम्॥

साधकानां च साध्यानां साधनानां विनिर्णयः ।
यत्रामुं पश्यत परिव्राजकाभरणाभिधम् ॥

इह खल्वीशादिमुक्तिकान्ताष्टोत्तरशतोपनिषत्सु द्विचत्वारिंशत्तमः यामस्यां नारदपरिव्राजकोपनिषदि ................ ।

उपसंहार :—

अस्या ऋचोऽर्थोऽन्यत्र वर्णित एवेत्यत इह न प्रपञ्च्यते ॥

श्रीमत्सुन्दरतातपादचरणाम्भोजद्वयासक्तधी-
र्जातश्चाप्पयदीक्षितोत्तमकुले भूमौ महापावने ।
सोऽहं चाप्पयनामकः श्रुतिशिरःसारांशिभूतामिमां
व्याख्यायैव हि मुक्तिकोपनिषदं शान्तः कृतार्थोऽभवम् ॥

सकलनिगमसारं सर्वमोक्षैकसारं
निखिलविबुधसारं नित्यपीयूषसारम् ।
श्रवणमननसारं ध्यानसारं समाधि-
प्रकटितबहुसारं साधु पश्यन्तु सन्तः ॥

इमां गुरुमुखाच्छ्रुत्वा लोकेऽस्मिन्मुक्तिचन्द्रिकाम् ।
को न मुच्येत संसाराद्बहुदुःखाकरादपि ॥
दुर्लभो मानुषो देहस्तत्रापि श्रुतिदर्शनम् ।
तत्राप्यष्टोत्तरशतं तत्रेयं मुक्तिचन्द्रिका ॥

इति श्रीमत्सद्गुरुसुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ अष्टोत्तरशतोपनिषद्भाष्ये मुक्तिचन्द्रिका समाप्ता

प्रतिपाद्यविषयः :—

B 245 कोशवत् ।

वक्तव्यविशेष :—

अस्मिन्कोशे नारदपरिव्राजकमुक्तिकोपनिषदौ विद्येते ।

## No. (187) B 1034, B 1038-1039, उपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता— अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—30 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—1936 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-148, 1-121, 1-168, 1-42. | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

B 247 कोशवत्।

उपसंहारः—

B 247 कोशवत्।

प्रतिपाद्यविषयः—

B 247 कोशवत्।

वक्तव्यविशेषः—

B 247 कोशवत्।

## No. (188) 3249 उपनिषद्भाष्यम्.

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—80 |
| प्रमाणम्—19×1¾ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-64, 42-53, 62-65, 1-16, 1-41, 65-151. | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ईशावास्यमित्यादयो मन्त्राः कर्मस्वविनियुक्ताः। तेषामकर्मशेषस्यात्मनो याथात्म्यप्रतिपादनपरत्वात् याथात्म्यंचात्मनः शुद्धत्वापापविद्धत्वैकत्वाशरीरत्वसर्वगतत्वादिवक्ष्यमाणम्। तच्च कर्मणा विरुध्यते

इति युक्तएवैषां कर्मस्वविनियोगः। न चैवंलक्षणमात्मनो याथात्म्यं उत्पाद्यमाप्यं विकार्यं संस्कार्यं वा—इत्यादिः।

उपसंहार:—

तस्मात्पुरुषसामर्थ्यज्ञानवैराग्यकामाद्यपेक्षया व्युत्थानविकल्पक्रमपारिव्राज्यप्रतिपत्तिप्रकाशा विरुध्यन्ते। अनधिकृतानां च पृथग्विधानात् पारिव्राज्यस्य स्नातकोऽस्नातको वोत्सन्नाग्निरनग्निको वेत्यादि तस्मात्सिद्धान्याश्रमान्तराण्यधिकृतानामेव। अथानन्तरं याज्ञवल्कीयस्य काण्डस्य वंश आरभ्यते। यथा मधुकाण्डस्य वंशः। व्याख्यानं तु पूर्ववत्। ब्रह्मा स्वयंभूः। ब्रह्मणे नमः॥

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्य परमहंसपरिव्राजकाचार्य शङ्करभगवतः कृतौ बृहदारण्यटीकायां षष्ठोऽध्याय:

प्रतिपाद्यविषय:—

ईशाद्युपनिषद्वाक्यविवरणविचारः।

वक्तव्यविशेष:—

मुद्रितः। अस्मिन्कोशे ईश, केन, कठ, प्रश्न, मुण्डक, माण्डूक्य, तैत्तरीय, ऐतरेय, छान्दोग्य (षष्ठ), बृहदारण्यका (षष्ठ) ख्या दशोपानिषदो विद्यन्ते॥

## No. (189) 3476 उपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—62 |
| प्रमाणम्—15¾×1½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1—256 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

3249 कोशवत्।

उपसंहारः—

3249 कोशवत्।

प्रतिपाद्यविषयः—

3249 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे तैत्तरीयवर्जं ईशादिदशोपनिषदो विद्यन्ते । बृहदारण्यच्छान्दोग्ययोः षष्ठाध्यायमात्रम् ॥

## No. (190) 3868 उपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—72 |
| प्रमाणम्—$17\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–35, 1–69, 105–119, 63–84 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

3249 कोशवत् ।

उपसंहारः—

स एषः अधिकृतः श्रोता मन्ता विज्ञाता तेजोऽबन्नमयं कार्यकरणसङ्घातं प्रविष्टापरैव देवता नामरूपव्याकरणाय आदर्श इव पुरुषः सूर्यादिरिव जलादौ प्रतिबिम्बरूपेण । स च स्वमात्मानं कार्यकरणेभ्यः प्रविभक्तं सद्रूपं सर्वात्मानं प्राक्पितुः श्रवणान्न विजज्ञौ । अथेदानीं पित्रा बोधितस्तत्त्वमसीति हेतुभिर्दृष्टान्तैश्च तत्पितुरस्य ह किलोक्तं सदेवाहमस्मीति विजज्ञौ विज्ञातवान् । द्विर्वचनमध्यायसमाप्त्यर्थम् ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य श्रीशंकरभगवत्पादकृतौ षष्ठप्रपाठकं समाप्तम् ॥

प्रतिपाद्यविषयः—

3249 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे तैत्तरीयबृहदारण्यकवर्जं दशोपनिषदो विद्यन्ते । छान्दोग्ये षष्ठप्रपाठकमात्रम् । तत्रापि अन्ते किंचिन्न्यूनम् ॥

## No. (191) 3446 उपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-206
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—48
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3249 कोशवत् ।

उपसंहारः—

तथायमपि विद्वान् एतेनैव प्राज्ञेनास्माल्लोकादुत्क्रम्येत्यादि व्याख्यातम् । अस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वा अमृतः समभवदमृतः समभवत् इत्योमिति ॥

इति श्रीगोविन्दभगवत्पादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छंकरभगवतः कृतौ बह्वृचब्राह्मणोपनिषद्दीपिका समाप्ता

प्रतिपाद्यविषयः—

3249 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे, ईश, केन, कठ, प्रश्न, मुण्डक, माण्डूक्य, तैत्तरीय, ऐतरेयोपनिषदो विद्यन्ते ।

## No. (192) 3709 उपनिषद्भाष्यटिप्पणी

ग्रन्थकर्ता—शिवानन्दयतिः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$18 \times 1\frac{3}{8}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-29
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

येनात्मना परेशेन व्याप्तं विश्वमशेषतः ।
सोऽहं देहद्वयीसाक्षी वर्जितो देहतद्गुणैः ॥

ईशावास्यमित्यादिमन्त्रान्व्याचिख्यासुर्भगवान् भाष्यकारः तेषां कर्मशेषत्वशङ्कां तावद्व्युदसति। तथाहि—कर्मजडाः केचन मन्यन्ते स्म। ईशावास्यादयो मन्त्राः कर्मशेषाः मन्त्रत्वात्, इषे त्वेत्यादिमन्त्रवत्। अतः प्रयोजनाभावादव्याख्येया इति, तान्प्रत्याह—ईशावास्यमित्यादय इति। इषे त्वेति शाखामाच्छिनत्तीत्यादिवद्विनियोजकप्रमाणादर्शनात् प्रकरणान्तरत्वाच्चेत्यर्थः ॥

उपसंहारः— -

ब्रह्मेति वेद। आमूलत्वात्तदाश्रया, तपादीनि वेदान्तान्यङ्गानि यस्याः सत्यकामः स्वयं सिद्धः सर्वेशो यः स्वशक्तित एवान्तःप्रविष्टोऽह-मुपास्यः सर्वदेहिनाम् । इति केनेषितभाष्यस्य वाक्यार्थे प्रधानस्य ........

भगवत्पादभाष्यस्य भावगम्भीरवेदिना ।
शिवानन्दयतीशेन टिप्पणं कृतमादरात् ॥

प्रतिपाद्यविषयः—

श्रीमच्छंकराचार्यकृतस्य ईशकेनोपनिषद्भाष्यस्य टिप्पणीरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः —

अमुद्रितः ॥

## No. (193) A 553 उपनिषद्विवरणम्

ग्रन्थकर्ता—उपनिषद्ब्रह्मेन्द्रः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13×8 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—24

प्रतिपुटं पङ्क्तयः—50
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा— असमग्रः

उपक्रमः—

ईशाद्यष्टोत्तरशतवेदान्तपटलाशयम् ।
त्रैपदानन्दसाम्राज्यं कलये स्वावशेषतः ॥
नत्वा त्रिपाद्गुरुं सद्यः कैवल्यानन्दमिच्छताम् ।
ईशाद्यष्टोत्तरशतवेदान्तार्थो निगद्यते ॥
लीलाविभूतिनिश्वासनिगमान्तार्थसंचयम् ।
लीलया लीलाविभूतिरेव जानाति तत्त्वतः ॥
कृत्वा मां लेखकं लीलाभूते मय्यनुकम्पया ।
ईशाद्यष्टोतरशतवेदान्तार्थं स्फुटीकुरु ॥

इह खलु निर्हेतुकजातकरुणया स्वाविद्यापदगाण्डाक्यालंकारप्राणिपटलस्वपदप्रापकहेतुपरमदयाकळेवरेयं भगवती लीलाविभूतिः । मोहभूतिपटलनवांशान् बौद्धमीमांसकद्वैत्यादिमतनैरपेक्ष्येण तत्तन्मतगतहेयांशापह्नव सिद्धनिष्प्रतियोगिक ब्रह्ममात्रावस्थानलक्षणविकळेवरकैवल्यसत्रभाजनं करवाणीति प्रतिज्ञापूर्वकम्—इत्यादिः ॥

उपसंहारः—

जानातीति । तेनैव ज्ञात्रा स्वाविशेषतयायमात्मा लभ्यः स्वाविशेषधिया जानता स्वात्मा लभ्यत इत्यत आह—तस्येति । तस्य ब्रह्मविद्वरिष्ठस्य विषयः परमात्मा स्वां तनुं निष्प्रतियोगिकपरमात्मा स्वमात्रमिति स्वकीययाथात्म्यं वृणुते प्रकाशयतीत्यर्थः ॥

प्रतिपाद्यविषयः—

अनुभवाद्वैतमतानुरोधेन उपनिषद्विवरणविचारः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ईशकेनोपनिषदौ सम्पूर्णौ, कठोपनिषच्चासमग्रा वर्तते । अयं ग्रन्थः अमुद्रितः ॥

## No. (194) B 327, B 328 उपनिषद्व्याख्या (द्राविडभाषामयी)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—30 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—10 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थ, तमिळुलिपी | स्थितिः—समीचीना |
| पत्राणि—1-202, 35-360 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

ईशोपनिषद्भाष्यम् ॥

चिन्मात्रशोभिहस्ताय वटमूलनिवासिने ।
सर्वदेशिकनाथाय दक्षिणामूर्तये नमः ॥

उपसंहारः—

चतुर्थमवल्यब्राह्मणम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ बृहदारण्योपनिषद्भाष्ये षष्ठोऽध्यायः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे उपनिषदां द्राविडभाषामयः पदार्थो वर्ण्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे, ईश, केन, कठ, प्रश्न, मुण्डक, माण्डूक्य, तैत्तरीय (ब्रह्मवल्लीमात्रं), ऐतरेय, छान्दोग्य (षष्ठाध्यायमात्रं), बृहदारण्यो (षष्ठाध्यायमात्रं) पनिषदो विद्यन्ते। अमुद्रितश्च ज्ञायते ॥

## No. (195) A 159 उपनिषन्मङ्गळाभरणम्

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—28 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि 25 |
| प्रमाणम्—13×8 अङ्गुलानि | कालः (कोशस्य)—प्राचीनः |
| लिपिः—देवनागरी | स्थितिः—समीचीना |
| पत्राणि—152 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

श्री गणेशाय नमः ॥ नादोपनिषद्व्याख्यानोपनिषन्मङ्गळाभरण-प्रारम्भः । मुख्यास्त्वधिकृतो ब्रह्मा वर्पयोत्थं तत्तथात्तिः स धांहतुमाध्यता उशन् ह वा इत्यादि उशन् वशकान्तौ अस्माच्छतरिग्रहिज्यादिना संप्रसारणं अतितेजस्वी वाजश्रवसो नाम ऋषिः यज्ञे स सर्ववेदसंसर्वश्च दक्षिणां ददौ । तस्यास्य यज्वनः दक्षिणां ददाति नचिकेता इति नाम प्रसिद्धः पुत्र आस बभूव तं ह कुमारं संतं पित्रा दक्षिणासु नीयमानासु श्रद्धा आविवेश प्रविष्टवती कीदृशी सा उच्यते पीतोदकाः प्राशनादि प्रयोजनोदकरहिताः गवादीनां जग्धतृणाः भक्षिततृणाः ॥

उपसंहारः—

व्यानः सर्वेषु च अङ्गेषु आवृतः तिष्ठते सदा
अथ वर्णास्तु पंचानां प्राणादीनां अनुक्रमात् ।
रक्तवर्णमणिप्रख्यः प्राणवायुःप्रकीर्तितः
अपानः प्राण उध्येतु इन्द्रगोपस्य सन्निभः ॥

समानोपानमध्ये च गोक्षीरस्फटिकप्रभः
अपाण्डर उदानश्च व्यानोह्यर्चिसमप्रभः ।
यस्यैतन्मंडलं हित्वा मारुतो याति मूर्धतः
यत्र यत्र मृतो वापि न स भूयोऽभिजायते ॥
न स भूयोऽभिजायत इति ॥

इति नादोपनिषत्समाप्ता

प्रतिपाद्यविषयः—

कठ, प्रश्न, सुबाल, प्रतर्दन, बार्हद्रथ, तैत्तिरीय, परमहंस, इत्यादि उपनिषद्व्याख्यानैस्सहितोऽयं ग्रन्थः नादोपनिषदा समापिता । अस्मिन् मङ्गळाभरणे आत्यन्तिकदुःखनिवारणसाधनं प्रतिपादितम् ॥

वक्तव्यविशेषः—

कोशेऽस्मिन् उपनिषदः समग्रा दृश्यन्ते, मुद्रितश्च ॥

## No. (196) C 2075 उपाधिमण्डनम्

ग्रन्थकर्ता —?
पत्रविशेषः —कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{4}\times5\frac{1}{2}$ अङ्गुलानि
लिपिः —आन्ध्रलिपिः
पत्राणि —1-14
प्रतिपुटं पङ्क्तयः — 24
प्रतिपङ्क्त्यक्षराणि — 40
कालः (कोशस्य) — ?
स्थितिः —समीचीना
समग्रोऽसमग्रो वा —असमग्रः

उपक्रमः—

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥

वेदान्तशास्त्रमखिलं यत्तत्त्वप्रतिपत्तये ।
विवृतं देशिकेन्द्रेण तद्ब्रह्म प्रणतोऽस्म्यहम् ॥

ननु वेदान्तशास्त्रमनारम्भणीयम्, वक्ष्यमाणन्यायेन आश्रयानुपपत्त्याऽज्ञानासम्भवेन अज्ञानस्य विषयस्य अज्ञानिनोऽधिकारिणोऽज्ञाननिवृत्तेः प्रयोजनस्यासम्भवादिति चेत, मैवम्, शुद्धचित्त एवाज्ञानाश्रयत्वसम्भवात्। तदुक्तं – आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥ इति ॥

उपसंहारः—

तस्य घटादिपरत्वे च तन्निष्ठप्रागभावप्रतियोगित्वस्य प्रामाणिकत्वेन तन्निषेधासंभवेन असंभवापत्तेः। गगनादिपरिग्रहे च गगनधर्मिकप्रागभावप्रतियोगित्वस्याळीकत्वेन तदत्यन्ताभावस्य केवलान्वयितया घटादावतिप्रसङ्गात्। ननु गगनादिधर्मिकप्रागभावप्रतियोगित्वस्य अळीकतया तस्य घटादावारोपो सत्यप्रधानशून्यत्वेन न संभवतीति तदभावस्तत्र दुर्घट इति चेत् गगनादावपि सुलभः स कथं स्यात्। तथा चासंभवः॥

प्रतिपाद्यविषयः---

अस्मिन्ग्रन्थे—जीवेश्वरभेदकोपाधिभूताज्ञानस्य अधिकारिणश्च अज्ञानिनः, तन्निवृत्तिरूपफलस्य चासंभवात् शास्त्रं नारम्भणीयमिति द्वैत-

मतीयस्य "उपाधिखण्डना"ख्यग्रन्थस्य खण्डनपरे शास्त्रारम्भहेतुभूत-विषयादिसमर्थनं क्रियते ॥

वक्तव्यविशेषः—

अमुद्रितः ॥

## No. (197) 505 ऋजुप्रकाशिका (भामतीव्याख्या)

ग्रन्थकर्ता—अखण्डानन्दसरस्वती
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\frac{1}{2}\times1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–165
प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—72
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः (चतुस्सूत्री)

उपक्रमः—

विश्वं यदज्ञानविलासजातं विज्ञानतो यद्विषयान्निवृत्तम् ।
आनन्दरूपं हरिमद्वयं तं वेदान्तवेद्यं विधितो भजामः ॥

वयं विमूढा इति ये स्थितास्ते स्वयं विना यत्सविधे बुधाः स्युः ।
न यं श्रितो बन्धसितो जनस्तं स्वयंप्रकाशं गुरुमानतोऽस्मि ॥

इह खलु कश्चिद्विपश्चिदग्रगण्यो वाचस्पतिः श्रीमच्छंकरभगवत्पाद-कृतं शारीरकभाष्यं व्याचिकीर्षुः स्वचिकीर्षितस्याविघ्नपरिसमाप्त्यादि-सिद्धये विषयप्रयोजनप्रदर्शनपूर्वकं शास्त्रप्रतिपाद्यं परंब्रह्म नमस्करोति—अनिर्वाच्येत्यादिना। केवलस्य ब्रह्मणोऽसङ्गस्य वियदादिप्रपञ्चनियन्तृत्वा-योगादनिर्वाच्याविद्याद्वितयसचिवस्येत्युक्तम् । अनिर्वाच्यं सत्त्वासत्त्वाभ्यां निर्वक्तुमशक्यं अत एव सद्विलक्षणं मिथ्याभूतमिति यावत्। तच्च तदविद्या-द्वितयं च तथोक्तं तद्वितयं सचिवं सहकारी यस्य तस्य ।

उपसंहारः—

तन्मय्या वृत्त्या तदुपादानं मृत्युमविद्यां हित्वा विद्याभूतस्वरूपप्रति-बिम्बवत्त्या वृत्त्यात्मिकीयाविद्यया; अमृतत्वमश्नुत इति श्रुतेरर्थः। उपसंहरति—तस्मादिति। ब्रह्मणि सर्वेषां वेदान्तानां समन्वयमुक्तं निगम-

यति—एवं कार्यान्वयं विनेत्यादिना प्रसाधितेत्यन्तेन। स्वयमित्येतत्पुरुषार्थ इत्यनेन संबध्यते। तथा च स्वयं पुरुषार्थेत्यर्थः॥

इति श्रीराणावंशपयोधिचन्द्रेण वृद्धजगद्देवानुजश्रीमदङ्कुशरायतनूजेन माडनासाय्यनुजेन श्रीमदिम्मडिजगदेकरायभूपेन संप्रार्थितस्य श्रीमत्स्वयंप्रकाशसरस्वतीपूज्यपादशिष्यस्य अखण्डानन्दसरस्वत्याख्यस्य यतिकृतौ वाचस्पतिव्याख्यायामृजुप्रकाशिकाख्यायां चतुस्सूत्री संपूर्णा

प्रतिपाद्यविषयः—

वाचस्पतिमिश्रविरचितभामतीव्याख्यारूपोऽयं ग्रन्थः॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रः वर्तते। मुद्रितश्च दृश्यते॥

No. (198) A 341 ऋजुप्रकाशिका (भामतीव्याख्या)

ग्रन्थकर्ता—अखण्डानन्दसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$13 \times 7\frac{3}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-213

प्रतिपुटं पङ्क्तयः—40
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—?
स्थितिः – समीचीना
समग्रोऽसमग्रो वा—समग्रः (चतुस्सूत्री)

उपक्रमः—

505 कोशवत्।

उपसंहारः—

505 कोशवत्।

प्रतिपाद्यविषयः—

505 कोशवत्।

वक्तव्यविशेषः—

505 कोशवत्।

## No. (199) B 422 एकाक्षरोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–4 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मूल—ओं सह नाववत्विति शान्तिः।
एकाक्षरं त्वक्षरेऽत्रास्ति सोमे सुषुम्नायां चेह दृढी स एकः।
त्वं विश्वभूर्भूतपतिः पुराणः पर्जन्य एको भुवनस्य गोप्ता॥
विश्वे निमग्नः पदवीं कवीनां त्वं जातवेदो भुवनस्य नाथः।
अजातमग्रे स हिरण्यरेताः यज्ञस्त्वमेवैकविभुः पुराणः॥
प्राणः प्रसूतिर्भुवनस्य योनिर्व्याप्तं त्वया एकपदेन विश्वम्।
त्वं विश्वभूर्योनिपरोऽसि गर्भे कुमार एको विशिखः सुधन्वा॥

उपसंहारः—

यद्यपि कर्मेन्द्रियज्ञानेन्द्रियविषयत्वेन नामरूपयोस्तारतम्यमस्त्येव। तथापि नाम्न एव चक्षुः प्रवर्तकत्वात् प्रवर्त्यापेक्षया प्रवर्तकस्याधिक्याच्च नाम्न आधिक्यसिद्धिः। न च प्रणवस्य वर्णत्वेऽप्यचेतनत्वं वाच्यम्; चेतनमप्यपरोक्षयितुं शक्तिमत्वात्। नापि केवलं जप्यत्वं तस्यास्ति, अकारादिमात्राणां विभागे सति निष्कळपरब्रह्मभिन्नत्वेन ध्येयत्वसिद्धेः। तस्मादेकाक्षरप्रणवोपासनमेव वरमित्यवगन्तव्यम्।

इत्येकाक्षरोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे एकाक्षरप्रणवोपासना निरूप्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (200) B 564 एकादशोत्तरशतवाक्यानि

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—कन्नडलिपिः
पत्राणि—1–21
प्रतिपुटं पङ्क्तयः—22
प्रतिपङ्क्त्यक्षराणि—17
कालः (कोशस्य)—1903
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

शरीरत्रयव्यतिरिक्तावस्थात्रयसाक्षी नित्यनिर्विकारासङ्गस्वप्रकाशापरोक्षनित्यमुक्तसर्वान्तरसच्चिदानन्द सर्वगतपरिपूर्णापरिच्छिन्नाद्वितीयशुद्धप्रत्यगात्मानुभवः सम्यग्भूयात् ।

स्वप्ने स्थूलशरीराभावेऽपि सुषुप्तौ सूक्ष्मशरीराभावेऽपि समाधौ कारणशरीराभावेऽप्यवस्थात्रये यच्चिद्रूपात्मा मणिसूत्रेऽपि वानुस्यूततया निरन्तरं भासते। यच्चिद्रूपात्मैवाहमस्मि शरीरत्रयं नाहमस्मीत्यन्वयव्यतिरेकाभ्यां शरीरत्रयं च व्यावृत्तिं च तत्साक्षिचैतन्यस्यानुवृत्तिं च पश्यतो मम शरीरत्रयव्यतिरिक्तात्मानुभवः सम्यग्भूयात् ।

उपसंहारः—

"यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च" इत्यात्मस्वरूपं विजानामि तस्य गुरोः पादारविन्दयोरचञ्चला भक्तिर्निरन्तरं सम्यगाविर्भूयात् ।

निरुपमनिगमान्तैर्नेति नेतीतिवाक्यैः
निरवधिकभवाब्धौ नित्यमानन्दयामः ।
अहह किमिति वक्ष्ये भेददुर्बुद्धिमेनां
निमिषमपि पिबन्ती निष्कले किं नु याताम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पाद-
विरचितान्येकादशोत्तरशतवाक्यानि सम्पूर्णानि

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे, अवस्थात्रयव्यतिरिक्तसाक्ष्यनुभवः मम सम्यग्भूयात्,

शरीरत्रयव्यतिरिक्तसाक्ष्यनुभवः सम्यग्भूयादित्येवंरूपाणि आत्मानुभव-प्रार्थनारूपाणि वाक्यानि सङ्गृह्य प्रदर्श्यन्ते ।

वक्तव्यविशेषः—

अमुद्रितः ।

## No. (201) 4614 ऐतरेयारण्यकभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः —16 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—74 |
| प्रमाणम्—$18\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–62 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

ऐतरेयोपनिषदं व्याख्यास्ये ब्रह्मबोधिनीम् ।
शंकराध्वानमासाद्य पदान्यत्र विलोकयन् ॥

कर्मणामन्तःकरणशुद्धिहेतुत्वेन प्रथमभावित्वात्तानि प्रथमत उपदिश्य इदानीं शुद्धान्तःकरणस्य निःशेषानर्थनिबर्हणब्रह्मविद्योपदेशार्थं यतते । एषः "जीवब्रह्मतादात्म्यलक्षणोऽन्योऽधःप्रसिद्धो विदुषां पन्थाः मुक्ति-पुर्या राजमार्गः । एतत् जीवब्रह्मतादात्म्यज्ञानम्—

उपसंहारः—

वीणा वल्लकी। अपिदधति पूर्वं गायका अपिधानं कुर्वन्ति। वीणाज्ञानस्य फलमाह—नः उपासकः, यः यः कश्चन ह प्रसिद्धः एतामुक्तां दैवीं वीणां देवसंबन्धिनीं वल्लकीं वेद जानात्युपास्त इत्यर्थः। श्रुतवदनो भवति। सर्वशास्त्रत्वेन सर्वैः श्रवणीयवचनो भवति भूमिप्रा भूमिपूरणी अस्य ।

प्रतिपाद्यविषयः—

ऐतरेयारण्यकव्याख्यारूपोऽयं ग्रन्थः ।

**वक्तव्यविशेषः—**

अस्मिन्कोशे द्वितीयारण्यकादितः, 3-2-5-5 पर्यन्तो भागो विद्यते। (36-46 पत्रलोपः)

## No. (202) B 423 ऐतरेयोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—112-133 | समग्रोऽसमग्रो वा—समग्रः |

**उपक्रमः—**

मूः—आत्मा वा इदमेकमेवाग्र आसीन्नान्यत्किंचन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमान् लोकानसृजत अम्भोमरीचिर्मरमापोऽम्भः परेण दिवं द्यौः प्रतिष्ठान्तरिक्षं मरीचयः पृथिवी मरो अधस्तात्ता आपः। स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति॥

**उपसंहारः—**

भाः—स सम्यग्ज्ञान्यखण्डौकारवृत्त्युपेतः सन् एतेन प्राज्ञेनात्मनास्माल्लोकादुत्क्रम्येत्यादिव्याख्यातम्। अस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वा अमृतः समभवदमृतः समभवदिति द्विर्वचनमुपनिषत्परिसमाप्तिद्योतनार्थम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतावैतरेयोपनिषद्भाष्यं समाप्तम्

**प्रतिपाद्यविषयः—**

ऐतरेयोपनिषद्भाष्यविवरणरूपोऽयं ग्रन्थः॥

**वक्तव्यविशेषः—**

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (203) C 1500 ऐतरेयोपनिषद्भाष्यम् ( सटीकम् )

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः (व्याख्याता आनन्दज्ञानः) | प्रतिपुटं पङ्क्तयः—23 |
| पत्रविशेषः —कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—44 |
| प्रमाणम्—$13\frac{3}{4} \times 7\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-52 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

आत्मा वा इदमित्यादिना केवलआत्मविद्यारम्भस्यावसरं वक्तुं वृत्तं कीर्तयति--परिसमाप्तमिति। तत्परिसमाप्तिः कथं गम्यत इत्याशङ्क्य तत्फलोपसंहारादित्याह—सैषेति। परा गतिः परं गन्तव्यं फलमित्यर्थः। उपसंहारमेव वाक्योदाहरणेन दर्शयति—एतदिति। तत्र सह सर्वेण भोज्येन संयुक्त अध्यात्माधिदैवलक्षणः प्राणः सत्यैकशब्दवाच्यो भवतीति प्राणस्वरूपमनेन वाक्येनोपसंहृतमित्यर्थः। अनेन प्राण एक एवेत्युक्तमित्याह—एष इति ॥

उपसंहारः—

इदानीं फलकालेऽपि प्रार्थ्यते। शिष्यस्याविद्यातत्कार्यनिवृत्तिः फलं, आचार्यस्य तादृशशिष्यदर्शनेन विद्यासंप्रदायप्रवृत्तिप्रयुक्तः परितोषः फलम्। अनेन मन्त्रपाठेन विद्योत्पत्तेः पुरा विद्याप्रतिबन्धका विघ्नाः परिह्रियन्ते। विद्योत्पत्तेरूर्ध्वं असंभावनाविपरीतभावनोत्पादकविघ्नाः परिह्रियन्ते। अवतु वक्तारमित्यभ्यासः अध्यायपरिसमाप्त्यर्थः। द्वितीयारण्यपरिसमाप्त्यर्थश्च ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यकैवल्येन्द्रपूज्यपादशिष्यश्रीमज्ज्ञानेन्द्रपूज्यपादशिष्यश्रीमदभिनवनारायणेन्द्रसरस्वतीविरचिता ऐतरेयभाष्यटीका समाप्तम्

प्रतिपाद्यविषयः—

शंकराचार्यकृतैतरेयोपनिषद्भाष्यस्य व्याख्यारूपोऽयं ग्रन्थः।

वक्तव्यविशेष:—

मुद्रितः। अस्मिन्कोशान्ते यद्यपि यावदारण्यकव्याख्यासमाप्तिः नारायणेन्द्रसरस्वती कर्तेति लिखितम्। वस्तुतस्तु, आत्मषट्कव्याख्या आनन्दज्ञानकृता, सप्तमस्य व्याख्या विद्यारण्यकृतेति भाति।

## No. (204) C 1509 ऐतरेयोपनिषद्भाष्यं (सटीकम्)

ग्रन्थकर्ता—शंकराचार्यः (व्याख्याता आनन्दज्ञानः)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{1}{2} \times 4\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–39

प्रतिपुटं पङ्क्तयः—30
प्रतिपङ्क्त्यक्षराणि—42
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 1500 कोशवत्।

उपसंहारः—

C 1500 कोशवत्।

प्रतिपाद्यविषयः—

C 1500 कोशवत्।

वक्तव्यविशेषः—

C 1500 कोशवत्।

## No. (205) C 618 ऐतरेयोपनिषद्भाष्यव्याख्या

ग्रन्थकर्ता—विद्यारण्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8 \times 4\frac{1}{4}$ अङ्गुलानि
लिपिः—देवनागरी, आन्ध्रलिपिश्च
पत्राणि—1–26

प्रतिपुटं पङ्क्तयः—26
प्रतिपङ्क्त्यक्षराणि—32
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रम:—

इद (त्थ) मध्यायत्रयेण प्राणविद्या प्रपञ्चिता। तया ब्रह्मविद्यायां पुरुषस्य मुख्याधिकारसम्पन्नस्य कर्मकाण्डोक्तैः कर्मभिर्विविदिषाया उत्पन्नत्वादुपासनया चित्तैकाग्र्यस्य सम्पन्नत्वाच्च। तत्सम्पत्तौ शमदमादयो गुणा अर्थसिद्धाः। ते चात्मविद्यायामन्तरङ्गभूताः। शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्यतीति श्रुतेः। अतो मुख्याधिकारिणमुपलक्ष्य श्रुतिरध्यायत्रयेण ब्रह्मतत्त्वं विस्पष्टमुपदेष्टुमादौ तत्त्वं सङ्ग्रहेण सूचयति—आत्मेति ॥

उपसंहार:—

C 1500 कोशवत्।

प्रतिपाद्यविषयः—

C 1500 कोशवत्।

वक्तव्यविशेष:—

मुद्रितः।

## No. (206) 1632 ऐतरेयोपनिषद्भाष्यव्याख्या

ग्रन्थकर्ता—विद्यारण्यः
पत्रविशेषः—ताळपत्रात्मक:
प्रमाणम्—13 × 1½ अङ्गुलानि
लिपि:—नागरीलिपिः
पत्राणि—87-108

प्रतिपुटं पङ्क्तय:—14
प्रतिपङ्क्त्यक्षराणि—60
काल: (कोशस्य)—?
स्थिति:—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 618 कोशवत्।

उपसंहारः—

C 1500 कोशवत्।

प्रतिपाद्यविषय:—

C 1500 कोशवत्।

वक्तव्यविशेष:—

मुद्रितः।

## No. (207) 3203 कठोपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः— ताळपत्रात्मकः
प्रमाणम्—17×1¼ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—18–48
प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

ह वै इति वृत्तानुस्मरणार्थौ निपातौ। वाजमन्नं तद्दानादिनिमित्तं यशः श्रवो यस्य सः वाजश्रवाः रूढितो वा, तस्यापत्यं वाजश्रवसः किल विश्वजिता सर्वमेधेनेजे तत्फलं कामयमानः। स च तस्मिन्क्रतौ सर्वः वेदसं सर्वस्वं ददौ दत्तवान्। तस्य यजमानस्य ह नचिकेता नाम पुत्र-किल आस बभूव।

उपसंहारः—

एवं परमार्थात्मदर्शिनो यदा यस्मिन्काले सर्वे कामाः कामयितव्य-स्यान्यस्याभावात् प्रमुच्यन्ते विशीर्यन्ते। अस्य विदुषः प्राक्प्रबोधात् हृदि बुद्धौ श्रिता आश्रिताः। बुद्धिर्हि कामानामाश्रयः नात्मा। कामः संकल्प इत्यादिश्रुत्यन्तराच्च। अथ तदा मर्त्यः प्राक्प्रबोधादासीत्सः प्रबोधोत्तर-कालमविद्याकामकर्मलक्षणस्य मृत्योर्विनाशादमृतो भवति। गमन-प्रयोजनकस्य मृत्योर्विनाशाद्गमनानुपपत्तेः। अत्र इहैव प्रदीपनिर्वाणवत् सर्वबन्धनोपशमाद्ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः॥

प्रतिपाद्यविषयः—

C 592 कोशवत्।

वक्तव्यविशेषः—

C 592 कोशवत्। आदावन्ते च किञ्चिदंशो लुप्तः॥

## No. (208) C 592 कठोपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{1}{8}\times3\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-48

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—38
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

**उपक्रमः—**

ओं नमो भगवते वैवस्वताय मृत्यवे ब्रह्मविद्याचार्याय नचिकेतसे च। अथ कठोपनिषद्वल्लीनां सुखार्थप्रतिबोधनार्थमल्पग्रन्था वृत्तिरारभ्यते। उपनिपूर्वस्य सदेर्धातोर्विशरणगत्यवसादनार्थस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति। उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यकठवल्ली-वेद्यवस्तुविषया विद्योच्यते। केन पुनरर्थयोगेन उपनिषच्छब्देन विद्योच्यत इति—अत्रोच्यते।

**उपसंहारः—**

किं च तेजस्विनौ तेजस्विनोरावयोर्यदधीतं तत्स्वधीतमस्तु। अथ वा तेजस्वि नावावाभ्यां यदधीतं तदतीव तेजस्वि वीर्यवदित्यर्थः। मा विद्विषावहै शिष्याचार्यावन्योन्यं प्रमादकृतान्यायाध्ययनाध्यापनदोष-निमित्तं द्वेषं मा करवावहै इत्यर्थः। शान्तिः शान्तिः शान्तिरिति त्रिर्वचनं सर्वदोषशमनार्थमित्योमिति॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीपरमहंसपरिव्राजकाचार्यश्रीशंकरभगवत्कृतौ काठकोपनिषद्विवरणे षष्ठी वल्ली समाप्ता

**प्रतिपाद्यविषयः—**

कठोपनिषद्विवरणरूपोऽयं ग्रन्थः।

**वक्तव्यविशेषः—**

मुद्रितः।

## No. (209) B 424 कठोपनिषद्भाष्यम् (याजुषम्)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–14 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—सह नाववत्विति शान्तिः। देवा ह वै भगवन्तमब्रुवन्नधीहि भगवन्ब्रह्मविद्याम्। स प्रजापतिरब्रवीत् सशिखान्केशान्निष्कृष्य विसृज्य यज्ञोपवीतं निष्कृष्य पुत्रं दृष्ट्वा त्वं ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वं स्वाहा त्वं स्वधा त्वं धाता त्वं विधाता त्वं त्वष्टा त्वं प्रतिष्ठासीति वदेत्।

उपसंहारः—

भा—यः स्वात्मानं प्रत्यगात्मानं सर्वोपाधिविनिर्मुक्तशुद्धब्रह्मचैतन्यानन्यं भावयेदभिध्यायेत्। स परमार्थसम्यज्ज्ञानी निष्प्रतियोगिकब्रह्मत्वाय कल्पते। स्वयं मृत्वा स्वयं भूत्वेत्यात्मनः परस्यावशिष्यमाणस्य जननमरणवचनं जीवजननमरणयोरपि स्वस्य साक्षित्वेन सर्वदा अवस्थानाभिप्रायं मन्तव्यम्॥

इति कठोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्कोशे सन्न्यासिधर्माः, सन्न्यासिनः परमात्मज्ञानेन ब्रह्मीभावः, प्रपञ्चसृष्टिप्रकारश्च प्रतिपाद्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (210) C 1520 कठोपनिषद्भाष्यव्याख्या

ग्रन्थकर्ता—बालगोपालेन्द्रः
पत्रविशेषः—कागद्पत्रात्मकः
प्रमाणम्—$10\frac{3}{4} \times 4\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-33
प्रतिपुटं पङ्क्तयः—28
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ब्रह्माद्वयं परानन्दं धर्मादीनामगोचरम् ।
कार्यकारणनिर्मुक्तं शिवं परमुपास्महे ॥
नत्वा देवमुमाजानिं स्मृत्वा गुरुपदाम्बुजम् ।
ध्यात्वा गौरीमहं कुर्वे कठभाष्यविवेचनम् ॥
क भाष्यमतिगम्भीरं क चाहं मन्दबुद्धिगः ।
तथापि गुरुवर्याणां पादसंस्मृतितो यते ॥

भगवान्भाष्यकारो यमनचिकेतसंवादरूपेण प्रवृत्ताः कठवल्लीर्व्याचिख्यासुश्चिकीर्षितस्य भाष्यस्य निर्विघ्नप्रचयगमनादिप्रयोजनाय ब्रह्मविद्याचार्यनतिलक्षणं मङ्गळमाचरन्नादौ यमं नमस्करोति नम इति ।

उपसंहारः—

अथवेत्यादिना । सर्वदोषेति । आध्यात्मिकाधिभौतिकाधिदैविकदोषप्रशमनार्थमित्यर्थः । ओंशब्दो मङ्गळप्रयोजनः कृत्स्नोपनिषदर्थस्मारक इतिशब्दो भाष्यसमाप्तिद्योतनप्रयोजन इति बोध्यम् ।

कठवल्लीभाष्यटीका कृता गोपालयोगिना ।
अनया प्रीयतां देवो दक्षिणाशामुखः शिवः ॥

इति श्रीपरमहंसाचार्यवर्यश्रीमद्बालगोपालेन्द्रयतीश्वरविरचिते कठवल्लीभाष्यविवरणे
अन्तिमवल्ली समाप्ता

प्रतिपाद्यविषयः—

कठवल्लीभाष्यविवरणरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

मुद्रितः ।

13*

## No. (211) B 426 कलिसन्तरणोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—195–197 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—सह नाववत्विति शान्तिः। कलिजाबालिसौभाग्यरहस्य-ऋत्रमुक्तिका। द्वापरान्ते शरदो ब्रह्माणं जगाम। कथं भगवन् गां पर्यटन् कलिं सन्तरेयमिति। स होवाच ब्रह्मा। साधु पृष्टोऽस्मि सर्वश्रुतिरहस्यं गोप्यं तच्छृणु येन कलिसंसारं तरिष्यसि। भगवत आदिपुरुषस्य नारायणस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवति ॥

उपसंहारः—

भा—यदास्य षोडशकस्य नाम्नः सार्धकोटिं रामनाम्नां षट्कोटिं कृष्णनाम्नां षट्कोटिं हरिनाम्नां द्वादशकोटिं चेत्येवं चतुर्विंशतिकोटि-नाम्नां जपेन ब्रह्महत्यादिकं तरतीत्यादि स्पष्टार्थम्। सद्योमुक्त्यभिधानं तु परब्रह्मप्रकाशद्वारेणेत्यभिप्रायः ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ कलिसन्तरणोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे "हरे राम हरे कृष्ण" इत्यादिषोडशनामकीर्तनेन नरः कलिं सन्तार्य ब्रह्मणः सालोक्यादिकं प्राप्नोतीति निरूप्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (212) **B 873–B 878** कल्पतरुव्याख्या (परिमलः)

ग्रन्थकर्ता—अप्पयदीक्षितः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8 × 6½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–240, 1–753, 1–363, 1–144, 1–239, 1–334, 1–144, 1–621, 623, 1,099

प्रतिपुटं पङ्क्तयः—13
प्रतिपङ्क्त्यक्षराणि—12
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

गुरुभिरुपदिष्टमर्थं विस्मृतमपि तत्र बोधितं प्राज्ञैः।
अचलस्य शिवमधीयन् यथामति व्याकरोमि कल्पतरुम् ॥
कल्पकतरुमुपकुर्या कमधिकमाकाङ्क्षितार्थमुपहृत्य।
तद्दत्तैरेवार्थैर्मम मतिमीहे ................................ ॥
यावन्तो निविशन्ते विदुषां व्याख्यानचातुरीभेदाः।
सर्वेषामपि तेषामयमवकाशं ददाति पुष्पकवत् ॥
इत्थमिहातिगभीरे कियदाशयवर्णनं मया क्रियते।
तुष्यन्ति तथापि बुधाः कतिपयरत्नग्रहादिवा ? ॥

यदिति। अत्र प्रत्यगिति ब्रह्मविशेषणेन शास्त्रस्य विषयं प्रदर्श्य तत्र सर्वेषां वेदान्तानां समन्वयः प्रथमाध्यायार्थः श्रुतिशतेत्यादिविशेषणेन दर्शितः। शतशब्द आनन्त्यपरः, विश्वं सहस्रं च . . . वाचकमिति महाभारतवचनात्। ब्राह्मणशतं भोज्यतामित्यत्र भोजनस्येव शिरसां सङ्ख्योपसर्जनसंख्येयान्वयः।

उपसंहारः—

आपो वै खलु मीयन्ते लोकेऽसाविति श्रुतिवाक्यस्य टीकायां अप्छब्दोपलक्षितानि भूतानि लोकशब्दोपलक्षितानि हिरण्यगर्भबुध्योपास्यन्ते इत्यर्थो दर्शितः। अयमर्थो भाष्यकाराणामिमां श्रुतिं भोगसाम्यार्थ-

त्वेनोदाहृतवतामाशयस्थो न भवतीति स्वयमन्यथा व्याचष्टे तं ब्रह्मलोकमित्यादिना ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदप्पयदीक्षितस्य कृतौ वेदान्तकल्पतरुपरिमले चतुर्थस्याध्यायस्य चतुर्थः पादः

प्रतिपाद्यविषयः—

अमलानन्दकृतकल्पतरुग्रन्थव्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अत्र ग्रन्थः समग्रो वर्तते । मुद्रितश्च (मुम्बय्याम्) दृश्यते ॥

## No. (213) B 425 काठकोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–64

प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—14
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू·—ओं सह नाववत्विति शान्तिः। उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ। तस्य ह नाचिकेता नाम पुत्र आस। तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धाविवेश सोऽमन्यत। पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः। अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ स होवाच पितरम्। भा—

प्रणम्य करणैः श्रीमत्सुन्दरेश्वरसद्गुरुम् ।
काठकोपनिषद्वल्लीर्व्याख्यास्ये ग्रन्थसंग्रहात् ॥

उपसंहारः—

भा - मा विद्विषावहै तत्तत्कालीन प्रश्नोत्तरोत्पन्नं विद्वेषं मा करवावहै। निरन्तरं मानुसरावहा इत्यर्थः। शान्तिः शान्तिः शान्ति-

रिति त्रिर्वचनं शिष्याचार्येश्वराणां चित्तगतसर्वकल्मषप्रशमनार्थम् । ओमिति मङ्गळार्थमिति ।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ कठवल्ल्युपनिषद्भाष्ये द्वितीयाध्यायस्य तृतीया वल्ली समाप्ता

प्रतिपाद्यविषयः—

काठकोपनिषद्व्याख्यानरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

No. (214) **B 241/3** कान्तिमत्येकश्लोकी (सव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—28 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$8\frac{1}{4} \times 6\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–7 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

कान्तेः कान्तिमतित्ववागनुचिता विज्ञानवत्त्वोक्तिवत्
सत्यज्ञानसुखस्य वस्तुन इह स्वस्थस्य सद्ब्रह्मणः ।
धर्मो धर्मिपदप्रसिद्ध इति यद्वेदान्तशास्त्रे मतं
मातः कान्तिरपि त्वमेवमुचिता भासि स्वकोल्लासतः ॥

व्या—यथैव भासते नित्यं शालिवाटीश्वरः शिवः ।
कान्तिं कान्तिमतीं नित्यां तां वन्दे लोकमातरम् ॥

अत्र खलु भूमण्डले श्रुतिस्मृतिपुराणादिप्रसिद्धेषु स्वायंभुवेषु सर्वाभीष्टप्रदातृषु शिवक्षेत्रेषु बहुषु कन्याकुमारिप्रभृतिकानां श्रीमद्वाराणसीपर्यन्तानां केषांचित् दृष्टपूर्वाणां क्षेत्रविशेषाणां सन्दर्शनेन संतुष्टचित्तैरप्यस्माभिः कदाचिच्छ्रीशालीवाटिपुराविर्भूतमहालिङ्गदर्शनोद्देशेन शिवाद्दोवुरिषिकाभूतकान्तिमत्यम्बिकासन्निधिं गत्वा स्तूयमानां देवीमुद्दिश्य

पारवश्येनास्मन्मुखाद्योऽयं श्लोक आविर्भूतस्तमेनं सावधानेन चेतसा व्याख्यातुमुद्युक्तानामस्माकं वागाद्यधिष्ठानदेवता अनुकूला भवन्त्विति सद्गुरुप्रार्थनापुरःसरं व्याख्याऽऽरभ्यते—कान्तेरिति ॥

उपसंहारः—

नैतेन सगुणमूर्तिमत्वमात्मनः शङ्क्यम्, तनुशब्दस्य निर्गुणस्वरूप परत्वात्। देवात्मशक्तिं स्वगुणैर्निगूढामिति श्वेताश्वतरश्रुत्युक्तगुण-शब्दस्य सच्चिदानन्दपरत्वेन सगुणत्वदोषाप्रसक्तिरिव तनुशब्दस्य मूर्ति-परत्वदोषाप्रसक्तेः। यथा यत्तदद्रश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्, नित्यं विभुं सर्वगतं सुसूक्ष्म यद्भूतयोनिं परिपश्यन्ति धीराः॥ इति श्रुत्यनुरोधेन, अदृश्यत्वादिगुणको धर्मोक्तेरितिसूत्रोक्तगुण-शब्देन वस्तुनः सगुणत्वाप्रसक्तिः। तथा प्रकृतेऽप्यवगन्तव्यत्वान्नोक्त-दोषोपपत्तिः। न चायमुल्लास औपाधिक इति शङ्क्यम्, निरुपाधिकशुद्ध-चैतन्यकर्तृकत्वात्। यथा च ईक्षतिकर्मव्यपदेशात्स इति सूत्रोक्तक्षणकर्तु-र्निरुपाधिकचैतन्यत्वं सुप्रसिद्धं तद्वदवगन्तव्यम् ॥

एकश्लोकीमिमां श्रीमत्कान्तिमत्यम्बिका पराम्।
सव्याख्यां पश्यतो न स्याच्छोकमोहादिकं ध्रुवम् ॥

इति श्रीमदप्पयदीक्षितेन्द्रान्वयजस्याप्पयदीक्षितस्य कृतौ कान्तिमत्येकश्लोकी समाप्ता

प्रतिपाद्यविषयः—

श्रीकान्तिमत्यम्बास्तुतिरूपस्यास्य कान्तेः कान्तीति श्लोकस्य अनुभवाद्वैतपरतया व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (215) A 86/5 कायशोधः

| | |
|---|---|
| ग्रन्थकर्ता—बालब्रह्मानन्दसूरी | प्रतिपुटं पङ्क्तयः—30 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—$12\frac{3}{4} \times 7\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—553–561 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

प्रणम्य सर्ववेदात्मगुरुं वेदान्तसाङ्ख्यतः ।
विमर्शः क्रियते सर्वव्यावृत्तात्मप्रसिद्धये ॥
तमःप्रचुरविक्षेपशक्तितः परमात्मनः ।
अपञ्चीकृतभूतानां पञ्चानामभवज्जनिः ॥
ततोऽन्तःकरणं तेषां सत्त्वांशान्मिलितादभूत् ।
मनोबुद्धिरहंकारश्चित्तं चेति चतुर्विधम् ॥
मनोविकल्परूपं स्याद्बुद्धिर्निश्चयरूपिणी ।
अहंकारोऽभिमानः स्याच्चित्तं स्यात्सुप्रसन्नता ॥
अधिभूतमथाध्यात्ममधिदैवमपि त्रिधा ।
कार्यकारणकर्त्राख्यरूपेणाप्युच्यते जगत् ॥

उपसंहारः—

भूतात्मा ह्यन्तरात्मेति परमात्मेत्यपि श्रुतः ।
ज्ञानात्माख्यस्तुरीयोऽपि केवलात्मा तु निर्गुणः ॥
स एव निरुपाधिः स्यात्स्वात्मसंवेद्य एव सः ।
प्रत्यग्दृशा निर्विकल्पश्च समाधौ नान्यथा क्वचित् ॥
गर्भाधानादिमृत्यन्तव्याधिदुःखैकभेषजम् ।
नान्यत्स्वसेवासन्तुष्टगुर्वात्मात्मापरोद्यतः ॥
बहुग्रन्थानुसारेण यथामति मया कृतः ।
कायशोधस्तेन मे स्यात्सुप्रीतो गुरुर्हृद्गतः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छिन्नकाशीविश्वेश्वरमणिकर्णिकातीरस्थश्रीजयकृष्णा
नन्दपादपद्माराधकश्रीवेंकटकृष्णानन्दशिष्येण बालब्रह्मानन्दसूरिणा विरचितं
बहुग्रन्थाननुसृत्य कायशोधग्रन्थः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मायाविशिष्टाद्ब्रह्मणः भूतादिक्रमेण प्रपञ्चसृष्टिः, पञ्चभूतस्वरूपादिनिरूपणं, पञ्चकोशनिरूपणं, शरीरत्रयादात्मनो विवेचनं च प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अमुद्रितः ।

## No. (216) B 427 कालाग्निरुद्रोपनिषत्

| | |
|---|---|
| ग्रन्थकर्ता--अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—321-327 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—सह नाववत्विति शान्तिः। अथ कालाग्निरुद्रोपनिषत्संवर्तकोऽग्निऋषिरनुष्टुप्छन्दः श्रीकालाग्निरुद्रो देवता। कालाग्निरुद्रप्रीत्यर्थे जपे विनियोगः। अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ। अधीहि भगवन् त्रिपुण्ड्रविधिं सतत्त्वं किं द्रव्यं कियत्स्थानं कति प्रमाणं का रेखाः के मन्त्राः का शक्तिः किं दैवतं कः कर्ता किं फलमिति।

उपसंहारः—

भा—ननु यस्त्वेतद्वाधीते सोऽप्येवमेव भविष्यतीत्यनुपपन्नम्। अध्ययनमात्रेण सायुज्यमुक्तिसिद्धौ भस्मधारणकर्माचरणस्यानावश्यकत्वापत्तेः। अत्रोच्यते—न हि भस्मधारणहीनस्योपनिषदध्ययनाधिकारोऽस्ति। अतस्तत्कर्मावश्यकमेव। अर्थवादाभिप्रायेण त्वध्ययनस्य फलमुक्तम्। वाकारश्चैतमर्थमवगमयति। तस्मादनवद्यम्।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ कालाग्निरुद्रोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे भस्मत्रिपुण्ड्रधारणविधिः सप्रपञ्चं निरूप्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (217) C 749 काशीमोक्षनिर्णयः

ग्रन्थकर्ता—सुरेश्वराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 4\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–9
प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—130 वत्सराः
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

नमस्कृत्य जगन्नाथं मायया चन्द्रशेखरम् ।
गङ्गाधरं गरच्छायानीलकण्ठमुपास्महे ॥
वाराणसीपुरीं पुण्यां येऽधितिष्ठन्ति जन्तवः ।
व्याचष्ट तारकं ब्रह्म रुद्रस्तेषां दयानिधिः ॥
प्राणप्रयाणसमये प्राप्य ज्ञानं महेश्वरात् ।
मुच्यन्ते जन्तवः सर्वे बद्धाश्चानाद्यविद्यया ॥
मोक्षश्च तेषां तादात्म्यं घटकरकयोरिव ।
पुनर्देहान्तरारम्भकारणं नास्ति काचन ॥
सालोक्यादेर्न विद्वद्भिः साक्षान्मोक्षत्वमिष्यते ।
उपास्तेः फलरूपत्वात्तारतम्यपदस्थितेः ॥

उपसंहारः—

किं बहूक्तेन—

येन केनापि यः कश्चिन्निमित्तेन परित्यजेत् ।
काश्यां प्राणान्सर्वजन्तुः मुक्त इत्यवगम्यताम् ॥
मोक्षस्य निर्णयः काश्यामित्थमेकेन जन्मना ।
सर्वेषामेव जन्तूनां प्रमाणैः प्रतिपादितः ॥
विश्वेश्वरो जयति विश्वविमुक्तिहेतोः
काशीनिवासरसिकः करुणासमुद्रः ।
यत्पादपद्मयुगसौरभवासितस्य
जन्तोर्भवत्यकृतकं शिवसामरस्यम् ॥

इति श्रीसुरेश्वराचार्यविरचितः सकलश्रुतिस्मृतिपुराणवाक्यनिर्धारितः काशीमोक्षनिर्णयः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे—आमरणं काशीनिवासिनां प्रयाणकाले तत्त्वज्ञानोदयेन पुण्यपापकर्मक्षये पुनर्जन्मरहिता मुक्तिर्भवतीति श्रुतिस्मृत्यादिप्रमाणोपन्यासपुरस्सरं प्रतिपाद्यते ।

वक्तव्यविशेषः—

अमुद्रितः ।

## No. (218) 4737 किरणावळी (पञ्चरत्नव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—बालकृष्णानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—76 |
| प्रमाणम्—17 × 1½ अङ्गुलानि | कालः (कोशस्य)—विलम्बिवत्सर |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-16 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

भजे श्रीशंकराचार्यभगवत्पादपादुकाम् ।
भेदधीविषमूर्च्छालजीवसञ्जीवनौषधिम् ॥
गुरुपादाम्बुजद्वन्द्वध्याननिर्मलमानसः ।
आरभे पञ्चरत्नस्य विवृतिं किरणावळीम् ॥ 13

अथ खलु परमकृपालवो भगवन्तो भगवत्पादाः निखिललोकं संसारदावानलपरिपीडितमुपलभ्यात्मजिज्ञासामृतमेव तदुपशमनं सुखसाधनं चाहुः। युक्तं चैतत्। तस्यैव तन्मूलाविद्यानिवर्तकत्वेन तन्निवर्तकत्वात्। तदेव खलु साधकम्। अन्यस्य तत्साधकत्वानुपपत्तेः। तथाहि—न धर्मः सुखसाधकः तत्फलस्यानित्यत्वेनासुखसाधकत्वात्। यो वै भूमा तत्सुखं नाल्पे सुखमस्तीति भूम्नः सुखत्वं अल्पस्यासुखत्वं च प्रतिपाद्य यो वै भूमा तदमृतं अथ यदल्पं तन्मर्त्यमिति भूम्नो नित्यत्वस्याल्पस्यानित्यत्वस्य प्रतिपादनात् ॥

**उपसंहारः—**

अथ परब्रह्मात्मना स्थीयतामिति वक्तुं शक्यत एव। पूर्वं तदवस्थाया एव शुक्तेः स्वाज्ञानमहिम्ना अतथाभूतवत्स्थितायास्तन्निवृत्तौ स्वरूपापत्तिरिवेति न कोऽपि दोष इति सङ्क्षेपः।

अज्ञातं ब्रह्मतत्त्वं ये ज्ञातुमिच्छन्ति ते बुधाः।
समाश्रयन्तु सततं किरणावळिमादरात्॥
मदीयकृतिमध्ये यो दूषणं भूषणं जनः।
विचार्यैव वदेत्तस्मै महते विधये नमः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याद्वैतविद्याचार्यवर्यश्रीमत्सच्चिदानन्दयोगीन्द्रचरणकमलयुगलभृङ्गायमानबालकृष्णानन्दसरस्वतीविरचिताद्वैतपञ्चरत्नव्याख्या किरणावळी

विळम्बिवत्सरे चोर्जे शिवरामाभिधः सुधीः।
व्यलिखत्पञ्चरत्नस्य सद्व्याख्यां किरणावळीम्॥

**प्रतिपाद्यविषयः—**

श्रीमद्भगवत्पादाचार्यकृतस्य वेदो नित्यमधीयतामित्याद्यस्याद्वैतपञ्चरत्नस्य व्याख्यारूपोऽयं ग्रन्थः।

**वक्तव्यविशेषः—**

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च दृश्यते॥

## No. (219) 1050 किरणावळी (पञ्चरत्नव्याख्या)

ग्रन्थकर्ता—बालकृष्णानन्दसरस्वती
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-25

प्रतिपुटं पङ्क्तयः— 12
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

**उपक्रमः—**

4737 कोशवत्।

उपसंहारः—

4737 कोशवत् ।

प्रतिपाद्यविषयः—

4737 कोशवत् ।

वक्तव्यविशेषः—

4737 कोशवत् ।

## No. (220) B 428 कुण्ठिकोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8 × 6½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-7
प्रतिपुटं पङ्क्तयः—26
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—आप्यायन्त्विति शान्तिः।
ब्रह्मचर्याश्रमे क्षीणे गुरुशुश्रूषणे रतः ।
वेदानधीत्यानुज्ञात उच्यते गुरुणाश्रमी ॥
दारानाहृत्य सदृशानग्निमाधाय शक्तितः ।
ब्राह्मीमिष्टिं यजेत्तासामहोरात्रेण निर्वपेत् ॥
संविभज्य सुतानर्थैं ग्राम्यकामान्विसृज्य च ।
संचरन्वनमार्गेण शुचौ देशे परिभ्रमन् ॥
वायुभक्षोऽम्बुभक्षो वा विहितैः कन्दमूलकैः ।
स्वशरीरे समाप्याथ पृथिव्यां नाश्रु पातयेत् ॥

उपसंहारः—

भा—विद्वांसोऽपि केचन समाधिदार्ढ्याभावाद्विषयानन्दपरवशा भवन्ति। अयं तु समाधिबलात् सदा आत्मारामः परमात्मन्येवारामो यस्य स तथाविधोऽस्ति। आत्मारामस्यापि लौकिकैः सह व्यवहारेषु सत्सु कदाचिच्चित्तविक्षेपो भवेत्। अयं तु सदा मुनिः मौनशीलः

ब्रह्मैकमननशीलो वा भवति। तस्मान्न कथंचनास्य विधिप्रतिषेधाभावेऽप्यगम्यागमनभक्ष्याभक्ष्यविभागशास्त्रोल्लङ्घनादिलोकशास्त्रविरुद्धाचारप्रसक्तिः ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु कुण्ठिकोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मचर्यादिचतुराश्रमधर्माचरणात् क्रमादात्मनिष्ठा भवतीति प्रतिपाद्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (221) B 429 कृष्णोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—41–57

प्रतिपुटं पङ्क्तयः—22
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

कृष्णावतारे मां यूयं भूत्वालिङ्गथ गोपिकाः ।
इति श्रीरामवचनं श्रुत्वा सन्तुष्टमानसैः ॥
रुद्रादिमुनिभिर्यस्यां कृष्णतत्त्वं विशेषतः ।
प्रपञ्च्यते तां व्याख्यास्ये कृष्णोपनिषदं पराम् ॥

श्रीमहाविष्णुमिति । महाविष्ण्वंशभूतं सच्चिदानन्दलक्षणं सर्वाङ्गसुन्दरमित्याभ्यां विशेषणाभ्यां सगुणनिर्गुणोभयात्मकत्वं विवक्षितम् । एवंविधं श्रीरामचन्द्रं दाशरथिं दृष्ट्वा वनवासिनः रुद्रादयो मुनयः विस्मिता आश्चर्ययुक्ता बभूवुः ।

उपसंहारः—

एतदधीयानः ज्योतिष्टोमादिसर्वक्रतुफलं लभते। कामक्रोधादिभ्यः शान्तिमेति। अत एव मनश्शुद्धिमेति। मनश्शुद्धेः कामादिशान्तिरूपत्वात्। सर्वतीर्थस्नानैर्यत्फलं स्यात्तदेतदुपनिषदध्ययनाल्लभते। य एवं पूर्वोक्तप्रकारेण वेद विदितवान् स देहबन्धात् स्थूलसूक्ष्मकारणाख्यदेहत्रयसंयोगाद्विमुच्यते। विशेषेण सत्यत्वेन प्रातिभासिकत्वेन व्यावहारिकत्वेन च मोक्षं गच्छति। इत्युपनिषत्। द्वितीयः खण्डः।

इत्यप्पयदीक्षिताचार्यकृतौ कृष्णोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे श्रीकृष्णस्य सगुणनिर्गुणोभयात्मकत्वं तस्मात्सङ्कर्षणाख्यजीवस्य सव्यूहस्योत्पत्तिश्च प्रतिपाद्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (222) C 512/2 केनोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः— 30 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—$12\frac{1}{4}\times5\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-7 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

केनेषितमित्याद्योपनिषत्परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारम्भः। प्रागेतस्मात्कर्माण्यशेषतः परिसमापितानि। समस्तकर्माश्रयभूतस्य च प्राणस्योपासनान्युक्तानि कर्माङ्गसामविषयाणि च। अनन्तरं च गायत्रसामविषयं दर्शनं वंशान्तमुक्तं कार्यं सर्वमेतद्यथोक्तं कर्म च ज्ञानं च सम्यगनुष्ठितं निष्कामस्य मुमुक्षोः सत्त्वशुद्ध्यर्थं भवति। सकामस्य तु ज्ञानरहितस्य केवलानि श्रौतानि स्मार्तानि च कर्माणि दक्षिणमार्गप्रतिपत्तये पुनरावृत्तये च भवन्ति॥

उपसंहार:—

यो वै एतां ब्रह्मविद्यां केनेषितमित्यादिना यथोक्तामेवं महाभाग्यां ब्रह्म ह देवेभ्य इत्यादिना स्तुतां सर्वविद्याप्रतिष्ठां वेदामृतत्वं हि विन्दत इत्युक्तमपि ब्रह्मविद्याफलमन्ते निगमयते। अपहत्य पाप्मानमविद्याकामकर्मलक्षणं संसारबीजं विधूयानन्तेऽपर्यन्ते सर्गे लोके सुखात्मके ब्रह्मणीत्येतदनन्त इति विशेषणान्न त्रिविष्टपेऽनन्तशब्द औपचारिकोऽपि स्यादित्यत आह—ज्येये इति। ज्येये ज्यायसि सर्वमहत्तरे स्वात्मनि मुख्य एव प्रतितिष्ठति न पुनः संसारमापद्यत इत्यभिप्रायः॥

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकस्य शंकरभगवतः कृतौ

केनेषितपदभाष्यं समाप्तम्

प्रतिपाद्यविषय:—

केनोपनिषत्पदव्याख्यानरूपो ग्रन्थः।

वक्तव्यविशेषः—

मुद्रितः।

## No. (223) B 430 केनोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तय:—26 |
| पत्रविशेष:—कागादपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम् $7\frac{1}{2}\times6\frac{1}{4}$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—आन्ध्रलिपि: | स्थिति:—समीचीना |
| पत्राणि—1-14 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रमः—

मू—आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुश्श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणं मे अस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते। मयि सन्तु ते मयि सन्तु॥ आप्यायन्त्विति। आप्यायन्तु आप्यायं प्राप्नुवन्तु मम साधकस्य अङ्गानि शिरःप्रभृतीनि वाक् वागिन्द्रियं प्राणः पञ्चवृत्तिः चक्षुः नेत्रेन्द्रियं श्रोत्रं श्रवणेन्द्रियं, अथो अनन्तरम्......

उपसंहारः—

तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स एतदेवं वेदाभमिहैनं सर्वाणि भूतानि संवाञ्छन्त्युपनिषदं । भो ब्रूहित्युक्ता त उपनिषत्...... वाव त उपनिषदं ब्रूमेति तस्मै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनं यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठतीति ॥

चतुर्थः खण्डः

आप्यायन्त्विति शान्तिः ॥

प्रतिपाद्यविषयः—

केनोपनिषद्व्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च भाति ।

## No. (224) 2705/4 केनोपनिषद्वाक्यभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$7\frac{3}{4} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–40
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—28
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

समाप्तं कर्माभूतप्राणविषयं विज्ञानं कर्म चानेकप्रकारम् । ययोर्विकल्पसमुच्चयानुष्ठानाद्दक्षिणोत्तराभ्यां श्रुतिभ्यामावृत्त्यनावृत्ती भवतः । अत ऊर्ध्वं फलनिरपेक्षज्ञानकर्मसमुच्चयानुष्ठानात्कृतात्मसंस्कारस्योच्छिन्नात्मज्ञानप्रतिबन्धकस्य द्वैतविषयदर्शिनो निर्ज्ञाताशेषबाह्यविषयत्वात्संसारबीजमज्ञानमुच्छित्सतः प्रत्यगात्मविषयजिज्ञासोः केनेषितमित्यात्मस्वरूपतत्त्वज्ञानायायमध्याय आरभ्यते ।

उपसंहारः—

तामेतां तप आद्यङ्गोऽप्रतिष्ठां ब्राह्मीमुपनिषदं सत्यायतनां आत्मज्ञानहेतुभूतामेवं यथावद्यो वेदानुवर्तते अनुतिष्ठति तस्यैतत्फलमाह—अपहत्य पाप्मानं अपक्षय्य धर्माधर्मावित्यर्थः। अनन्तेऽपारे अविद्यमानान्ते स्वर्गे लोके सुखप्राये निर्दुःखात्मनि परे ब्रह्मणि ज्येये महति सर्वमहत्तरे प्रतितिष्ठति प्रतितिष्ठतीति वीप्सा सर्ववेदान्तवेद्यं ब्रह्मात्मत्वेनावगम्य तदेव ब्रह्मप्रतिपद्यत इत्यर्थः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पादशिष्यश्रीमच्छंकरभगवतः कृतौ तलवकारमहोपनिषत्क्षुद्रविवरणं समाप्तम्

प्रतिपाद्यविषयः—

C 512/2 कोशवत्।

वक्तव्यविशेषः—

मुद्रितः।

## No. (225) B 431, B 439 कैवल्य-जाबालोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–25 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यत्र कैवल्यसिद्धिः स्याद्वरिष्ठब्रह्मविद्यया।
कैवल्याख्योपनिषदं व्याख्यास्येऽन्वर्थसंज्ञिकाम्॥

अथेति मङ्गळार्थः शब्दः। आश्वलायनाख्यो महर्षिर्भगवन्तं धर्मज्ञानवैराग्ययशःश्रीमन्तं परमेष्ठिनं ब्रह्माणं परिसमेत्योपसङ्गम्योवाच। कथमिति तदाह—हे भगवन् ब्रह्म विद्वान् यया ब्रह्मविद्यया साधनेन अचिरात्सद्य एव सर्वपापं ब्रह्महत्यादिकमपि व्यपोह्य अपहाय परात् सगुणब्रह्मणः परमुत्कृष्टं पुरुषं निर्गुणब्रह्म उपैति प्राप्नोति।

उपसंहार:—

ननु शुभाशुभकर्मनिर्मूलनपर इत्यनेन पुण्यपापविधिनिषेधत्यागस्य विहितत्वाद्यतीनां स्वेच्छाचारप्रसङ्ग इति चेन्न; सन्न्यासेन देहत्यागं करोतीति सर्वकर्माचरणसाधनीभूतस्य देहस्य त्यागे कृते सति स्वेच्छाचारानवकाशात्। तस्मात्कुटीचकादिषड्विधतुर्याश्रमधर्मप्रवचनपरायां नारदोपनिषदि सन्न्यासधर्माणां प्रपञ्चयिष्यमाणत्वादत्र सङ्ग्रहः कृत इत्यवगन्तव्यम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ जाबालोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषय: —

कैवल्योपनिषदि सगुणब्रह्म तत्प्राप्तिसाधनानि, निर्गुणब्रह्म तत्प्राप्तिसाधनानि च, जाबालोपनिषदि, व्यष्टिवाराणसीरूपस्याविमुक्तस्य परमात्मदृष्ट्योपासनम्, षड्विधसन्न्यासाश्रमाश्च निरूप्यन्ते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (226) B 333/2 कैवल्यसाधनम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—14 |
| प्रमाणम्—$6\frac{1}{2} \times 4$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-11 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 332 कोशवत्।

उपसंहारः—

B 332 कोशवत्।

प्रतिपाद्यविषय.—

B 332 कोशवत्।

वक्तव्यविशेषः—

B 332 कोशवत्।

## No. (227) 320 कैवल्योपनिषद्दीपिका

| | |
|---|---|
| ग्रन्थकर्ता—शंकरानन्दः (व्याख्याता) | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—26 |
| प्रमाणम्—$17\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—40-45 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

कैवल्याख्योपनिषदं कैवल्यार्थविबोधिनीम् ।
व्याख्यास्ये केवलस्तेन कैवल्यात्मा प्रसीदतु ॥

भगवती श्रुतिर्मातेव सुखप्रतिपत्त्यर्थं कंचनाश्वलायनमुररीकृत्याख्यायिकामवतारयति ब्रह्मविद्यायामास्तिक्यं जनयितुम् । अथ साधनचतुष्टयसंपत्त्यनन्तरं आश्वलायनो ऋग्वेदाचार्यः भगवन्तं पूजावन्तं परमेष्ठिनं सर्वोत्कृष्टस्थाननिवासिनं परिसमेत्य शास्त्रीयेण विधिना समीपमागत्य उवाच—अधीहि मदनुग्रहार्थं स्मर भगवन् हे समग्रधर्मज्ञानवैराग्यैश्वर्ययशःश्रीमन् ब्रह्मविद्यां .......।

उपसंहारः—

एनं परमात्मानं कैवल्यं केवलस्यात्मनो भावः कैवल्यं तत् फलं पुरुषाभिलाषविषयं सर्वपुरुषार्थसमाप्तिभूतं अश्नुते प्राप्नोति । कैवल्यं फलमश्नुते व्याख्यातम् । पदाभ्यास उपनिषत्समाप्त्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दाश्रमपूज्यपादशिष्यश्रीशंकरानन्दभगवतः कृतिः कैवल्योपनिषद्दीपिका समाप्ता

प्रतिपाद्यविषयः—

कैवल्योपनिषद्विवरणरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

मुद्रितः ।

## No. (228) B 625 कैवल्योपनिषद्दीपिका

ग्रन्थकर्ता — शंकरानन्दः
पत्रविशेषः — कागदपत्रात्मकः
प्रमाणम् — $7\frac{3}{4} \times 5\frac{3}{4}$ अङ्गुलानि
लिपिः — आन्ध्रलिपिः
पत्राणि — 1-12

प्रतिपुटं पङ्क्तयः — 30
प्रतिपङ्क्त्यक्षराणि — 22
कालः (कोशस्य) — ?
स्थितिः — समीचीना
समग्रोऽसमग्रो वा — समग्रः

उपक्रमः —

320 कोशवत् ।

उपसंहारः —

320 कोशवत् ।

प्रतिपाद्यविषयः —

320 कोशवत् ।

वक्तव्यविशेषः —

320 कोशवत् ।

## No. (229) C 1532 कैवल्योपनिषद्दीपिका

ग्रन्थकर्ता — शंकरानन्दः
पत्रविशेषः — कागदपत्रात्मकः
प्रमाणम् — $12\frac{1}{2} \times 5$ अङ्गुलानि
लिपिः — ग्रन्थलिपिः
पत्राणि — 1-5

प्रतिपुटं पङ्क्तयः — 49
प्रतिपङ्क्त्यक्षराणि — 54
कालः (कोशस्य) — ?
स्थितिः — समीचीना
समग्रोऽसमग्रो वा — समग्रः

उपक्रमः —

320 कोशवत् ।

उपसंहारः —

320 कोशवत् ।

प्रतिपाद्यविषयः—

320 कोशवत्।

वक्तव्यविशेषः—

320 कोशवत्।

## No. (230) C 1517 कैवल्योपनिषद्दीपिका

ग्रन्थकर्ता—शंकरानन्दः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$9\frac{1}{2} \times 4\frac{1}{2}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-13

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—32
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

अथाश्वलायनो भगवन्तं परमेष्ठिनं प्रेत्योवाच, अधीहि भगवन्ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढां, ययाचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान्। तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवेहि। साक्षाद्वक्तुमशक्यं तदर्थस्य च ब्रह्मणो वाङ्मनसातीतत्वादतः सोपायान्तरमाह—श्रद्धाभक्तिध्यानयोगात्। श्रद्धा आस्तिक्यबुद्धिः सा भक्तिर्भजनं तदेकतात्पर्यबुद्धिः। ध्यानं विजातीयप्रत्ययशून्यसजातीयप्रत्ययप्रवाहः। एतेषां योगः संबन्धः, एतत्कारणमिति यावत्। तस्मादवेहि जानीहि॥

उपसंहारः—

320 कोशवत्।

प्रतिपाद्यविषयः—

320 कोशवत्।

वक्तव्यविशेषः—

320 कोशवत्।

## No. (231) C 1527 कैवल्योपनिषद्दीपिका

| | |
|---|---|
| ग्रन्थकर्ता—शंकरानन्दः | प्रतिपुटं पङ्क्तयः—30 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—$12\times5\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरी | स्थितिः—समीचीना |
| पत्राणि—1-6 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

C 1517 कोशवत्।

उपसंहारः—

320 कोशवत्।

प्रतिपाद्यविषयः—

320 कोशवत्।

वक्तव्यविशेषः—

320 कोशवत्।

## No. (232) B 690 कौलोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—भास्करराय: | प्रतिपुटं पङ्क्तय:—24 |
| पत्रविशेष:—कागदपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—$6\frac{3}{4}\times4$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—आन्ध्रलिपि: | स्थितिः—शिथिला |
| पत्राणि—1-9 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रम:—

श्रीगुरुचरणाब्जकिरणविसरणनिर्धूतहृद्गतावरणः।
भास्कररायः कौलोपनिषदमाथर्वणीं विकासयति॥

वक्ष्यमाणातिरहस्यार्थोपदेशेऽवश्यंभाविविघ्ननिरासाय देवताः प्रार्थ्यते—शं नः कौलिकः शं नो वारुणी शं नः शुद्धिः शं नोऽग्निः शं नः सर्वं समभवत्। कुलमार्गप्रवर्तकः कौलिकः परः शिवः। शं विघ्न-

निरासपूर्वकस्वात्मानन्दप्रापको नोऽस्माकं समभवत् भूयात्। वारुणी प्रथमाभिमानिनी महती देवता च शं नो भूयात। शुद्धिः शुचित्वं द्वितीयाभिमानिनी देवतापि शं नो भूयात।

उपसंहारः—

एवं परमेश्वरस्याज्ञा। अतोऽनाश्वासो न कार्य इति भावः।
यश्चाचारविहीनोऽपि यो वा पूजां न कुर्वते।
यदि ज्येष्ठं न मन्येत नन्दते नन्दने वने॥

पूर्वोक्ताचारान्नानुतिष्ठति संशयापन्नमनस्कत्वादुक्तविधां सपर्यामपि न करोति। वचनव्यत्ययश्छान्दसः। अयं पन्थाः सर्वोत्तम इत्यपि न मन्यते। एतादृशोऽप्युपासकाभास उक्तफलालाभेऽपि स्वर्गमात्रं लभत एव। किमुत तदुपासकस्य यथोक्तफलप्राप्तिरिति भावः।

इति कौलोपनिषद्भाष्यं समाप्तम्।

प्रतिपाद्यविषयः—

कौलोपनिषद्विवरणविचारः।

## No. (233) B 892 कौलोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—भास्करराय: | प्रतिपुटं पङ्क्तयः—32 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—12 |
| प्रमाणम्—$8\frac{1}{4} \times 6\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—44–56 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 690 कोशवत्।

उपसंहारः—

B 690 कोशवत्।

प्रतिपाद्यविषयः—

B 690 कोशवत्।

## No. (234) B 432 कौषीतक्युपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—7¾ × 6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—207-239 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

वाङ्मे मनसीति शान्तिः ॥

मू—चित्रो ह वै गार्ग्यायणिर्यक्ष्यमाण आरुणिं वव्रे। स ह पुत्रं श्वेतकेतुं प्रजिघाय याजयेति। तं हासीनं पप्रच्छ। गौतमस्य पुत्रास्ते संवृतं लोके यस्मिन्नाधास्यस्य महाबुद्धोर्ध्वलोके यास्यसीति। स होवाच। नाहमेतद्वेद हन्ताचार्यं पृच्छानीति। स ह पितरमासाद्य पप्रच्छेति मा प्राक्षीत्। कथं ब्रुवाणीति। स होवाचाहमप्येतं न वेद सदस्येव वयं स्वाध्यायमधीत्य हरामहे। यन्नः परे ददत्येह्युभौ गमिष्याव इति ॥

उपसंहारः—

तमेतमात्मानमेत आत्मानोऽन्वपश्यन्तीत्युक्तथा द्रष्टॄणां जीवात्मत्वाद्दृश्यस्य परमात्मत्वाच्च व्यवहारदशायां तत्त्वंपदार्थयोर्जीवब्रह्मणोर्भेदः, परमार्थदशायां तयोरभेदश्च सुनिर्धारित इत्यवगन्तव्यम् ॥

इति चतुर्थोऽध्यायः

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ
कौषीतक्युपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

कौषीतक्युपनिषद्व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मध्ये द्वित्रिस्थलेषु ग्रन्थलोपश्च दृश्यते।

## No. (235) 3124 कौषीतक्युपनिषद्दीपिका

| | |
|---|---|
| ग्रन्थकर्ता—शंकरानन्दः | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—86 |
| प्रमाणम्—22×2⅛ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपि:—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—42-81 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

आनन्द आत्मा स्थिरजङ्गमानामस्त्यत्र चित्रस्तमहं प्रणम्य ।
कौषीतकिब्राह्मण आत्मविद्यां पदावलोकात्प्रकटीकरोमि ॥

समधिगतमेतन्निघर्षणादीनां कर्मणां तैजसस्य द्रव्यस्यादर्शादेः शुद्धिहेतुत्वम । तथा चाग्निहोत्रादीन्यश्वमेधान्तानि कर्माणि तैजसस्यान्तःकरणस्य शुद्धिहेतवो विविदिषासाधनत्वस्य श्रुतितोऽप्यवगमाच्च । अपि च स्वर्गादेः कर्मफलस्य सुखविशेषरूपस्यान्तःकरणप्रसादापरपर्यायत्वात्कर्मभिरपि कर्मणामन्तःकरणशुद्धिहेतुत्वमङ्गीकृतं यतस्तानि महता सन्दर्भेण प्रथमतोऽभिधायेदानीं ब्रह्मविद्यां वक्तुं लब्धावसरा श्रुतिः प्रववृते ।

उपसंहारः—

य एवं वेद । व्याख्यातम् । वाक्याभ्यास उपनिषत्समाप्त्यर्थः ।

कौषीतकिब्राह्मण आत्मविद्या गुप्तापि सम्यक्प्रकटीक्रियन्ते ।
लोकोपकाराय मया श्रुतीनां पदावलोकैकपरेण नित्यम् ॥

त्रय्या अथर्वाङ्गिरसश्च तद्वद्येऽत्राप्रसिद्धा इह लोकमध्ये ।
अतो मयाकारि पदावलोकस्तेषां कृते . . शिव एतु तुष्टिम् ॥

गङ्गादयः शीतलनीरपूरा नैवाश्रिताश्चेत्सरितो ह्यभाग्यैः ।
न्यूनत्वमासां किमिवात्र भूयान्ममापि तद्वत्कृतयः प्रवृत्ताः ॥

आत्मावबोधाय मदुक्तिवारां प्रवृत्तिरेषोपनिषत्समूहे ।
विबुध्य सन्तः सततं स्वचित्तं प्रक्षालयन्त्वत्र विमुक्तिकामाः ॥

सर्वं न सर्वस्य हितं प्रियं वा व्यवस्थितं येन लभामहेऽदः।
प्रिया हितास्तेन विमुक्तिभाजां पदावलोका विहितास्ततोऽमी॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य शंकरानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां चतुर्थोऽध्यायः समाप्ता चोपनिषद्

वक्तव्यविशेषः—

मुद्रितः।

## No. (236) B 433 क्षुरिकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2}\times6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—369-372 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं सह नाववत्विति शान्तिः।
क्षुरिकां सम्प्रवक्ष्यामि धारणां योगसिद्धये।
यां प्राप्य न पुनर्जन्म योगयुक्तस्य जायते॥
वेदतत्त्वार्थविहितं यथोक्तं हि स्वयंभुवा।
निश्शब्दं देशमास्थाय तत्रासनमवस्थितः॥
कूर्माङ्गानीव संहृत्य मनो हृदि निरुध्य च।
मात्राद्वादशयोगेन प्रणवेन शनैः शनैः॥

उपसंहारः—

नायं दोषः, परे लीनेत्यभिधानात्। ब्रह्मरूपिण्या ब्रह्मणि परस्मिन्नेव विलयसम्भवात्। अंशस्य ह्यंशिनि विलय उपपद्यते। एतेन सुषुम्नेतरासां नाडीनां पर्यवसाने ब्रह्मण्येव विलयो भवति। तथापि तत्प्रकृतिभूतसम्पत्तिद्वारा ता विलीयन्ते। सुषुम्ना तु ब्रह्मणि साक्षाद्विलीयत इत्यवगन्तव्यम्।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ क्षुरिकोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे धारणायोगः सप्रपञ्चं निरूप्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च।

No. (237) C 14 खण्डनखण्डखाद्यम्

| | |
|---|---|
| ग्रन्थकर्ता –श्रीहर्षः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—46 |
| प्रमाणम्—12 × 5 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरी लिपिः | स्थितिः—समीचीना |
| पत्राणि—1–155 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

अविकल्पविषय एकः स्थाणुः पुरुषः श्रुतोऽस्ति यः श्रुतिषु।
ईश्वरमुमया न परं वन्देऽनमयापि तमधिगतम्॥

मानापनोदनविनोदनते गिरीशे भासेव संकुचितयोरुचितं तदिन्दोः।
भेत्तुं भवाऽनिशचितं दुरितं भवानि नम्रीभवामि घनमङ्घ्रिसरोजयोस्ते॥

शब्दार्थनिर्वचनखण्डनया नयन्तः सर्वत्र निर्वचनभावमखर्वगर्वान्।
धीरा यथोक्तमपि कीरवदेतदुक्त्वा लोकेषु दिग्विजयकौतुकमातनुध्वम्॥

अथ कथायां वादिनोर्नियममेतादृशं मन्यन्ते। प्रमाणादयः सर्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयम्। तदपरे न क्षमन्ते। तथाहि॥

उपसंहारः—

तस्मात्, तत्तुल्योहस्तदीयं च योजनं विषयान्तरैः।
श्रृङ्खला तस्य शेषे च त्रिधात्र मतिमत्क्रिया॥

ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञंमन्यमहाहवेन पठिती मास्मिन्खलः खेलतु।

श्रद्धाराद्धगुरुः श्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्तर्करसोर्मिमज्जनसुखेष्वामज्जनं सज्जनः ॥

ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्
यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥

इति श्रीहर्षकृतानिर्वचनीयसर्वस्वे खण्डनखाद्ये तुरीयः सङ्कीर्णपरिच्छेदः समाप्तः

प्रतिपाद्यविषयः--

अस्मिन्ग्रन्थे—असतः कारणत्वोपपादनं, सतः कारणत्वखण्डनं, ज्ञानस्वप्रकाशत्वप्रतिपादनं, अद्वैते प्रमाणप्रतिपादनं, प्रत्यक्षादेरद्वैतश्रुतिबाधकत्वनिराकरणं, अनुभूतिप्रत्यभिज्ञाप्रमाणलक्षणादीनां खण्डनं, इत्यादयो बहवो विषयाः स्पष्टं निरूप्यन्ते ॥

वक्तव्यविशेषः—

मुद्रितः ।

## No. (238) 1718 खण्डनखण्डखाद्यव्याख्या

ग्रन्थकर्ता—आनन्दपूर्णः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$19 \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—150

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—90
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

यो विश्वोऽकारवाच्यः सकलविषयभुग्भ्रान्तितत्कारणाभ्यां
बद्धः संस्कारमात्रप्रविरचिततनुस्तैजसश्चेत्युवाच्यः ।
प्राज्ञो ज्ञानैकबद्धः सुर . . . . . . . . . .
वाक्यार्थो यस्तुरीयो विगलितसकलः सोऽहमेवास्मि भूमा ॥

ग्रन्थारम्भे . . . . . . . . . . . . . . . . . . . मङ्गलं विधातुमधिकारिप्रयोजनसंबन्धाभिधेयप्रतिपादनाय चाह—अविकल्पेति। अस्य नियोगतः फलवत्कार्यान्तरारम्भसंयोगात्साक्षाद्दृष्टफलत्वाच्च फलवत्सन्निधावफलं तदङ्गमिति कार्यान्तरशेषत्वेऽवधृते सत्यारम्भस्य समाप्तिपर्यन्तत्वादपेक्षिताविघ्नपरिसमाप्तिः प्रयोजनम् ॥

उपसंहारः—

प्रतीयमानव्याप्यमात्रविषयोऽनुभवः प्रमेति प्रथमकल्पे लक्षणार्थः। स चानुपपन्नः; अतिप्रसक्तेरित्याह—आद्य इति। अग्निव्याप्यो धूमः . . . . . . . . . . . . . . . प्रत्ययो जायते। न चासौ प्रमा। अस्ति च प्रतीयमानव्याप्यविषयानुभवत्वलक्षणमित्यतिव्याप्तिरित्यर्थः। अस्वप्नप्रत्ययेन प्रतीयमानव्याप्यविषयत्वमविसंवादित्वमतो नातिव्याप्तिरित्यत आह. . . . . ।

प्रतिपाद्यविषयः—

खण्डनखण्डखाद्यव्याख्यारूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

मुद्रितः। अस्मिन्कोशे बौद्धाभिमतप्रमालक्षणे तृतीयविकल्पनिरसनपर्यन्तो भागो विद्यते।

## No. (239) B 434 गणपत्युपनिषत

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—26 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-7 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मूलं—भद्रं कर्णेभिरिति शान्तिः। ओं लं नमस्ते गणपतये। त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्तासि। त्वमेव केवलं धर्तासि। त्वमेव

केवलं हर्तासि। त्वमेव सर्वं खल्विदं ब्रह्मासि। त्वमेव साक्षादात्मासि नित्यम्। ऋतं वच्मि। सत्यं वच्मि। अव त्वं माम्। अव वक्तारम्। अवानूचानम्। अव शिष्यम्।

उपसंहारः—

भा—महादोषात्प्रमुच्यत इत्युक्तया निष्कामजापकस्यैव विवक्षितत्वाद्वाक्यार्थश्रवणादिद्वारा परतत्त्वज्ञानवन्त एव स्युरिति। ये तु तज्ज्ञानशून्याः कामातुरा भवन्ति ते सकामजापका मोक्षमार्गात्प्रच्युता नेह विवक्षिताः। अत्रैवंसति प्रतिमासन्निधेः श्रौतफलवचनानां वा कोऽपराधः। न च सकामोपासकानां किंचिदपि दोषमोचनं स्यात् अशुद्धचित्तत्वात्। तस्मात्प्रतिमासन्निधावपि निष्कामजापका महाबुद्धयः सर्वविदः स्युरिति युक्तमेव श्रुतिवचनं मन्तव्यम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु
गणपत्युपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सगुणनिर्गुणभेदेन गणपत्युपासना प्रतिपाद्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (240) B 435 गर्भोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—34-41 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

अथ गर्भोपनिषदं देहोत्पत्त्यवबोधिनीम्।
व्याख्यास्ये संग्रहेणैव वैराग्यस्य प्रसिद्धये॥

पञ्चात्मकमिति। वक्ष्यमाणार्थ एष श्लोकः। भवतीति पञ्चात्मकमिति। पृथिव्यादिपञ्चभूतात्मके शरीरे पञ्चसु कठिनादिषु वक्ष्यमाणेषु। वर्तमानमिति। ननु शब्दस्पर्शरूपरसगन्धेषु हि कारणभूतेषु पृथिव्यप्तेजोवाय्वाकाशा वर्तन्त इति प्रसिद्धम्। कथं कठिनादिष्वित्युच्यते। नायं दोषः—

उपसंहारः—

ननु पैप्पलादमिदं मोक्षशास्त्रमित्युक्तम्, तदनुपपन्नम्। कुतः देहोत्पत्तिमात्रनिरूपणपरत्वेन ब्रह्मात्मैक्यज्ञानयोगादिनिरूपणादर्शनात्। अत्रोच्यते—नायं दोषः, देहोत्पत्तिप्रकारश्रवणादिभिः सुपुष्कलस्य वैराग्यस्योत्पत्तिसंभवात्। विषयवैराग्यवतो हि ब्रह्मज्ञानादिकमनायासमुत्पद्यते। अत इदं मोक्षशास्त्रमित्युपपन्नम्।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ
गर्भोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मज्ञानसाधनीभूतदृढवैराग्यसिद्ध्यर्थं पिण्डोत्पत्तिः, तस्य क्रमशो वृद्धिः, गर्भाद्बहिर्निस्सरतश्च शिशोः यातनादिकं सम्यग्वर्ण्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च।

## No. (241) C 1518 गर्भोपनिषद्दीपिका

| | |
|---|---|
| ग्रन्थकर्ता—शंकरानन्दः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—35 |
| प्रमाणम्—$9\frac{1}{4} \times 4$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–15 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

संसारदुर्वैतरणीनिमग्नान्निरीक्ष्य सर्वान्बहुधास्मदादीन् ।
मातेव पुत्रान् घृणया श्रुतिर्नः प्राहेदमत्र त्यजताभिधानम् ॥

गर्भोपनिषदो व्याख्यां करिष्येऽस्मिञ्छरीरके ।
अहंबुद्धिहरीं तस्याः करणात्तुष्यताद्धरः ॥

सर्वोपनिषदां संबन्धादिचतुष्टयस्य साधारण्यान्न पृथग्वर्णनीयम् । अत्र सत्यप्युपनिषत्साधारण्ये शारीरके वैराग्यं विशेषतः प्रतिपाद्यते । ततः शरीरमेवोररीकृत्याह पञ्चात्मकम् । पञ्च पृथिव्यप्तेजोवाय्वाकाशाः आत्मनः स्वरूपमुपादानं वा यस्य तत्पञ्चात्मकम् । पञ्चसु शब्दस्पर्शरूपरसगन्धेषु वक्तव्यादानगतिविहरणानन्देषु च विषयेषु चक्षुश्श्रोत्रघ्राणरसनत्वक्वाक्पाणिपादपायूपस्थेषु निमित्तेषु वर्तनं वृत्तिं कुर्वन् ।

उपसंहारः—

पैप्पलादं पिप्पलादेन स्वशिष्यान्मोक्षकामिनः प्रत्युक्तं पैप्पलादं मोक्षशास्त्रम् । मोक्षस्याविद्यादिनिवृत्तिरूपस्य हितस्य शासनान्मोक्षशास्त्रम् । परिसमाप्तं सर्वतः समाप्तिं गतम् । पैप्पलादं मोक्षशास्त्रं परिसमाप्तम् । व्याख्यातम् । वाक्याभ्यास उपनिषत्समाप्त्यर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ गर्भोपनिषद्दीपिका समाप्ता

प्रतिपाद्यविषयः—

गर्भोपनिषद्विवरणरूपो ग्रन्थः ।

वक्तव्यविशेषः—

मुद्रितः ।

## No. (242) B 436 गारुडोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—187-192 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं भद्रंकर्णेभिरिति शान्तिः। ओं गारुडब्रह्मविद्यां प्रवक्ष्यामि। यां ब्रह्मविद्यां नारदाय प्रोवाच। नारदो बृहत्सेनाय। बृहत्सेन इन्द्राय इन्द्रो भरद्वाजाय। भरद्वाजो जीवत्कामेभ्यः शिष्येभ्यः प्रायच्छत्। अस्याः श्रीमहागरुडविद्यायाः ब्रह्मा ऋषिः। गायत्रीच्छन्दः। श्रीभगवान् महागरुडो देवता। श्रीमहागरुडप्रीत्यर्थे मम सकलविषनाशार्थे जपे विनियोगः। ओं नमो भगवते अङ्गुष्ठाभ्यां नमः। श्रीगरुडाय तर्जनी+स्वाहा। पक्षिराजाय मध्य+वषट्। . . . .

उपसंहारः—

निम्बतृणसंस्पर्शद्वारेण मोचनं कुर्यात्। शतं ब्राह्मणान् ग्राहयित्वा चक्षुषा दर्शनमात्रेण विषं मोचयेत्। सहस्रं ब्राह्मणान्ग्राहयित्वा चक्षुषा दर्शनमात्रेण विषं मोचयेत्। सहस्रं ब्राह्मणान्ग्राहयित्वा तु चिन्तामात्रेण मोचयेत्। सर्वं विषं जलेनादाय भूमौ जन्त्वन्तर बाधांविनैव मुञ्चति। स्पष्टमन्यत्। इत्येवं भगवान् ब्रह्मा नारदायाह उवाचेत्युपनिषत्।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ गारुडोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे समस्तविषघ्नमहागारुडमन्त्रार्थो निरूप्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (243) 25/1 गीताभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$18\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-41

प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—124
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 463/2 कोशवत् ।

उपसंहारः—

यदि पुनः क्षेत्रज्ञमविक्रियं पश्येयुः ततो न भोगं कर्म वा आकाङ्क्षेयुः मम स्यादिति । विक्रियैव हि भोगकर्मणी । अथैवं सति फलार्थित्वादविद्वान् प्रवर्तते, विदुषः पुनरविक्रियात्मदर्शिनः फलार्थित्वाभावात् प्रवृत्त्यनुपपत्तौ कार्यकरणसङ्घातव्यापारोपरमे निवृत्तिरुपचर्यते । इदं चान्यत्पाण्डित्यं केषांचिदस्तु, क्षेत्रज्ञ ईश्वर एव । क्षेत्रंचान्यत्क्षेत्रज्ञस्य विषयः . . . . . . . ।

प्रतिपाद्यविषयः—

C 463/2 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितस्त्रयोदशाध्याये क्षेत्रज्ञंचापि मां विद्धीतिश्लोकपर्यन्तो ग्रन्थो विद्यते ।

## No. (244) A 169 गुरुशिष्यसंवादः

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$11 \times 8\frac{1}{2}$ अङ्गुलानि
लिपिः—मलयाळलिपिः
पत्राणि—1-152

प्रतिपुटं पङ्क्तयः—35
प्रतिपङ्क्त्यक्षराणि—10
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यौ मेनात इहाश्रमं वरमिति प्राप्तं द्वितीयं कलौ
युक्तं ह्यायत आशरीरपतनात् गार्हस्थ्यनिष्ठत्वतः।
श्रौतस्मार्तसमस्ततत्त्वरसिकौ कूटस्थसद्देशिकौ
तौ वन्देऽप्पययज्वसुन्दरसमाख्यातौ महान्तौ सदा ॥१॥

दृष्ट्वादौ निटिले निजांशविविधज्योतिःस्वरूपं ततः
श्रुत्वाऽखण्डतया तथैव मननाद्ध्यानाच्च नित्याश्रितात्।
ब्रह्मात्मैक्यमवाप्य संसृतिभयान्मुक्तः सुधीरोऽप्यहं
स्मारं स्मारमिमान्विभेमि कलिना त्यक्ताश्रमान्दुर्जनान् ॥ २ ॥

अष्टोत्तरश्रुतिशतान्तविचारणाभि-
र्भाष्यादिकान् बहुविधानमलप्रबन्धान्।
निर्माय लोकपरमार्थहितैषिणायं
प्रारभ्यते च सरळोऽप्पययज्वनाम्ना ॥ ३ ॥

प्रश्नोत्तरैर्बहुविधैः श्रुतिसारभूतै-
रत्यद्भुतैरितरविद्वदनुक्तपूर्वैः।
सद्यो विमुक्तिसुखदायिभिरात्मवीक्षा-
मात्रेण मण्डित इहायमहो प्रबन्धः ॥ ४ ॥

गुरुशिष्यसंवादाभिख्यं ग्रन्थममुं सकृत्।
पश्यन्मुक्तो भवेत्सत्यं सत्यं सत्यं त्रिधोच्यते ॥ ५ ॥

सर्वसद्गुणसंपन्नः कश्चिच्छिष्यः सुबुद्धिमान्।
सद्गुरुं शान्तहृदयमिदं पप्रच्छ सादरम् ॥ ६ ॥

शिष्यप्रश्नः—श्रीमन्निखिलवेदान्तसद्गुरो मत्पूर्वपुण्यविशेषैर्मां वेदान्तश्रवणाधिकारिणं भवानवगच्छति। मन्दाधिकारिणापि साधनचतुष्टयसंपन्नेन मयाद्य यत्कर्तव्यं तदव्याजकरुणासिन्धुना भवता वक्तव्यम्।

गुरोरुत्तरम्—भो तात सर्वसच्छिष्यलक्षणसंपन्न प्रायेण कलौयुगे सर्वेऽपि मन्दाधिकारिण एव। अतः शुद्धचित्तेनापि त्वया चित्तसंशुद्धिसिद्धये भ्रुवोर्मध्ये ज्योतिर्मयः प्रत्यगात्माङ्गुष्ठादिप्रमाणः निरन्तरकृतेन ध्यानयोगेन करामलकवद्द्रष्टव्यः।

उपसंहारः—

उत्तरम् —अत्रोच्यते—विरूपमनोनाशो हि गौणमुख्यत्वेन द्विविधः। तत्र मुक्तिकोपनिषदुक्तो गौणः। योगशिखोपनिषदुक्तो मुख्य इत्यवगन्तव्यम्। नैतेन गौणत्वकल्पनेन श्रीरामवचनस्य वैयर्थ्यं शङ्क्यम्। स्थूलदेहस्य भूताग्निदह्यमानत्वमत्र भेदकत्वेन परमपदप्रवेशतारतम्यहीनतया द्वयोरपि विदेहसदेहकैवल्ययोः प्रबलभेदाभावात्। न च कारणब्रह्मीभूतत्वेन मुक्तस्यापञ्चीकृतसूक्ष्मदेहविलापनयोग्यत्वेऽपि कार्यब्रह्मीभूतत्वाभावात् पञ्चीकृतस्थूलदेहविलापनायोग्यत्वं शङ्क्यम्। स्थूलसमष्टिविलापनमात्रस्य कार्यब्रह्मानितरसाध्यत्वेन न व्यष्टिविलापनस्य हठराजयोगिसाध्यत्वात्। तस्मात्सर्वं समञ्जसमवगन्तव्यम्।

श्रोतव्यं मम किंचिदस्ति भगवन्नास्मात्परं मुक्तये
संतृप्तोऽस्मि तथापि तावकपदाम्भोजेऽस्तु भक्तिर्दृढा।
वक्तव्यं च न सौम्य किंचिदथ ते श्रौतं रहस्यं मया
सच्छिष्येण तथाप्यमुष्य मननं ग्रन्थस्य तेऽस्त्वन्वहम्॥

इति श्रीमदप्पयदीक्षितेन्द्रान्वयजस्याप्पयदीक्षितस्य कृतिषु गुरुशिष्यसंवादः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे गुरुशिष्यसंवादरूपेण अनुभवाद्वैतमतमनुसृत्य वेदान्तविषयः सम्यक्प्रतिपाद्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ायते॥

## No. (245) C 448 गुरुशिष्यसंवादः

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13 × 4 अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–52

प्रतिपुटं पङ्क्तयः—60
प्रतिपङ्क्त्यक्षराणि—12
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

A 169 कोशवत्।

उपसंहारः—

A 169 कोशवत्।

प्रतिपाद्यविषयः—

A 169 कोशवत्।

वक्तव्यविशेषः—

A 169 कोशवत्।

No. (246) 4137 गूढार्थदीपिका (भगवद्गीताव्याख्या)

ग्रन्थकर्ता—मधुसूदनसरस्वती
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$8\frac{3}{4} \times 2\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–246

प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—46
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ओं नमः प्रणवार्थाय शुद्धज्ञानैकमूर्तये ।
निर्मलाय प्रसन्नाय दक्षिणामूर्तये नमः ॥

मूर्तयेऽखिललोकानां प्रहतप्रणतार्तये ।
पूर्तयेऽखिलविद्यानां दक्षिणामूर्तये नमः ॥

(इदं पद्यद्वयमन्यत्र नास्ति.)

भगवत्पादभाष्यार्थमालोच्यातिप्रयत्नतः ।
प्रायः प्रत्यक्षरं कुर्वे गीतागूढार्थदीपिकाम् ॥

सहेतुकस्य संसारस्यात्यन्तोपरतात्मिका ।
परं निश्रेयसं गीताशास्त्रस्योक्तं प्रयोजनम् ॥

सच्चिदानन्दरूपं तत्पूर्णं विष्णुः परं पदम् ।
तत्प्राप्तये समारब्धा वेदाः काण्डत्रयात्मिकाः ॥

कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात् ।
तद्रूपाष्टादशाध्यायी गीताकाण्डत्रयात्मिका ॥

एकमेकेन षट्केन काण्डमत्रोपलक्षये ।
कर्मनिष्ठाज्ञाननिष्ठे कथिते प्रथमान्त्ययोः ॥

यतः समुच्चयो नास्ति तयोरतिविरोधतः ।
भगवद्भक्तिनिष्ठातु मध्यमे परिकीर्तिता ॥

वंशीविभूषितकरान्नवनीरदाभा-
त्पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रा-
त्कृष्णात्परं किमपि तत्त्वमहं न जाने ॥

काण्डत्रयात्मकं शास्त्रं गीताख्यं येन निर्मितम् ।
आदिमध्यान्तषट्केषु तस्मै भगवते नमः ॥

उपसंहारः—

श्रीगोविन्दमुखारविन्दमधुना मिष्टं महाभारते
गीताख्यं परमं रहस्यमृषिणा व्यासेन विख्यापितम् ।
व्याख्यातं भगवत्पदैः प्रतिपदं श्रीशंकराख्यैः पुन-
र्विस्पष्टं मधुसूदनेन मुनिना स्वज्ञानशुध्यै कृतम् ॥

इह योऽस्ति विमोहयन्मनः परमानन्दघनः सनातनः ।
गुणदोषभृदेषएवनस्तृणतुल्यो यदयं स्वयं जनः ॥

श्रीरामविश्वेश्वरमाधवानां प्रसादमारुह्य मया गुरूणाम् ।
व्याख्यानमेतद्विहितं सुबोधं समर्पितं तच्चरणाम्बुजेषु ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपूज्यपादशिष्यश्रीमधुसूदनसरस्वती-
विरचितायां श्रीभगवद्गीतागूढार्थदीपिकायामष्टादशोऽध्यायः

प्रतिपाद्यविषयः—

भगवद्गीताव्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। मुद्रितश्च दृश्यते।

## No. (247) C 942 गूढार्थदीपिका (भगवद्गीताव्याख्या)

ग्रन्थकर्ता—मधुसूदनसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12 \times 5\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–184

प्रतिपुटं पङ्क्तयः— 36
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)— 1743
स्थितिः—समीचीना
समग्रोऽसमग्रो वा— समग्रः

उपक्रमः—

4137 कोशवत् ।

उपसंहारः—

4137 कोशवत् ।

प्रतिपाद्यविषयः—

4137 कोशवत् ।

वक्तव्यविशेषः—

4137 कोशवत् ।

## No. (248) C 355 गूढार्थदीपिका (भगवद्गीताव्याख्या)

ग्रन्थकर्ता—मधुसूदनसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10 \times 4\frac{1}{2}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–52

प्रतिपुटं पङ्क्तयः—34
प्रतिपङ्क्त्यक्षराणि—52
कालः (कोशस्य)—1764
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किंचन योगिनो यदिपरं पश्यन्ति पश्यन्तु ते ।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनेषु यत्किमपि तन्नीलं महो (तमो) धावति ॥

प्रथममध्यमषट्कयोस्तत्त्वंपदार्थावुक्तावुत्तरस्तु षट्को वाक्यार्थनिष्ठः सम्यग्धीप्रधानोऽधुनाऽऽरभ्यते। तत्र—" तेषामहं समुद्धर्ता मृत्युसंसारसागरात्। भवामि " इति प्रागुक्तम्॥

उपसंहारः—

4137 कोशवत्।

प्रतिपाद्यविषयः—

4137 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे 13–18अध्याया विद्यन्ते॥

## No. (249) B 437 गोपालतापनीयोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2}\times 6$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–40
प्रतिपुटं पङ्क्तयः—22
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—ओं भद्रंकर्णेभिरिति शान्तिः।
गोपालतपनं कृष्णं याज्ञवल्क्यं वराहकम्।
शाट्यायनीहयग्रीवं दत्तात्रेयं च गारुडम्।
सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे॥

मुनयो ह वै ब्राह्मणमूचुः। कः परमो देवः। कुतो मृत्युर्बिभेति। कस्य विज्ञानेनाखिलं विज्ञातं भवति। केनेदं विश्वं संहरतीति। तदुहोवाच ब्राह्मणः कृष्णो वै परमं दैवतं, गोविन्दान्मृत्युर्बिभेति। गोपीजनवल्लभज्ञानेनैतज्ज्ञातं भवति।

उपसंहारः —

आ—ब्रह्मण इति। यथा नारायणेन ब्रह्मणे स्वपुत्राय प्रोक्तं तथा ब्रह्मणा स्वपुत्रेभ्यः प्रोक्तम्। यथा च ब्रह्मपुत्रान्मुनेर्नारदान्मया श्रुतं तथा तुभ्यं प्रोक्तम्। तस्मात् हे गान्धर्वि त्वं स्वालयस्यान्तिकं गच्छ। यच्छ्रोतव्यं तत्त्वया श्रुतमेवत्यतस्त्वं कृतार्थासीत्यभिप्रायः।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ
गोपालोत्तरतापनीयोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

गोपालतापनीव्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (250) C 2034 चतुःश्लोकीव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—शंकरानन्दः | प्रतिपुटं पङ्क्तयः—38 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—26 |
| प्रमाणम्—8½ × 8 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–24 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सत्यं विज्ञानमानन्दं ब्रह्म यत्केवलं परम्।
अद्वितीयमनाद्यन्तमद्वयं समुपास्महे॥
चतुःश्लोकीं भागवतीं परतत्त्वप्रकाशिनीम्।
व्याख्यास्यामो मुमुक्षूणां स्वतत्वप्रतिपत्तये॥

मुमुक्षूणामात्मबोधोत्पत्तेश्चित्तशुद्धिरेव कारणम्। तच्छुद्धेः कारणं त्वीश्वरप्रीत्यै स्वधर्मानुष्ठानमेव। तदनुष्ठातुरिदमेव परमसाधनम्।

"शमोदमस्तपश्शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्॥"

अस्यार्थः—ऐहिकामुष्मिकेषु च विषयेषु सर्वत्र बन्धकत्वबुद्ध्या नाशकत्वबुध्याप्यसत्यत्वबुद्ध्या च भोगेच्छापरिवर्जनं शमः। सम्प्राप्तेष्वपि तेषु कामानुदय एव शमशब्दार्थः। मुमुक्षुणा विषयेष्वाशया न प्रवर्तितव्यम्। विषयेषु काकविष्ठायामिव तुच्छत्वबुद्ध्याप्यरुच्या बाह्येन्द्रियाणामप्रवृत्तिर्दमः।

उपसंहारः—

एतेनेदं सूचितं भवति। श्रवणादिजन्यज्ञानस्योक्तसमाधिद्वयेनैव सम्यक्त्वं सम्यज्ज्ञातव्यतैवाप्रतिबद्धब्रह्मसाक्षात्कारस्त्वप्रतिबद्धब्रह्मसाक्षात्कारवत एव विदेहमुक्तिः सिद्ध्यति नान्यथा। ततः श्रवणादिजन्यज्ञानस्य सम्यक्त्वसिद्ध्यै विदेहकैवल्यार्थिना ब्रह्मविदा यतिना अवश्यं समाधिः कर्तव्येति। तथा च श्रुतिः—शान्तो दान्त उपरतस्तितिक्षुः समाहितोभूत्वा आत्मन्येवात्मानं पश्यति। सर्वमात्मानं पश्यति। विपापो विरजोऽमृतो भवतीति सर्वमनवद्यम्।

अनल्पबुद्धेरल्पोक्त्या तत्त्वं तत्त्वंपदेरितम्।
पुण्यश्लोकचतुःश्लोक्या जगाद जगदीश्वरः॥

अपुनर्भवकामानां स पुनर्भगवान्स्वयम्।
चतुष्टयेन श्लोकानां तत्त्वमाचष्ट आत्मनः॥

पुण्यश्लोकैरवेक्ष्येयं चतुःश्लोकी विचक्षणैः।
यद्वीक्षया मुमुक्षूणां मोक्षः करफलायते॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीमच्छंकरानन्दसरस्वतीकृतचतुःश्लोकीव्याख्या संपूर्णा

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे, भागवतान्तर्गतायाः, "अहमेवासमेकोऽग्रे, ऋतेऽर्थं यत्प्रतीयेत, यथा महान्ति भूतानि, एतावदेव जिज्ञास्यं," इति चतुःश्लोक्याः अद्वैतमतरीत्या शमदमादिस्वरूपनिरूपणपूर्वकं व्याख्यानं क्रियते॥

वक्तव्यविशेषः—

अमुद्रितः।

## No. (251) 2035/24 चित्तनिरोधप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—200–203 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मनोऽतिचञ्चलं भवति। एकत्र कचिदपिस्थले न तिष्ठति। वेगविशिष्टवायुर्यथा निरोद्धुमशक्यः निगळभ्रष्टमहागजो यथा निरोद्धुमशक्यस्तथा मनो निरोद्धुमशक्यमिति भगवद्गीतायां प्रतिपादितम्। किंच समुद्रपानं वा कर्तुं शक्यते, मेरुपर्वतोत्पाटनं वा कर्तुं शक्यते, दावदहनभक्षणं वा कर्तुं शक्यते, चित्तनिरोधो महानशक्य इति ज्ञानवासिष्ठे प्रतिपादितमित्यादिः॥

उपसंहारः—

अप्यब्धिपानान्महतः सुमेरून्मूलनादपि।
अपि वन्ह्यशनात्साधो विषमश्चित्तविभ्रमः॥
असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥
अपुष्पावदलनादरिलोचनमीलनात्।
सुकरोऽहंकृतित्यागो न क्लेशोऽत्र मनागपि॥

एवं विचार्य वैराग्यं सम्पाद्य वैराग्यपूर्वकतया श्रवणादिकं कृत्वा यो ज्ञानं सम्पादयति स एव जीवन्मुक्त इति सर्ववेदान्तसिद्धान्त इति सर्वं रमणीयम्॥

इति चित्तनिरोधप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन् मनसोऽतिचाञ्चल्यं दुर्निग्रहत्वं च प्रतिपाद्य, तन्निग्रहोपायश्च सम्यक्प्रदर्शितः॥

वक्तव्यविशेषः—

अमुद्रितः।

## No. (252) 525 चित्सुखी (प्रत्यक्तत्त्वप्रदीपिका)

| | |
|---|---|
| ग्रन्थकर्ता चित्सुखमुनिः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—44 |
| प्रमाणम्—$9\frac{3}{4} \times 2$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—किंचिच्छिथिला |
| पत्राणि—1-191 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

. . . . . . . . . . . . . . . . वो
यः पञ्चाननपाञ्चजन्यवपुषा व्यादिष्टविश्वात्मतः ।
प्रह्लादाभिहितार्थतत्क्षण . . . . . . . .
सोऽव्याद्वः शरदिन्दुसुन्दरतनुः सिंमाद्रिचूडामणिः ॥

ज्योतिर्यद्दक्षिणामूर्तिव्यासशंकरशब्दितम् ।
ज्ञानोत्तमाख्यं तद्वन्दे सत्यानन्दपदोदितम् ॥

विप्रतिपत्तिव्रातध्वान्तध्वंसप्रगल्भवाचाला ।
क्रियते चित्सुखमुनिना प्रत्यक्तत्त्वप्रदीपिका विदुषाम् ।

प्रमाणनखनिर्भिन्नमहामोहामरारये ।
नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने ॥

अथ कोऽयं स्वप्रकाशशब्दार्थः? किं स्वश्चासौ प्रकाशश्चेति स्वप्रकाशः, स्वस्य स्वयमेव प्रकाश इति वा, सजातीयप्रकाशाप्रकाश्यत्वं वा, स्वसत्तायां प्रकाशव्यतिरेकरहितत्वं वा, स्वव्यवहारहेतुप्रकाशत्वं वा, ज्ञानाविषयत्वं वा, ज्ञानाविषयत्वे सत्यपरोक्षत्वं वा, व्यवहारविषयत्वे सति ज्ञानाविषयत्वं वा, स्वप्रतिबद्धव्यवहारे सजातीयपरानपेक्षत्वं वा, अवेद्यत्वेसत्यपरोक्षव्यवहारविषयत्वं वा, तद्योग्यत्वं वा । नाद्यः;

उपसंहारः—

रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते । इति स्मरणात्,

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥ इति श्रुतेश्च।

तदेवं श्रुतिस्मृतिपुराणादिष्वपि घुष्यमाणा जीवन्मुक्तिः प्रद्वेषमात्रेणापलपितुं न शक्यत इति सिद्धम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिविरचितायां तत्त्वप्रदीपिकायां चतुर्थः परिच्छेदः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे आत्मस्वप्रकाशत्वविचारः, तमोनिरूपणं, मिथ्यात्वविचारः, अध्ययनविधिविचारः, अविद्याविचारः, अनिर्वचनीयत्वविचारः, अखण्डार्थविचारः, स्वतःप्रामाण्यविचारः, शक्तिविचारः, वेदान्तानामपौरुषेयत्वविचारः, शाब्दापरोक्षवादः, ज्ञानकर्मसमुच्चयनिरासमोक्षविचारः, इत्येवमादयो बहवो विषया विचार्यन्ते।

वक्तव्यविशेषः—

मुद्रितः।

## No. (253) B 153 चिदद्वैतकल्पवल्ली

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8×6¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-33 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सांख्यं भवति प्रकृतेः पुरुषस्य च विभागविज्ञानम्।
एतच्छ्रवणं नाम वदन्ति वेदान्तशास्त्रतत्त्वज्ञाः॥

(व्या) ननु लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्यायेनालक्षिते लक्षणं कथमेतेषां योगविशेषाणां साधनत्वेन ज्ञानमित्यत आह—सांख्यमिति। प्रकृतेस्त्रिगुणात्मकस्य प्रधानस्य पुरुषस्य पुरं शरीरं तस्मिञ्छेत इति पुरुषः।

"नवद्वारमिदं पुण्यमेतैर्भावैः समन्वितः ।
व्याप्य शेते महात्मा यस्तस्मात्पुरुष उच्यते ॥"

इति महाभारते अस्तेर्व्येत्यस्ताक्षरयोगादासीत्पुरा पूर्वमेवेति विग्रहं कृत्वा व्युत्पादितः । "पुरुषः पूर्वमेवाहमिवासमित्तत्पुरुषस्य पुरुषत्व" मिति श्रुतेः । पूरणात्सादनाद्वा पुरुषः "पूरणात्सादनाच्चैव ततोऽसौ पुरुषः स्मृतः" इति ॥

उपसंहारः—

सा सप्तभूमिः तुरीयावस्था तां प्राप्तो ब्रह्मविद्वरिष्ठ इत्युच्यते । उक्तं हि—

षष्ठ्यांभूम्यामसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् ।
किंचिदेवैष सम्पन्नस्त्वथ वैष न किंचन ॥
विदेहमुक्ततातूक्ता सप्तमी योगभूमिका ।
अगम्या वचसां शान्ता सा सीमा सर्वभूमिषु ॥ इति ॥

धामाधिकृत्य श्रीभगवता स्मर्यते—

देहं च नश्वरमवस्थितमस्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं
वासो यथा परिहृतं मदिरामदान्धः ॥
देहोऽपि दैववशतः खलु कर्म यावत्
प्रारब्धकं प्रति समीक्षत एव सासुः ।
तं सप्रपञ्चमधिरूढसमाधियोगः
स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तु ॥ इति ॥

तस्मात्साधूक्तं दग्धपटन्यायेन जीवन्मुक्तस्य व्यवहारप्रतिभासमात्र मिति ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे—श्रवणं, तारकयोगः, अमनस्कयोगः, सप्तभूमयः, एषां स्वरूपं प्रतिपाद्यते । अन्ते जीवन्मुक्तस्वरूपं च ।

वक्तव्यविशेषः—

अमुद्रितः ॥

## No. (254) 2035/10 चैतन्यभेदप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—161-162 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

इदानीं चैतन्यभेदो निरूप्यते ।

शुद्धमीश्वरचैतन्यं जीवचैतन्यमेव च ।
प्रमाता च प्रमाणं च प्रमेयं च फलं तथा ॥

इति सप्तविधं प्रोक्तं भिद्यते व्यवहारतः ।
मायोपाधिविनिर्मुक्तं शुद्धमित्यभिधीयते ॥

मायासंबन्धतस्त्वीशो जीवोऽविद्यावशस्तथा ।
अन्तःकरणसंबन्धात्प्रमातेत्यभिधीयते ॥

उपसंहारः—

अन्तःकरणावच्छिन्नचैतन्यं प्रमातृचैतन्यम् । अन्तःकरणवृत्त्यवच्छिन्नचैतन्यं प्रमाणचैतन्यम् । अज्ञातचैतन्यं प्रमेयचैतन्यम् । ज्ञातचैतन्यं फलचैतन्यम् । एवमुपाधिवशादेकोऽप्यात्मा अनेकविध इति ज्ञात्वा उपाधीन्परित्यज्य अद्वितीयपरिपूर्णात्माहमिति यो जानाति स एव जीवन्मुक्त इति सर्वं सुन्दरम् ॥

इति चैतन्यभेदप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जीवेशादिचैतन्यानामौपाधिको भेदो निरूप्यते ।

वक्तव्यविशेषः—

अमुद्रितः ॥

## No. (255) C 1142 छान्दोग्यभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$9\frac{1}{2} \times 5$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–14

प्रतिपुटं पङ्क्तयः—30
प्रतिपङ्क्त्यक्षराणि—30
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

ओमित्येतदक्षरमित्यादिना सामावयवविषयमुपासनमनेकफलमुपदिष्टम्। अनन्तरं च स्तोभाक्षरविषयमुपासनमुक्तम्। सर्वथापि सामैकदेशसंबद्धमेव तदिति अथेदानीं समस्ते साम्नि समस्तसामविषयाण्युपासनानि वक्ष्यामीत्यारभते श्रुतिः। युक्तं ह्येकदेशोपासनानन्तरमनेकदेशविषयमुपासनमुच्यत इति। समस्तस्य सर्वावयवविशिष्टस्य पाञ्चभक्तिकस्य साप्तभक्तिकस्यचेत्यर्थः। खल्विति वाक्यालंकारार्थः। साम्न उपासनं साधु।

उपसंहारः—

एष वै यजमानस्य लोक एतास्म्यत्र यजमानः परस्तादायुषः स्वाहापहतपरिघमित्युक्तोत्तिष्ठति। तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनꣳ संप्रयच्छन्त्येष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद।

इति तृतीयः प्रपाठकः

याथात्म्यं वेद यथोक्तम्। य एवं वेद य एवं वेदेति द्विरुक्तिरध्यायपरिसमाप्त्यर्था।

इति श्रीगोविन्दभगवत्पादशिष्यस्य परमहंसपरिव्राजकाचार्यशंकरभगवतः कृतौ छान्दोग्योपनिषद्विवरणे द्वितीयः प्रपाठकः

प्रतिपाद्यविषयः—

3964 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयाध्यायमात्रं विद्यते।

## No. (256) 1971 छान्दोग्यभाष्यटीका

ग्रन्थकर्ता—आनन्दज्ञानः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$13\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-263

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः (किंचिन्न्यूनः)

उपक्रमः—

नमो जन्मादिसंबन्धबन्धविध्वंसहेतवे ।
हरये परमानन्दवपुषे परमात्मने ॥
नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्त ध्वंसपटीयसे ॥

छन्दोगानामुपनिषद्भेदं व्याचिख्यासुर्भगवान्भाष्यकारः चिकीर्षितग्रन्थपरिसमाप्तिप्रचयपरिपन्थिदुरितनिबर्हणसिध्यर्थं ओंकारोच्चारणलक्षणं मङ्गळाचरणं सम्पादयन् व्याख्येयस्वरूपं दर्शयति—ओमित्येतदिति । व्याख्यानं सप्रयोजनं प्रतिजानीते—तस्या इति । ननु शारीरके भूयस्सु प्रदेशेषु विस्तरेण व्याख्यातत्वादमुष्य भाष्यं किमिति सम्प्रत्यारभ्यते तत्राह—सङ्क्षेपत इति ।

उपसंहारः—

तानि च वाय्वादीनि । तथाभूतानि आकाशात्मत्वं प्राप्तानीत्येतगवर्षादिफलनिष्पत्त्यर्थं वाय्वादीनामाकाशदेशात् समुत्थानमुक्तमाकाङ्क्षाद्वारेण स्फुटयति—कथमित्यादिना । स्वेन रूपेण अभिनिष्पद्यन्त इति संबन्धः । तत्र वायोरभ्रस्य विद्युतः स्तनयित्नोश्च स्वेन रूपेणाभिनिष्पत्तिप्रकारं विवृणोति—पुरो वातादिनेति ।

प्रतिपाद्यविषयः—

शंकराचार्यकृतछान्दोग्योपनिषद्भाष्यस्य व्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

मुद्रितः । अस्मिन्कोशे आदितः अष्टमाध्याये द्वादशखण्डे द्वितीयमन्त्रव्याख्यापर्यन्तो भागः वर्तते ।

## No. (257) 3541 छान्दोग्यभाष्यटीका

ग्रन्थकर्ता—आनन्दज्ञानः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—18 × 2¼ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—131-223

प्रतिपुटं पङ्क्तयः—28
प्रतिपङ्क्त्यक्षराणि—80
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्र (किंचिन्न्यूनः)

उपक्रमः—
1971 कोशवत् ।

उपसंहारः—
1971 कोशवत् ।

प्रतिपाद्यविषयः—
1971 कोशवत् ।

वक्तव्यविशेषः—
1971 कोशवत् ।

## No. (258) 3610/3 छान्दोग्यभाष्यटीका

ग्रन्थकर्ता—आनन्दज्ञानः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—19½ × 1⅝ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-149

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः (किंचिन्न्यूनः)

उपक्रमः—
1971 कोशवत् ।

उपसंहारः—
1971 कोशवत् ।

प्रतिपाद्यविषयः—

1971 कोशवत्।

वक्तव्यविशेषः—

1971 कोशवत्।

## No. (259) 1000/3 छान्दोग्यभाष्यटीका

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञानः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—13×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—76–115 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

वर्तिष्यमाणाध्यायस्यातीतेन सन्दर्भेण संबन्धं वक्तुं प्रतीकं गृहीत्वा तं प्रतिजानीते—श्वेतकेतुरिति। तमेव प्रकटयन् प्रथमं तृतीयेनाध्यायेनास्य संबन्धं कथयति—सर्वमिति। एतदुक्तं भवति—तदर्थोऽयं षष्ठोध्याय आरभ्यत इति संबन्धः। व्यवहितं संबन्धमुक्त्वा अव्यवहितं तमादर्शयति—अनन्तरंचेति। अध्यायतात्पर्यमुक्त्वा आख्यायिकातात्पर्यमाह—पितेति। पिता प्रतिवक्ता पुत्रश्च प्रष्टेत्येवंविधेयमाख्यायिका। सा च विद्यायाः सारिष्ठत्वद्योतनार्था। पिता हि पुत्राय सारतममेवोपदिशतीत्यर्थः। कुलस्यानुरूपमिति वचनान्न कुलाधमस्य गुरुत्वमिति गम्यते।

उपसंहारः—

देहव्यतिरेकस्य सतोऽप्यप्रतिभानवत्सदात्मकस्यापि श्वेतकेतोर्देहादिष्वात्माभिमानित्वात्सदात्मनि ब्रह्मणि विज्ञानं न स्यात्। अतस्तत्स्वभावस्यापि ब्रह्मभावस्य प्रतिभानमज्ञानकृतमित्यर्थः। वाक्यस्यार्थान्तरपरत्वासंभवे फलितमुपसंहरति—तस्मादिति। महावाक्यस्योक्तया विधयाऽर्थान्तरत्वासंभवाद्विकारेऽनृताभिसन्धिकृतोऽयं जीवात्मेत्येवंरूपं

यन्मिथ्याज्ञानं तस्य सनिदानस्य निवर्तकमेवेदं तत्त्वमसिवाक्यं तत्त्वभूत-प्रादुर्भावफलमित्येवं जीवब्रह्मणोर्वाक्यस्य सर्वोपनिषत्सारभूतं स्थित-मित्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यभगवत्पादानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां षष्ठोऽध्यायः

प्रतिपाद्यविषयः—

1971 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे षष्ठाध्यायमात्रं वर्तते।

## No. (260) 3610/1 छान्दोग्यभाष्यटीका

ग्रन्थकर्ता—आनन्दज्ञानः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$19\frac{1}{2}\times1\frac{5}{8}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–99

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

1971 कोशवत्।

उपसंहारः—

वैश्वानरविद्याया महाफलत्वे सिद्धे तद्वतोऽग्निहोत्रं विशिष्टमिति तत्कर्तुः सर्वदोषासंस्पर्शित्वमिति आशयेनाह—य एतदिति। विद्यामेव विद्यास्तुतिद्वारा अग्निहोत्रमिति यावत्। स्तुत्यर्थं अग्निहोत्रस्य स्तुति-रूपो योऽर्थस्तस्मिन्नित्येतत्। मन्त्रस्य तात्पर्यार्थं दर्शयति—जगदिति। विदुषो वैश्वानरात्मनः सर्वात्मत्वादित्यर्थः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञान-कृतायां छान्दोग्यभाष्यटीकायां पञ्चमोऽध्यायः

प्रतिपाद्यविषयः—

1971 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः पञ्चाध्यायाः समग्रा वर्तन्ते ॥

No. (261) 3610/2 छान्दोग्यभाष्यटीका

| | |
|---|---|
| ग्रन्थकर्ता—अभिनवनारायणेन्द्र-सरस्वती | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—64 |
| प्रमाणम्—$19\frac{1}{2} \times 1\frac{5}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—100-159 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

कैवल्यलक्ष्मीभवनारराणामुद्धाटनायोचितकुञ्चिकेव ।
विराजते यस्य विबोधमुद्रा हस्ते तमीळे वटमूलगेहम् ॥

वर्तिष्यमाणाध्यायस्यातीतेन सन्दर्भेण संबन्धं वक्तुं प्रतीकं गृहीत्वा तं प्रतिजानीते—श्वेतकेतुरिति । तमेव प्रकटयन् प्रथमं तृतीयेनाध्यायेनास्य संबन्धं कथयति—सर्वमिति । एतद्वक्तव्यं तदर्थोऽयं षष्ठोऽध्याय आरभ्यत इति संबन्धः । व्यवहितं संबन्धमुक्त्वा अव्यवहितं तमादर्शयति—अनन्तरं चेति । अध्यायतात्पर्यमुक्त्वा आख्यायिकातात्पर्यमाह—पितेति । पिता प्रतिवक्ता, पुत्रश्च प्रष्टेत्येवंविधेयाम । सा च विद्यायाः सारिष्ठत्व-द्योतनार्था । पिता पुत्राय सारतरमेवोपदिशतीत्यर्थः ॥

उपसंहारः—

न चैवं कृत्स्नभावात्तु गृहिणोपसंहार इति सूत्रं गृहस्थेनोपसंहारा-भिधायकं विरुध्येतेति वाच्यम्; परिणामवादाभ्युपगमेन भोक्त्रापत्तेरवि-भागश्चेत्स्याल्लोकवदितिसूत्रवत् कुर्वन्नेवेह कर्माणीति मन्त्रस्य यावज्जीवं कर्मानुष्ठानविधायकत्वाभ्युपगमेन तस्याविरक्तविषयप्रतिपादकं नावि-

शेषादिति सूत्रवच्चास्यापि गृहस्थेनोपसंहाराभ्युपगमेन प्रवृत्तत्वात्। अन्यथा आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्येत्यस्य गृहस्थेऽसंकोचेनानुपपत्तेरिति पूर्वोक्तविरोधापत्तेश्चेति सिद्धम्॥

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कैवल्येन्द्रसरस्वतीपूज्यपादशिष्यज्ञानेन्द्रसरस्वतीपूज्यपादशिष्यश्रीमदभिनवनारायणेन्द्रसरस्वतीविरचितायां छान्दोग्योपनिषद्भाष्यटीकायामष्टमोऽध्यायः

प्रतिपाद्यविषयः—

1971 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे 6-8 अध्यायाः समग्रा विद्यन्ते। अमुद्रित इति च दृश्यते।

## No. (262) 3964 छान्दोग्योपनिषद्भाष्यम्

ग्रन्थकर्ता— शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—16 × 1 8/8 अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-163

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—52
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ओमित्येतदक्षरमित्यष्टाध्यायी छान्दोग्योपनिषत्। तस्याः संक्षेपतोऽर्थजिज्ञासुभ्यः ऋजुविवरणमल्पग्रन्थमिदमारभ्यते। तत्र संबन्धः—समस्तं कर्माधिगतं प्राणादिदेवताविज्ञानसहितं अर्चिरादिमार्गेण ब्रह्मप्रतिपत्तिकारणम्। केवलं च कर्म धूमादिमार्गेण चन्द्रलोकप्रतिपत्तिकारणम्। स्वभावप्रवृत्तानां च मार्गद्वयपरिभ्रष्टानां कष्टा अधोगतिरुक्ता। न चोभयोर्मार्गयोः अन्यतरस्मिन्नपि आत्यन्तिकी पुरुषार्थसिद्धिः। इत्यतः कर्मनिरपेक्षमद्वैतात्मविज्ञानं संसारगतित्रयहेतूपमर्देन वक्तव्यमित्युपनिषदारभ्यते।

उपसंहारः—

भिक्षानिमित्तात्पर्यटनात्पीडा स्यादित्यत आह—अन्यत्र तीर्थेभ्यः। तीर्थानि नाम शास्त्रानुज्ञानविषयः ततोऽन्यत्रेत्यर्थः। सर्वाश्रमिणां चैतत्समानम्। तीर्थेभ्योऽन्यत्र (अ) टिंसैवेत्यन्ये वर्णयन्ति। कु (टु) म्बु एतद्धैसर्वं कुर्वन्, स खल्वधिकृतो यावदायुषं यावज्जीवं यथोक्तेन प्रकारेण एवं वर्तयन् ब्रह्मलोकमभिसंपद्यते देहान्ते। न च पुनरावर्तत इति पुनरावृत्तेः प्राप्तायाः प्रतिषेधात् कार्यब्रह्मलोकमभिसम्पद्य यावद्ब्रह्मलोकस्थितिः तावत्तत्रैव तिष्ठति प्राक्ततो नावर्तत इत्यर्थः। द्विरभ्यासः उपनिषद्विद्यापरिसमाप्त्यर्थः॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकराचार्यस्य कृतौ छान्दोग्योपनिषद्विवरणे अष्टमः प्रपाठकः समाप्तः

प्रतिपाद्यविषयः—

छान्दोग्योपनिषद्विवरणरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

मुद्रितः। अस्मिन्कोशे समग्रो वर्तते।

## No. (263) 2463 छान्दोग्योपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—66 |
| प्रमाणम्—16×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—4–53 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

तथा च वेदे त्रयस्त्रिंशदित्योमिति होवाचेत्यादि। तथा च लोकेऽपि तदेवेदं धनं गृह्णामीत्युक्त ओमित्याह। अत एषा उ एषैव हि समृद्धिः यदनुज्ञासमृद्धिः मूलवत्त्वादनुज्ञायाः समृद्धोहीति। ओमित्यनुज्ञां

ददाति। तस्मात्समृद्धिगुणवानोंकारः समृद्धिगुणोपासकत्वात् तद्धर्मा सन् समर्धयिता ह वै कामानां यजमानस्य भवति। एवं विद्वानक्षर-मुद्गीथमुपास्त इत्यादि पूर्ववत् ॥

उपसंहारः—

स यद्यपि चण्डालायोच्छिष्टं प्रयच्छेद्द्यात् प्रतिषिद्धमुच्छिष्टदानं यद्यपि कुर्यात्। आत्मनि हैवास्य चण्डालदेहस्थिते वैश्वानरे तद्धुतं स्यात् नाधर्मनिमित्तमिति विद्यावन्तं स्तौति। तदेवं स्तुत्यर्थे श्लोको मन्त्रोऽप्येष भवति। यथेह लोके क्षुधिता बाला मातरं पर्युपासते कदा नो माता अन्नं प्रयच्छतीत्येवं सर्वाणि भूतानि अन्नादान्येवंविदः अग्निहोत्रं भोजनमुपासते कदा नु भोक्ष्यत इति, जगत्सर्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थः। द्विरुक्तिरध्यायपरिसमाप्त्यर्था।

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकस्य शंकरभगवतः कृतौ छान्दोग्योपनिषद्विवरणे पञ्चमः प्रपाठकः समाप्तः

प्रतिपाद्यविषयः—

3964 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः पञ्च अध्याया विद्यन्ते। तत्र प्रथमाध्याये अष्टममन्त्रपर्यन्तं पत्रलोपः, मध्ये क्वचित्क्वचित् ग्रन्थलोपश्च दृश्यते।

## No. (264) C 832 छान्दोग्योपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः

पत्रविशेषः—कागदपत्रात्मकः

प्रमाणम्—$10\frac{1}{2} \times 5\frac{1}{2}$ अङ्गुलानि

लिपिः—देवनागरीलिपिः

पत्राणि—1-20, 1-22, 1-26, 1-20

प्रतिपुटं पङ्क्तयः—28

प्रतिपङ्क्त्यक्षराणि—36

कालः (कोशस्य)—?

स्थितिः—समीचीना

समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

3964 कोशवत्।

उपसंहारः—

योऽश्वारूढानश्वान्वडवा यथाभिरक्षति एवंवित् ह वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति तत्कृतदोषापनयनात्। यत एव विशिष्टो ब्रह्मा विद्वान् तस्मादेवंविदमेव यथोक्तव्याहृत्यादिविदं ब्रह्माणं कुर्वीत.। नानेवंविदं कदाचनेति। द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यशंकरभगवत्पादकृतौ छान्दोग्यभाष्ये चतुर्थोऽध्यायः

प्रतिपाद्यविषयः—

3964 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितश्चत्वार अध्यायाः समग्रा वर्तन्ते।

## No. (265) B 438 छान्दोग्योपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{8} \times 6\frac{1}{8}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—135-172

प्रतिपुटं पङ्क्तयः—22
पतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

मू—आप्यायन्त्वित्यादि शान्तिः। श्वेतकेतुर्हारुणेय आस तं ह पितोवाच। श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति। स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय। तं ह पितोवाच। श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युततमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति।

उपसंहारः—

भा—वर्तमानदेहपातानन्तरं यमदूतैर्मुच्यते च। अविद्वांस्त्वनृताभिसन्ध उक्तदुःखाग्निना दह्यते। देहपातानन्तरं यमदूतैर्हन्यतेचेत्यतोऽयं विद्वानयमविद्वानिति प्रत्यक्षशास्त्रीयलिङ्गैर्विभज्य ज्ञातुं शक्यत एव। ऐतदात्म्यमिदं सर्वमित्यादि व्याख्यातम्। तद्धास्य विजज्ञाविति विजज्ञाविति द्विरुक्तिरध्यायपरिसमाप्त्यर्था॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ छान्दोग्योपनिषद्भाष्ये षष्ठ. प्रपाठकः समाप्तः

प्रतिपाद्यविषयः—

छान्दोग्योपनिषद्व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे षष्ठाध्यायभाष्यमात्रं विद्यते। अमुद्रितश्च।

## No. (266) 3226 छान्दोग्योपनिषद्व्याख्या

ग्रन्थकर्ता—नित्यानन्दाश्रमी
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—15¼×1½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–140

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—48
कालः (कोशस्य)—1215 राक्षसाब्दः
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

योऽनन्तोऽनन्तशक्तिः सृजति जगदिदं पालयत्यन्तरात्मा
संविश्यान्ते निपीय स्वकमहिमगतः सत्यचिन्मूर्तिरास्ते।
योऽनुग्र सत्कं जनानां परमहिततमः पापिनामुग्रमूर्तिः
सोऽस्माकं वाञ्छितानि प्रदिशतु भगवानात्मनः श्रीनृसिंहः॥

यन्मूलप्रवत्पवित्रपयसः संसेवनादेव मे
रागद्वेषमदाभिधा ग्रहगणा नेशुः स संतापिनः।

यत्संसारपरिश्रमापहृदयासंशीतलामोदभाक्-
सृग्यं तत्पुरुषोत्तमाश्रमगुरोः पादारविन्दद्वयम् ॥
कृच्छ्राच्छान्दोग्यनाम्न्या उपनिषदो विज्ञगोचरां टीकाम् ।
भूयोऽल्पबुद्धिगम्यां नित्यानन्दो मिताक्षरां कुर्वे ॥

देवतोपास्तिसहितकर्मसाध्यकेवलकर्मसाध्ययोरुभयोरपि भागयोर्नात्यन्तिकी पुरुषार्थसिद्धिः, काम्यफलस्य क्षयिष्णुत्वात्सातिशयत्वात्पारतन्त्र्यत्वादङ्गवैकल्याद्यनेकविघ्नोपहतत्वाच्च ।

उपसंहारः—

महाप्रलयानन्तरं च पुनरावर्तते । एवं कार्यब्रह्मप्राप्तत्वात् । द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः ।

यन्मह्यादिकमाश्रितं बहुगुणं खं ब्रह्मचर्यादिभिः
युक्तो ह्यवरुध्य मूर्धगतया नाड्याथ सौत्रं पदम् ।
कामं क्रीडति यत्तुरीयममलं सैकं शताब्दं गुरौ
स्थित्वा देवपतिर्बुबोध तदहं ध्याये नृसिंहाभिधम् ॥
कार्यब्रह्मपदान्ततुङ्गफलवद्ध्यानप्रभेदाचलं
विश्वोद्भूतिविभूतिवादविलसद्वीचीतरङ्गाकुलम् ।
दैन्यं मुञ्चत भो जना गुरुतरं त्वारोहतालं श्रमैः
गाहन्तामनवद्यहृद्यमाये छान्दोग्यरत्नाकरम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमपूज्यपादशिष्यनित्यानन्दाश्रमिविरचितायां छान्दोग्यव्याख्यायां अष्टमोऽध्यायः समाप्तः

प्रतिपाद्यविषयः—

3964 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च ।

## No. (267) 2481 छान्दोग्योपनिषद्व्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—नित्यानन्दाश्रमी | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—92 |
| प्रमाणम्—19×1½ अङ्गुलानि | कालः (कोशस्थ)—? |
| लिपिः—नागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—1–62 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

3226 कोशवत् ।

उपसंहारः—

3226 कोशवत् ।

प्रतिपाद्यविषयः—

3964 कोशवत् ।

वक्तव्यविशेषः—

3226 कोशवत् ।

## No. (268) C 533 छान्दोग्योपनिषद्व्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—नित्यानन्दाश्रमी | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—40 |
| प्रमाणम्—8¼×5¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–14 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

तृतीयाध्याये "सर्वं खल्विदं ब्रह्म तज्जलानिति" जगतो ब्रह्मजनिलयस्थितिमत्त्वमुक्तम् । तत्साधयितुमव्यवहितेचैकस्मिन्ब्रह्मविदि भुङ्क्ते सर्वं जगत्तृप्यतीत्युक्तम् । तच्चात्मन एकत्वे सत्येवोपपद्यते, इतीदमपि

च साधयितुं षष्ठोऽध्यायः प्रवर्तते। तत्र पितुरुपदेष्टृत्वेन विद्यायाः साधिष्ठत्वद्योतनार्थमाख्यायिकामारचयति—श्वेतकेतुरिति। श्वेतकेतुर्नामतः। अरुणस्यापत्यमारुणिः तस्यापत्यमारुणेयः। आस बभूव।

उपसंहार:—

एवं यथा दृष्टान्तं वाचं नाम च मनोऽनुभवति। मनस्यन्तर्भवतीति यावत् (तीत्यर्थः)। इतोऽपि भूयस्त्वमित्याह—स यदेति। स पुरुषो यदा यस्मिन्काले मनसा अन्तःकरणेन मनस्यतिमनस्येनां विवक्षाबुद्धिं करोति। कथं—मन्त्रानधीय्यीयेयोच्चारयेयमित्येवं विवक्षां कृत्वा अथानन्तरमधीते तथा कर्माणि कुर्वीयेति चिकीर्षाबुद्धिं कृत्वा अथ कुरुते। तथा पुत्रांश्च पशूंश्चेच्छेयेति प्राप्तीच्छां कृत्वा अथ तत्प्राप्त्युपायानुष्ठानेनेच्छते पुत्रादीन्प्राप्नोतीति यावत्। तथेमं च लोकमसुं च ...................... ... ।

प्रतिपाद्यविषय:—

3964 कोशवत्।

वक्तव्यविशेष:—

अस्मिन्कोशे समग्रः षष्ठोऽध्यायः सप्तमे त्रयः खण्डाश्च विद्यन्ते॥ मुद्रितश्च।

## No. (269) 2674 छान्दोग्योपनिषद्व्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—सायण: | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेष:—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—$15 \times 1\frac{3}{4}$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—नागरीलिपिः | स्थिति:—समीचीना |
| पत्राणि—1–142 | समग्रोऽसमग्रो वा—असमग्र: |

उपक्रम:—

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

सगुणब्रह्मोपासकानां पुनरावृत्तिरहितमर्चिरादिमार्गं प्रतिपाद्य इदानीं पञ्चमाध्याये पञ्चाग्निविदां गृहस्थानां विद्यान्तरशीलिनां श्रद्धालूनामूर्ध्वरेतसां च तमेवार्चिरादिमार्गमनूद्य केवलकर्मशीलिनां पुनरावृत्तिसहिता.................................माद्विलक्षणो मार्गस्ततोऽपि कष्टतरः संसारिणां मार्गश्च वैराग्योत्पादनाय प्रतिपाद्यते। तत्र प्राणोपासनं दर्शयति। तस्य प्राणस्य ज्येष्ठत्वादिगुणं विधातुमारभते—यो ह वै.........।

उपसंहारः—

आरब्धं कर्म स्वफलं सुखदुःखे भोजयेत्। तदर्थमेव प्रवृत्तत्वात्। न हि विद्याविलोपार्थं यत्किंचित्कर्म पूर्वमनुष्ठितं येन कर्मवशाद्विद्यालोप आशंक्येत। न मरणव्यवधानमात्रेण विद्यालोपः, सुप्तिव्यवधाने तस्यादर्शनात्। अतो विद्यायामवस्थितायां बहुभिरपि क्रियमाणैः कर्मभिरलेपात् अस्त्यधिकारिणां मुक्तिः। यद्यप्येतद्गुणोपसंहारपादे निर्णीतं तथैव तस्यैवाक्षेपसमाधाने इत्यनवद्यम्।

इति सामवेदार्थप्रकाशे उपनिषद्व्याख्याने षष्ठाध्यायस्य षोडशः खण्डः

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थो महेश्वरः॥

इति श्रीमद्राजाधिराजराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीबुक्कभूपालसाम्राज्यधुरंधर-
श्रीसायणाचार्यविरचिते माधवीयसामवेदार्थप्रकाशे उपनिषद्व्याख्याने
षष्ठाध्यायः समाप्तः

प्रतिपाद्यविषयः—

छान्दोग्योपनिषद्व्याख्यारूपो ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे पञ्चमषष्ठाध्यायमात्रं विद्यते। अमुद्रितश्च दृश्यते।

## No. (270) C 2200 जगत्सत्यत्वानुमानखण्डनम्

ग्रन्थकर्ता—रामसूरिः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$18\frac{3}{4} \times 5\frac{1}{2}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-2
प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—30
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मृषजगदधिष्ठानसच्चिदानन्दमूर्तये ।
निरस्तद्वैतवादाय दक्षिणामूर्तये नमः ॥

द्वैतवादिमतध्वान्तविध्वंसनविचक्षणम् ।
वन्दे त्र्यम्बकमार्ताण्डं सर्वशास्त्राब्धिपारगम् ॥

विमतं सत्यं प्रमाणदृष्टत्वात् ब्रह्मवत् इति चेन्न ; साध्यानिरुक्तेः । तथा हि—सत्यत्वं सत्ताजातिमत्त्वं वा, अर्थक्रियाकारित्वं वा, असद्विलक्षण्यं वा, कालसंबन्धित्वं वा, प्रमाविषयत्वं, भ्रमाविषयत्वं वा, सत्त्वप्रकारकप्रमाविषयत्वं वा, असत्त्वप्रकारकभ्रमाविषयत्वं वा, वेदान्त्यभिमतमिथ्यात्वाभावो वा, ब्रह्मरूपत्वं वा। नाद्यः ; सिद्धसाधनात्। अत एव न द्वितीयः।

उपसंहारः—

एकमेवाद्वितीयं, नेह नानास्ति किंचन, मायामात्रमिदं द्वैतमद्वैतं परमार्थतः, वाचारम्भणं विकारो नामधेयं, इत्यादिश्रुतिभिः तदनन्यत्वमारम्भणशब्दादिभ्यः, तस्मान्न विज्ञानमृतेऽस्ति किंचित्क्वचित्कदाचिद्विजवस्तुजातं, इत्यादि सूत्रस्मृत्यादिभिर्बाधितविषयं चेदमनुमानम्। अनुकूलतर्काभावादप्रयोजकोऽयं हेतुः। यदि विश्वं सत्यं स्यात्तर्हि ब्रह्मवज्ज्ञानानिवर्त्यं स्यात्, तथा चानिर्मोक्षप्रसङ्गः। यदि प्रपञ्चः स्यात्तर्हि सुषुप्तावपि भासेत, सत्यस्य सर्वदा भाननियमात्। इत्यादिप्रतिकूलतर्कपराहतं च सत्यत्वानुमानम्। तस्मान्मृषैव जगदिति सिद्धम्।

इति श्रीमद्भगवत्पादचरणानुग्रहलब्धविमतनिरसनधौरन्धुर्यस्य रामसूरेः कृतिषु सत्यत्वानुमानखण्डनम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे विमतं सत्यं प्रमाणदृष्टत्वादिति द्वैतवादिप्रयुक्तमनुमानं, साध्याप्रसिद्ध्यादिदोषोद्भावनपूर्वकं खण्ड्यते ॥

वक्तव्यविशेषः—

अमुद्रितः ।

## No. (271) 3061 जन्माद्यधिकरणविचारः

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—78 |
| प्रमाणम्—14×1¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-25 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

मनसो घनसंसारबन्धमुच्छेत्तुमिच्छतः ।
रामचन्द्रपदाम्भोजयुगळी निगळायिता ॥

अथातो ब्रह्मजिज्ञासेत्यत्र ब्रह्म ज्ञातुकामेन ज्ञानोपायभूतमिदं विचारशास्त्रं श्रोतव्यमिति प्रतिज्ञातम् । जिज्ञासापदस्य ज्ञानेच्छालक्षणस्वार्थापरित्यागेनान्तर्नीतविचारलक्षणत्वात् । प्रतिज्ञाते च ब्रह्मविचारे तदङ्गानि लक्षणप्रमाणयुक्तिसाधनफलान्यप्यर्थात्प्रतिज्ञातान्येवेति लक्षणादिप्रतिपादको वक्ष्यमाणसूत्रसन्दर्भः संगच्छेततराम् । अन्यथा ज्ञानेच्छामपुरुषतन्त्रां कर्तव्यत्वेन प्रतिज्ञायेच्छानुपयुक्तानि लक्षणानि प्रतिपादयतः सूत्रकृतो महदकौशलमापद्येत ।

उपसंहारः—

ननु किमेकत्वमत्र लक्षणं, किं वा लक्ष्यं, उतान्यत् किंचित् । आद्ये जगत्कारणत्वमेकत्वं चेति लक्षणद्वयं ब्रह्मणोऽप्यर्थः स्यात् द्वितीयतृतीययोस्तु वाक्यभेदप्रसङ्गः । एकत्वब्रह्माख्ययोः प्रतिपाद्यत्वादिति चेन्मैवम्, आद्ये कारणत्वं तटस्थलक्षणम् । एकत्वं रूपलक्षणं चेत्युभयोः

. . . . . . . द्वितीये कारणमनूद्य एकत्वविशिष्टं ब्रह्म विधीयत इति न वाक्यभेदः। तृतीये तु यत्कारणं तदेकमिति प्रथमं कारणमनूद्यैकत्वं विधाय पश्चाद्यदेकं कारणं तद्ब्रह्मेति कारणमेकत्वसहितमनूद्य ब्रह्मत्वं विधीयत इति बोध्यत इति वाक्यैकवाक्यत्वात् वाक्यम्। तथा च सर्वजगत्कारणस्यैकत्वे ........॥

प्रतिपाद्यविषयः—

जन्माद्यस्य यत इति सूत्रोपरि स्वतन्त्रोऽयं वाक्यार्थविचारः।

वक्तव्यविशेषः—

अमुद्रितः।

No. (272) B 440 जाबाल्युपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2}\times6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—199-202 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं आप्यायन्त्विति शान्तिः॥ अथ हैनं भगवन्तं जाबालिं पैप्पलादिः पप्रच्छ। भगवन्मे ब्रूहि परमतत्त्वरहस्यम्। किं तत्त्वं को जीवः कः पशुः क ईशः को मोक्षोपाय इति। स तं होवाच। साधु पृष्टं सर्वं निवेदयामि यथाज्ञातमिति। पुनः स तमुवाच कुतस्त्वया ज्ञातमिति। पुनः स तमुवाच। षडाननादिति। पुनः स तमुवाच। तेनाथ कुतो ज्ञातमिति। पुनः स तमुवाच। तेनेशानादिति। पुनः स तमुवाच कथं तस्मात्तेन ज्ञातमिति।

उपसंहारः—

भा—एको देवः सर्वभूतेषु गूढ इत्यादिश्रुतिभ्यः देवस्य पशुपतेरेकत्वावधारणाच्च। यद्वा तत्तज्जीवपतिना बहुत्वमास्तां न तावतापि

विरोधोऽस्ति । एवं श्रुत्वा तज्ज्ञानं सगुणब्रह्मावगतिः केनोपायेन जायत इति पृच्छन्तं पैप्पलादं जाबालिरुवाच । विभूतिधारणादेवेति । तत्प्रकारः कथमित्यादि स्पष्टार्थमन्यत्, कैवल्योपनिषदाद्यासु व्याख्यातं च ।

इत्यप्पयदीक्षिताचार्यकृतौ जाबाल्युपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जीवानां पशुत्वं शिवस्य पतित्वं च निर्धार्य भस्मधारणात् पशुपतिज्ञानं जायते इति भस्मधारणं सप्रपञ्चं निरूप्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ॥

## No. (273) B 334 जीवचिन्तामणिः (द्राविडभाषा)

ग्रन्थकर्ता—?
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$4 \times 3\frac{1}{8}$ अङ्गुलानि
लिपिः—तमिलु
पत्राणि—1-62

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—12
कालः (कोशस्य)—47 (सर्वजित्)
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

यत्र सम्यग्जगज्जीवप्रत्यगात्मपरात्मनाम् ।
ज्ञायेत भेदः क्रियते जीवचिन्तामणिस्त्वयम् ॥

புத்திசாலியான ஒரு முமுக்ஷுவானவர் வெகு சாஸ்திரங்களைக் கற்றும் ஜீவனுடைய சொரூப நிலைமை தெரியாமல் சகலவேதபாரங்கதனான ஒரு குருவி யிடத்தில் விசாரித்ததிலவர் சொல்வதாவது ।

இச்சரீரத்திலுள்ளிருந்து சுகதுக்கங்களை புசிக்கிறவனும் மரித்த பண்ணிச் சரீரத்திலிருந்து வெளிக்கொண்டு சொர்க்கலோகத்தை அடைந்து அவிடத்துச் சுகங்களையனுபவித்த பின் மறுபடி பூமியிலுத்தம ஜன்மத்தையடைகிறவனு மெவனோ அவன்தான் ஜீவனென்று சொல்லப்படுவான் ।

उपसंहारः—

**अक्षरात्परतः परः** என்ற அக்ஷரனென்ற காரிய கூடஸ்தனுக்குப் பரன் காரண கூடஸ்தன், அவனுக்குப் பரன் பரமாத்மாவுஞ் சொல்லப்படுகிறபடியால் முன் சொல்லிய உபிள க்குள் ஒருதத்வங்கூடி உயிது சித்தித்ததென்றறிய வேண்டியது ।

**अव्यक्तात्पुरुषः परः** என்ற சுருதியால் பிரகிருதிக்கு மேலான வொரு புருஷனும், " **प्रकृत्यवच्छिन्नतया पुरुषत्वं पुनश्च मे** " ॥ என்ற சுருதியால் பிரகிருதிக் கீழான வொரு புருஷனும் சொல்லப்படுகிறபடியாலிவ்விரண்டு புருஷர்களேயுமோரே சுருதி சொல்லுகின்றது । அதாவது—**तस्य प्रकृतिलीनस्य यः परः स महेश्वर इति ।** பிரகிருதியில் பற்றினவனுக்குப் பரன் மஹேசுவரனென்று இப்படியிருப்பதாலிப்புருஷர்களே ஜீவபிரத்யகாத்மாக்களாகவாவது பிரத்யக்பரமாத்மாக்களாகவாவது அறியலாம் ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे प्रकृतिजीवप्रत्यगात्मपरात्मनां स्वरूपं परस्परं भेदश्च प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अयं ग्रन्थः अमुद्रितः ॥

## No. (274) C 745 जीवन्मुक्तिविवेकः

| | |
|---|---|
| ग्रन्थकर्ता—विद्यारण्यः | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—कागद्पत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—12×4¾ अङ्गुलानि | कालः (कोशस्य)—93 वत्सराः (1847) |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-97 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

वक्ष्ये विविदिषान्यासं विद्वन्न्यासं च भेदतः ।
हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात् ॥
सन्न्यासहेतुर्वैराग्यं यदहर्विरजेत्तदा ।
प्रव्रजेदिति वेदोक्तेस्तद्भेदस्तु पुराणतः ॥
विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च ।
सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके ॥
शक्तो बहूदके तीव्रतरायां हंससंज्ञिते ।
मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने ॥
पुत्रदारधनादीनां नाशे तात्कालिकी मतिः ।
धिक्संसारमितीदृक्स्यात् विरक्तेर्मन्दता हि सा ॥

उपसंहारः—

इन्द्रियोपरतौ न कदाचिदपि निर्विकल्पसमाधेर्विघ्नो भवति । तेषां का स्थितिरिति प्रश्नस्य संक्षेपविस्तराभ्यामुत्तरं पूर्वमुक्तं तदेवात्र पुनरपि हिरण्यनिषेधप्रसङ्गेन स्पष्टीकृतम् । अथ विद्वत्सन्न्यासमुपसंहरति—"पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति" इति। यद्ब्रह्म वेदान्तेषु पूर्णानन्दैकबोधः परमात्मेति निरूपितं तद्ब्रह्माहमस्मीत्येवं सर्वदानुभवन् योगी परमहंसः कृतकृत्यो भवतीति । तथा च स्मर्यते—

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥
जीवन्मुक्तिविवेकेन बन्धं हार्दं निवारयन् ।
पुमर्थमखिलं देयात् विद्यातीर्थमहेश्वरः ॥

इति जीवन्मुक्तिविवेकः समाप्तः (संवत् १८४७.)

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जीवन्मुक्तौ प्रमाणं, तत्स्वरूपं, तस्यां साधनानि तत्त्वज्ञानमनोनाशवासनाक्षयाः, जीवन्मुक्तेः प्रयोजनं, परमहंसोपनिषदुक्तप्रकारेण विद्वत्सन्न्यासश्चेत्येते विषया विचार्यन्ते ॥

वक्तव्यविशेषः—

मुद्रितोऽयं ग्रन्थः ॥

## No. (275) C 1183 जीवन्मुक्तिविवेकः

ग्रन्थकर्ता—विद्यारण्यः
पत्रविशेषः—कागद्पत्रात्मकः
प्रमाणम्—13¼×6 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–58
प्रतिपुटं पङ्क्तयः—22
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—83 वत्सराः (1857)
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 745 कोशवत्।

उपसंहारः—

यदा उभौ ज्ञाननिष्ठौ निर्वासनौ च तदापि वासनाक्षयरूपां जीवन्मुक्तिं परिपालयन्नयं मनोनाशरूपं समाधिः प्रशस्त एव। तस्माद्योगीश्वरस्य श्रेष्ठत्वात्पञ्चप्रयोजनोपेताया जीवन्मुक्तेर्न कोऽपि विघ्न इति सिद्धम्॥ संवत् 1857.

इति जीवन्मुक्तिप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

C 745 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे स्वरूपसाधनप्रयोजनप्रकरणान्तानि चत्वारि प्रकरणानि विद्यन्ते॥

## No. (276) 1968/4 जीवप्रबोधः

ग्रन्थकर्ता—?
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—14¼×1¾ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—105–110
प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—52
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रम:—

विजानासि परं बुद्धेः वीतसंसारविभ्रमः।
प्रसादाद्यस्य विज्ञानं तस्मै श्रीगुरवे नमः॥

प्रसादाद्यस्य संमोहं मय्येवेदं च कल्पितम्।
तत्त्वमसीत्थं विजानामि तं गुरुं प्रणतोऽस्म्यहम्॥

सद्रूपं सर्वभूतस्थं चिद्रूपं प्रणवात्मकम्।
नित्यानन्दमयं रामं नादसंज्ञं नतोऽस्म्यहम्॥

तापत्रयाग्नितप्तानां भवाम्भोधौ निमज्जताम्।
शरण्यो विष्णुरेवेति प्राहुरार्याः सनातनाः॥

तमीशं सर्वभूतस्थमजानानः पुनःपुनः।
निमज्जामि भवाम्भोधावहो पश्य ममाज्ञताम्॥

किं नित्यं किमनित्यं वा किमिदं केन भास्यते।
कोऽहं वा किं मनश्चैवं न स्मरामि कदाप्यहो॥

उपसंहारः—

अखण्डसच्चिदाकारं सर्वात्मकमनश्वरम्।
बुध्यैवाहमिति ज्ञात्वा विचरामीह गामहम्॥

प्रसादाद्गुरुवर्यस्य प्रसादात्परमेश्वरात्।
ब्रह्मैवेदं विजानानो विच ............... .... ॥

चेष्टमानं वपुः पश्यन्निदमन्यशरीरवत्।
देहेन्द्रियगुणातीतो विच ..... .......... ... ॥

स्वात्मतीर्थं परित्यज्य अहो नित्यमखण्डितम्।
इदं तीर्थमिदं तीर्थमिति मुह्यन्ति साधवः॥

मनोमयानि तीर्थानि विहाय सकलात्मके।
अहं तु स्वात्मतीर्थे वै निमज्जामि पुनःपुनः॥

इम जीवप्रबोधं यः पठेच्छ्रद्धासमन्वितः।
वीतसंसारसन्तापः ससुखं समवाप्नुयात्॥

इति जीवप्रबोधः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे शरीरेन्द्रियादिभ्यो विश्वादिभ्यश्च विलक्षणं जीवस्वरूपं प्रतिपाद्य, तस्य सर्वात्मना शुद्धब्रह्मणा एकत्वं प्रतिपाद्यते।

वक्तव्यविशेषः —

अयं ग्रन्थः समग्रः। अमुद्रितश्च दृश्यते।

## No. (277) B 526 जीवराजविजयः

| | |
|---|---|
| ग्रन्थकर्ता—अमरेश्वरशास्त्री | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$7\frac{3}{4}\times6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—85-121 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यत्तत्त्वं निखिलस्य यत्र निवसत्येतत्समस्तं जग-
द्यत्सत्तान्वयतोऽस्य सत्त्वमिह यद्भासाऽखिलस्यास्य धीः।
यत्साक्षात्कृतिरात्मतत्त्वविषयाऽज्ञानापहारक्षमा
तत्तेजो हृदि भावयेऽहमभयं श्रीदक्षिणास्याभिधम्॥ १-५॥

जीवबन्धपरिमोचनार्थिभिर्जीवजन्मफललिप्सुभिर्बुधैः।
जीवराज्यसुखदो मयोदितो जीवराजविजयो विचार्यताम्॥ ६॥

इह जन्मनि जन्मान्तरे वा सम्यगनुष्ठितनिष्कामकर्मोपासनाराधिताराध्यपादश्रीदक्षिणामूर्तीश्वरकरुणाकटाक्षवीक्षणप्रभावपरिलब्धनिरुपाधिकृपानिधिश्रीगुरुसद्भक्तिपरिपाकपरिशुद्धहृदयाः संसारतापसन्तप्ताः स्वस्वरूपजिज्ञासवः संसारसागरादुत्तितीर्षवोऽधिकारिणो ब्राह्मणाः संसारसागरं समुत्तीर्य मोक्षसाम्राज्यस्वरूपं परं पारमासाद्य सुखिनो भवन्त्विति मनीषया स्वानुभवावष्टम्भेन जीवराजविजयं विचारयामः॥

उपसंहारः—

मनःप्रसादशिखरारूढजगन्मिथ्यात्वभावनास्वात्मसत्यत्वभावना-पूर्णानन्दात्मभावनाप्रभृतिपरयुवतिजनकराग्रविक्षिप्तनैराश्यनैश्चिन्त्यनै—ष्कर्म्यमार्दवार्जवौदार्यौदासीन्यसौजन्यसौशील्याद्यनेकप्रफुल्लपुष्पस्तबकालंकृतपुण्यशरीरमहोन्नतो देही जगत्प्रतिभासप्रदप्रारब्धमार्गेण गच्छन् पूर्णाहंकारप्रासादशिखरारूढः सन् उपनिषद्देवीगुर्वीश्वरभक्तिश्रद्धा-समृद्धिरूपजरच्चिरण्टीसविनयसंप्रदर्शितस्वस्वरूपविज्ञानकर्पूरनीराजनः स्वस्वरूपसाम्राज्याभिषिक्तो मोक्षलक्ष्मीसमालिङ्गितः परमानन्दमवाप।

इति मोक्षविचारो द्वितीयं प्रकरणम्

इति श्रीसर्वदेवतासार्वभौमश्रीमोक्षसाम्राज्याधीश्वरश्रीदक्षिणामूर्तीश्वरचरणप्रसादपरिलब्धपरम-भाग्यसत्फलभूताद्वैतमहाविद्यामहाधनेन कन्भम्पापिकुलजलधिपूर्णसुधाकरेणामरेश्वरशास्त्रिणा स्वानुभवानुरोधेन विरचितं बन्धमोक्षविचाररूपं जीवराजविजयसमाख्यवेदान्तप्रकरणं

समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे, अखण्डसच्चिदानन्दब्रह्मस्वरूप एव अनाद्यविद्यया प्राप्तजीवभावः स्वस्वरूपाज्ञानात् बन्धमनुभूय, प्राग्भवीयपुण्यकर्मपरि-पाकवशात् सद्गुरुसकाशाल्लब्धज्ञानोपदेशः मुक्तो भवतीति बन्धज्ञान-मोक्षाणां स्वरूपप्रतिपादनपूर्वकं विचार्यते।

वक्तव्यविशेषः—

अमुद्रितः॥

## No. (278) 2035/12 जीवेश्वरप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—164-169 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

तत्त्वमस्यादिवाक्यार्थज्ञानेच्छूनां मनोमुदे ।
तत्त्वंपदार्थजीवेशस्वरूपं च विचार्यते ॥

तत्र जीवो नाम अन्तःकरणान्तःकरणाधिष्ठानचैतन्यमन्तःकरणप्रतिबिम्बितचैतन्यमेतत्त्रयं मिलित्वा जीव इत्युच्यते। नन्वन्तःकरणस्यैव जीवत्वमस्त्विति चेज्जडत्वाविशेषाद्धटस्यापि जीवत्वापत्तिः। इत्यादिः॥

उपसंहारः—

तमोरजस्सत्त्वगुणा प्रकृतिर्द्विविधा च सा।
सत्त्वशुध्द्यविशुद्धिभ्यां मायाविद्ये च ते मते।
मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः।

इत्येवं जीवेश्वरस्वरूपं विचार्य एतौ जीवेश्वरौ मायाकल्पिताविति निश्चित्य एतज्जीवेश्वराधिष्ठानभूतः निर्विकारः निरवयवोऽसङ्गः परिपूर्णः स्वप्रकाशः सर्वसाक्षी प्रत्यगात्मा अहमिति यो निश्चिनोति स एव जीवन्मुक्त इति सर्ववेदान्तसिध्दान्त इति सर्वं रमणीयम् ॥

इति जीवेश्वरप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जीवेश्वरयोः स्वरूपं सम्यग्विचार्यते।

वक्तव्यविशेषः—

अमुद्रितः।

## No. (279) C 1200/2 ज्ञाननिवर्त्यत्वविचारः

| | |
|---|---|
| ग्रन्थकर्ता—त्र्यम्बकशास्त्री | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—58 |
| प्रमाणम्—$13\frac{1}{4}\times4\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरी लिपिः | स्थितिः—समीचीना |
| पत्राणि—1–9 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः---

ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम्। न चोत्तरज्ञाननिवर्त्ये पूर्वज्ञाने सिद्धसाधनम्; मुद्गरपातादिनिवर्त्ये च घटादौ (अव्याप्तिः) बाधश्चेति वाच्यम्; ज्ञानप्रयुक्तावस्थितिसामान्याभावकत्वस्य विवक्षितत्वात्। अवस्थितिश्च द्वेधा, स्वरूपेण कारणात्मना च सत्कार्यवादाभ्युपगमात्। एवं च घटादेः स्वरूपेणावस्थित्यभावस्य मुद्गरपातादिप्रयुक्तत्वेऽपि कार्यकारणात्मनावस्थितिसाधारणोक्तावस्थितिसामान्याभावस्य ब्रह्मज्ञानप्रयुक्तत्वाभावान्नाव्याप्तिर्न वा सिद्धसाधनम्। अत एव न वियदादेर्ब्रह्महत्यादेरिवसेतुदर्शनादिना ब्रह्मज्ञानेन नाशसिद्धावपि मिथ्यात्वासिध्या अर्थान्तरम्॥

उपसंहारः---

यद्धर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वं तद्धर्मवत्वं वा सत्वम्, सत्वं चाबाध्यत्वोपलक्षिततादात्म्यम्, न च शुद्धचित्त इन्द्रियाद्यगोचरत्वात्तादात्म्येन प्रतीयमानत्वमसंभवीति वाच्यम्; सत्वोपलक्षितस्यानैन्द्रियकत्वेऽपि शाब्दधीवृत्तिविषयत्वाभ्युगपगमेनासंभवानवकाशात्। तस्य वृत्त्यविषयत्वपक्षे तु अबाध्यत्वोपहिततादात्म्यमेव। तत्तादात्म्यमपि स्वस्मिन्स्वरूपसंबन्धेन वर्तत एव। तेन न तत्राव्याप्तिः। न च प्रथमलक्षणे "अत्र रूप्यमसि" त्यध्यस्तेऽव्याप्तिः तत्रापीदं तादात्म्यमित्या ........।

प्रतिपाद्यविषयः---

अस्मिन्ग्रन्थे "ज्ञाननिवर्त्यत्वं वा मिथ्यात्वं" इत्यद्वैतसिद्धिग्रन्थोपरि स्वतन्त्रो वाक्यार्थो विचार्यते॥

वक्तव्यविशेषः---

अयं ग्रन्थः अमुद्रितः।

## No. (280) 447 ज्ञानवासिष्ठसारसङ्ग्रहः

ग्रन्थकर्ता—?
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\frac{3}{4}\times1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-60
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः (किंचिन्न्यूनः)

उपक्रमः—

नित्याय परिपूर्णाय निर्विकारचिदात्मने।
अखण्डानन्दरूपाय दक्षिणामूर्तये नमः॥
कटाक्षवीक्षाक्षपितशिष्यसङ्घतमस्ततिम्।
वन्दे वन्दितमौनीन्द्र . . . . शिवं गुरुम्॥
सारः संगृह्यते ज्ञानवासिष्ठेऽनुभवार्थिनाम्।
जीवन्मुक्तिसुखानन्दमकरन्दरसाश्रयः॥

तत्र तावत्सकलकल्याणगुणाभिरामो रामः स्वतो निरवद्यनिखिलविद्यानिषद्यायमानमानलोऽपि सम्प्रदायप्रदर्शनाय गुरुकुले वसन् महामोहमये महति संसारसागरे निमग्नं लोकं उद्दिधीर्षुः स्वमुखेन स्वगुरुमुखेन च प्रश्नोत्तराभ्यामपवर्गमार्ग मुपदिदेश। तदेतद्भगवान् वाल्मीकिः लोकानुग्रहाय काव्यबन्धेन संजगृहे। वसिष्ठोपदेशप्रवृत्तत्वाच्च वासिष्ठमिदं मोक्षशास्त्रम्। तत्र च वैराग्यं मुमुक्षुत्वमुत्पत्तिः स्थितिरुपशमो निर्वाणमिति षट्प्रकरणानि। अथ प्रारीप्सितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय कृतं मङ्गलं ग्रन्थतो निबध्नाति॥

दिवि भूमौ तथाकाशे बहिरन्तश्च मे विभुः।
यो विभात्यवभासात्मा तस्मै सर्वात्मने नमः॥

अत्र च .... ... ... ....।

उपसंहारः—

व्युत्थानदशायां वनावनिविहारेण समाधौ प्रायश्चित्तोपशमशोभिना असङ्गसुखसौख्येन शब्दादिसङ्गसुखादन्यद्यत्सौख्यं तेनाद्यमानं सङ्गसुखं येषां तेषां आत्मारामाणां यत्सौख्यं तेनेति वा स्वरूपसुखमुच्यते। न च

कालं जीवितं नयति इयं वस्तुदृष्टिरसंसर्गाभिधायां भूमिकायां ज्ञानकक्ष्यावसेयमित्यर्थः। भूमिकात्रितयात्वेतद्राम जाग्रदिति स्मृतम्। यथावद्भेदबुध्द्यैवं जाग्रज्जाग्रति दृश्यते॥ एतत्पूर्वोक्तं भूमिकात्रितयं जाग्रदिति स्मृतम्। ततः अस्यां भूमिकायां जाग्रदिव .... सुष्ठु भेदबुध्यनुवर्तनात्॥ भूमिति श्लोकत्रयं वाक्यम्॥ .... .... ....

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ज्ञानवासिष्ठगत-वैराग्य-मुमुक्षुत्व-उत्पत्तिस्थिति-उपशम-निर्वाणाख्यानां षण्णां प्रकरणानां सारभूतोऽर्थः संगृह्यते॥

वक्तव्यविशेषः—

अमुद्रितः।

No. (281) C 2033 ज्ञानसर्वस्वसङ्ग्रहः

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहः | प्रतिपुटं पङ्क्तयः—36 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—32 |
| प्रमाणम्—$11\frac{1}{2} \times 9$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-64 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यस्यादिशेषार्यगुरोः प्रसादादहं विमुक्तोऽस्मि शरीरबन्धात्।
अखण्डसच्चित्सुखदायकस्य तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम्॥

यस्याचार्यस्य प्रसादादनुग्रहात् शरीरबन्धात्संसारबन्धादहं विमुक्तोऽस्मि तस्याखण्डसच्चित्सुखदायकस्य आदिशेषार्यगुरोरङ्घ्रिपद्मं नित्यं प्रणतोऽस्मीत्यन्वयः। अनेन गुर्वनुग्रहादनर्थनिवृत्तिरानन्दावाप्तिश्च प्रदर्शिता। तथाहि—अस्यश्लोकस्य पूर्वार्धेन यस्य आदिशेषार्यगुरोः प्रसादादहं विमुक्तोऽस्मि शरीरबन्धादिकं गुर्वनुग्रहाल्लब्धकर्तृत्वभोक्तृत्वादिसमस्तानर्थनिवृत्तिः प्रतिपादिता।

उपसंहारः--

इति परमरहस्यं वेदवेदान्तसारं हृतभवभयबाधं ज्ञानसर्वस्वरूपम्।
गुरुवरपदभक्त्या प्राप्तविद्याय देयं विरहितघनभक्तिश्रेयसे नैव देयम्॥

एतत्संक्षेपतः प्रोक्तं मयालोच्य पुनः पुनः।
अस्मिञ्छास्त्रार्थसर्वस्वं श्रद्धां कुरुत सज्जनाः॥

प्रमादादप्रमादाद्वा यदज्ञानान्मयोदितम्।
तत्क्षाम्यन्तु समालोकय पण्डिताः समदर्शिनः॥

इति श्रीनृसिंहविरचिते ज्ञानसर्वस्वसङ्ग्रहे स्वरूपानुसन्धानप्रकारमङ्गलाचरणं नाम प्रकरणं द्वादशम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे—गुरूत्कर्षः, अधिकारिस्वरूपं, नित्यानित्यावस्तुविवेकः, शमादिषट्कसम्पत्तिः, सत्सङ्गप्रशंसा, तल्लक्षणं, जगदुत्पत्तिः, उत्पन्नस्य जगतो ब्रह्माभिन्नत्वं, जीवन्मुक्तिः, सर्वसङ्गपरित्यागो ब्रह्मणि विश्रान्तिरित्यादिकं प्रतिपाद्यते।

वक्तव्यविशेषः—

अमुद्रितः।

## No. (282) B 544 ज्ञानसर्वस्वसङ्ग्रहः

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—$7\frac{3}{4}\times6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—4-7-1901 |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-236 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

C 2033 कोशवत्।

उपसंहारः—

C 2033 कोशवत्।

प्रतिपाद्यविषयः—

C 2033 कोशवत्।

वक्तव्यविशेषः—

C 2033 कोशवत्। किन्तु, अस्मिन्कोशे ग्रन्थान्ते २३६ तमपत्रे "प्रदक्षिणपुरशान्तप्पशास्त्रितनूजेन गुरुशान्तदेवेन पुरातनमातृकापुस्तकानुसारेण प्लवसंवत्सराधिकाषाढकृष्णतृतीयावधिसमग्रं लिखितमित्यस्ति।

No. (283) 4659/7 ज्ञानाज्ञानप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—आदिशेषार्यः | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—$12\frac{1}{2}\times 1$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—113-121 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ज्ञानाज्ञाने विचार्येते कारणे बन्धमोक्षयोः।
अनुग्रहार्थं लोकानां मया शास्त्रप्रदर्शिते॥

ज्ञानाज्ञानस्वरूपमिदानीं विचार्यते। ज्ञानं च स्वस्वरूपयाथार्थ्यज्ञानम्। स्वस्वरूपयाथार्थ्याज्ञानमज्ञानम्। किं च अहं ब्रह्मास्मीत्यनुभवः ज्ञानम्। अहं मनुष्य इत्यनुभवः अज्ञानम्। अपि च अद्वितीयापरिच्छिन्नासङ्गाकर्त्रभोक्तृत्वेनात्मानुभवः ज्ञानम्। सद्वितीयपरिच्छिन्नसङ्गिकर्तृभोक्तृत्वेनात्मानुभवः अज्ञानम्। नन्वद्वितीयादिस्वरूपस्यात्मनः सद्वितीयत्वादिज्ञानं कथमिति चेदुच्यते। इत्यादि॥

उपसंहार:—

एवमात्मनोऽसङ्गत्वं ज्ञेयम्। तथाहि—देहेन्द्रियाद्यध्यासेनाहं भोक्तेति भोक्तृत्वं प्रसक्तम्। तच्च विचार्यमाणे नास्ति। आत्मनोऽद्वितीयत्वेन अन्यस्य भोग्यवस्तुनोऽभावादभोक्तृत्वमेव। एवं विचार्य अद्वितीयः असङ्गी अपरिच्छिन्नः अकर्ता अभोक्ता यः स एवाहमिति यो जानाति स एव मुक्त इति सकलवेदान्तसिद्धान्त इति सर्वं रमणीयम्॥

इति श्रीमदादिशेषार्यगुरुविरचितं ज्ञानाज्ञानप्रकरणं समाप्तम्

प्रतिपाद्यविषय :—

अस्मिन्ग्रन्थे ज्ञानाज्ञाने सम्यग्विचार्येते॥

वक्तव्यविशेष:—

अयं ग्रन्थः अमुद्रितः॥

## No. (284) 2035/3 ज्ञानाज्ञानप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—आदिशेषार्यः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13×1½ अङ्गुलानि | काल: (कोशस्य)—? |
| लिंपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—107-117 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

4659/7 कोशवत्।

उपसंहारः—

4659/7 कोशवत्।

प्रतिपाद्यविषयः—

4659/7 कोशवत्।

वक्तव्यविशेषः—

4659/7 कोशवत्।

## No. (285) 1968/6 ज्ञानामृतम्

ग्रन्थकर्ता—?
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$14\frac{1}{3} \times 1\frac{3}{8}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—111-112

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—52
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

देहेन्द्रियगुणातीतं सर्वप्रत्ययसाक्षिणम् ।
भावयन्तं स्वमात्मानं शिवरामगुरुं भजे ॥

दृग्रूपेण विलाप्यैतत्तदाकारतया स्थितः ।
प्रसादाद्गुरुवर्यस्य यस्य तं प्रणतोऽस्म्यहम् ॥

सर्वभूतान्तरस्थाय जगत्प्रत्ययहेतवे ।
ज्ञप्तिमात्रस्वरूपाय वासुदेवाय ते नमः ॥

सर्वेषामात्मलाभाय सर्वभूतात्मवेदनम् ।
यदहं तत्प्रवक्ष्यामि लोकालोकप्रकाशकम् ॥

घटोऽयं पट इत्येतज्ज्ञानमर्थप्रकाशकम् ।
सर्वलोकप्रसिद्धत्वान्नेति वक्तुं न शक्यते ॥

सर्वेभावास्ततो दृश्याः प्रकाश्यन्ते ह्यचेतनाः ।
विविधोपाधियुक्तेन ज्ञानेनैतेन सिध्यति ॥

उपसंहारः—

ततः प्रमाणसंज्ञेन वृत्त्युपाधिचिदात्मना ।
निर्गतेनेन्द्रियद्वारा शब्दादिः प्रविभास्यते ॥

अखण्डैकाद्वयोऽप्यात्मा बहुधा भाति तन्मयः ।
स्वसंकल्पोत्थितैर्भावैः समाक्रान्त इवात्मनि ॥

तदेतदिति संकल्पं ततस्त्यक्त्वा जडात्मकम् ।
स्वयं प्रकाशचिन्मात्रमात्मत्वेनावधारयेत् ॥

संकल्परहितं ज्ञानं नित्यमेकं निराश्रयम् ।
अखण्डमनिदं सत्यं स एवात्मेति गीयते ॥

अज्ञेयमिति संकल्पं त्यक्त्वा भावप्रकाशकम् ।
विशुद्धं चिन्मयं नित्यं वासुदेवं सदा भजे ॥

एतज्ज्ञानामृतं लोके यः पिबत्याशु विज्वरः ।
स संकल्पगुणातीतं पदमेकं प्रपद्यते ॥

इति ज्ञानामृतं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे चिद्रूपात्मैव सर्वत्र तत्तदुपाधिभेदेन घटोऽयं घटः सन्नित्यादिरूपेण भासते, स्वयंनिरस्तसर्वोपाधिरिति एतादृशज्ञानवान्मुच्यते इति च प्रतिपाद्यते ॥

वक्तव्यविशेषः—

असुद्रितः ।

## No. (286) 3004 तत्त्वकौस्तुभः

| | |
|---|---|
| ग्रन्थकर्ता—भट्टोजिभट्टः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—68 |
| प्रमाणम्—$18\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–107 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

विश्वेशं सच्चिदानन्दं वन्देऽहं योऽखिलं जगत् ।
चरीकर्ति बरीभर्ति संजरीहर्ति लीलया ॥

केलदीवेंकटेन्द्रस्य निदेशाद्विदुषां मुदे ।
ध्वान्तोच्छित्तौ पटुतरस्तन्यते तत्त्वकौस्तुभः ॥

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः ।
शांकरादथ भाष्याब्धेस्तत्त्वकौस्तुभमुद्धरे ॥

इह खलु केचन पाञ्चरात्राद्यागमांस्तदनुसारिपुराणभागांश्चोपजीव्य तदधिकारितत्त्वमपर्यालोचयन्तः श्रौतस्मार्तमार्गं त्यजन्ति त्याजयन्ति च। तान् सम्यक्छिक्षयितुं तन्त्राद्यधिकारी तावन्निरूप्यते। तत्रायं सिद्धान्तः—

शापाद्वा गौतमादीनां पापाद्वा महतो नराः।
ये गता वेदबाह्यत्वं ये च संकीर्णयोनिजाः॥
तेऽधिक्रियन्ते तन्त्रादौ स्त्रीशूद्राश्च यथातथम्॥

तथाहि कौर्मे चतुर्द(पञ्चद)शाध्याये—

तेषां मायावशाज्जातं गोवधं गौतमो मुनिः।
केनापि हेतुना ज्ञात्वा शशापातीव कोपनः॥

उपसंहारः—

यदि वाक्यशेषानुक्रमणिकादिविरुद्धं स्वेच्छया व्याकरोषि तर्ह्यति-प्रसङ्गः। अयं ते योनीति मन्त्रे नग्न इति पदं स्थित्वा नग्नः सन्नारोहेति योजनामाश्रित्य मातृगमनकर्तव्यतायाअपि त्वया स्वीकर्तव्यापत्तेः। तस्मात्सकलवैदिकमर्यादां न्यायोपष्टम्भं चोल्लङ्घ्य प्रवृत्तमिदं मध्वदर्शनं प्रामाणिकै रक्षणीयमिति स्थितम्। एवं स्थिते सति श्रीशंकरभगवत्पाद-कृतं निसर्गोज्ज्वलं वाचस्पतिमिश्रप्रभृतिभिः पण्डितवरैर्निष्कर्षं प्रापितं शारीरमेव भाष्यमं .... तः॥

इति श्रीमद्विद्वन्मकुटमाणिक्यलक्ष्मीधरभट्टसूनुभट्टोजिभट्टविरचिते तत्त्वकौस्तुभे द्वितीयपरिच्छेदे चतुर्थाध्यायस्य चतुर्थः पादः

प्रतिपाद्यविषयः—

मध्वखण्डनपरेऽस्मिन्ग्रन्थे प्रथमपरिच्छेदे पाञ्चरात्राद्यागमादिषु अधिकारिनिर्णयः, द्वितीये च तदीयशारीरकभाष्योपरि प्रत्यधिकरणं दोषानुद्घाट्य विचार्यते॥

वक्तव्यविशेषः—

अयं ग्रन्थोऽमुद्रितः। अस्मिन्कोशे समग्रश्च दृश्यते।

## No. (287) 4314 तत्त्वकौस्तुभः

ग्रन्थकर्ता—भट्टोजिभट्टः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—18×1½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-214
प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—86
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3004 कोशवत्।

उपसंहारः—

3004 कोशवत्।

प्रतिपाद्यविषयः—

3004 कोशवत्।

वक्तव्यविशेषः—

3004 कोशवत्।

## No. (288) 390 तत्त्वकौस्तुभः

ग्रन्थकर्ता—भट्टोजिभट्टः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—18×1½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-80
प्रतिपुटं पङ्क्तयः—20
प्रतिपङ्क्त्यक्षराणि—86
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3004 कोशवत्।

उपसंहारः—

3004 कोशवत्।

प्रतिपाद्यविषयः—

3004 कोशवत्।

वक्तव्यविशेषः—

3004 कोशवत्।

## No. (289) C 1511 तत्त्वकौस्तुभः

ग्रन्थकर्ता—भट्टोजिभट्टः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$9\frac{3}{4} \times 4\frac{1}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-11
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—36
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

3004 कोशवत्।

उपसंहारः—

बलित्था वसन्ते वसन्ते इन्द्र आगच्छेत्यादौ स्वेच्छामात्रेणोपक्रमोपसंहार इति आगमनिरुक्तव्याकरणादिविरुद्धार्थान्वदन्तं केन स्याद्वाक्यस्यार्थत्रयं तद्व्यवस्थां कुर्वाणं वैदिकाभरसं कुर्वाणं माध्वं प्रति पवित्रं ते चमूषदित्यादयो बाह्यश्रुतयस्तप्तमुद्रानिषेधपरतया सुयोज्याः। वेदविप्लावनप्रयुक्तप्रत्यवायभयात्तु न तथा योज्यन्ते। अहृदयवाचामितिन्यायेन परं पिशाचभाषयापिशाचं बोधयितुं दिङ्मात्रमुक्तम्। न तु वास्तवाभिप्रायेणेति क्षन्तव्यमिदं साहसिकत्वं सूरिभिः॥

इति तत्त्वकौस्तुभे प्रथमः परिच्छेदः

प्रतिपाद्यविषयः—

3004 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमपरिच्छेदमात्रं विद्यते॥

## No. (290) C 515 तत्त्वकौस्तुभः

| | |
|---|---|
| ग्रन्थकर्ता—भट्टोजिभट्टः | प्रतिपुटं पङ्क्तयः—48 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—62 |
| प्रमाणम्—12×5½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–20 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

3004 कोशवत् ।

उपसंहारः—

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् । मनसश्च विज्ञानमिति व्यपदेशो न विज्ञानतत्त्वापेक्षया, किं तु चराचरेष्वालोचनाद्विज्ञानं भवतीति भागापेक्षः । विज्ञानतत्त्वं तु मनसः कारणम्, न तु कार्यम् । उक्तं च स्कान्दे—

पदादव्यक्तमुत्पन्नमव्यक्तात्तु महान् तथा ।
विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात् ॥

विज्ञानतत्त्वात्तु महत इत्यादि । पर . . . . . ।

प्रतिपाद्यविषयः—

3004 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयाध्यायतृतीयपादे चराचरव्यपाश्रयाधिकरणपर्यन्तं (2–3–16) वर्तते ॥

## No. (291) 4107 तत्त्वचन्द्रिका

| | |
|---|---|
| ग्रन्थकर्ता—उमामहेश्वरः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—72 |
| प्रमाणम्—17 ×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—किंचिच्छिथिला |
| पत्राणि—1–194 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

हस्ताभ्यां पुस्तकं शस्तं व्याख्यामुद्रां च बिभ्रतम्।
जटाधरन्तपोनिष्ठं मुञ्जिकेशम्मुनिं भजे॥
श्रेयांसि मम भूयांसि दत्तात्किमपि दैवतम्।
अर्धाङ्गमङ्गना यस्य शेखरः क्षणदाकरः॥
हरलीलावताराय शंकराय परौजसे।
कैवल्यकलनाकल्पतरवे गुरवे नमः॥
गुरून् प्रज्ञाजितगुरून् नमाम्यक्षयशालिनः।
प्रविष्टो निगमान्ताब्धिर्यदनुग्रहनौकया॥
उमामहेश्वरज्ञेन वेल्लालकुलजन्मना।
क्रियते निर्गुणब्रह्ममीमांसातत्त्वचन्द्रिका॥
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेद इति मन्वादयो जगुः॥
सर्ववेदान्तवाक्यानामुपबृंहणसंमता।
भगवत्पूज्यपादीया व्याकृतिः परिदृश्यते॥

ओं अथातो ब्रह्मजिज्ञासेत्यारभ्य अनावृत्तिः शब्दादनावृत्तिः शब्दादित्येवमन्ते ब्रह्ममीमांसाशास्त्रे संशयः। किमिदं जीवब्रह्माभेदजगन्मिथ्यात्वरूपमाहोस्वित्तद्भेदतत्सत्यत्वपरमिति। कुतः संशयः? तत्तद्विरुद्धार्थानेकसूत्रदर्शनादिति ब्रूमः।

उपसंहारः—

सङ्कल्पादेव तु तच्छ्रुतेः, कार्यं बादरिरस्य गत्युपपत्तेरित्यादीनि बहून्यधिकरणानि फलाध्यायगतानि प्रागेव परीक्षितानि। तदेवं रामानुजश्रीकण्ठादिकृतब्रह्मसूत्रविज्ञानस्य सङ्ख्यावद्भिः सकलप्रमाणविरुद्धत्वेन प्रत्याख्येयत्वात् सकलवेदवेदोपबृंहणन्यायानुगृहीतस्य भगवत्पादीयविवरणस्यैवातिरमणीयत्वेन शरणीकरणीयत्वात् अथातो ब्रह्मजिज्ञासेत्यारभ्य अनावृत्तिः शब्दादित्येवमन्तं कृत्स्नब्रह्ममीमांसाशास्त्रं जीवब्रह्माभेदजगन्मिथ्यात्वपरमिति सिद्धम्॥

इति वेल्लालकुलसंभूतेन उमामहेश्वरेण विरचितायां तत्त्वचन्द्रिकायां
फलाध्यायविचारो नाम द्वादशोल्लासः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे द्वादशभिरुल्लासैः प्राधान्येन श्रीकण्ठरामानुजादिमत-निराकरणपूर्वकं जीवब्रह्माभेदः, जगन्मिथ्यात्वं च सम्यक्प्रतिपाद्य तदेव सकलवेदान्तमुख्यतात्पर्यविषय इति निरूप्यते। तत्र प्रथमे उल्लासे श्रुतितात्पर्यनिरूपणम्, द्वितीये भेदनिरासः, तृतीये जीवाणुत्वखण्डनम्, चतुर्थपञ्चमयोः पराभिमतं ब्रह्मस्वरूपं, तत्र ब्रह्मशब्दप्रयोगश्च अनुपपन्न इति प्रतिपादनम्, षष्ठे जिज्ञासाधिकरणविचारभङ्गः, सप्तमे जन्माद्यधि-करणविचारभङ्गः, अष्टमे शास्त्रयोनित्वाधिकरणविचारभङ्गः, नवमे समन्वयाधिकरणविचारभङ्गः, दशमे तदनन्यत्वाधिकरणविचारभङ्गः, एकादशद्वादशयोः तृतीयतुरीयाध्यायविचारनिरास इति ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते॥

## No. (292) A 157 तत्त्वचन्द्रिका

| | |
|---|---|
| ग्रन्थकर्ता—उमामहेश्वरः | प्रतिपुटं पङ्क्तयः—48 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—12½×8 अङ्गुलानि | कालः (कोशस्य)—22-5-07 |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-199 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

4107 कोशवत्।

उपसंहारः—

4107 कोशवत्।

प्रतिपाद्यविषयः—

4107 कोशवत्।

वक्तव्यविशेषः—

4107 कोशवत्।

## No. (293) 219 तत्त्वदीपनम्

ग्रन्थकर्ता—अखण्डानन्दयतिः
पत्रविशेषः – तालपत्रात्मकः
प्रमाणम्—$14\frac{1}{2}\times1\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–198
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—68
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

यद्बोधसमुद्भूतं यद्बोधात्प्रविलीयते ।
नामरूपात्मकं विश्वं तस्मै पूर्णात्मने नमः ॥

नानाविधनिबन्धाह्वप्रसूनरसमादरात् ।
निबन्धमधु संगृह्य क्रियते तत्त्वदीपनम् ॥

पञ्चपादिकां व्याचिख्यासुर्ग्रन्थकरणयोग्यतार्थं परां देवतां प्रार्थयते आद्यश्लोकेन। "यमेवैष वृणुते तेन लभ्य" इतीश्वराधीनत्वं विद्याया लक्ष्यते। विदुषश्च ग्रन्थकरणाधिकारात्परदेवताप्रार्थनमुचितम् । अत्रैषा-क्षरयोजना। ननु नमस्कार्यं सदचेतनं चेतनं वा। आद्ये न नमस्कार्यता। द्वितीयेऽपि किं जीवात्मा उत ब्रह्म। प्रथमे किं नमस्कर्तुरनन्यत्, उतान्यत्। नाद्यः; नमस्कर्तृनमस्कार्यभावस्यैकस्मिन्नयोगात् । द्वितीयेऽपि किं तात्त्विकमुतातात्त्विकम्। आद्येऽद्वैतक्षतिः। अन्त्ये न सच्छब्दं स्यात् ॥

उपसंहारः—

सूत्रार्थस्य......... त्प्रतिपदं व्याख्यामारभते भाष्यकार इत्युक्त-मयुक्तमित्याशंक्य तात्पर्यकथनवत्पदव्याख्यानमपि कर्तव्यम्। पदच्छेदः पदार्थोक्तिरित्यादेर्व्याख्यालक्षणत्वादित्याशयेनाह—तत्राथशब्द इति। बन्धस्याध्यासात्मकत्वात्प्रत्यग्ब्रह्मैक्यलक्षणो विषयोऽनर्थनिवृत्तिलक्षणं प्रयोजनं चेति। ततस्त्वसंभावितविषयफलत्वाद्वेदान्तशास्त्रमारम्भणीय-मिति प्रथमवर्णकसिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याखण्डानुभूतिशिष्येण अखण्डानन्दमुनिना विरचिते तत्त्वदीपने प्रथमवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

पञ्चपादिकाविवरणव्याख्यारूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः —

अस्मिन्कोशे प्रथमवर्णकव्याख्यामात्रं संपूर्णं वर्तते ॥

## No. (294) 487 तत्त्वदीपनम्

| | |
|---|---|
| ग्रन्थकर्ता—अखण्डानन्दयतिः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः —ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—76 |
| प्रमाणम्—15×1½ अङ्गुलानि | कालः—(कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-184 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

विचारविद्ध्यपेक्षितविषयफलाधिकार्यनुबन्धानां मध्ये विषयफले तावत्प्रतिपादिते। अर्थादधिकार्यपि सिद्ध एवेति किं सिद्धैव ननु ब्रह्मजिज्ञासेत्यादिना। न च विचारविषयप्रतिपादनार्थं वर्णकान्तरारम्भ इति शङ्क्यम्। असन्दिग्धतया अप्रतिपाद्यत्वात्। गतार्थत्वागतार्थत्वाभ्यां सन्देहेऽप्येतद्विचारस्यैव प्राथम्यं किं न स्यादित्याशङ्क्य तात्पर्यमाह-तत्रेति। फलमेवानुबन्धः फलानुबन्धः। अनुबध्यते संबध्यते विधिनेत्यनुबन्धः। व्यवहितेति पदच्छेदः॥

उपसंहारः—

"हिरण्यदा अमृतत्वं भजन्ते" इत्यादिश्रुतिबलात् कर्मणैव मोक्ष इति शंकां निरस्यति—फलेति। ब्रह्मज्ञानोत्तरकालमपि प्रमातृत्वादिकं किं न स्यादित्याशंक्यान्तःकरणैक्याध्यासनिबन्धनं हि प्रमातृत्वम्। तस्मिन् सत्येव भवेन्नान्यथेत्यभिसन्धायाह—तदेवेति। ज्ञाने सत्यपि प्रमातृत्वादिकं दृष्टमित्याशंक्य तात्पर्यमाह—अद्वितीयेति। सकलशास्त्रव्यवस्थासिद्ध्यर्थं सोपाधिकं निरुपाधिकं च रूपमनूदितमिति द्रष्टव्यम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यअखण्डानुभूतिपूज्यपादशिष्येणाखण्डानन्दमुनिना विरचिते विवरणतत्त्वदीपने समन्वयसूत्रे द्वितीयवर्णकम् समाप्तं चेदं विवरणतत्त्वदीपनम्

प्रतिपाद्यविषयः—

पञ्चपादिकाव्याख्यानस्य विवरणस्य व्याख्यानरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अयं ग्रन्थः मुद्रितः। अस्मिन्कोशे द्वितीयवर्णकादिनवमवर्णकान्तो ग्रन्थभागः समग्रो वर्तते ॥

## No. (295) 3050 तत्त्वदीपनम्

| | |
|---|---|
| ग्रन्थकर्ता—अखण्डानन्दयतिः | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—58 |
| प्रमाणम्—$13\frac{1}{2} \times 1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-37 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

487 कोशवत्।

उपसंहारः—

स्तावकत्वेनेति। अथापि पूर्वपक्षाभावान्नाधिकरणारम्भ इत्याह—नात्रेति। तस्मादगतार्थत्वाद्वेदान्तमीमांसाशास्त्रमारम्भणीयमिति सिद्धम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याखण्डानुभूतिपूज्यपादशिष्येणाखण्डानन्दमुनिना विरचिते विवरणतत्त्वदीपने द्वितीयवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

487 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयवर्णकमात्रं विद्यते॥

## No. (296) **3604** तत्त्वदीपनम्

| | |
|---|---|
| ग्रन्थकर्ता—अखण्डानन्दयतिः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—76 |
| प्रमाणम्—$17\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–100 | समग्रोऽसमग्रो वा—असमग्रः |

**उपक्रमः—**

219 कोशवत्।

**उपसंहारः—**

अतिप्रसङ्गेन दूषयति—तर्हीति। चित्त्वाविशेषेऽपि संबन्धाभावान्न सर्वप्रकाशत्वमित्यपि न वाच्यमित्याह—सर्वगतत्वादिति। पूर्वपक्षमुपसंहरति—तस्मादिति। कस्यापि मते न व्यवहारोपपत्तिरिति वैतण्डिकः प्रत्यवतिष्ठते—अत्रापर इति। प्रमातृत्वादिव्यवस्था न संभवतीति किं सर्वगतात्मवादिनां चोद्यम्, उताणुपरिमाणात्मवादिनामुत देहपरिमाणात्मवादिनामिति॥

**प्रतिपाद्यविषयः—**

487 कोशवत्।

**वक्तव्यविशेषः—**

अस्मिन्कोशे प्रथमवर्णके प्रतिकर्मव्यवस्थोपपादनान्तं विद्यते॥

## No. (297) **3050/1** तत्त्वदीपनं (विवरणव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—अखण्डानन्दमुनिः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—80 |
| प्रमाणम्—$13\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–37 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

487 कोशवत्।

उपसंहारः—

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यत इति सूत्रमित्यर्थः। मन्त्रादेः प्रामाण्याभावे आनर्थक्यं स्यादिति शङ्कायां गतिप्रदर्शनार्थमधिकरणारम्भो युक्त इति शङ्कते—स्तावकत्वेति। अथापि पूर्वपक्षाभावान्नाधिकरणारम्भ इत्याह—नात्रेति। तस्मादगतार्थत्वाद्वेदान्तमीमांसाशास्त्रमारम्भणीयमिति सिद्धम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याखण्डानुभूतिपूज्यपादशिष्येणाखण्डानन्दमुनिना विरचिते तत्त्वदीपने द्वितीयवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

487 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयवर्णकमात्रं विद्यते॥

## No. (298) 3604 तत्त्वदीपनम् (विवरणव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—अखण्डानन्दमुनिः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—68 |
| प्रमाणम्—18×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-100 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

219 कोशवत्।

उपसंहारः—

अतिप्रसङ्गेन दूषयति—तर्हीति। चित्त्वाविशेषेऽपि संबन्धाभावान्न सर्वप्रकाश इत्यपि न वाच्यमित्याह—सर्वगतत्वादिति। पूर्वपक्ष-

मुपसंहरति—तस्मादिति। कस्यापि मते न व्यवहारोपपत्तिरितिवैतण्डिकः प्रत्यवतिष्ठते—अत्रापर इति। प्रमातृत्वादिव्यवस्था न संभवतीति किं सर्वगतात्मवादिनां चोद्यं, उताणुपरिमाणात्मवादिनां, उत देहपरिमाणात्मवादिनामिति ॥

प्रतिपाद्यविषयः—

482 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमवर्णके प्रतिकर्मव्यवस्थापर्यन्तो ग्रन्थभागो विद्यते ॥

## No. (299) 3763 तत्त्वनिरूपणम्

ग्रन्थकर्ता— ?
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—3-63
प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)— ?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

....त्वादिविरुद्धधर्मलिङ्गकानुमानेन तत्सहकृतया द्वासुपर्णेत्यादिश्रुत्या च विरोधेन तत्त्वमसीत्यादिवाक्यात्तदभेदप्र .... .. .... ....:.. ब्रह्मणोऽपि न सुखत्वम्। कोशे "स्यादानन्दथुरानन्द" इति पुंस्त्वाभिधानादुक्तश्रुतावाऽनन्दमिति क्लीबत्वस्य अर्शआदित्वकल्पनेन मत्वर्थीयाच्प्र................ नेव निर्वाह्यतया आनन्दवत्त्वस्यैव सिद्धेः। तस्मान्निरतिशयसुखतद्रूपात्मतदज्ञानतत्कृतबन्धतन्निवृत्तिप्रयोजनानां प्रामाणिक . . . . . . . . . जननिदानज्ञानाय तत्त्वमस्यादिवाक्यप्रवृत्तिरपि तु जीवे ब्रह्मत्वारोपेणोपासनार्थेति। अत्रोच्यते—

उपसंहारः—

तदुक्तं वार्तिकामृते—

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्यासहकार्येण नासीदस्ति भविष्यति . . . . . . . . . . . . . . . . . . . . . . . . . .
. . सच्चिदानन्दैकरसप्रत्यग्ब्रह्मस्वरूपावस्थानलक्षणो मो . . . . .॥

. . . . . . . . . . . . . . . . . . . . . पादपाद-
पाथोजपरिचरणपरायणेन श्रीमद्राघवानन्दसरस्वतीपूज्यपादशिष्ये-
. . . . . . . निरूपणं संपूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे तत्त्वमसीत्यादिवेदान्तवाक्यार्थविचारपूर्वकं ब्रह्मस्वरूपं तत्त्वं निर्धार्यते। तदुपयोगितया अखण्डार्थविचारः शक्तिलक्षणादिविचारश्च क्रियते।

वक्तव्यविशेषः—

अमुद्रितः। अस्मिन्कोशे, आदितः पत्रत्रयं लुप्तम् मध्ये च कानिचित्पत्राणि त्रुटितानि दृश्यन्ते।

## No. (300) A 775/2 तत्त्वनिरूपणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—42 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$13\frac{1}{4} \times 8\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—1934 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—4–54 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

3763 कोशवत्।

उपसंहारः—

3763 कोशवत्।

प्रतिपाद्यविषयः—

3763 कोशवत् ।

वक्तव्यविशेषः—

3763 कोशवत् ।

## No. (301) C 1254 तत्त्वनिरूपणम्

ग्रन्थकर्ता—त्र्यम्बकशास्त्री
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—15½ × 5 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–2
प्रतिपुटं पङ्क्तयः—20
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥

तत्त्वज्ञानस्य सकलपुरुषार्थसाधनत्वात्तत्त्वं निरूप्यते—अबाध्योऽर्थस्तत्त्वम् । (अ) वाध्यत्वं च स्वसंसर्गिनिष्ठव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वम् । न चात्यन्तासतोऽपि तत्त्वरूपतापत्तिः ; कालसंवन्धित्वेनापि विशेषणीयत्वात् । न च मुक्तिदशायां कालसंबन्धाभावादात्मनस्तत्त्वरूपता न स्यादिति वाच्यम् ; कालसंवन्धोपलक्षितनिष्ठावाध्यताया एव तत्त्वपदप्रवृत्तिनिमित्तत्वात् ॥

उपसंहारः—

स्वसमानाधिकरणाभावप्रतियोगिताया मिथ्यात्वरूपत्वे तु सुतरां न तद्विरोधः । स्वसंसृष्टब्रह्मनिष्ठात्यन्ताभावप्रतियोगितामात्रेण तदुपपत्तेरनुमानादिकं त्वप्रयोजकम् । विश्वं सत्यमित्यादिश्रुतिरिन्द्रबृहस्पतिस्तुत्यादिपरा न तच्छेषभूतविश्वपरमार्थतापरा । वाक्यभेदप्रसङ्गात् । किं तु प्रमाणान्तराविरुद्धप्रत्यक्षादिप्राप्तव्यवहारकालाबाध्यतारूपमुख्यसत्वानुवादिकैवेति न काचिदनुपपत्तिरधिकमन्यत्रानुसन्धेयम् ॥

इति तत्त्वनिरूपणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे परमपुरुषार्थसाधनीभूततत्त्वज्ञानघटकतत्त्वपदार्थः कीदृश इति विचार्यते ।

वक्तव्यविशेषः—

मुद्रितः (कुम्भकोणे) ।

## No. (302) A 775/1 तत्त्वनिरूपणम्

| | |
|---|---|
| ग्रन्थकर्ता—त्र्यम्बकशास्त्री | प्रतिपुटं पङ्क्तयः—44 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$13\frac{1}{4} \times 8\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—1934 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–3 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

C 1254 कोशवत् ।

उपसंहारः—

C 1254 कोशवत् ।

प्रतिपाद्यविषयः—

C 1254 कोशवत् ।

वक्तव्यविशेषः—

C 1254 कोशवत् ।

## No. (303) 2035/28 तत्त्वप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—$13 \times 1\frac{1}{4}$ | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—214–215 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

इदानीं तत्त्वस्वरूपं निरूप्यते। तत्र ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकप्राणादिपञ्चकशब्दादिपञ्चकमनआदिचतुष्टयं च चतुर्विंशति तत्त्वानि। केचित्तु आकाशादिपञ्चकशब्दादिपञ्चकज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकप्राणादिपञ्चकनागकूर्मकृकरदेवदत्तधनञ्जयमनआदिचतुष्टयतत्कारणीभूता। विद्यापशुतुल्यो जीवश्च षड्विंशत्तत्त्वानि वदन्ति।

उपसंहारः—

तथाहि पूर्वोक्तषड्विंशत्तत्त्वानि षड्भावविकारषडूर्मिषट्कोशषड्वर्गजीवत्रयगुणत्रयकर्मत्रयवचनादानगमनविसर्गानन्दसङ्कल्पास्रव .... याभिमानावधारणामैत्र्यादिचतुष्टयदिग्वातार्कप्रभृति चतुर्दशाधिष्ठानदेवता एतत्सर्वं मिलित्वा षण्णवतितत्त्वानि एतत्तत्त्वविलक्षणोऽहमिति यो जानाति स एव जीवन्मुक्त इति सर्वं रमणीयम्॥

इति तत्त्वप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मतभेदेन चतुर्विंशतिषड्विंशतिरित्यादिक्रमेण तत्त्वानि निरूप्यन्ते।

वक्तव्यविशेषः—

अमुद्रितः।

## No. (304) C 1814 प्रत्यक् तत्त्वप्रदीपिका (चित्सुखी)

ग्रन्थकर्ता—चित्सुखमुनिः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{3}{4} \times 4\frac{1}{2}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-51, 1-66, 1-19

प्रतिपुटं पङ्क्तयः—30
प्रतिपङ्क्त्यक्षराणि—46
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः (किंचिन्न्यूनः)

उपक्रमः—

स्तम्भाभ्यन्तरगर्भभावनिगदव्याख्याततद्वैभवो
यः पाञ्चाननपाञ्चजन्यवपुषा व्यादिष्टविश्वात्मकः।

प्रह्लादाभिहितार्थतत्क्षणमिलद्दृष्टप्रमाणं हरिः
सोऽव्याद्वः शरदिन्दुसुन्दरतनुः सिंहाद्रिचूडामणिः ॥
ज्योतिर्यद्दक्षिणामूर्तिव्यासशंकरशब्दितम् ।
ज्ञानोत्तमाख्यं तद्वन्दे सत्यानन्दपदोदितम् ॥
विप्रतिपत्तिव्रातध्वान्तध्वंसप्रगल्भवाचाला ।
क्रियते चित्सुखमुनिना प्रत्यक्तत्त्वप्रदीपिका विदुषा ॥
प्रमाणनखनिर्भिन्नमहामोहामरारये ।
नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने ॥

अथ कोऽयं स्वप्रकाशशब्दार्थः ? किं स्वश्चासौ प्रकाशश्च स्वप्रकाशः, स्वस्य स्वयमेव प्रकाश इति वा, सजातीयप्रकाशाप्रकाश्यत्वं वा, स्वसत्तायां प्रका..व्यतिरेकविरहितत्वं वा, स्वव्यवहारहेतुप्रकाशत्वं वा, ज्ञानाविषयत्वं वा, ज्ञानाविषयत्वे सत्यपरोक्षत्वं वा, व्यवहारविषयत्वे सति ज्ञानाविषयत्वं वा, स्वप्रतिबद्धव्यवहारे सजातीयपरानपेक्षत्वं वा, अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं वा, तद्योग्यत्वं वा। नाद्यः; वेद्यस्यापि ज्ञानस्य स्वप्रकाशत्वाभ्युपगमात्। न द्वितीयः; कर्मकर्तृभावविरोधेन लक्षणस्यासंभवात्। न तृतीयः; प्रतीपादेः सजातीयप्रकाशाप्रकाश्यस्या-स्वयंप्रकाशत्वेन लक्षणस्यातिव्याप्तेः, घटादेरपि सजातीयप्रकाशा-प्रकाश्यस्य स्वप्रकाशत्वप्रसङ्गाच्च ॥

उपसंहार:—

प्रारब्धकर्मलक्षणस्य विद्याशक्तिप्रतिबन्धकस्य फलोपभोगेन निवृत्तौ प्रतिबन्धाभावे तत्त्वज्ञानान्निःशेषाविद्यानिवृत्तिरिति प्रतीतेश्च। अत एव क्षीयन्ते चास्येति सामान्यश्रुतेः प्रारब्धकर्मव्यतिरिक्तकर्मनिवृत्तिपरत्वोप-पत्तिः तस्य तावदेव चिरमिति विदुषः प्रारब्धकर्मव्यतिरिक्तकर्म-तत्कार्ययोरवस्थानाधिगमाच्च तद्वास्य विजज्ञाविति विस्पष्टज्ञानोपजनन-स्याश्चर्यवत्प्रतिपादनात् परोक्षज्ञानविषयत्वानुपपत्तेरन्यथा श्रुतवाक्यस्य परोक्षज्ञानस्या ........।

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे, प्रथमपरिच्छेदे—स्वप्रकाशविचारः, आत्मनः संवि-द्रूपत्वनिरूपणं, तमोनिरूपणं, मिथ्यात्वविचारः, अध्ययनविधिविचारः, अज्ञानवादः, अखण्डार्थवादादयो विषयाः, द्वितीये—“कथं विगलित-

निखिलभेद" इत्यादिना भेदस्वरूपसाधनतत्खण्डने, द्रव्यगुणकर्मजातिविशेषसमवायलक्षणादिखण्डनम्, प्रत्यक्षानुमानादिलक्षणखण्डनमित्यादयो विषयाः, तृतीये—शाब्दापरोक्षविचारः, ब्रह्मसाक्षात्कारं प्रति मनसः साधनत्वनिरासः, ज्ञानस्य मोक्षसाधनत्वविचारः, ज्ञानकर्मसमुच्चयनिरासश्च, तुरीये—मुक्तिविचारः, आत्मनः सुखरूपत्वविचारः, एकानेकजीवविचारः, जीवन्मुक्त्युपपादनमित्यादयो विषयाश्च प्रतिपाद्यन्ते ॥

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थभागः अन्तिमपत्रं विहाय समग्रो वर्तते । मुद्रितश्च दृश्यते ॥

## No. (305) C 581 तत्त्वबोधप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—32 |
| प्रमाणम्—$9 \times 4\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–6 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

संसारं तर्तुमिच्छूनां प्रस्थानानधिकारिणाम् ।
गुरुं विनायकं नत्वा तत्त्वबोधो विधीयते ॥

साधनचतुष्टयवतामधिकारिणां तत्त्वबोधाख्यं प्रकरणं वदामीत्यर्थः। साधनचतुष्टयं नाम नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः शमादिषट्कसम्पत्तिः, मुमुक्षुत्वं च । नित्यानित्यवस्तुविवेको नाम सच्चिदानन्दस्वरूपमेकं ब्रह्मैव नित्यम् । एतदन्यद्वस्तु समस्तमनित्यमिति विवेको नित्यानित्यवस्तुविवेकः। इहामुत्रार्थफलभोगविरागो नाम— इह अस्मिन्लोके स्रक्चन्दनवनितादिविषयेषु अमुत्र स्वर्गादिफलभोगेषु च वाञ्छाराहित्यमेव ॥

उपसंहारः—

या सा सा माया, न विद्यते या सा अविद्या। तस्माच्चिन्मात्रव्यतिरिक्तवस्त्वन्तरं नास्त्येव। चिन्मात्रस्वरूपमेवाहमस्मीति यो जानाति स एव मुक्त इति वेदान्तसिद्धान्तः।

स्थूलसूक्ष्मादिदेहानामात्मन्यारोप एव च।
अपवादस्तथाप्येषां सम्यगत्र प्रदर्शितः॥

ओं नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः। सर्वोपप्लवरहितः प्रज्ञानघनः प्रत्यगर्थो ब्रह्मैवाहमस्मि।

प्रतिपाद्यविषयः—

C 445 कोशवदेव सर्वं प्रतिपाद्यते।

वक्तव्यविशेषः—

अमुद्रितः। अस्मिन्कोशे कर्ता न ज्ञायते॥

## No. (306) 2100/4 तत्त्वबोधप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम्—$14 \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—140-146 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

C 581 कोशवत्।

उपसंहारः—

C 581 कोशवत्।

प्रतिपाद्यविषयः—

C 581 कोशवत्।

वक्तव्यविशेषः—

C 581 कोशवत्।

## No. (307) C 445 तत्त्वबोधप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः – 11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—8×4 अङ्गुलानि | कालः (कोशस्य) —? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-8 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

वासुदेवेन्द्रयोगीन्द्रं नत्वा ज्ञानप्रदं गुरुम्।
मुमुक्षूणां हितार्थाय तत्त्वबोधो विधीयते॥

साधनचतुष्टयसम्पन्नाधिकारिणां मोक्षसाधनभूतं तत्त्वविवेकप्रकारं वक्ष्यामः। साधनचतुष्टयं किम्। नित्यानित्यवस्तुविवेकः इहामुत्रार्थफलभोगविरागः शमादिषट्कसम्पत्तिः मुमुक्षुत्वं चेति। नित्यं वस्तु किम्। तद्व्यतिरिक्तं सर्वमनित्यम्। अयमेव नित्यानित्यवस्तुविवेकः।

उपसंहारः—

ये च ज्ञानिनं निन्दन्ति द्विषन्ति दुःखप्रदानं कुर्वन्ति तान्प्रति ज्ञानिकृतं सर्वमागामि क्रियमाणं यदवाच्यं कर्म पापात्मकं गच्छति। तथा च श्रुतिः—सुहृदः पुण्यकृत्यां द्विषन्तः पापकृत्याम्। गृह्णन्तीति। तथा च आत्मवित्संसारं तीर्त्वा ब्रह्मानन्दमिहैव प्राप्नोति च। तरति शोकमात्मविदित्यादिश्रुतिः।

तनुं त्यजतु वा काश्यां श्वपचस्य गृहेऽथ वा।
ज्ञानसम्प्राप्तिसमये मुक्तोऽसौ विगताशयः॥

इति तत्त्वबोधः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे संक्षेपतः साधनचतुष्टयानां स्वरूपं पञ्चभूतानां पञ्चकोशानां च स्वरूपं सञ्चितादिभेदेन कर्मस्वरूपं च प्रतिपाद्यते॥

वक्तव्यविशेषः—

मुद्रितः।

## No. (308) B 375/3 तत्त्वबोधप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—रामचन्द्रबुधः ? | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—115-123 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

C 445 कोशवत्।

उपसंहारः—

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥

इत्यादिश्रुतेः,

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥

इति श्रवणात्। ज्ञानिदेहं गङ्गायां वा चण्डालवाटिकायां वा यदि पतति तदा मुक्त एव यथा ज्ञानं प्राप्य तथैव सर्वकर्माणि त्यक्त्वा। मुक्तः-सन्नानन्दो भूत्वा कृतार्थो भवति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवेन्द्रतत्त्वबोधप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

C 445 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्ग्रन्थे ग्रन्थभागः प्रायः C 445 कोशवदेवास्ति, मध्ये किंचित् अधिकांशं सङ्गमय्य ग्रन्थान्तरत्वेन निर्दिष्टः। कर्ता विस्पष्टं न ज्ञायते॥

## No. (309) 388/2 तत्त्वविवेकः

ग्रन्थकर्ता—नृसिंहाश्रमी
पत्रविशेषः— ताळपत्रात्मकः
प्रमाणम्—$17 \times 1\frac{3}{8}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—113–157

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—82
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

विश्वस्य योनिं विश्वेशं विज्ञानानन्दविग्रहम् ।
नरकेसरिणं वन्दे प्रत्यञ्चं पुरुषोत्तमम् ॥

साक्षात्कृतब्रह्मभासा विलसन्मुखपङ्कजम् ।
महीयांसमहं वन्दे यवीयांसं जगत्पतिम् ॥

गुरुणा करुणापूर्वमुपदिष्टाद्वयात्मकः ।
कुर्वे तत्त्वविवेकं तं वीक्षतां नरकेसरी ॥

इह खलु कश्चित्कुतश्चिद्भाग्योदयात् निर्व्यळीकं नित्यादिभिराराधिताराध्यपादभगवदनुग्रहादतिविमलमानसः स्वयमेवेत्थं जगत्तत्त्वमालोचयति । ननु कर्मणां स्वतन्त्रफलसाधनानां कथं मनो वैमल्यहेतुत्वम् । तथा च संस्कारकर्मतापत्तिरिति चेन्न तावदर्थविरोधः, नित्यादीनां पापनिवर्तकस्वभावत्वात्, ब्रह्मज्ञानोपकारकत्वेऽपि गुणकर्मतानङ्गीकारेण कर्मणा पितृलोक इत्यवगतस्वतन्त्रफलसाधनत्वाविरोधाच्च ।

उपसंहारः—

न चैवं ज्ञानवैफल्यापत्तिः, ज्ञानाभावकाले कल्पिताविद्यादेः सत्त्वेन प्राक्सिद्धनिवृत्तेरपि प्रवृत्त्यङ्गसाध्यत्वसंभवात् । तेन विना तस्याभावमात्रावस्थानाभावात् । अत एव तस्या उद्देश्यत्वम् । नित्यसिद्धाविद्यानिवृत्तेरपि अविद्यारूपाभावप्रमादशायां लोक इव तदुपपत्तेः । तस्मात्सिद्धं जीवस्याद्वैतब्रह्मसाक्षात्कारात् भेदभ्रमनिवृत्त्या सच्चिदानन्दावाप्तिरिति ॥

जिज्ञासितव्यमनवद्यपुमर्थचित्तैः प्रज्ञासुखं स्वमहिमानमशेषयोनि ।
शास्त्रैकहृद्गतमशेषविधेयशेषि श्रेयोऽस्तु नरमृगाकृति मङ्गलाब्धि ॥

तुष्यन्त्यव्यक्तमनसो मुग्धस्य पितरो ननु ।
मम त्वत्प्रीतये भूयात् वागियं नरकेसरिन् ॥
क्वाहं महीयसाशास्यं वात्सल्यं क्व गुरोरिदम् ।
अपि चण्डालकलशे काशते खलु चन्द्रमाः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीजगन्नाथाश्रमपूज्यपादशिष्यश्रीनृसिंहाश्रममुनि-
विरचिते तत्त्वविवेके द्वितीयः परिच्छेदः ॥ समाप्तश्च ग्रन्थः

**प्रतिपाद्यविषयः—**

अस्मिन्ग्रन्थे—कर्मणां चित्तशुद्धिहेतुत्वं, संशयलक्षणं, अन्यथाख्यातिभङ्गः, अध्यासनिरूपणं, वृत्तिनिरूपणं, जानामीत्याद्यनुभवस्य आत्मना अभेदनिरूपणं, आत्मनः स्वप्रकाशत्वसुखरूपत्वनिरूपणं, बिम्बप्रतिबिम्बविचारः, भावरूपाज्ञानविचारः, चैतन्यस्याज्ञानाश्रयत्वोपपादनं, कर्तृत्वनिरूपणं, मिथ्यात्वानुमानं, इत्यादयो विषया निरूपिताः ।

**वक्तव्यविशेषः—**

मुद्रितः। अस्मिन्कोशे ग्रन्थः समग्रो वर्तते ।

## No. (310) 2233 तत्त्वविवेकः

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—$13 \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-63 | समग्रोऽसमग्रो वा—समग्रः |

**उपक्रमः—**

388/2 कोशवत् ।

**उपसंहारः—**

388/2 कोशवत् ।

**प्रतिपाद्यविषयः—**

388/2 कोशवत् ।

**वक्तव्यविशेषः—**

388/2 कोशवत् ।

## No. (311) 2883/1 तत्त्वविवेकः

ग्रन्थकर्ता—नृसिंहाश्रमी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—182–212
प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—90
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

388/2 कोशवत् ।

उपसंहारः—

388/2 कोशवत् ।

प्रतिपाद्यविषयः—

388/2 कोशवत् ।

वक्तव्यविशेषः—

388/2 कोशवत् ।

## No. (312) 3409 तत्त्वविवेकः

ग्रन्थकर्ता—नृसिंहाश्रमी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17 \times 1\frac{3}{8}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–43
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—74
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

388/2 कोशवत् ।

उपसंहारः—

388/2 कोशवत् ।

प्रतिपाद्यविषयः—

388/2 कोशवत् ।

वक्तव्यविशेषः—

388/2 कोशवत् ।

## No. (313) 2970/1 तत्त्वविवेकः

ग्रन्थकर्ता—नृसिंहाश्रमी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16\frac{3}{4} \times 1\frac{3}{8}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–44

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—74
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

388/2 कोशवत्।

उपसंहारः—

388/2 कोशवत्।

प्रतिपाद्यविषयः—

388/2 कोशवत्।

वक्तव्यविशेषः—

388/2 कोशवत्।

## No. (314) 2883/2 तत्त्वविवेकदीपनम् (रत्नकोशः)

ग्रन्थकर्ता—नृसिंहाश्रमी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—213-308

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—90
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यदालिङ्ग्य प्रमाणानि बोधयन्त्यात्मनः स्फुटम्।
प्रमेयं प्रचुरानन्दं तं वन्दे नृहरिं गुरुम्॥

प्रेक्षावत्प्रवृत्त्यर्थं अभिधेयादि दर्शयन्नेव निर्विघ्नपरिसमाप्तिकामनया कृतं मङ्गळं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—विश्वस्येति। प्रत्यञ्चं

पुरुषोत्तमं वन्द इत्यनेन जीवब्रह्माभेदस्तत्त्वमसीति वाक्यार्थः प्रकरणप्रतिपाद्यो दर्शितः। प्रतीपं जडानृताहंकारादिभ्यः प्रातिकूल्येन सत्यज्ञानानन्दस्वरूपतया अञ्चति प्रकाशते निष्कृष्टाहंकारचैतन्यं प्रत्यक्। अनेन शोधितस्त्वंपदार्थ उक्तः। पुरुषोत्तमं परमात्मानं नीलगिरीशं "उत्तमः पुरुषस्त्वन्यः परमात्मे"त्यादिस्मृतेः। अनेन शोधितस्तत्पदार्थ उक्तः। अनयोः सामानाधिकरण्याच्चाभेदः॥

उपसंहारः—

मृग्यते............मुमुक्षुभिरिति मृगः परमात्मा तदाकृति प्रत्यगभिन्नब्रह्मात्मकं श्रीनृसिंहाकारमित्यर्थः। मङ्गळाब्धि श्रेयः श्रेयोरूपमपि श्रेयः साधनानामपि पराकाष्ठेत्यर्थः। स्वकृतिं परमेश्वराय निवेदयते--तुष्यन्तीति। स्वस्येदं सामर्थ्यं गुर्वायत्तमिति दर्शयन् गुरुं महीकरोति—क्षाहमिति। (यदीक्षणेन सन्नुन्ना) यदि क्षणेन सन्नाम मायाविकीडितं जगत्। श्रीनृसिंहस्य तस्यैषा कृति कल्याणदास्तु नः॥

अरुचिरिह न कार्या साधत्रः साध्वसाधु-
प्रकटनपटुचेतोमत्सरो वो यदि स्यात्।
न हि कुशलपरीक्षादत्तचित्ताः कथंचि-
च्छतमखमणिमालां काचबुध्या त्यजन्ति॥

(बुध्योत्सृजन्ति पाठः)

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीजगन्नाथाश्रमपूज्यपादशिष्यश्रीनृसिंहाश्रममुनिविरचिते
तत्त्वविवेकदीपने द्वितीयः परिच्छेदः
समाप्तश्च ग्रन्थः

प्रतिपाद्यविषयः—

अद्वैततत्त्वविवेकव्याख्यारूपो ग्रन्थः।

वक्तव्यविशेषः—

अमुद्रितः। मूलव्याख्यानयोरेक एव कर्तेति ज्ञायते।

## No. (315) 388/1 तत्त्वविवेकदीपनम् (रत्नकोशः)

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—82 |
| प्रमाणम्—$17 \times 1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-112 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

2883/2 कोशवत्।

उपसंहारः—

2883/2 कोशवत्।

प्रतिपाद्यविषयः—

2883/2 कोशवत्।

वक्तव्यविशेषः—

2883/2 कोशवत्।

## No. (316) 2970/2 तत्त्वविवेकदीपनम् (रत्नकोशः)

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—74 |
| प्रमाणम्—$16\frac{3}{4} \times 1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—45-159 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

2883/2 कोशवत्।

उपसंहारः—

2883/2 कोशवत्।

प्रतिपाद्यविषयः—

2883/2 कोशवत्।

वक्तव्यविशेषः—

2883/2 कोशवत्।

## No. (317) 3309 तत्त्वविवेकदीपनम् (रत्नकोशः)

ग्रन्थकर्ता—नृसिंहाश्रमी
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$13\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—81-126

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—62
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

एवं तत्त्वमसीति महावाक्यस्थत्वंपदार्थोऽधिकारिस्वरूपतया प्रथमं जिज्ञासितो निरूपितः। इदानीं तत्पदार्थ .... रूपणाय परिच्छेदान्तरमारभ्यत इत्याह—अथेति। अथवा यदि जिज्ञासासूत्रस्थादातशब्दाभ्यामधिकारिनिरूपणं व्याजेन तस्याशनायादिरहितचैतन्यमात्रस्वरूपे तात्पर्यं निरूपितं, तर्हि किमपरशिष्टं यदर्थं द्वितीयादिसूत्रमारभ्यते इत्याशंक्य तस्याद्वितीयब्रह्मत्वनिरूपणायेत्याह—अथेति। ननु—

उपसंहारः—

2883/2 कोशवत्।

प्रतिपाद्यविषयः—

2883/2 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयपरिच्छेदमात्रं विद्यते॥

## No. (318) 3410 तत्त्वविवेकदीपनम् (रत्नकोशः)

ग्रन्थकर्ता—नृसिंहाश्रमी
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—44-171

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—70
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

2883/2 कोशवत्।

उपसंहारः—

2883/2 कोशवत्।

प्रतिपाद्यविषयः—

2883/2 कोशवत्।

वक्तव्यविशेषः—

2883/2 कोशवत् ।

## No. (319) 3708 तत्त्वविवेकदीपनम् (रत्नकोशः)

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—64 |
| प्रमाणम्—16 × 1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-144 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

2883/2 कोशवत् ।

उपसंहारः—

2883/2 कोशवत् ।

प्रतिपाद्यविषयः—

2883/2 कोशवत् ।

वक्तव्यविशेषः—

2883/2 कोशवत् ।

## No. (320) 4564 तत्त्वविवेकदीपनम् (रत्नकोशः)

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—13×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—62-212 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

2883/2 कोशवत् ।

उपसंहारः—

2883/2 कोशवत् ।

प्रतिपाद्यविषयः—

2883/2 कोशवत् ।

वक्तव्यविशेषः—

2883/2 कोशवत् ।

## No. (321) **3961** तत्त्वविवेकोपन्यासः

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—74 |
| प्रमाणम्—$17\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-105 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

श्रीनृहरिं पुराणपुरुषं श्रीश्रीनिवासं पतिम्
हस्त्यद्रीश्वरमादिमध्यरहितं रामं घनश्यामलम् ।
कृष्णं वृष्णिपतिं हयाननमहं विद्याविलासाननं
विष्वक्सेनमशेषविघ्नशमनं देवीं भजे शारदाम् ॥

....................................नल्लान्वंशपयोनिधिविधुकमलावासदेशिकसुत-महोबलावासम् । नाचारमतनुभवमहमनिशं चक्रवर्तिनमहोबलाचार्यं सेवे ॥ सत्यज्ञानानन्द ...कोय....त्माविद्याबिम्ब...... ...................................................................रीशः । वेदैर्ज्ञेयो रक्षतादात्मबिम्बान् भक्तान् पातु श्रीनृसिंहाकृतिः सः ॥ श्रीमत्तत्त्वविवेकस्योपन्यासः क्रियते मया । साद्वैतरत्नकोशस्य नृसिंहस्तेन तुष्यतु ॥.............................................. ...........................दूषणानां समुद्धृतिम् । ................रयन्नन्तरात्मा मे नृसिंहो हर्षयेद्बुधान् ॥ इह खलु कश्चिद्द्विपश्चित्कुतश्चिद्भाग्योदयान्निर्व्यळीकं नित्यादिभिराराधिताराध्यपादभगवदनुग्रहा ............................मानसः स्वयमेवेत्थं जगत्तत्त्वमालोचयति । ननु कर्मणा पितृलोकः सर्वे एते पुण्यलोका भवन्तीति श्रुत्या सर्वेषामाश्रमिणां........। ........................ क्तया तत्तदाश्रमविहितकर्मणां पुण्यलोकसाधनताप्रतीत्या स्वतन्त्रफल-साधनानां कर्मणां न चित्तशुद्धिहेतुत्वम् ।

उपसंहारः—

.... .......चारेणाधिकारिणः प्रयोजनाभावात् । न च विचारितस्योपा-सनैव प्रयोजनमिति वाच्यम् ; तत्र प्रयोजनाभावात् । न च मोक्ष इति

वाच्यम् ;.................................एवाभावात् । तथाहि—उपासनाधीनो ब्रह्मणि किं वेदान्ताः प्रमाणं किं वान्यत्। नाद्यः ; विधिपदात्तदन्यसि........

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे कर्मणां चित्तशुद्धिहेतुत्वशङ्कातन्निराकरणं, संशयलक्षणादिविचारः, ब्रह्मजिज्ञासासंभवशंका, तत्समाधानं, अन्यथाख्यात्यात्मख्यात्यसत्ख्यातीनां खण्डनं, अध्यस्तलक्षणं, आत्मा, तस्यानन्दस्वरूपत्वं, स्वप्रकाशत्वमित्यादयो विषयाः तत्त्वविवेकप्रतिपाद्या एव विचार्यन्ते ।

वक्तव्यविशेषः—

अमुद्रितः। अस्मिन्कोशे तत्त्वविवेकप्रथमपरिच्छेदस्थानां विषयाणामुपन्यासमात्रं दृश्यते, तावत्येव कोशो लुप्तः। आद्यपत्रस्य त्रुटितत्वात्कर्ता न ज्ञायते॥

## No. (322) A 806 तत्त्वविवेकोपन्यासः

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—21 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$13\frac{1}{2} \times 8\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-245 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

3961 कोशवत् ।

उपसंहारः—

3961 कोशवत् ।

प्रतिपाद्यविषयः—

3961 कोशवत् ।

वक्तव्यविशेषः—

3961 कोशवत् ।

## No. (323) B 239/1 तत्त्वसंग्रहः

| | |
|---|---|
| ग्रन्थकर्ता--अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—32 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—101–138 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

श्रीमद्गुरुपदद्वन्द्वं स्मृत्वाभीष्टप्रदं सदा ।
जिज्ञासुबालबोधार्थं क्रियते तत्त्वसंग्रहः ॥

अत्र खलु पदवाक्यप्रमाणज्ञेन भगवता बादरायणाचार्येण विरचितैरथातो ब्रह्मजिज्ञासेत्यादिभिरनावृत्तिः शब्दादनावृत्तिः शब्दादित्यन्तैरीशावास्यादिबृहदारण्यकान्तदशोपनिषच्छास्त्रनिर्णायिकन्यायकलापरूपैः ब्रह्मसूत्रैः कर्तृत्वभोक्तृत्वादिलक्षणानर्थसंसारनिवर्तकनिर्गुणपरब्रह्मात्मैक्यापरोक्षविज्ञानमभिहितमपि तेषां सूत्राणां दुरूहार्थगर्भितत्वेन तद्भाष्याणां बहुग्रन्थरूपत्वेन च न सर्वेषामप्यनायासमेवोत्पद्यत इत्यत इह नित्यानित्यविवेक इहामुत्रफलभोगविरागः शमादिषट्कसम्पत्तिः मुमुक्षुत्वं चेत्येवंविधसाधनचतुष्टयसम्पन्नोत्तमाधिकारिणां दर्शनश्रवणमनननिदिध्यासनाख्यकसाधनचतुष्टयसंपत्तिद्वारेण करतलामलकवत्तद्विज्ञानमुत्पादयितुं ज्ञानभागः कर्मभागश्च संग्रहेण वक्तव्यावित्यपेक्षायामिदमुपदिश्यते ॥

उपसंहारः—

य एवं सर्वशास्त्रसिद्धान्तसंग्रहं विदित्वा स्वाश्रमाचारपूर्वकसमाध्यभ्यासधुरीणो भवति स एव बाह्याभ्यन्तरोभयपावनचरित्रः पुरुषोत्तमः। स एव धन्यः। स एव कृतकृत्यः। स एव सर्वलोकपूज्यः। स एव सर्वदेवपूज्यः। स एव सर्ववेदज्ञः। स एव सर्वशास्त्रतत्त्वार्थज्ञः। स एव सर्वोपनिषत्सारज्ञ इत्यवगन्तव्यम् ॥

यत्सत्यं विभु केवलं च सकलाम्नायान्तसिद्धं परं
तद्ब्रह्माहमिति श्रुतिस्मृतिवचोजाताद्विदित्वा गुरोः ।

युक्त्या ध्यानशतेन च स्फुटतरं पश्यन्विमुक्तो भवे-
द्धन्यः सोऽत्र समस्तवित्सुरगणैः पूज्यः स एव ध्रुवम् ॥

इति श्रीमदप्पयदीक्षितेन्द्रान्वयजाप्पयदीक्षितकृतौ तत्त्वसंग्रहे उत्तरार्धः

तत्त्वसंग्रहः समाप्तः

प्रतिपाद्यविषयः—

अत्र पूर्वार्धे ब्रह्मस्वरूपं आत्मस्वरूपं तयोर्विभागः, तयोरैक्यमित्यादिकं अनुभवाद्वैतप्रक्रियानुरोधेन संगृह्य प्रतिपाद्यते। उत्तरार्धे कर्मभागः तस्य चित्तशुद्धिद्वारा मोक्षे उपयोगः इत्यादिकं प्रतिपादितमस्ति ॥

वक्तव्यविशेषः—

अनुभवाद्वैतमतप्रक्रियां करतलामलकवद्दर्शयदिदं प्रकरणं व्युत्पित्सूनामुपकारकं अमुद्रितं च ज्ञायते।

## No. (324) B 243 तत्त्वसङ्ग्रहः

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः— 64 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—7¾ × 6 अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः— ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-16 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 239/1 कोशवत्।

उपसंहारः—

B 239/1 कोशवत्।

प्रतिपाद्यविषयः—

B 239/1 कोशवत्।

वक्तव्यविशेषः—

B 239/1 कोशवत्।

## No. (325) C 1829 तत्त्वानुसन्धानम्

ग्रन्थकर्ता—महादेवसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—12½ × 6 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–18
प्रतिपुटं पङ्क्तयः—32
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ब्रह्माहं यत्प्रसादेन मयि विश्वं प्रकल्पितम् ।
श्रीमत्स्वयंप्रकाशाख्यं प्रणौमि जगतां गुरुम् ॥

देहो नाहं श्रोत्रवागादिकानि नाहं बुद्धिर्नाहमध्यासमूलम् ।
नाहं सत्यानन्दरूपश्चिदात्मा मायासाक्षी कृत्स्न एवाहमस्मि ॥

अथ मोक्षस्य वाक्यार्थज्ञानाधीनत्वात् तस्य च पदार्थज्ञानाधीनत्वात् तदर्थं तत्पदार्थं निरूपयामः । तत्पदार्थस्य लक्षणं द्विविधम्, तटस्थलक्षणं स्वरूपलक्षणं चेति । सृष्टिस्थितिलयकारणत्वं तटस्थलक्षणम् । 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ती'ति श्रुतेः । तदुक्तं भगवता सूत्रकारेण 'जन्माद्यस्य यत' इति । सत्यज्ञानानन्दाः स्वरूपलक्षणम् । 'सत्यं ज्ञानमनन्तं ब्रह्म,' 'आनन्दो ब्रह्मेति व्यजानात्' इति श्रुतेः ।

उपसंहारः—

श्रीमत्स्वयंप्रकाशाख्यगुरुणा करुणावशात् ।
उपदिष्टपरात्मैक्यं तत्त्वमावेदितं मया ॥

ब्रह्मेशविष्णवादिसमस्तदेवाः स्वस्वाधिकारेषु विभीतचित्ताः ।
आज्ञावशाद्यस्य वसन्ति सर्वे तं कृष्णमाद्यं शरणं प्रपद्ये ॥

या भारती शर्वविरिञ्चिविष्णुदेवादिभिर्नित्यमुपास्यमाना ।
सदाक्षमालाविलसत्कराग्रा वाग्वादिनीं तां प्रणमामि देवीम् ॥

आकाशपुष्पमिव विश्वमहं निरीक्ष्ये
मग्नोऽस्मि नित्यसुखबोधरसामृताब्धौ ।
प्रत्यक्षमद्वयमनन्तसुखैकबोधं
साक्षात्करोमि पदभावनया गुरूणाम् ॥

यत्पादयुग्मकमलाश्रयणात्सुतीर्ण-
स्तद्देशिकाङ्घ्रिकमलं प्रणतोऽस्मि नित्यम् ॥
परमसुखपयोधौ मग्नचित्तो महेश-
हरिविधिसुरमुख्यान् दैशिकं (कान्) देशमात्रम् ॥
जगदपि न विजाने पूर्णसत्यात्मसंवि-
त्सुखतनुरहमात्मा सर्वसंसारशून्यः ॥
यदुकुलवररत्नं कृष्णमन्यांश्च देवान्
मनुजपशुमृगादीन् ब्राह्मणादींश्च जाने ॥
परमसुखसमुद्रे मज्जनात्तन्मयोऽहं
गलितनिखिलभेदः सत्यबोधैकरूपः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्स्वयंप्रकाशानन्दसरस्वतीपूज्यपादशिष्य-भगवन्महादेवसरस्वतीविरचितं तत्त्वानुसन्धानं समाप्तम्

**प्रतिपाद्यविषयः—**

अस्मिन्ग्रन्थे प्राधान्येन जीवेश्वरस्वरूपं विविच्य, तदनुस्यूतशुद्धचैतन्यानुसन्धानेन निस्संशयं मुक्तो भवतीति प्रतिपाद्यते। तत्र प्रसङ्गात् पञ्चभूतसृष्टिः जीवेश्वरादिविभागः अज्ञानस्वरूपं पञ्चीकरणं इन्द्रियाद्युत्पत्तिक्रमः, एवंक्रमेणोत्पन्नस्य परे लयश्च सम्यङ्निरूप्यते।

**वक्तव्यविशेषः—**

मुद्रितः। अस्मिन्कोशे ग्रन्थः समग्रो वर्तते।

## No. (326) C 1510 तत्त्वानुसन्धानम्

| | |
|---|---|
| ग्रन्थकर्ता—महादेवसरस्वती | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—44 |
| प्रमाणम्—$10\frac{1}{4} \times 4\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य) —? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—3–18 | समग्रोऽसमग्रो वा—असमग्रः |

**उपक्रमः—**

यद्वा यथैक एव देवदत्तः क्रियानिमित्तवशेन पाचको वाचक इति व्यपदिश्यते तथैकमेवाज्ञानं विक्षेपावरणशक्तिनिमित्तभेदेन मायाऽविद्येति

च व्यपदिश्यते। तथा चाविद्याप्रतिबिम्बितं चैतन्यं जीवः। अविद्योपहितं बिम्बचैतन्यमीश्वरः। 'आभास एव च, अत एव चोपमा सूर्यकादिवत्' "यथाह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपः देवः क्षेत्रेष्वेवमजोऽयमात्मा॥ एक एव हि भूतात्माभूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥" इत्यादिश्रुतिसूत्रयोः सत्त्वात्॥

उपसंहारः—

C 1829 कोशवत्।

प्रतिपाद्यविषयः—

C 1829 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः पत्रद्वयं लुप्तम्।

## No. (327) C 734 तत्त्वानुसन्धानम्
## (अद्वैतचिन्ताकौस्तुभाख्यव्याख्यासहितम्)

ग्रन्थकर्ता—महादेवसरस्वती
(व्याख्याता) महादेवानन्दसरस्वती ?
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{3}{4}\times6$ अङ्गुलानि
लिपिः—देवनागरीलिपिः–42 प.
अनन्तरं आन्ध्रलिपिः

पत्राणि—1-42, 1-46, 1-27
प्रतिपुटं पङ्क्तयः—28
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू:—ब्रह्माहंयत्प्रसादेनमयि विश्वंप्रकल्पितम्।
श्रीमत् स्वयंप्रकाशाख्यं प्रणौमि जगतां गुरुम्॥
व्या:—यः परात्मा जगत्स्रष्टा प्रविवेश पुनः स्वयम्।
तं कृष्णं प्रत्यगात्मानं वन्दे गोपीमनोहरम्॥
यस्य प्रसादादहमद्वयात्मा विश्वं समस्तं मयि कल्पितं च।
तं सर्वलोकैकगुरुं सदा श्रीस्वयंप्रकाशं गुरुमानतोऽस्मि॥

गुरूणां चरणाम्भोजं प्रणिपत्य निरन्तरम्।
तत्कृपालेशतोऽद्वैतचिन्ताकौस्तुभमारभे ॥

प्रारीप्सितस्य ग्रन्थस्य निर्विघ्नसमाप्तिकामनया गुरुप्रसादलभ्यतत्त्वानुसन्धानलक्षणं मङ्गलमाचरन्नर्थात्प्रेक्षावत्प्रवृत्त्यङ्गमभिधेयादि सूचयन् "यस्य देवे परा भक्तिर्यथादेवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इत्यादिश्रुत्या गुरुभक्तेस्तत्त्वानुसन्धानं प्रत्यन्तरङ्गसाधनत्वावगमात् स्वयं नमस्करोति—ब्रह्मेति। यस्य गुरोः प्रसादेन ब्रह्माहं तं गुरुं प्रणौमीति सम्बन्धः ॥

उपसंहारः—

मू—यदुकुलवररत्नंकृष्णमन्यांश्च देवान्
मनुजपशुमृगादीन् ब्राह्मणादीन् न जाने।
परसुखसमुद्रे मज्जनात्तन्मयोहम्
गलितभेदः सत्यबोधैकरूपः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्स्वयंप्रकाशानन्दसरस्वतीपूज्यपादशिष्यमहादेवसरस्वतीमुनिविरचितं तत्वानुसंधानम्

व्या—यदुकुलेति। तत्र हेतुमाह परसुखेति। उपासकानां हार्दस्य तमसो विनिवर्तकं श्रीकृष्णस्य गळेऽद्वैतचिन्ताकौस्तुभमर्पितं अध्यारोपापवादोन्मृदितजडतनुद्वैतहेतुः परमात्मा त्वाम्नायान्तैकगुणः श्रुतिरूपाणि निरस्य वेदो यद्बोदये नित्यनिरस्तमोहं साक्षिस्वरूपं परिपूर्णरूपमहं तदेवास्मि विमुक्तगम्यम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमत्स्वयंप्रकाशानन्दसरस्वतीपूज्यपादशिष्यभगवानन्दसरस्वतीमुनिवर्यचूडामणिविरचिते तत्त्वानुसन्धानव्याख्यानेऽद्वैतचिन्ताकौस्तुभे चतुर्थः परिच्छेदः समाप्तः

प्रतिपाद्यविषयः—

C 1829 कोशवत्।

वक्तव्यविशेषः—

मुद्रितः। अस्मिन्कोशे सव्याख्यं मूलं समग्रं वर्तते। प्रथमे 42 तमपत्रान्ते, 'भगवन्महेश्वरानन्दकृते' इति अन्तिमे 27 तमपत्रान्ते भगवानन्दसरस्वती'ति च निर्देशात् कर्तृनाम्नि संशयः ॥

## No. (328) 1320/4 तत्त्वोपदेशः

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—36 |
| प्रमाणम्— $9\frac{1}{4} \times 1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—मलयाळलिपिः | स्थितिः—समीचीना |
| पत्राणि— 1-14 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

(प्रणम्य साम्बमीशानं शिरसा वैणिको मुनिः।
विनयावनतो भूत्वा पप्रच्छ स्कन्दमादरात्॥)
वेदान्तैः सच्चिदानन्दस्वरूपमितिकीर्तितम्।
व्याप्तमाकाशवत्सूक्ष्मं प्रत्यग्ज्योतिः प्रकाशकम्॥
मायाशबलितं ब्रह्म परमात्मेति कीर्त्यते।
गुणत्रयात्मिका माया गुणः सत्त्वं रजस्तमः॥
मायाप्रधानमव्यक्तमविद्याज्ञानमक्षरम्।
अव्याकृतं च प्रकृतिस्तम इत्यभिधीयते॥
रजो रक्तं चलं प्राहुः सत्त्वं शुक्लं प्रकाशकम्।
तमः कृष्णं...मणकं सर्गस्थित्यन्तहेतवः॥
मायायां ब्रह्मचैतन्यप्रतिबिम्बानुषङ्गकः।
महान्कालः पुमांश्च स्युर्महत्तत्त्वादहंकृतिः॥
अहंकारात्तमोयुक्तात्तन्मात्राः पञ्च जज्ञिरे।
शब्दः स्पर्शश्च रूपं च रसो गन्ध इति क्रमात्॥
भूतानां खानिलाग्न्यम्बुभूमीनां ते गुणाः स्मृताः॥

उपसंहारः —

योगस्य परमां सिद्धिं लभन्ते शिवयोगिनः।
असन्नेव भवेद्विद्वानसद्ब्रह्मेति वेद चेत्॥
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः।
सर्वो वै रुद्र इत्यादिश्रुतिरीश्वरसत्तया॥
सद्रूपत्वं प्रपञ्चस्य प्रतिपादयति स्फुटम्।
प्रलयेऽप्यनुसन्धाने प्रपञ्चोपशमः शिवः॥
विश्वाधिको रुद्र इति व्याचष्टे स्फुटमाप्तवाक्।

प्रत्यग्ज्ञानमहाम्भोधेर्ज्ञानामृतमुपाहृतम् ।
पिबन्तः परमां सिद्धिं लभन्ते शिवयोगिनः ।
तत्त्वोपदेशं शुकवज्जडचित्तोऽपि यः पठेत् ।
सतां सभां प्रविष्टोऽसौ सर्वज्ञ इति भाष्यते ॥

इति तत्त्वोपदेशे षष्ठोऽध्यायः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे पञ्चभूतानां गुणसहितानां सदेवतानां स्वरूपं, भूरादयो लोकास्तन्निवासिनश्च, योगाः, योगसाधनानि योगविघ्नाः, जाग्रदाद्यवस्थाः कायिकादिनियमाः, आसनानि, जरायुजादिप्राणिभेदाः, नाडीपरिच्छेदः, इत्यादयो विषयाः विचार्यन्ते ।

वक्तव्यविशेषः—

अमुद्रितः । अस्मिन्कोशे आदितः षडध्यायाः सन्ति ।

## No. (329) 594 तप्तमुद्राविद्रावणम्

ग्रन्थकर्ता—भास्करदीक्षितः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-84

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—78
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा— समग्रः

उपक्रमः—

मार्ताण्डतिलकस्वामिमहागणपतीन्वयम् ।
विघ्नबन्धात् (भीत्या) नमस्यामः सर्वसिद्धिविधायिनः ॥
ब्रह्मविष्णुमहेशानां कारणं परमेश्वरम् ।
साम्बं नौमि शिवादित्यं मायाकल्पितविग्रहम् ॥
क्लेशकर्मविपाकाद्यैरपरामृष्टमीश्वरम् ।
गुरूणां च गुरुं वन्दे विष्णुमोंकारशब्दितम् ॥
उमामहेश्वरं नौमि मद्ग्रामसविधालयम् ।
यत्पादाम्भोरुहस्मृत्या स्फुरन्ति सकलाः कलाः ॥

उमामहेश्वराचार्यान्चोळावनिशिखामणीन् ।
तातपादानहं नौमि सर्वतन्त्रप्रवर्तकान् ॥
उमामहेश्वराचार्यतनुजो भास्कराध्वरी ।
अस्ति कोनेरिराजेन्द्रपुरवासी बुधोत्तमः ॥

वैतालकमि . . . . . . . . . . . विहितैकभवाम्बुधिः ॥

निर्व्याजवाचमपि ये . . . . . . . . . . . . . . . . . . . . . . . . . . . . .स्वातन्त्र्योत्सुका विदुः तमिह संक्षेपेण प्रदर्शयामः। ते खल्वेवमाहुः—यद्यपि तप्तचक्रादिधारणं धर्म इत्यत्र न प्रत्यक्षं प्रमाणम्; धर्मस्य प्रत्यक्षागोचरत्वात्। नाप्यनुमानम्; श्रुत्यनुपजीविनोऽनुमानस्य धर्मप्रमाणत्वायोगात्।

उपसंहारः—

ब्राह्मणानामपि चैत्यवन्दनकेशोल्लुञ्छपनादिष्वात्मतुष्टिसत्त्वेन चैत्यवन्दनादीनामपि धर्मत्वप्रसङ्गात्। आपस्तम्बमुनिना यत्र तु प्रत्युपन्युपलब्धिः प्रवृत्ति न तत्र धर्मशास्त्रमस्ति। तदनुवर्तमानो नरकाय राध्यतीति शास्त्रानुपजीव्यात्मतुष्टिमात्रस्य प्रमाणत्वनिराकरणाच्च। श्रीभगवद्गीतायामपि "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं युक्तं कर्तुमिहार्हसी" ति शास्त्रोपजीवनेनैव सर्वेषामाचाराणामनुष्ठेयत्वप्रतिपादनाच्चेति दिक् ॥

इति श्रीमद्धारीतान्वयजलधिपूर्णचन्द्रायमाणश्रीमदुमामहेश्वराध्वरीन्द्रतनूज-
कोनेरिपुरवासिभास्करदीक्षितविरचिततप्तमुद्राविद्रावणे
द्वितीयः परिच्छेदः

राक्षसाब्द धनुर्मासि श्रीरंगाख्यस्सतां मुदे।
पुस्तकं व्यलिखत्तप्तमुद्राविद्रावणाभिधम् ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे, तप्तमुद्राधारणे प्रमाणत्वेन परैरुदाहृत "पवित्रं त" इत्यादि श्रुतीनामन्यथा अर्थवर्णनपूर्वकं तप्तमुद्राधारणं सप्रमाणं खण्ड्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते।

## No. (330) 657 तप्तमुद्राविद्रावणम्

ग्रन्थकर्ता—भास्करदीक्षितः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$10\frac{3}{4} \times 2\frac{3}{8}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—110-150

प्रतिपुटं पङ्क्तयः—32
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

594 कोशवत्।

उपसंहारः—

594 कोशवत्।

प्रतिपाद्यविषयः—

594 कोशवत्।

वक्तव्यविशेषः—

594 कोशवत्।

## No. (331) 2035/15 तादात्म्यत्रयप्रकरणम् (वेदांतषोडशप्रकरणे)

ग्रन्थकर्ता—आदिशेषशास्त्री
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$13 \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरलिपिः
पत्राणि—174-176

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

इदानीं तादात्म्यत्रयं निरूप्यते। तादात्म्यं त्रिविधम्। सहजकर्मजभ्रान्तिजभेदात्। तत्र सहजतादात्म्यं निरूप्यते। चितोऽहंकारप्रतिबिम्बे चिदहंकारयोस्तप्तायःपिण्डवदेकरूपतया प्रतीयमानत्वेन तत्प्रतिबिम्बयुक्ताहंकारतत्प्रतिबिम्बतादात्म्यं सहजतादात्म्यमित्युच्यते।

उपसंहारः—

एवं तादात्म्यत्रयं विचार्य एतत्तादात्म्यत्रयमहंकारस्यैव न तु तत्साक्षिणो निरवयवस्यासङ्गस्य म इति यो निश्चिनोति स एव जीवन्मुक्त इति सर्ववेदान्तसिद्धान्त इति सर्वं हृद्यम् ॥

इति श्रीमदादिशेषार्यविरचिते मनने तादात्म्यत्रयप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सहजकर्मजभ्रान्तिजादिभेदेन तादात्म्यत्रैविध्यं तत्स्वरूपं च प्रतिपाद्यते ।

वक्तव्यविशेषः—

अमुद्रितः ।

No. (332) **2035/13** तापत्रयप्रकरणम् (वेदान्तषोडशप्रकरणे)

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13 × 1¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरलिपिः | स्थितिः—समीचीना |
| पत्राणि—169-170 | समग्रोऽसमग्रो वा— समग्रः |

उपक्रमः—

इदानीं तापत्रयस्वरूपं निरूप्यते। तापस्त्रिविधः। आध्यात्मिकाधिभौतिकाधिदैविकभेदात्। तत्र शरीरस्थितक्षयरोगशीतज्वरतापज्वरसन्निपातोदरशूलकर्णरोगप्रमुखरोगजन्यदुःखजसन्ताप आध्यात्मिकः।

उपसंहारः—

शीतातपाग्निजलवर्षवाय्वशनिगोपुरमण्टपप्राकारभित्तिप्रमुखानेकाचेतनप्राप्तदुःखजन्यसन्ताप आधिदैविकः। इत्येवं विचार्य तापत्रयं शरीरस्यैव न देहेन्द्रियाद्यवस्थासाक्षिणो ममेति यो जानाति स एव जीवन्मुक्त इति सर्ववेदान्तसिद्धान्त इति सर्वं रमणीयम् ॥

इति तापत्रयप्रकरणं समाप्तम्

प्रतिपाद्यविषयः----

अस्मिन् ग्रन्थे तापत्रयस्वरूपं निरूप्यते ॥

वक्तव्यविशेषः—

अमुद्रितः ॥

No. (333) B 441 तारसारोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2}\times6$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—129–143 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं पूर्णमद इति शान्तिः। बृहस्पतिरुवाच याज्ञवल्क्यम्। यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां दैवतानां ब्रह्मसदनं तस्माद्यत्र क्वचन गच्छेत्तदेव मन्येतेतीदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे ॥

भा—संसारतारकं यत्र सारभूतं निगद्यते।
तारसाराभिधामेनां व्याख्यास्ये श्रुतिमद्भुतांबृहस्पतिरिति ॥

उपसंहारः—

भा—मन्त्रवाच्यार्थानां विभिन्नत्वेन तारतम्यसद्भावेऽपि मन्त्रलक्ष्यार्थस्याभिन्नत्वेन तारतम्याभावात् सर्वैरपि तारकमन्त्रैर्ह्यद्वितीयं निर्गुणं सच्चिदानन्दगुणकं परब्रह्मैव लक्ष्यते। न च वाच्यार्थलक्ष्यार्थविभाग इहानवकाश इति वाच्यम्। तत्त्वपरः परमात्मा श्रीराम इति विभज्योक्तत्वात्। तस्मादद्वैतब्रह्मदृष्ट्या सर्वं समञ्जसमवगन्तव्यम्। तद्विष्णोः परमं पदमित्याद्यन्यत्र व्याख्यातमेव।

इति श्रीभत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ तारसारोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अविमुक्ते तारकोपासनेन मोक्षप्राप्तिः फलं भवतीति प्रतिपाद्यते ॥

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (334) B 442 तुर्यातीतोपनिषद्भाष्यम्

ग्रन्थकर्ता — अप्पयदीक्षिताचार्यः
पत्रविशेष: — कागदपत्रात्मकः
प्रमाणम् — 8×6½ अङ्गुलानि
लिपि: — आन्ध्रलिपि:
पत्राणि — 1–4

प्रतिपुटं पङ्क्तय: — 26
प्रतिपङ्क्त्यक्षराणि — 18
काल: (कोशस्य) — ?
स्थिति: — समीचीना
समग्रोऽसमग्रो वा — समग्र:

उपक्रमः—

मू—ओं पूर्णमद इति शान्तिः। अथ तुर्यातीतावधूतानां कोऽयं मार्गस्तेषां का स्थितिरिति पितामहो भगवन्तं पितरमादिनारायणं परिसमेत्योवाच। तमाह भगवान्नारायणो योऽयमवधूतमार्गस्थः लोके दुर्लभतरो न तु बाहुळयो यद्येको भवति स एव नित्यपूतस्स एव वैराग्यमूर्तिस्स एव ज्ञानाकारस्स एव वेदपुरुष इति ज्ञानिनो मन्यन्ते। महापुरुषो यस्तच्चित्तं मय्येवावतिष्ठते। अहं च तस्मिन्नेवावस्थितः ॥

भा—कुटीचकादींश्चतुरश्चाश्रमां स्त्यजतो यया।
मुक्तिर्व्याख्यास्यते सैषा तुर्यातीतश्रुतिः परा ॥

उपसंहारः—

भा—परमार्थतोऽवधूतोऽपि शारीरवेषेण च तादृशत्वात् वेषशब्दः। नत्विदानींतनानामिव कापट्यं शङ्क्यम्। ब्रह्मात्मैक्यानुभूतिमत्त्वेनाद्वैतनिष्ठापरः प्रणवात्मकत्वेन प्रणवार्थभूतपरब्रह्मस्वरूपत्वेन देहत्यागं करोति। सूक्ष्मकारणदेहयोर्ब्रह्मणि स्वस्वरूपे विलीनत्वेऽपि प्रारब्धस्य स्थूलदेहस्य भूमौ पतनयोग्यत्वात्। तत्त्यागं करोति। ईदृशो यस्सोऽवधूतः कृतकृत्य इति ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु तुर्यातीतोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे कुटीचक बहूदक हंस परमहंसरूपचतुर्ष्वाश्रमेषु तथा सर्वप्रपञ्चेऽपि विरक्तस्यावधूतस्य स्वात्मनिष्ठया मुक्तिर्भवतीतिप्रतिपाद्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (335) B 443 तेजोबिन्दूपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—57–119 (1–63) | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सरूपारूपयोर्यत्र ब्रह्मणोरस्ति सङ्गतिः।
तेजोबिन्दूपनिषदं व्याख्यास्ये ग्रन्थसङ्ग्रहात्॥

तेज इति। तेजसप्रतियोगिकब्रह्मैव बिन्दुवदखण्डवर्तुळाकारं तत्परं तद्विषयम्। विश्वात्मनां समस्तजीवानां हृदयेवस्थितम्। अणवं अणोरिदं दुर्लक्ष्यत्वाभिप्रायमणुत्ववचनम्। शम्भोरिदं शाम्भवं अत एव शान्तं शिवमद्वैतं शान्तं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय इति श्रुत्यन्तरात्। किं च--

उपसंहारः—

अथेमामेवोपनिषदं सर्वदाभ्यसेदिति सार्धेनाह—सर्वेति। एतद्व्यतिरिक्तसर्वोपनिषदभ्यासं च दूरतः सन्त्यज्य सादरमिमां तेजोबिन्दुसंज्ञामुपनिषदं सर्वदा ब्रह्मानन्दसहितोऽभ्यसेत्। सकृत्पारायणफलमाह—सकृदभ्यासमात्रेण स्वयं क्रमेण ब्रह्मैव भवतीत्युपनिषदिति। षष्ठोऽध्यायः।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ
तेजोबिन्दूपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सप्रतियोगिकनिष्प्रतियोगिकवस्तुरूपं, अखण्डैकरसस्वरूपं, जीवन्मुक्तुल्यस्य शिवस्यात्मानुभवः, जीवन्मुक्तविदेहमुक्तयोरात्मानुभवश्च सम्यक्प्रतिपाद्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (336) C 1508 तैत्तिरीयकभाष्यटिप्पणी

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञानः | प्रतिपुटं पङ्क्तयः—30 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—42 |
| प्रमाणम्—10 ×4 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–21 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यत्प्रकाशसुखाभिन्नं यन्मन्त्रेण प्रकाशितम् ।
विवृतं ब्राह्मणे तत्स्यामदृश्यं ब्रह्म निर्भयम् ॥

यजुर्वेदशाखाभेदं तैत्तिरीयकोपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारस्तत्प्रतिपाद्यं ब्रह्म जगज्जन्मादिकारणत्वेन तटस्थलक्षणेन मन्दमतीन्प्रति सामान्येनोपलक्षितं सत्यज्ञानादिना च स्वरूपलक्षणेन विशेषतो विनिश्चितं नमस्कारच्छलेन संक्षेपतो दर्शयति—यस्माज्जातमिति । निमित्तोपादानत्वयोः पञ्चम्याः साधारण्यादुभयविधमपि कारणत्वमिह विवक्षितम् ॥

उपसंहारः—

आवेति । लोण्मध्यमपुरुषैकवचनम् । पौनःपुन्येनेत्येवं सत्वाख्यातेषु निपात्यत इत्यवतीति व्याख्यातम् । अभिभवामि उपसंहरामीत्यर्थः । ईश्वरात्मताज्ञानेनाहंबाधेऽद्वैतं ततो नास्ति भयकारणमित्यर्थः । नकार इवार्थः ॥

तैत्तिरीयकभाष्यस्य शांकरस्य द्रढीयसः ।
स्फुटार्थबोधकामेभ्यो निरमायि सुटिप्पणम् ॥

इति माधवानन्दसरस्वतिना लिखितं टिप्पणमिदं तैत्तिरीयकभाष्यटिप्पणं समाप्तम्

प्रतिपाद्यविषयः—

अयं तैत्तिरीयकभाष्यस्य सङ्क्षिप्तव्याख्यारूपो ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च दृश्यते ॥

## No. (337) 1278/2 तैत्तिरीयभाष्यव्याख्या (वनमाला)

| | |
|---|---|
| ग्रन्थकर्ता—अच्युतकृष्णानन्दः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—68 |
| प्रमाणम्—18 × 1¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1–98 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

विघ्नेश्वरं विघ्नशान्त्यै वाणीं वाचःप्रवृत्तये ।
गुरून्गूढार्थभानाय प्रणमामि निरन्तरम् ॥
जगन्मङ्गलरूपाय सृष्टिस्थित्यन्तकारिणे ।
नमो लक्ष्मीसमेताय कृष्णाय परमात्मने ॥
परिपूर्णं नित्यशुद्धं निर्विशेषं स्वयंप्रभम् ।
सत्यानन्दस्वरूपं यत्तदहं ब्रह्म निर्भयम् ॥
आचार्यस्य प्रसादेन पूर्वपुण्यैकजन्मना ।
तैत्तिरीयकभाष्यस्य व्याख्यां कुर्वेऽतिभक्तितः ॥

तैत्तिरीयकोपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारः तत्प्रतिपाद्यं ब्रह्म जगज्जन्मादिकारणत्वेन तटस्थलक्षणेन सामान्येनोपलक्षितं सत्यज्ञानात्मना स्वरूपलक्षणेन विशेषतो निश्चितं नमस्करोति—यस्माज्जातमिति ।

उपसंहारः—

य एवं वेदेत्यत्र एवंशब्दार्थमाह—भृगुवदिति । वेदसम्पादयतीत्यर्थः । यथोक्तमिति । ब्रह्मभावलक्षणमित्यर्थः । मङ्गळार्थमोंकारमुच्चारयति—ओमितीति ।

अन्नप्राणमनोबुद्धिसुखैः पञ्चभिरुज्ज्वला ।
भगवत्यर्पिता जीयाद्वनमाला कृतिर्मम ॥
नारायणपदद्वन्द्वं नारदादिभिरादृतम् ।
नमामि शतशो नित्यं नमतां मुक्तिदायकम् ॥

इति श्रीमत्स्वयंप्रकाशानन्दसरस्वतीचरणारविन्दसंलग्नरजोभूतस्याच्युतकृष्णानन्दतीर्थस्य कृतौ तैत्तिरीयकभाष्यव्याख्यायां भृगुवल्लीभाष्यव्याख्या समाप्ता

प्रतिपाद्यविषयः —

तैत्तिरीयकभाष्यविवरणरूपो ग्रन्थः ।

वक्तव्यविशेषः—

मुद्रितः । अस्मिन्कोशे समग्रो ग्रन्थभागः वर्तते ।

No. (338) B 444 तैत्तिरीयोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम् —$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि —69-112 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—शं नो मित्र इत्यादिशान्तिः । शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः । शीक्षां पञ्च । सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः संहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महा संहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः । वायुः सन्धानम् । इत्यधिलोकम् ।

भा—श्रीमंतं सुन्दरेशाख्यं तातपादगुरूत्तमम् ।
प्रणम्य भाष्यं कुर्वेऽहं तैत्तिरीयाभिधः श्रुतेः ॥

शीक्षां व्याख्यास्याम इत्यारभ्यान्ते तेषु वर्तेरन् इत्यन्तानां उपनिषद्वाक्यानां विस्पष्टार्थत्वात् ब्रह्मविदाप्नोति परमित्यारम्य संग्रहेण भाष्यं विरच्यते ।

उपसहारः—

भा—अहं विश्वं समस्तं भुवनं भूतैः संभजनीयं ब्रह्मादिभिर्भवन्तीति वा अस्मिन्भूतानीति भुवनमभ्यभवामाभिभवामि । सुवर्ण सुवरादित्य इत्यर्थः । आदित्य इव सकृद्विभातं मदीयं ज्योतिः सुवर्ण ज्योतिः प्रकाश इत्यर्थः ॥

इतीयं वल्लीद्वयोपनिषत्

अम्भस्य पार इत्युपनिषद्वाक्यानि विस्पष्टार्थत्वान्न व्याख्यास्यन्ते ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ तैत्तिरीयोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

तैत्तिरीयोपनिषद्व्याख्यानरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते। तैत्तिरीयोपनिषदि ब्रह्मवल्लीभृगुवल्ल्योरेव भाष्यं कृतमिति ग्रन्थकारेणैव लिखितमस्ति।

## No. (339) 3473 तैत्तिरीयोपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16\frac{1}{2} \times 1\frac{3}{8}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–62

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—58
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यस्माज्जातं जगत्सर्वं यस्मिन्नेव प्रलीयते।
येनेदं धार्यते चैव तस्मै ज्ञानात्मने नमः॥
यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः।
व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥
तैत्तिरीयकसारस्य मयाचार्यप्रसादतः।
विस्पष्टार्थरुचीनां हि व्याख्येयं सम्प्रणीयते ॥

नित्यान्यधिगतानि कर्माणि उपात्तदुरितक्षयार्थानि काम्यानि च फलार्थिनां पूर्वस्मिन्ग्रन्थे। इदानीं कर्मोपादानहेतुपरिहाराय ब्रह्मविद्या प्रस्तूयते। कर्महेतुः कामः स्यात् प्रवर्तकत्वात्। आप्तकामानां हि हेतुकामाभावे स्वात्मन्यवस्थानात् प्रवृत्त्यनुपपत्तेः आत्मकामत्वे च आप्तकामना आत्मा च ब्रह्म तद्विदो हि परप्राप्तिर्वक्ष्यति अतोऽविद्यानिवृत्तौ स्वात्मन्यवस्थानं परप्राप्तिः 'अभयं प्रतिष्ठां विन्दते, एतमानन्दमयमात्मानमुपसङ्क्रामति' इति श्रुतेः। काम्यप्रतिषिद्धयोरनारम्भात्, आरब्धयोश्चोपभोगेन क्षयात्, नित्यानुष्ठानेन च प्रत्यवायाभावात् अयत्नतः स्वात्मन्यवस्थानं मोक्षः। अथ वा—

उपसंहारः—

अहं विश्वं समस्तं भुवनं भूतैः संभजनीयं ब्रह्मादिभिः भवन्तीति वा अस्मिन् भूतानीति भुवनं अभ्यभवां अभिभवामि परेणैश्वरेण स्वरूपेण। सुवर्ण सुवरादित्यः आदित्य इव सकृद्विभातं मदीयं ज्योतिः सुवर्णज्योतिः प्रकाश इत्यर्थः। इतीयं वल्लीद्वयविहितोपनिषत् परमात्मज्ञानं तामेतां यथोक्तां उपनिषदं शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा भृगुवत्तपो महदास्थाय य एवं वेद तस्येदं फलं यथोक्तं मोक्ष इति।

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीसर्वज्ञशंकर-भगवतः कृतौ तैत्तिरीयकभाष्यं समाप्तम्

प्रतिपाद्यविषयः—

तैत्तिरीयोपनिषद्व्याख्यारूपो ग्रन्थः।

वक्तव्यविशेषः—

अयं ग्रन्थो मुद्रितः। अस्मिन्कोशे ग्रन्थः समग्रो वर्तते।

## No. (340) 358 तैत्तिरीयोपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—17×1¼ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–34

प्रतिपुट पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—86
कालः (कोशस्य)—?
स्थितिः—अतिशिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3473 कोशवत्।

उपसंहारः—

3473 कोशवत्।

प्रतिपाद्यविषयः—

3473 कोशवत्।

वक्तव्यविशेषः—

3473 कोशवत्।

## No. (341) 3289/1 तैत्तिरीयोपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$20 \times 2\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-21

प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—86
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—
3473 कोशवत्।

उपसंहारः—
3473 कोशवत्।

प्रतिपाद्यविषयः—
3473 कोशवत्।

वक्तव्यविशेषः—
3473 कोशवत्।

## No. (342) C 665 तैत्तिरीयोपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$9\frac{3}{4} \times 4\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-60

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—34
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—
3473 कोशवत्।

उपसंहारः—
3473 कोशवत्।

प्रतिपाद्यविषयः—
3473 कोशवत्।

वक्तव्यविशेषः—
अस्मिन्कोशे, ३० पत्राणि लुप्तानि दृश्यन्ते।

## No. (343) 4492 तैत्तिरीयोपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\times1\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-58

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3473 कोशवत्।

उपसंहारः—

3473 कोशवत्।

प्रतिपाद्यविषयः—

3473 कोशवत्।

वक्तव्यविशेषः—

3473 कोशवत्।

## No. (344) 1278 तैत्तिरीयोपनिषद्भाष्यवार्तिकम्

ग्रन्थकर्ता—सुरेश्वराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$18\times1\frac{3}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—13-1

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—68
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

सत्यं ज्ञानमनन्तमेकममलं ध्वस्तान्धकारं परं
. . . . . . . . . . . . . . णम्।
वेदान्तोपनिविष्टबोध . . . . . . . .
. . पत्यवेदशिरसो वक्ष्यामि सद्वार्तिकम्॥
यस्येदं सकलामलेन्दुकिरण . . . . . . . . .
. . . . . . . परवशश्चेक हितं दुःखिनाम्।

यद्वाणीकुलि . . . . . . . . . तुर्दिशस्तार्किकाः
भक्त्या पूज्यतमं प्रणम्य तमहं तद्भाष्यनीतौ यते ॥
तैत्तिरीयकसारस्य मयाचार्यप्रसादतः ।
विस्पष्टार्थरुचीनां हि व्याख्येयं सम्प्रणीयते ॥
दुरितक्षयहेतूनि नित्यानि ब्राह्मणे ययुः ।
काम्यानि चेह कर्माणि दृष्टादृष्टफलानि च ॥
विद्या प्रस्तूयतेऽथोर्ध्वं यथाभूतार्थबोधिनी ।
कर्मोपादानहेतूंस्तान् सैवोच्छेत्तुमलं यतः ॥

उपसंहारः—

अदत्वान्नं तु पात्रेभ्यो यो मामश्नाति मत्सरः ।
अहमन्नमदन्तं तं प्रत्य-द्मान्नवन्नरम् ॥
यो मां ददाति पात्रेभ्यो देशकालसमन्वितम् ।
ददित्थमसावन्नं मामवत्येव सर्वदा ॥
सत्यज्ञानादिरूपोऽहमविद्योत्थमशेषतः ।
अहं ह्यभिभवास्येको दिनकृच्छार्वरं यथा ॥
. . . . ह्येवं प्रवृत्तैषा यश्चैतां प्रतिपद्यते ।
विद्वानुक्ते परानन्दे निर्भये प्रतितिष्ठति ॥
ध्यानैकताननिविडाहितचेतसोऽजं
प्रध्वस्तकृत्स्ननिजमोहसमस्तदोषम् ।
प्रत्यक्पथा शुभधियो यतयोऽभ्युपेत्य
यं देवमेकममलं प्रविशन्ति सोऽव्यात् ॥
तैत्तिरीयकसारस्य वार्तिकामृतमुत्तमम् ।
मस्करीन्द्रप्रणीतस्य भाष्यस्यैतद्विवेचनम् ॥
मुमुक्षुसार्थवाहस्य भवनामभृतो यतेः ।
शिष्यश्चकार तद्भक्त्या सुरेशाख्यो महार्थवित् ॥

इति श्रीपरमहंसपरिव्राजकाचार्यशंकरभगवतः शिष्येण सुरेश्वराचार्येण विरचितं तैत्तिरीयकभाष्यवार्तिकं समाप्तम्

प्रतिपाद्यविषयः—

तैत्तिरीयोपनिषदः तद्भाष्यस्य च सङ्ग्राहकः पद्यरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

मुद्रितः। अस्मिन्कोशेऽयं ग्रन्थः समग्रो वर्तते ॥

No. (345) 3289/2 तैत्तिरीयोपनिषद्भाष्यव्याख्या (वनमाला)

| | |
|---|---|
| ग्रन्थकर्ता—अच्युतकृष्णानन्दः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—86 |
| प्रमाणम्—20×2¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—21-31 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

नित्यानुष्ठानेन च प्रत्यवायाभावादिति वदता त्वया यदि प्रत्यवायस्य नित्याकरणजन्यत्वं विवक्षितं तदा तदपि न संभवतीत्याह—नित्यानां चेति। प्रत्यवायानुपपत्तिरिति। प्रत्यवायोत्पत्तिर्न संभवतीत्यर्थः। ननु "अकुर्वन्विहितं कर्म—नरः पतनमृच्छति॥" इति वचनगतशतृप्रत्ययादकरणस्य प्रत्यवायहेतुत्वमवगम्यते, अकरणात्प्रत्यवायोत्पत्त्यनुपगमे च शतृप्रत्ययानुपपत्तिरिति, नेत्याह—इत्यत इति ॥

उपसंहारः—

नायं दोषः; अविद्यायाश्चैतन्याश्रितत्वेऽपि प्रतीतः कामादिपरिणाम्यन्तःकरणधर्मत्ववर्णनस्यात्र विवक्षितत्वात्। जीवचैतन्यस्याविद्यावत्त्वेऽपि वस्तुतस्तद्राहित्यान्न ब्रह्मैक्यानुपपत्तिरित्यावेदितमधस्तादिति संक्षेपः।

प्रतिपाद्यविषयः—

1278 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे, शिक्षावल्ल्यां "नित्यानां चाकरणमभाव" इति भाष्यमारभ्य आनन्दवल्ल्यां "तस्मान्नामरूपपक्षस्यैव विद्याविद्ये" इति भाष्यपर्यन्तं व्याख्या विद्यते।

## No. (346) B 766 तैत्तिरीयोपनिषद्भाष्यव्याख्या (वनमाला)

ग्रन्थकर्ता—अच्युतकृष्णानन्दः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2} \times 6$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–306
प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)-20-10-1905
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

1278 कोशवत् ।

उपसंहारः—

1278 कोशवत् ।

प्रतिपाद्यविषयः—

1278 कोशवत् ।

वक्तव्यविशेषः—

1278 कोशवत् ।

## No. (347) 74 तैत्तिरीयोपनिषद्भाष्यव्याख्या (वनमाला)

ग्रन्थकर्ता—अच्युतकृष्णानन्दः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$21 \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–74
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—10
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

1278 कोशवत् ।

उपसंहारः—

1278 कोशवत् ।

प्रतिपाद्यविषयः—

1278 कोशवत् ।

वक्तव्यविशेषः—

1278 कोशवत् ।

## No. (348) 4135 त्रिपाद्विभूत्यादिप्रकरणम् (कलामाला)

ग्रन्थकर्ता—रामचन्द्रेन्द्रः
पत्रविशेष:—तालपत्रात्मकः
प्रमाणम् 18½×1½ अङ्गुलानि
लिपि:—ग्रन्थलिपि:
पत्राणि—1-31

प्रतिपुटं पङ्क्तय:—18
प्रतिपङ्क्त्यक्षराणि—84
काल: (कोशस्य)—?
स्थिति:—शिथिला
समग्रोऽसमग्रो वा—असमग्र:

उपक्रमः—

नत्वा त्रिपाद्विभूतीशं ब्रह्माहमिति ये सदा ।
विदेहमुक्तिपदवीं यान्ति तस्मै नमो नमः ॥
सर्ववेदान्तसंसिद्धप्रत्यग्ब्रह्मैक्यरूपिणे ।
वासुदेवेन्द्रगुरवे परस्मै ब्रह्मणे नमः ॥
सर्ववेदान्तसिद्धान्तब्रह्मप्रणवरूपिणाम् ।
तरङ्गाणां समासेन तात्पर्यार्थौ निगद्यते ॥
आदावाह्वानगीतेन मुक्तब्रह्मपरायणम् ।
रामचन्द्रं त्रिपाद्भूतिमहावैकुण्ठभूषणम् ॥
गुणसाम्यमहापीठे सहस्रारसरोजगे ।
सदा वसेति संप्रार्थ्य साकं स्वीयविभूतिभिः ॥
नत्वा श्रीगुरुचरणौ नीतिश्लोकेन तद्बळे ।
कलातरङ्गमालां समङ्गळां रत्नमालिकाम ॥

उपसंहार:—

पुरा त्रिपुटिवेदादि यद्यद्भाति स्वतः पृथक् ।
रामचन्द्रमयं तत्तद्विभातीत्यनुगायति ॥

मातृमानमेयत्रिपुटिसंज्ञं यद्यदस्तीह तत्सर्वं सषडङ्गमृगादिचतुर्वेदं मीमांसादिषट्शास्त्रं सर्वम् ।

मिनोतीति जगत्कृत्स्नं माता जीव इतीरितः ।
मानं तदन्तःकरणं मेयं विषयबृन्दकम् ॥
इयं त्रिपुटिरित्युक्ता तन्मयं विश्वमीरितम् ।
त्रिपुटिव्यतिरेकेण नान्यदस्ति जगत्त्रये ॥
शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा ।

छन्दश्चेतीह वेदानां षडङ्गं परिकीर्तितम् ॥
ऋग्यजुःसामाथर्वाणो वेदाश्चत्वार ईरिताः ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे प्रणवस्वरूपं चतुर्धा (अकारोकारमकारार्धमात्रारूपेण) परिकल्प्य पुनः एकैकपादेऽपि स्थूलसूक्ष्मबीजतुर्यभेदेन चातुर्विध्यं परिकल्प्य आहत्य षोडशकलारूपेण भेदं कल्पयित्वा, स्वरूपचैतन्येऽपि वैश्वानरादिचतुर्विधभेदं कल्पयित्वा, प्रतिपर्यायेऽपि चतुर्षु पादेषु क्रमेण अधिष्ठानभूतं वैश्वानरादिस्वरूपं त्रिपान्नारायण इति ध्यायतः विदेहमुक्तिः सिध्यतीति प्रतिपादितम् ॥

वक्तव्यविशेषः—

अमुद्रितोऽयं ग्रन्थः। अस्मिन्कोशे समग्राः नव तरङ्गा विद्यन्ते, दशमश्चासमग्रः।

## No. (349) B 1067 त्रिपाद्विभूत्यादिप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—रामचन्द्रेन्द्रः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—$8\frac{1}{2} \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—24-6-1940 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-193 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

4135 कोशवत्।

उपसंहारः—

4135 कोशवत्।

प्रतिपाद्यविषयः—

4135 कोशवत्।

वक्तव्यविशेषः—

4135 कोशवत्।

## No. (350) B 446 त्रिपुरातापिन्युपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8 \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-6
प्रतिपुटं पङ्क्तयः—26
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—ओं भद्रं कर्णेभिरिति शान्तिः। देवा ह वै भगवन्तमब्रुवन् स्वामिन्नः कथितं स्पष्टं क्रियाकाण्डं सविषयम्। त्रैपुरमथ परमं निर्विशेषं कथयस्वेति। तान्होवाच भगवान् तुरीयया मायया ऽन्त्यया निर्दिष्टं परं ब्रह्मेति परमपुरुषं चिद्रूपं परमात्मेति च। स श्रोता मन्ता द्रष्टा आदेष्टा प्रष्टा स्पृष्टा आघोष्टा विज्ञाता सर्वेषां पुरुषाणामन्तः पुरुषस्स आत्मा स विज्ञेय इति॥

भा—यत्र निर्दिश्यते ब्रह्म चिच्छक्तया तुर्यमायया।
सैषा व्याख्यास्यते साध्वी त्रिपुरातापिनीश्रुतिः॥ ननु मनः।

उपसंहारः—

भा—"सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्त" इत्यादिवाक्यैरुक्त आकाशः परमात्मैव स्यात्। न तु भूताकाशः। भूताकाशस्य तदितरवाय्वादिसर्वाधिष्ठानत्वेऽपि तज्ज्ञानेनामृतत्वप्राप्त्यसम्भवात्। यो जानीते सोऽमृतत्वं गच्छतीत्याह—अतः पर एवाऽत्माऽऽकाशः। तस्मादेतां तुरीयां कामराजीयां त्रिपुरां परां शक्तिमेकाक्षरं ब्रह्मेति यो जानीते स तुरीयं पदं प्राप्नोति।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु
त्रिपुरातापनोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे चिद्रूपपरमात्मनः लोकवेदादिसर्वप्रपञ्चप्रविलापनपूर्वकज्ञानेन, तद्भावापत्तिर्भवतीति प्रतिपाद्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (351) B 570 त्रिपुरातापिनीभाष्यम्

ग्रन्थकर्ता—रामानन्दतीर्थः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{7}{8}\times6\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–135

प्रतिपुटं पङ्क्तयः—38
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—शके (1818)
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

भालार्कायुतभास्करां त्रिनयनां मन्दस्मितोद्यन्मुखीं
राजच्चन्द्रनिबद्धरत्नमकुटां दिव्याम्बरालंकृताम् ।
कस्तूरीतिलकां घनस्तननतां पाशाङ्कुशावैक्षवं
चापं पुष्पशरांश्च पञ्च दधतीं श्रीषोडशार्णां भजे ॥
प्रोद्यद्विद्युत्सहस्रद्युतिनिरवधिकस्फारगर्वापहारस्व-
ज्योतिर्द्योतितार्कज्वलनहिमकरज्योतिराद्यानवद्याम् ।
दद्याद्दैव विद्यां विविधरसलसद्गद्यपद्यातिहृद्यां
सद्योगध्यानपूजापरकृतकरुणा षोडशी ब्रह्मविद्या ॥
प्रणम्य परमां देवीं सुरब्रह्मस्वरूपिणीम् ।
त्रिपुरातापिनीभाष्यं करोमि कृपया गुरोः ॥

त्रिपुरा नाम आद्या शक्तिरनवच्छिन्ना परा भट्टारिका शिवादिक्षित्यन्त-षट्त्रिंशत्तत्त्वमयसर्वप्रपञ्चात्मिका तदुत्तीर्णा चेति सर्वोपनिषत्सु सिद्धम् ।

उपसंहारः—

"परो दिवा ज्योतिर्दीप्यते विश्वतः पृष्ठे सर्वतः पृष्ठेष्वनुत्तमेषूत्त-मेषु लोकेष्विति श्रुतेः" स्थितवतीत्यध्याहारः कर्तव्यः । अथ सर्वं जगद्व्याप्य स्थितवत्यासीदिति भगवान्याज्ञवल्क्यः । अथ अनन्तरं सर्वं कृत्स्नं जगत्स्थावरजङ्गमात्मकं प्रपञ्चजातं व्याप्यं अन्तर्बहिश्चावृत्य स्थित-वत्यासीत् स्थिताभवत् । इत्येवं भगवान्याज्ञवल्क्याचार्यः शिष्याय सामश्रवसे उक्तवानिति शेषः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यराघवानन्दतीर्थचरणारविन्दचञ्चरीकायमाणश्रीरामानन्दतीर्थ-विरचितं त्रिपुरापूर्वतापनीभाष्यं समाप्तिमगमत् ।

शके १७०१ विकारिनामसं. फाल्गुन शुद्ध ४ शुक्रवारत्राशिनदि पुत्रिकालेखन शक १८१८ दुर्मुखिसंवत्सरकार्तिककृष्णनवमीरविवासरे लिखितं पुस्तकं संपूर्णमगमत् ।

प्रतिपाद्यविषयः—

त्रिपुरातापन्युपनिषद्व्याख्यारूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते ॥

## No. (352) B 445 त्रिपुरोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—26 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$8 \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-5 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—वाङ्मे मनसीति शान्तिः। तिस्रः पुरस्त्रिपथा विश्वचर्षणा अत्राकथा अक्षरास्सन्निविष्टाः। अधिष्ठायैना अजरा पुराणी महत्तरा महिमा देवतानाम्। नवयोनिर्नव चक्राणि दीधिरे। नवैव योगा नव योगिन्यश्च। नवानां चक्रा अधिनाथा स्योना नव भद्रा नव मुद्रा महीनाम्। एका स आसीत्प्रथमापानवासीदापो न विंशत् आपो न त्रिंशात्। चत्वारिंशदथ तिस्रस्समिधा उशतीरिव मातरो मा विशन्तु।

भा—ब्राह्मणानां तु या पारायणमात्रोपयोगिनी।
त्रिपुरोपनिषत्सेयं सम्यग्व्याख्यास्यतेऽधुना ॥

उपसंहारः—

भा—तथा ह्येषर्ग्यजुरित्यादिषु चतुर्वेदमयी सगुणब्रह्ममयी अन्या च विद्येति निर्गुणब्रह्ममयी चाभिधीयते। तस्मात्कृच्छ्रेण निर्गुणब्रह्मपरतामवगम्य शुद्धाचारास्सद्ब्राह्मणाश्श्रुत्यन्तरोक्तप्रकारकध्यानसमाधिरूपोपासनया संसारबन्धेभ्यो मुक्तिं यान्तु। न त्वत्रोक्तप्रकारकपरिस्रुतादिनिवेदनानि स्वप्नेऽप्याचरन्तु ॥

इति त्रिपुरोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्यामुपनिषदि सकामक्षत्रियकर्तृककौळशाक्तमार्गानुसारिबाह्या-

राधनस्यैव प्राधान्येन वर्णनात् ब्राह्मणानां पारायणमात्रमिति आक्षेपसमाधानाभ्यां समर्थ्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (353) B 447 त्रिशिखीब्राह्मणोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेष:—कागदपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{3}{4} \times 6$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–28 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—पूर्णमद इति शान्तिः। त्रिशिखीब्राह्मण आदित्यलोकं जगाम। तं गत्वोवाच। भगवन् किं देहः, किं प्राणः, किं कारणं, किमात्मा। तं होवाच। सर्वमिदं शिव एव विजानीहि। किं तु नित्यश्शुद्धो निरञ्जनो विभुरद्वयश्शिव एकस्स्वेन भासेदं सर्वं दृष्ट्वा तप्तायःपिण्डवदेकं भिन्नवदवभासते। तद्भासकं किमिति चेदुच्यते। सच्छब्दवाच्यमविद्याशबळं ब्रह्म, ब्रह्मणोऽव्यक्तम्।

भा—तत्वोत्पत्तिक्रमोष्टांगयोगः प्रोच्येत एव च।
सेयं व्याख्यास्यते मुक्त्यै त्रिशिखीब्राह्मणश्रुतिः॥

अत्र अविद्याशब्दोऽव्यक्त शब्दार्थः।

उपसंहारः—

भा—यदि तं ब्रह्मानन्दमनुभूय तं पश्चात्स्वपुत्रमित्रकळत्रादीनां शिष्याणां वा विवक्षुरसि। तत इदानीमेव जीवन्मुक्तिपदमाश्रित्य नित्यसमाधिं कुरुष्व। विदेहमुक्त्यनन्तरं पुनरागन्तव्यमिति तवेच्छा चेत्सा न सफला स्यात्। न भूयस्संसृतिं व्रजेदित्युक्तत्वात्। न च जीवस्य पूर्वं ब्रह्मणस्सकाशादेवोत्पन्नत्वात्तथा पुनश्चोत्पत्तिस्स्यादिति वाच्यम्; सप्रतियोगिकब्रह्मणस्सकाशादुत्पन्नत्वान्निष्प्रतियोगिके विलीनत्वाच्च तस्मान्न कथंचन पुनरुत्पत्तिप्रसङ्ग इति सर्वमनवद्यम्।

इत्यप्पयदीक्षिताचार्यकृतिषु त्रिशिखीब्राह्मणोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे तत्त्वानामुत्पत्तिक्रमः, अष्टाङ्गयोगः, तत्फलं च सम्यक् निरूप्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (354) 4610 दक्षिणामूर्तिस्तोत्रम् (सव्याख्यम्)

ग्रन्थकर्ता—शंकराचार्यः (व्याख्याता पुरुषोत्तमानन्दमुनिः)
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$18\frac{1}{2}\times1\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-10

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानं
वर्षिष्ठान्ते वसदृषिगणैरावृतं ब्रह्मनिष्ठैः ।
आचार्येन्द्रं करकलितचिन्मुद्रमानन्दमूर्तिं
स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीळे ॥

इह खलु सर्वज्ञो भगवान्भाष्यकारो लोकानुग्रहैकप्रयोजनोपात्तदिव्यमङ्गळविग्रहो निखिलवेदान्तदुग्धाब्धे न्यायमन्थरेण विचारनिर्मथनादाविर्भूताद्वैतामृतस्य विन्यासकलशभूतं श्रीदक्षिणामूर्तिस्तोत्रं भोक्तृभोग्यभोगमोक्षप्रदजीवजगत्परमेश्वरगुरूणामत्यन्ताभेदबोधकं सकृच्छ्रवणमननादिमात्रेण परमपुरुषार्थप्रदमारभमाणस्तस्य वेदान्तसारभूतनवनीतपिण्डात्मकत्वेन तदीयविषयादिभिरेव तद्वत्तासिद्धिं मन्वानः आदौ प्रत्यगात्मनः सकलजगदधिष्ठानत्वेन परमेश्वराभेदं दर्शयन् दक्षिणाशामुखं परमेश्वरं मनसा पूजयति—विश्वं दर्पणेत्यादिना ।

उपसंहारः—

ऐश्वर्यं चाणिमादिकमव्याहतं कचिदन्यप्रतिहतं सिध्येत् "स एकधा भवति, त्रिधा भवति, स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादिश्रुत्युक्तं सर्वं फलं भवेदित्यर्थः।

इति श्रीपुरुषोत्तमानन्दमुनिविरचिता दक्षिणामूर्तिस्तुतिव्याख्या सुबोधिनी-समाख्या समाप्ता

नलनामसंवत्सरे दक्षिणायने आश्वीजमासे शुक्लपक्षे दशम्यां स्थिरवासरे काश्यां कैपसुब्बभट्टेन लिखितम्।

प्रतिपाद्यविषयः—

दक्षिणामूर्तिस्तोत्रव्याजेन सकलवेदान्तार्थाः अस्मिन्ग्रन्थे सङ्गृह्यन्ते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अस्या व्याख्यायाः तत्त्वसुधायाश्च कियानपि व्यत्यासो न दृश्यते। ग्रन्थनाम्नि कर्तृनाम्नि च परं संशीयते।

## No. (355) 2314 दक्षिणामूर्तिस्तोत्रवार्तिकम् (मानसोल्लासः)

ग्रन्थकर्ता—सुरेश्वराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$13\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—13 (63–76)
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—66
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

आत्मलाभात्परो लाभो नास्तीति मुनयो विदुः।
तल्लाभार्थं मुनिः स्तौति स्वात्मानं परमेश्वरम्॥
चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु च्छिन्नसंशयाः॥
स्वमायासृष्टमाविश्य विश्वं योऽहमिति स्थितः।
स्तोत्रेण स्तूयतेऽनेन स एव परमेश्वरः॥

अस्ति प्रकाशत इति व्यवहारः प्रदृश्यते।
तत्रास्तित्वं प्रकाशत्वं कस्मिन्नर्थे प्रतिष्ठितम् ॥
किं तेषु तेषु चार्थेषु किं वा सर्वात्मनीश्वरे।
ईश्वरत्वं च जीवत्वं सर्वात्मत्वं च कीदृशम् ॥

उपसंहारः—

तथैव मायया जीवो भ्रामितो वासनाबलात्।
नानाकारमिदं विश्वं भ्रममाणं च पश्यति ॥
संसृज्य मनसाप्येवं संसरन्निव पश्यति।
यथार्को जलसंसर्गाच्चलन्नानेव लक्ष्यते ॥
योगाभ्यासबलाद्येन मनो निर्विषयीकृतम्।
सुयुक्तो यः पुमान्सद्यो जीवन्मुक्तो भविष्यति ॥
द्वौ सुपर्णौ सुसंयुक्तौ सकायौ मायया शिवः।
अजामेकां जुषन्नेको नानेवासीदिति श्रुतिः ॥

इत्यष्टमोल्लाससङ्ग्रहः

प्रतिपाद्यविषयः—

शंकराचार्यकृतदक्षिणामूर्तिस्तोत्रविवरणरूपो ग्रन्थः।

वक्तव्यविशेषः—

मुद्रितः। अस्मिन्कोशे अष्टावुल्लासास्सन्ति।

## No. (356) B, 448 दक्षिणामूर्त्युपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—26 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-6 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सू—सह नाववत्विति शान्तिः। ब्रह्मावर्ते महाभाण्डीरवटमूले महासत्राय समवेता महर्षयः शौनकादयस्ते ह समित्पाणयस्तत्त्वजिज्ञासवो मार्कण्डेयं चिरजीविनमुपेत्य पप्रच्छुः। केन त्वं चिरजीव्यसि केन

वाऽऽनन्दमनुभवतीति। परमरहस्यशिवतत्त्वज्ञानेनेति स होवाच। किं तत्परमरहस्यशिवतत्त्वज्ञानम्। तत्र को देवः, के मन्त्राः, का निष्ठा, किं तज्ज्ञानसाधनम्। कः परिकरः, को बलिः, कः कालः, किं तत्स्थानम्, स होवाच।

भा—दक्षिणामूर्तिशब्दोऽपि परब्रह्मार्थको मतः।
दक्षिणामूर्त्युपनिषत् सेयं व्याख्यास्यतेऽधुना॥
नन्विह येन दक्षिणामुखशिवो अपरोक्षीकृतो भवति।

उपसंहारः—

भा—अत्रोच्यते। न हि विरिञ्चस्य जगत्सर्गकर्म काम्यं स्यात्। स्वाधिकारसिद्ध्यर्थकनित्यकर्मत्वात्। न चैवमपि सगुणमूर्त्युपासनमेव सावकाशं न तु निर्गुणामूर्तदक्षिणामुखोपासनमिति शङ्क्यम्। तन्निर्गुणस्वरूपापरोक्षज्ञानस्य चाहं शिवोऽस्मीति तदुपासनयैव लब्धत्वात्। तस्माद्य एवं वेद स कैवल्यमनुभवतीति युक्तमुक्तम्।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु दक्षिणामूर्त्युपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे शिवरूपस्य श्रीमेधादक्षिणामूर्तेरुपासनाप्रकारः सप्रपञ्चः सम्यङ्निरूप्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (357) B 449 दत्तात्रेयोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2}\times6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—181-186 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—भद्रं कर्णेभिरिति शान्तिः। ओं सत्यक्षेत्रे ब्रह्मा नारायणं महासाम्राज्यं किं तारकं तन्मे ब्रूहि भगवन्नित्युक्तः सत्यानन्दचिदात्मकं

सात्त्विकं मामकं धामोपास्वेत्याह—सदा दत्तोऽहमस्मीति प्रत्येतत्संवदन्ति येन तेऽसंसारीणो भवन्ति। नारायणेनैवं विवक्षितो ब्रह्मा विश्वरूपधरं विष्णुं नारायणं दत्तात्रेयं ध्यात्वा सद्वदति। दमिति हंसः। दामिति दीर्घं, तद्बीजं नाम बीजस्थम् , दामित्येकाक्षरं भवति।

भा—श्रीमन्नारायणो यत्र दत्तात्रेयस्य तारकं।
व्याख्यास्ये ब्रह्मणेस्याहद्दत्तात्रेय श्रुतीरितं॥
ओमिति।

उपसंहार:—

भा—ओं नमः शिवायेत्यस्यशैवषडक्षरस्य प्रकृते निर्गुणब्रह्मपरत्वानुपपत्तावपि सगुणब्रह्मपरत्वे रूढ्यर्थानुरोधेन दत्तात्रेयपरत्वानुपपत्तावपि ह्यावयवार्थानुरोधेन दत्तात्रेयपरत्वमुपपद्यते। कुतः? शिवशब्दस्य योगवृत्त्या मङ्गळार्थकत्वात्। सगुणस्यापि दत्तात्रेयस्य परममङ्गळस्वरूपत्वाच्च। दत्तात्रेयमन्त्रं यो नित्यमधीयते स वाय्वादिभूतो भवति इत्यादि स्पष्टार्थम्। जीवन्मुक्तो भवतीत्येतत्तु क्रमाभिप्रायं वचनं मन्तव्यम्।

इति श्रीमत्सुन्दरेश्वरपादशिष्याप्पयदीक्षिताचार्यकृतौ दत्तात्रेयोपनिषद्भाष्यम् समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे श्रीमन्नारायणेन ब्रह्मण उपदिष्टः दत्तात्रेयमन्त्रः सपरिकरः प्रतिपाद्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (358) B 450 दर्शनोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेष:—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$7\frac{3}{4}\times6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि 65–127 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—आप्यायन्त्विति शान्तिः।

दत्तात्रेयो महायोगी भगवान् भूतभावनः।
चतुर्भुजो महाविष्णुर्योगसाम्राज्यदीक्षितः॥

तस्य शिष्यो मुनिवरः सांकृतिर्नाम भक्तिमान्।
पप्रच्छ गुरुमेकान्ते प्राञ्जलिर्विनयान्वितः॥

भगवन्ब्रूहि मे योगं साष्टाङ्गं सप्रपञ्चकम्।
येन विज्ञानमात्रेण जीवन्मुक्तो भवाम्यहम्॥

सांकृते शृणु वक्ष्यामि योगं साष्टाङ्गदर्शनम्।
यमश्च नियमश्चैव तथैवासनमेव च॥

भा—अष्टांगयोगद्वैविध्यं यत्रसम्यगुदीर्यते ।
दर्शनाख्योपनिषदं व्याख्यास्ये विशदं मुदा॥

दत्तात्रेयाख्यभगवत्सांकृत्यो गुरुशिष्ययोः।
अवधूतोपनिषदि संबन्धोस्ति यथात्र च॥

को नाम दत्तात्रेयेति।

उपसंहारः—

भा—अहमस्मीत्यभिध्यायेदित्यादिवाक्यैर्ब्रह्मात्मैक्यसिद्धेः। केचित्तु लोके प्रतिपादितप्रकारकाष्टाङ्गयोगशास्त्रानभिज्ञत्वेन वेदबाह्यतयाऽष्टाङ्गयोगं निन्दन्ति। न तावता प्रकृतयोगाभ्यासनिरतानामौपनिषदोत्तमानां काचिद्धानिरस्ति। तस्मान्मुमुक्षुर्योगशास्त्रनिन्दकजनविमुखः सन् अनवरतमुक्तप्रकारकाष्टाङ्गयोगाभ्यासमेव कुर्यादिति स्थितम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतं दर्शनोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अष्टाङ्गानि, तद्युक्तो योगश्च सम्यङ्निरूपितः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (359) 1216/1 दहरविद्याप्रकाशिका

| | |
|---|---|
| ग्रन्थकर्ता—परमशिवेन्द्रसरस्वती | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—72 |
| प्रमाणम्—$14\frac{1}{8}\times1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-41 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

नत्वा गणेश्वरं स्कन्दं साम्बं सद्गुरुमेव च।
दहराख्यपरेशानध्यानरीतिः प्रकाश्यते॥

अत्र श्रुतिस्मृतीतिहासपुराणागमेषु परमेश्वरविषयपूजानमस्कारस्तुत्याद्यपेक्षया तद्ध्याने आदरो दृश्यते। तथा हि अथर्वशिखायाम्—शिव एको ध्येयशिवंकरः समन्यत् परित्यज्य समाप्ताथर्वशिखेति। कठवल्लीष्वपि—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वामिति योगयाज्ञवल्क्यस्मृतौ—

अथ ध्यानं प्रवक्ष्यामि शृणु गार्गि वरानने।
ध्यानमेव हि सर्वेषां कारणं बन्धमोक्षणे॥

उपसंहारः—

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थोक्षरः।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः॥

ब्रह्मेति व्यपदिश्यते श्रुतिषु यः ख्यातः पुराणेष्वपि
ब्रह्माणं जगदादिभूतमसृजद्यस्सेन्द्रनारायणम्।
यत्रैव व्यवतिष्ठते च सकलाधिष्ठातृभावः स व-
स्साम्बश्शम्भुरनम्बरोऽम्बरगतश्श्रेयो विधत्तां शिवः।

देहार्धयोगश्शिवयोः स श्रेयांसि तनोतु नः ।
दुष्प्रापमपि यत्स्मृत्या जनः कैवल्यमश्नुते ॥

एषा त्र्यम्बकमखिनः श्रीरामेन्द्रस्य . . . . . ।
शंकरनारायणमखिवरस्य चाभ्यर्थनावशाद्रचिता ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याभिनवनारायणेन्द्रसरस्वतीपूज्यपादशिष्यश्रीमत्परम-
शिवेन्द्रसरस्वतीविरचिता दहरविद्याप्रकाशिका समाप्ता

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे "परमेश्वरः दहराकाशे ध्येय" इत्ययमंशः श्रुतिस्मृतिपुराणादिप्रमाणोपन्यासपूर्वकं सम्यग्विचार्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते, मुद्रितश्च दृश्यते ॥

No. (360) B 895/4 दृग्दृश्यविवेकः (वाक्यसुधा)

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{1}{2} \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–8

प्रतिपुटं पङ्क्तयः—15
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

रूपं दृश्यं लोचनं दृक्तद्दृश्यदृक्तु मानसम् ।
दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यते ॥

नीलपीतस्थूलसूक्ष्मह्रस्वदीर्घादिभेदतः ।
नानाविधानि रूपाणि पश्येल्लोचनमेकधा ॥

आन्ध्यमान्द्यपटुत्वेषु नेत्रधर्मेषु चैकधा ।
सङ्कल्पयेन्मनश्श्रोत्रत्वगादौ योज्यतामिदम् ॥

कामसङ्कल्पसन्देहा श्रद्धाश्रद्धे धृतीतरे ।
ह्रीर्धीर्भीरित्येवमादीन् भासयत्येकधा चितिः ॥

नोदेति नास्तमेत्येषा न वृद्धिं याति न क्षयम् ।
स्वयं विभात्यथान्यानि भासयेत्साधनं विना ॥

चिच्छायावेशतो बुद्धौ भानं धीस्तु द्विधा स्थिता ।
एकाहंकृतिरन्या स्यादन्तःकरणरूपिणी ॥

उपसंहारः—

पारमार्थिकजीवस्तु ब्रह्मैक्यं पारमार्थिकम् ।
प्रत्येति वीक्षते नान्यद्वीक्षन्ते त्वनृतात्मना ॥

माधुर्यद्रवशैत्यादि जलधर्मस्तरङ्गव त्।
अनुगम्याथ तन्निष्ठे फेनेऽप्यनुगता यथा ॥

साक्षिस्थाः सच्चिदानन्दाः सम्बन्धाद्व्यवहारिके ।
तद्द्वारेणानुगच्छन्ति तथैव प्रतिभासिके ॥

लये फेनस्य तद्धर्मा द्रवाद्याः स्युस्तरङ्गके ।
तस्यापि विलये नीरे तिष्ठन्त्येते यथा पुरा ॥

प्रातिभासिकजीवस्य लये स्युर्व्यावहारिके ।
तल्लये सच्चिदानन्दाः पर्यवस्यन्ति साक्षिणि ॥

इति दृग्दृश्यविवेकप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे दृश्यदृशोः स्वरूपं सम्यग्विविच्य दृग्रूपसाक्षिनिष्ठानामानन्दादीनां, व्यावहारिके तद्द्वारा प्रातिभासिके च जलनिष्ठशैत्यादीनां तरङ्गे तद्द्वारा फेने च संक्रान्तिरिव संबन्धमुक्त्वा, शैत्यादीनां फेननाशे, तरङ्गे, तन्नाशे नीर इव प्रातिभासिकजीवलये धर्माणां व्यावहारिकजीवे तस्यापि विलये पारमार्थिके साक्षिणि उपसंहारो भवतीति सदृष्टान्तं सम्यग्विचार्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च दृश्यते ॥

## No. (361) 1125/2 दृग्दृश्यविवेकः (वाक्यसुधा)

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—40 |
| प्रमाणम्—$8\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—14-18 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

दृश्यं सर्वमनात्मा स्याद्दृगेवात्माविकारिणी ।
आत्मानात्मविवेकोऽयं कथितो ग्रन्थकोटिभिः ॥

B 895/4 कोशवच्छेषः ।

उपसंहारः—

B 895/4 कोशवत् ।

प्रतिपाद्यविषयः—

B 895/4 कोशवत् ।

वक्तव्यविशेषः—

B 895/4 कोशवत् ।

## No. (362) 955/3 दृग्दृश्यविवेकः (वाक्यसुधा)

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—30-32 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

1125/2 कोशवत् ।

उपसंहारः—

B 895/4 कोशवत् ।

प्रतिपाद्यविषयः—

B 895/4 कोशवत् ।

वक्तव्यविशेषः—

B 895/4 कोशवत् ।

## No. (363) C 1252 दृग्दृश्यसंबन्धानुपपत्तिप्रकाशः

ग्रन्थकर्ता—त्र्यम्बकशास्त्री
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$15\frac{1}{2}\times5$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-4

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—66
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥
नत्वा श्रीभगवत्पादप्रमुखान् देशिकोत्तमान् ।
स्फुटीकरोमि दृग्दृश्यसंबन्धानुपपन्नताम् ॥ १ ॥

ननु दृग्दृश्ययो संयोगादिसंबन्धासंभवेऽपि विषयविषयिभावसंबन्ध एवास्तु । यथा हि गुणगुणिनो संयोगासंभवे समवायः । तत्र च यत्सन्निकृष्टेन करणेन यत्सन्निकर्षसहकृतेन यज्ज्ञानं जन्यते तत्वं तज्ज्ञानविषयता । तत्सन्निकृष्टकरणजन्यत्वं च विषयिता । यद्वा विषयगतोऽतिशयो विषयता, विषयिगतश्च विषयितेत्युच्यते । अत एव नित्यज्ञानस्य सविषयत्वोपपत्तिरिति चेन्न ; आद्ये अतीतादावनुमित्यादिजनकस्य करणविषयसन्निकर्षस्याप्रसिद्धत्वादव्याप्त्यापत्तेः ।

उपसंहारः—

तादृशानुमितेः प्रमात्वे मानाभावादन्यथा उक्तरीत्या पर्वतो वह्निमानित्यनुमित्या निखिलपर्वतानामेव वह्निमत्त्वसिद्धिप्रसङ्गात् प्रमाणान्तरविरोधेन तन्निरासश्चेद्युक्तिविरोधात्प्रकृते तुल्य इति सर्वं चतुरश्रम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पूज्यपादचरणानुग्रहलब्धब्रह्मविद्यावैशद्यस्य श्रीमद्ब्रह्मानन्दसरस्वती सरस्वतीसाम्राज्यानुभवसमेध सारस्वतमानयुक्तिशतधारोत्सारितविपक्षपक्षगिरिनिचयस्य भट्टत्र्यम्बकस्य कृतिषु दृग्दृश्यसंबन्धानुपपत्त्यादिप्रकाशः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे दृक्स्वरूपस्य ब्रह्मणः दृश्यस्वरूपस्य प्रपञ्चस्य च परस्परं विषयविषयिभावादिसंबन्धानुपपत्त्या प्रपञ्चस्य मिथ्यात्वं समर्थ्यते ॥

वक्तव्यविशेषः—

अयं ग्रन्थः अमुद्रितः, अस्मिन्कोशे समग्रश्च दृश्यते ।

## No. (364) C 759 2 दृग्दृश्यसंबन्धानुपपत्तिप्रकाशः

ग्रन्थकर्ता—त्र्यम्बकशास्त्री
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$11\frac{1}{4} \times 4$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—5
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 1252 कोशवत् ।

उपसंहारः—

C 1252 कोशवत् ।

प्रतिपाद्यविषयः—

C 1252 कोशवत् ।

वक्तव्यविशेषः—

C 1252 कोशवत् ।

## No. (365) B 451 देव्युपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8 \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-8
प्रतिपुटं पङ्क्तयः—13
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—भद्रं कर्णेभिरिति शान्तिः । सर्वे वै देवा देवीमुपतस्थुः । कासि त्वं महादेवि । साऽब्रवीदहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं

जगत्। शून्यं चाशून्यं च। अहमानन्दानानन्दाः अहं विज्ञानाविज्ञाने। अहं ब्रह्माब्रह्मणी वेदितव्ये। इत्याहाथर्वश्रुतिः। अहं पञ्चभूतान्यपञ्चभूतानि। अहमखिलं जगत्। वेदोऽहमवेदोऽहम्। विद्याहमविद्याहम्। अजाहमनजाहम्। अधश्चोर्ध्वं च तिर्यक्चाहम्।

भा—यस्यां देव्यब्रवीत्स्वस्या निर्गुणब्रह्मरूपतां।
सेयन्तु देव्युपनिषच्छुभा व्याख्यास्यतेऽधुना॥

किमिहाहंब्रह्मस्वरूपिणीतिवदंती

उपसंहारः—

भा—न चोभयात्मकतायां विरोधवादिनः काश्चिदद्वैतिन उपनिषदियमन्या वा लक्ष्यान्करोति। द्विविधोभयात्मकतायाश्चेहावगम्यमानत्वादियं सर्वार्थगर्भिणी सर्वोत्तमा स्यात्। यदि वस्तुन उभयात्मकताद्वैविध्यं नोररीकुर्यात् ततस्तस्य न कदापि भोगमोक्षौ भवितुमर्हतः। तस्मान्न कश्चिदपि विरोधोऽत्र मन्तव्यः।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु देव्युपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे देव्या निर्गुणब्रह्मस्वरूपत्वं तस्याः सर्वस्वरूपत्वं तज्ज्ञानान्मृत्युतरणरूपं फलं च प्रतिपाद्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (366) B 242/1 द्राविडसूत्रम् (द्राविडम्)

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{1}{2}\times6\frac{1}{2}$ अङ्गुलानि
लिपिः—तमिळुलिपिः
पत्राणि—1–16

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—26
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

உலகத்தில் சிலர் உபநிடதம் முதலிய சாஸ்திரமொன்றையும் படியாமல் யுக்தியாலுமனுபவத்தாலுமே பரதத்துவத்தினுண்மை-

யையறிந்து தன்னியனுகவேண்டுமென்ற இச்சையுடையவராயி-ருப்பதாலவர்களுக்கு முபயோகப்படும்படி நானுமொன்றையும் படியாதவன் போலொருப்பறவந்தம் செய்யயெத்தனிப்பதாலிது முடிந்து உபயோகப்படுவதற்கு ஸத்குருவை பிரார்த்தித்து விசேஷமாக வணங்குகிறேன் ।

சகலப்பிராணிகளும் வஸிக்கின்ற இப்பூமியின் முடிவிலே திருத்தலாமென்றாலோ இப்பதில் எந்த த்வீபாந்தரங்களில் பார்த்தபோதிலும் பூமியின் சுவக்கங்களிலும் ஓலமேயிருப்பதாலு மிங்ஙென மனேககாரணங்களாலும் ஓலமே முடிவிலுள்ளதென்று நிச்சயமாகிறது ।

उपसंहार: —

கருவிகள் பஞ்சபூதங்களால் செய்யப்பட்டபோதிலும் பச்ச-வீட்டுச் செங்கல்கள் போலுள்ளவைகள் । காலதேகம் சுட்ட செங்கல்போலுள்ளது என்று முன் சொல்லியிருப்பதால் கருவிகள் நசித்தபோதிலும் தேகம் நசியாதென்று ஸந்தேகிப்பதில் அங்ஙென மாயினும் பிராணநிரோத முதலிய தகுந்த பிரயோகத்தால் கருவிகள் அக்னிபோல் செய்யப்பட்டால் தேகம் கர்பூரம்போல் முழுவதும் நசிப்பதிலெவ்வளவும் சந்தேகமில்லை ।

பூசிக்கவேண்டிய பாக்கியை க்ரமமாகப் புசித்து தேகம் தன்னால் விழும்பொழுது தானித்தேகத்தை விடாமலே யின்றிப்பொ-ழுதே விடவேணுமென்றெண்ணுவது வீணேயென்று சந்தேகிப்-பதில் அதற்குச்சரியான முன்சொல்லிய பிரயோகத்தைச் செய்தா லிப்பொழுதே விட்டுவிடலாம் ஆயினும் ஸஹஜானுபவம் பொருந்-தியவர்களுக்கு அது அவசியமல்லவென்று தீர்மானிக்கலாமாயிற்று ।

இங்ஙனம் அப்பய்யதீக்ஷிதரால் செய்யப்பட்டத்திராவிட சாஸ்த்திரம் உலது அத்தியாயமுற்றிற்று ।

प्रतिपाद्यविषय: —

अस्मिन्ग्रन्थे परमात्मनः सकाशात् पञ्चभूतादिक्रमेण प्रपञ्चसृष्टिः, स्वस्वकारणे लयद्वारा परमात्मावगमप्रकारः, जीवन्मुक्तिः, विदेहमुक्तिरित्यादिकं प्रतिपाद्यते ॥

वक्तव्यविशेषः--

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (367) 1223/3 द्वादशमहावाक्यविवरणम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$10 \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1–24
प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—52
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

यद्ज्ञानप्रभावेन दृश्यते सकलं जगत्।
यज्ज्ञानाल्लयमाप्नोति तस्मै ज्ञानात्मने नमः॥

विवरणं नाम विचारणम्। समस्तविषयोपासनाविनिर्मुक्तः स परमहंसः। केवलं निर्विशेषन्मात्रब्रह्मचिन्मात्रे तिष्ठति स परमहंसः। यत्र कुत्र च तिष्ठति। किं करोति केवलं महावाक्यविवरणं करोति। तन्महावाक्यं कीदृशं, ततोपनिषदानि वाक्यानि आदौ तावदृग्वेदस्य प्रज्ञानमानन्दं ब्रह्म, अहं ब्रह्मास्मीति यजुर्वेदस्य, तत्त्वमसीति सामवेदस्य अयमात्मा ब्रह्मेत्यथर्वणवेदस्य, अहं ब्रह्मस्मीति श्रुतेः इत्यादिद्वादशमहावाक्यैर्ब्रह्मविचारः। तत्रादौ ऋग्वेदस्य प्रज्ञानशब्दव्याख्यानं क्रियते। एकमेवाद्वितीय्यं ब्रह्मेति सिद्धान्तः। प्रज्ञानं स्वतश्चैतन्यं तद्विशेषण अनेकप्रकाराणि। तन्मध्ये यथाबुध्यानुसारेण व्याख्यानं क्रियते॥

उपसंहारः—

सोऽयंशब्दवाच्यः परमात्मा ब्रह्मेति अथ चैतन्यसत्तामात्रेण जगच्चैतन्यं भवति। क इव, यथा सूर्यप्रकाशेन चक्षुः प्रकाशो भवति। सूर्यावलोकनं करोति। यथा अग्निसत्तया पात्रमुष्णता॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे वेदचतुष्टयगत द्वादशमहावाक्यानि विव्रियन्ते॥

वक्तव्यविशेषः--

अस्मिन्कोशे ग्रंथः समग्रो वर्तते मुद्रितश्च दृश्यते॥

## No. (368) B 314/2 द्वादशमहावाक्यार्थविवरणम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—26 |
| प्रमाणम्—$7\frac{1}{4} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-38 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

विवरणं नाम विचारणम्। समस्तविषयोपासनाविनिर्मुक्तः स परमहंसः। केवलं निर्विशेषः ब्रह्मचिन्मात्र एतत्तिष्ठति स परमहंसः। यत्र कुत्रापि तिष्ठति। किं करोति केवलमहावाक्यविवरणं करोति। तन्महावाक्यं कीदृशं। ततोपनिषदानि वाक्यानि। आदौ तावत् ऋग्वेदस्य प्रज्ञानमानन्दं ब्रह्म, अहं ब्रह्मास्मीति यजुर्वेदस्य, तत्त्वमसीति सामवेदस्य।

उपसंहारः -

ब्रह्मोपासनयोयत्। परापश्यन्तिमध्यमावैखरीरूपेण व्यक्ताव्यक्तं प्रकटीकरोति। शब्दब्रह्मस्वरूपेणात्माभिव्यक्तिं करोति। अथर्वणवेदान्तसांख्यदर्शनपातञ्जलदर्शनं उपदर्शनमन्त्रशास्त्राणीति संक्षेपाद्ब्रह्मस्वरूपं निरूपितम्। इति वेदान्तकरणे अथर्वणवेदवाक्ये ब्रह्मशब्दनिर्णयोनाम चतुर्दशोऽध्यायः॥

इति श्रीशंकराचार्यविरचितं द्वादशमहावाक्यव्याख्यानं समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे वेदचतुष्टयगतद्वादशमहावाक्यानि विव्रियन्ते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते मुद्रितश्च दृश्यते॥

## No. (369) B 264 द्वासुपर्णेतिश्रुत्यर्थविचारः

| | |
|---|---|
| ग्रन्थकर्ता—बालब्रह्मानन्दसूरी | प्रतिपुटं पङ्क्तयः— 14 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$7\frac{1}{2}\times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-60 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

द्वा सुपर्णेति जीवेशभेदे यन्मानमिष्यते ।
नाशास्यं तदपीत्येवं श्रुतिस्मृत्यादिनोच्यते ॥

जीवेश्वरभेदवाचकं किं प्रमाणमित्यद्वैतवादिप्रश्ने पृष्टेनागम एवादौ वक्तव्य इति नीत्या द्वा सुपर्णेत्यादिश्रुतिरेव प्रमाणमिति द्वैतवादिनो वदन्ति । अत्राहुरद्वैतवादिनः—भेदवाचिका श्रुतिरानीयते चेत्तर्हि चतुर्धा नेया । जीव ईश्वराद्भिन्न इति, ईश्वरो वा जीवाद्भिन्न इति, जीवेश्वरौ भिन्नाविति वा, जीवेश्वरयोर्भेद इति वा । सर्वत्र भेदपदं त्यक्त्वा अभेदपदं प्रक्षिप्य नञ्शिरस्कतया वा चत्वारः पक्षाः । नेतोऽन्यथा तत्र भेदश्रुतिरुपपद्यते । उदाहृता तु श्रुतिर्न तेष्वन्यतमं पक्षमवलम्बत इति कथं भेदे प्रमाणं स्यात् । किं च यौ केचन प्राकृतपक्षिणावत्र द्विसुपर्णनीडो द्विखगो ह्यादिवृक्ष इत्यादौ चोच्यते । तयोर्जीवेश्वरत्वे किं मानम्—अथ मतम् ॥

उपसंहारः—

तदर्थस्तु योनित्वेनोक्तस्य विराजः पुरुषसूक्तप्रतिपाद्यस्य सर्वारोपाधिष्ठानत्वेन समष्टिचैतन्यैकत्वस्य कथनं "समासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवानिति । बोध्यबोधकज्ञातृज्ञेयादिसर्वैक्योक्तयदर्शनमित्यादिबहुव्यत्यासः कृत इति सद्भिश्चिन्तनीयम् । एतत्सर्वं दृष्ट्वैव दीक्षितैः "यत्र वैदिकमर्यादा भूयस्याकुलतां गते" त्युक्तम् ॥ तस्माद्भारतवाक्यस्योक्तरीत्यानुकूलत्वेन प्रातिकूल्यस्य प्रदर्शितरीत्या विप्रलम्भमूलत्वान्न तद्विरोधगन्धोऽपीति सर्वं चतुरश्रम् ॥ तस्मान्न द्वासुपर्णेत्यनया श्रुत्या जीवेश्वरपरमार्थसिद्धिरिति स्थितम् ॥

द्वासुपर्णेत्यादि मन्त्रवर्णाद्यर्थविचारतः ।
प्रीयतां मे गुरुस्सर्वहृदयाम्भोजविष्टरः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छिवकाशीविश्वेश्वरमणिकार्णिकातीरस्थश्रीजय-कृष्णानन्दपादपद्माराधकश्रीवेंकटकृष्णानन्दशिष्येण बालब्रह्मानन्दसूरिणा विरचित-द्वासुपर्णेतिश्रुत्यर्थविचारः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे भेदबोधकत्वेन आपाततः प्रतीयमानाः द्वासुपर्णेत्यादि-श्रुतीः प्रमाणत्वेनोदाहृत्य जीवेश्वरभेदः सत्य इति प्रवृत्तः द्वैतवादः उदाहृतश्रुतीनामन्यथार्थवर्णनपुरस्सरं निरस्यते ॥

वक्तव्यविशेषः—

C. 508 तमे कोशे अयं ग्रन्थः विद्यारण्यविरचित इत्यस्ति, इतर-कोशानुसारेण, ग्रन्थान्ते "यत्र वैदिकमर्यादा भूयस्याकुलतां गता" इति अप्पय्यदीक्षितवचनोदाहरणेन चायं ग्रन्थः बालब्रह्मानन्दकृत इति निश्चीयते। अयं ग्रन्थः समग्रः, अमुद्रितश्च ।

## No. (370) A 86/2 द्वासुपर्णेतिश्रुत्यर्थविचारः

| | |
|---|---|
| ग्रन्थकर्ता—बालब्रह्मानन्दः | प्रतिपुटं पङ्क्तयः—15 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—$12\frac{1}{2} \times 7\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—496–550 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 264 कोशवत् ।

उपसंहारः—

B 264 कोशवत् ।

प्रतिपाद्यविषयः—

B 264 कोशवत् ।

वक्तव्यविशेषः—

B 264 कोशवत् ।

## No. (371) C 302 द्वासुपर्णेतिश्रुत्यर्थविचारः

ग्रन्थकर्ता—बालब्रह्मानन्दः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$13\frac{3}{4} \times 5\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-36

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

B 264 कोशवत्।

उपसंहारः—

B 264 कोशवत्।

प्रतिपाद्यविषयः—

B 264 कोशवत्।

वक्तव्यविशेषः—

B 264 कोशवत्।

## No. (372) C 508 द्वासुपर्णेतिश्रुत्यर्थविचारः

ग्रन्थकर्ता—बालब्रह्मानन्दसूरी
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 5\frac{1}{2}$ अङ्गुलानि
लिपिः—कन्नडलिपिः
पत्राणि—1-27

प्रतिपुटं पङ्क्तयः—18
प्रतिपङ्क्त्यक्षराणि—46
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

B 264 कोशवत्।

उपसंहारः—

B 264 कोशवत्।

प्रतिपाद्यविषयः—

B 264 कोशवत्।

वक्तव्यविशेषः—

B 264 कोशवत्।

## No. (373) B 452 (Vol. I) ध्यानबिन्दूपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–24 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—यदि शैलसमं पापं विस्तीर्णं बहुयोजनम् ।
भिद्यते ध्यानयोगेन नान्यो भेदः कदाचन ॥

बीजाक्षरं परं बिन्दुं नादान्तस्योपरि स्थितम् ।
स शब्दश्चाक्षरे क्षीणे निःशब्दं परमं पदम् ॥

अनाहतन्तु यच्छब्दं तस्य शब्दस्य यत्परम् ।
तत्परं विन्दते यस्तु स योगीच्छिन्नसंशयः ।

वालाग्रशतसाहस्रं तस्य भागस्य भागिनः ।
तस्य भागस्य भागार्धं तत्क्षये तु निरञ्जनम् ।

पुष्पमध्ये यथा गन्धः पयोमध्ये यथा घृतम् ।
तिलमध्ये यथा तैलं पाषाणेष्विव काञ्चनम् ।

भा—अथाऽऽत्मनिर्णयं व्याख्यास्ये । हृदि स्थाने अष्टदलपद्मं वर्तते ।

उपसंहारः—

भा—यदीदं ज्योतिस्त्वंपदवाच्यार्थभूतजीवऽस्याचदाहं प्रत्ययगोचर स्याद्यदि वा तत्पदलक्ष्यार्थभूतब्रह्मस्या त्तदास्मत्प्रत्ययगोचर स्त्वं-पदार्थः स्यात् एवमुभयथाप्यभावात्त्वंपदलक्ष्यार्थभूतःप्रत्यगात्माख्यकमिदं ज्योतिरिदंतयैव दृश्येत । इदंतया ज्योतिर्दर्शिनस्तत्त्वमस्यादिवाक्यार्थ-श्रवणस्याप्यभावात्तस्मादनवद्यम् । यऽस्वात्मानं परमपुरुषानन्य-मखण्डमित्यर्थः । पश्येत्तन्मनस्तत्र लयं गतं भवति तत्पदं बिन्द्वाख्या षष्ठी मात्राऽवगन्तव्या ।

इति ध्यानबिन्दूपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे ओंकारावयवभूतस्य नादोपरि स्थितस्य बिन्दोर्ध्यानं अष्टाङ्गनिरूपणपूर्वकं प्रतिपाद्यते ।

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (374) B 452 (Vol. II) ध्यानबिन्दूपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—7½×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—9–27 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 452/Vol. I कोशवत् ।

उपसंहारः—

B 452/Vol. I कोशवत् ।

प्रतिपाद्यविषय:—

B 452/Vol. I कोशवत् ।

वक्तव्यविशेष:—

B 452/Vol. I कोशवत् ।

## No. (375) B 453 नादबिन्दूपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—7½×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–8 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—वाङ्मे मनसीति शान्तिः ।

अकारो दक्षिणः पक्ष उकारस्तूत्तरं स्मृतः।
मकारः पुच्छमित्याहुरर्धमात्रा तु मस्तकम् ।
पादादिकं गुणास्तस्य शरीरं तत्त्वमुच्यते ।
धर्मोऽस्य दक्षिणश्चक्षुरधर्मो योऽपरः स्मृतः ।
भूर्लोकः पादयोस्तस्य भुवर्लोकस्तु जानुनि ।
सुवर्लोकः कटीदेशे नाभिदेशेमहज्जगत् ।
जनोलोकास्तु हृद्देशे कण्ठे लोकस्तपस्तपः ।
भ्रुवोर्ललाटमध्येतुसत्यलोकोव्यवस्थितः ॥

भा—ननु तैत्तिरीयोपनिषदि पुच्छभूतस्यब्रह्मणः प्रतिष्ठात्वमुक्तं ।

उपसंहारः—

भा—तथापि लययोगिन इव तात्कालिकनैश्चल्यमात्रेण कृतार्थत्वाभावात्तत उत्क्रान्तरमुपरितनमात्रावाप्त्यै शब्दानुविद्धसमाध्यादिकं कुर्यादेव। यतश्च शान्त्यष्टकं शान्त्यतीताष्टकं च निर्विकल्पसमाधौ। उन्मन्यष्टकं मनोन्मन्यष्टकं च निःसङ्कल्पसमाधौ च भवतः। तत उन्मन्यारूढस्य प्रविद्धरत्वं सिद्धम्। वैखर्यष्टकमध्यमाष्टकवन्निर्वर्तिकसमाधेर्ब्रह्मावरीयोविषयकत्वात् कुण्डल्यष्टकपराष्टकवन्निर्वासनसमाधेर्ब्रह्मवरिष्ठविषयकत्वाच्च। एवं मनोन्मनीपर्यवसन्नत्वादियं भूतिर्न मननमात्रावसन्नेति शङ्क्यम् ॥

इति नादबिन्दूपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे नादस्वरूपायाः प्रणवस्य पञ्चमकलाया ब्रह्मत्वं तस्य सर्वात्मत्वं तस्यैव द्वादशमात्रात्मकप्रणवोपासकस्य प्रमथादिमात्रायां मृतस्य फलभेदश्च सम्यङ्निरूप्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते ।

## No. (376) B 454 नारदपरिव्राजकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2}\times6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-142 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

मू—अथ कदाचित्परिव्राजकाभरणो नारदस्सर्वलोकसंचारं कुर्वन् अपूर्वपुण्यस्थलानि पुण्यतीर्थानि तीर्थीकुर्वन्नवलोक्य चित्तशुद्धिं प्राप्य निर्वैरश्शान्तो दान्तऽसर्वतो निर्वेदमासाद्य स्वरूपानुसन्धानमनुसन्धाय नियमानन्दविशेषगण्यं मुनिजनैरुपसंकीर्णं नैमिशारण्यं पुण्यस्थलमवलोक्य सरिगमपधनिसंज्ञैः वैराग्यबोधकरैः स्वरविशेषैः प्रापञ्चिकपराङ्मुखैर्हरिकथालापैः स्थावरजङ्गमनामकैः भगवद्भक्तिविशेषैर्नरमृगकिंपुरुषामरकिन्नराप्सरोगणान् संमोहयन्—

भा—ओमित्युच्चार्यमन्त्रं प्रथममथ गुरुं सुन्दरेशं च नत्वा
भद्रं कर्णेभिरित्यप्यधिकनियमतश्शान्तिमेकां पठित्वा।
व्याख्यास्ये नारदीय्यां श्रुतिमिह तु परिव्राजकयां रहस्यां
तेनायं सुप्रसन्नो भवतु विधरणस्सेतुरेषां परात्मा॥

उपसंहारः—

भा—व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वेति चैवमादिश्रुतिप्रसिद्धप्रत्यगात्मभेदवशादनेकत्वोपपत्तिः। पश्चात्तत्त्वमसिवाक्यार्थश्रवणादिना सर्वप्रपञ्चावसाने सति सकृदेकधा वेदितव्यम्। इतः परमासमाप्ते श्वेताश्वतरोपनिषदि व्याख्यातत्वान्नेह व्याख्यातम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ नारदपरिव्राजकाभरणभाष्ये नवमोपदेशः
नारदपरिव्राजकोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे साधनचतुष्टयसम्पन्नस्य सन्न्यासे अधिकारः, स धर्मः सन्न्यासः, तद्भेदाः, भ्रमरकीटन्यायः, तन्न्यायेन ज्ञानिनः ब्रह्मस्वरूपावाप्तिः, इत्यादिकं सम्यङ्निरूप्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (377) B 455 नारायणोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः— आन्ध्रलिपिः
पत्राणि—26-29

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—18
कालः(कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यत्र नारायणोपास्तिश्चतुर्वेदशिरो मता ।
नारायणोपनिषदं व्याख्यास्ये तामिमामिदम् ॥

प्रकृतनारायणः किं सगुणः स्यात्, उत निर्गुणः, आहोस्विदुभयात्मक इति सन्दिह्यते । तत्र तावत्प्राप्तम् निर्गुण इति । कुतः निष्कळङ्कादिशब्दश्रवणात् । प्राणमनइन्द्रियाद्युत्पत्त्यधिष्ठानत्वश्रवणाच्च । तथा हि— "आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च" । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ॥ इति श्रुत्यन्तरेण च प्राणाद्यधिष्ठानं निर्गुणमवगम्यते ।

उपसंहारः—

महानारायणोपनिषत्तु तुर्यनारायणप्रतिपादनेन विशेषवचना सती सुतरां गौरवं प्राप्नोति । यद्यपि बहूनां सन्निधावेकस्य दौर्बल्यं स्यात् । तथापि क्षीरपूर्णस्य घटस्य विषबिन्दुसंयोगादिवत् न्निर्गुणवाचकैर्बहुशब्दैः पूर्णाया अप्यस्या उपनिषदस्त्रिमूर्त्युत्तीर्णनारायणपरत्वाभावेन मन्दफलत्वेऽपि महानारायणोपनिषदैकवाक्यासती कैवल्योत्तमफलेत्यवगन्तव्यम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ नारायणोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे नारायणः सगुणो निर्गुण उभयात्मको वेति विकल्प्य तस्य सगुणत्वं ब्रह्मविष्णुशिवातीतत्वं ब्रह्मत्वं च प्रतिपाद्यते ।

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते, अमुद्रितश्च ज्ञायते ।

## No. (378) B 456 निरालम्बोपनिषद्भाष्यम

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—7½×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—17–32 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं पूर्णमद इति शान्तिः ।

यषामज्ञानजन्तूनां समस्तारिष्टशान्तये ।

यद्यद्बोद्धव्यमखिलं तदाशङ्क्य ब्रवीम्यहम् ॥

किं ब्रह्म, क ईश्वरः, को जीवः, का प्रकृतिः, कः परमात्मा, को ब्रह्मा, को विष्णुः, को रुद्रः, क इन्द्र, कः शमनः, क स्सूर्यः, कश्चन्द्रः, केऽसुराः, के पिशाचाः, के मनुष्याः, का स्त्रियः, के पश्वादयः, किं स्थावरम्, के ब्राह्मणादयः, का जातिः, किं कर्म, किमकर्म,

भा—निर्विकारं निरालंबं ब्रह्मायत्रविविच्यते ।

निरालंबोपनिषदं तां व्याख्यातुं प्रयत्यते ॥

तत्रादवेतदुपनिषच्छ्रवणाधिकारिणी निर्दिशति ।

उपसंहारः—

भा—एवंभूतो यदाचरति बालोन्मत्तपिशाचावदिमौ संचरति । तदा स सिद्धारूपमनोनाशस्सर्वकर्मसन्यासी विदेहमुक्तश्च भवति । अजगरप्रेतपाषाणादिवत् संचाररहितस्यैव मुख्यविदेहमुक्तत्वेऽपि बालादिचर्यावतो गौणविदेहमुक्तत्वात् । स पूज्य इत्यादि स्पष्टार्थमन्यत् । इदानीमेतदुपनिषदध्ययनमात्रवतः ब्रह्मलोकादनावृत्तिलक्षणं फलमभिधायोपनिषदमुपसंहरति—निरालम्बोपनिषदसित्यादिना । पुनर्नाभिजायत इत्यभ्यास उपनिषत्समाप्तिद्योतनार्थः ।

इत्यप्पय्यदीक्षिताचार्यकृतौ निरालम्बोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मविष्णुरुद्रादीनां सर्वेषां स्वरूपं निर्वर्ण्यमुक्तप्रत्यं निर्गुणं ब्रह्मस्वरूपं च सम्यक्प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते, अमुद्रितश्च ज्ञायते ।

No. (379) A 86/3 निर्गुणाराधनक्रमः

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—15 |
| पत्रविशेषः—कागद्पत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—$12\frac{3}{4} \times 8$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—551–552 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् ।
स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥
निर्मलस्य कुतः स्नानं वासो विश्वोदरस्य च ।
अगोत्रस्य त्ववर्णस्य कुतस्तस्योपवीतकम् ॥
निर्विशेषस्य का भूषा कालंकारो निराकृतेः ।
निर्लेपस्य कुतो गन्धः पुष्पं निर्वासनस्य च ॥
निरञ्जनस्य किं धूपैः दीपैर्वा सर्वसाक्षिणः ।
निजानन्दैकतृप्तस्य नैवेद्यं किं भवेदिति ॥
विश्वानन्दयितुर्विष्णोः किं ताम्बूलं प्रकल्प्यते ।
स्वयं प्रकाशचिद्रूपो योऽसावग्न्यादिभासकः ॥
गीयते श्रुतिभिस्तस्य नीराजनविधिः कुतः ॥
प्रदक्षिणमनन्तस्य प्रणामोऽद्वयवस्तुनः ॥
वेदवाचामवेद्यस्य किं वा स्तोत्रं विधीयते ॥
बहिरन्तश्च संपूर्णः कथमुद्वास्यते प्रभुः ॥
इतीयं भावना यस्य दृढा भवति सर्वदा ।
सैव तस्य परा पूजा संपूर्णफलदायिनी ॥

उपसंहार:—

आत्मनो मननं नाम मन्तव्याभावचिन्तनम् ।
ध्यातव्याभावताज्ञानं निदिध्यासनमात्मनः ॥
समस्तभ्रान्तिविक्षेपरहितानात्मनिष्ठता ।
समाधिरात्मनो नाम नान्यच्चित्तस्य विभ्रमः ॥
एवं वेदान्तकल्पोक्तस्वात्मलिङ्गप्रपूजनम् ।
कुर्वन्नामरणं वापि क्षणं वा सुसमाहितः ॥
सर्वदुर्वासनाजालं पादपांसुमिव त्यजन् ।
विधूयज्ञानदुःखौघं मोक्षानन्दं समश्नुते ॥

इति श्रीमत्कपिलगीतायां निर्गुणाराधनं समाप्तम् ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे आवाहनाद्युपचाराणामाक्षेपेण सर्वेषामसंभवोक्तिपूर्वकं तादृशनिर्गुणब्रह्मस्वात्मत्वेन मन्यमानस्य स्वरूपानन्दानुभवरूपमोक्षप्राप्तिर्भवतीति प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अयं ग्रन्थः अमुद्रितः । अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । यद्यपि कोशान्ते अयं ग्रन्थः कपिलगीतान्तर्गत इति लिखितं, परं तु कपिलगीतायां न दृश्यते ।

## No. (380) B 457 निर्वाणोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता —अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—13 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः —समीचीना |
| पत्राणि—1-4 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—वाङ्मे मनसीति शान्तिः। अथ निर्वाणोपनिषदं व्याख्यास्यामः। परमहंससोऽहं परिव्राजकाः पश्चिमलिङ्गाः मन्मथक्षेत्रपालाः गगन-

सिद्धान्तम्। अमृतकल्लोलनदी, अक्षयं निरञ्जनम्, निस्संशयऋषिः, निर्वाणो देवता, निष्कुलप्रवृत्तिः, निष्केवलज्ञानं, ऊर्ध्वाम्नायः, निरालम्बपीठः, संयोगदीक्षा, वियोगोपदेशः, दीक्षासन्तोषपावनं च। द्वादशादित्यावलोकनम्।

भा :—सन्यास धर्मायतोत्का विमुक्त्यर्थो विलक्षणः।

निर्वाणोपनिषऽद्भाख्या संग्रहेणविधीयते॥

परमहंसः परमात्मा सोहमिति निश्चयवंतः परिव्राजकाः परितोव्रजंतीति।

उपसंहारः—

भा —स एव वर्णाश्रमाचाररहितस्सर्वजगद्व्यापारवर्जितः कार्याकार्यविधिप्रतिषेधराहित्यात्स्वेच्छाचारपरो भवितुमर्हति। देहनाशनं देहात्मबुद्धिविनाशकमखण्डाकारब्रह्मसम्यग्दर्शनमेव च निर्वाणमन्तेऽभिधीयते। तस्माल्लोकवेदानिन्द्याचारः परब्रह्मनिष्ठ एव स्वेच्छाचारार्ह इत्यवगन्तव्यम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु निर्वाणोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सन्यासधर्माः ज्ञानिनो व्यवहारादिस्वरूपंच प्रतिपाद्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (381) B 458 नृसिंहतापिन्युपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—267-320

प्रतिपुटं पङ्क्तयः—11
पतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)— ?
स्थितिः —समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—ओं भद्रं कर्णेभिरिति शान्तिः। आपो वा इदमासन् सलिलमेव स प्रजापतिरेकः पुष्करपर्णे समभवत्। तस्यान्तर्मनसि कामः समवर्तत।

इदं सृजेयमिति। तस्माद्यत्पुरुषो मनसाभिगच्छति। तद्वाचा वदति। तत्कर्मणा करोति। तदेषाभ्यनुक्ता। कामस्तदग्रे समवर्तताधि। मनसो रेतः प्रथमं यदासीत्। सतो बन्धुमसति निरविन्दन्। हृदि प्रतिष्ठा कवयो मनीषेति। उपैनं तदुपनमति। यत्कामो भवति। य एवं वेद।

प्रशान्तं यावृतिः प्राहनृसिंहंसङ्गवर्जितं।
व्याख्यास्येतां रहस्यार्थं गर्भिणीं तापिनीमिह॥

आपोवाइदमित्यादि शब्दैः प्रजापतेः प्रपञ्चसृष्टि विषयक कामवता-मनसानारसिंहमानुष्टुभं मंत्रराजं—सृष्टिसाधनत्वेनापश्यत् तेनेति

उपसंहारः—

भा—जानीयादित्यादि चोदनामकरोदित्यत्र तदेष श्लोकः—ओतमिति। ओतं तुरीयविश्वं ओतेनार्धमात्रास्थूलेन जानीयात्। अनुज्ञातारमोतादान्तरं तुरीयतैजसं अर्धमात्रासूक्ष्मेण जानीयात्। अद्वयमनुज्ञामनुज्ञैकरसं तुरीयप्राज्ञं अर्धमात्राबीजेन लब्ध्वा उपद्रष्टारमविकल्पमात्रजेत्। अर्ध-मात्रातुरीयेण तुरीयतुरीयात्मस्वरूपं प्राप्नुयादिति। नवमः खण्डः॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ नृसिंहोत्तरतापनीयोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

नृसिंहतापनीयोपनिषद्व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (382) 4614 नृसिंहपूर्वतापिनीदीपिका

ग्रन्थकर्ता—शंकरानन्दः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$18\frac{1}{2}\times2$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—66–93

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—86
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

निवासहेतुः लोकप्रसिद्धस्तस्य चक्रस्य नेमिरिव विनाशकारी ताक्ष्योऽरिष्टनेमिः। अथवा अरिष्टमनिष्टिरविनाशास्तस्य नेमिस्ताक्ष्यः सर्वतो विनाशहीन इत्यर्थः। स्वस्ति। सुखं नरसिंहाराधनस्मरणैकाग्र-भाजां न अस्मभ्यं बृहस्पतीदेवगुरुः धातु। इदं पदं पूर्वत्रापि सर्वत्र संबध्यते। इदानीं नारसिंहस्य मन्त्रराजस्यातिदुर्लभत्वं दर्शयितुमाध्या-त्मिकाधिभौतिकाधिदैविकविघ्नत्रयं शान्तिपदपाठेन परिहरति—शान्तिः शान्तिश्शान्तिः। स्पष्टम्। मन्त्रराजस्य ऋषिच्छन्दः सामर्थ्यं दर्शयितु मवतारयति—आपो वै प्रसिद्धाः प्रलयकाला—आप एव इदं लोकत्रयं ........परित्यक्तनामरूपं आसन् बभूवुः। सलिलमेव नीरमेव। न तु किंचिदद्धयऽन्यदित्यर्थः।

उपसंहारः—

विष्णोर्यत्परमं पदम्। यत्प्रसिद्धं सर्वेषु वेदेषु व्याख्यातमन्यत् तत्परमधामप्राप्तिरूपं फलमेतत् इदानीमुक्तम्। निष्कामस्य सर्वाभि-लाषरहितस्य भवति। स्पष्टम्। निष्कामस्य भवति। व्याख्यातम्। वाक्याभ्यास उपनिषत्समाप्त्यर्थः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य शंकरानन्दभगवतः कृतौ पूर्वतापिनीयोपनिषद्दीपिकायां पञ्चमोपनिषत्समाप्ता

प्रतिपाद्यविषयः—

नृसिंहपूर्वतापिन्युपनिषद्विवरणविचारः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते॥

## No. (383) 323 नृसिंहपूर्वतापिनीभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः

पत्रविशेषः—तालपत्रात्मकः

प्रमाणम्—$17\frac{1}{2}\times1\frac{1}{2}$ अङ्गुलानि

लिपिः—आन्ध्रलिपिः

पत्राणि—1–54

प्रतिपुटं पङ्क्तयः—6

प्रतिपङ्क्त्यक्षराणि—72

कालः (कोशस्य)—?

स्थितिः—शिथिला

समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यन्नामोपनिषद्व्याजात्तपस्यन्तं विधेर्गुरुम् ।
प्रणस्योपासनागर्भां तद्व्याख्यां श्रद्धयारभे ॥
आनुष्टुभात्सामराजान्नारसिंहादिदं जगत् ।
जातं यस्मिन्स्थितं लीनं नमस्तस्मै त्रिशक्तये ॥

भद्रं कर्णेभिरिति मन्त्रगर्भभद्रपदव्याख्यानपरामृचमादित उदितां शान्तौ पठन्त्याभ्यः श्रौतस्मार्तपौराणिककल्पप्रतिपादिताभ्यः साकारब्रह्मविद्याभ्य इयं सुभद्रेति दर्शयति । भद्रं कल्याणम् । कर्णेभिरिति भाद् संकीर्णैः शृणुयाम् शृणुम देवाः सन्तो वयम् ।

उपसंहारः—

यत्र गत्वेति । गन्तव्यतामाह—तद्विप्रास इति । तत्तादृशं स्थानं विप्रासः विप्राः ब्राह्मणा उपासकाः विपन्यवो मेधाविनः समाधौ धारणशक्तियुक्ताः जागृवांसः जागरितावस्थायामेव अवस्थात्रयात्प्रच्युताः समिन्धते समृद्धिं कुर्वन्ति । तादात्म्यपक्षे तु मन्त्रब्राह्मणयोर्यथास्वरूपं व्याख्येयमितिशब्दो ॰ मन्त्रसमाप्तिं द्योतयति पदचतुष्टयाभ्यासः सर्वोपनिषत्समाप्तिं द्योतयतीति सर्वं निर्मलं सिद्धम् ।

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यश्रीशंकरभगवतः कृतावाथर्वणतापनीयोपनिषद्भाष्ये पञ्चमोपनिषद्भाष्यं समाप्तम्

## No. (384) 202 न्यायरक्षामणिः

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—72 |
| प्रमाणम्—$14\frac{1}{2}\times1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-308 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

उद्घाट्य योगकलया हृदयाब्जकोशं
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।

यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥

अथातो ब्रह्मजिज्ञासा ॥

अत्र शास्त्रारम्भोपयोगिब्रह्मात्मैक्यलक्षणविषयप्रयोजनविरोधिनः कर्तृत्वाद्यात्मकाध्यासात्मकत्वप्रदर्शनेन तदुभयोपपादनद्वारा शास्त्रारम्भस्समर्थ्यते। ननु बन्धो न ब्रह्मात्मैक्यविरोधी, वस्तुतो बद्धस्यैव जीवस्य बन्धरहितेन ब्रह्मणैक्यस्य श्रुतिप्रामाण्यादङ्गीकर्तुं शक्यत्वात्। न च विरुद्धधर्माक्रान्तेर्भेदनियमस्य दृष्टत्वेन दृष्टनियमविरोधाच्छ्रुतिरपि तदभेदं बोधयितुं न शक्नोतीति वाच्यम्; बन्धमिथ्यात्वार्थमपि प्रत्यक्षादिभ्यः श्रुतेः प्राबल्यस्य सिद्धान्ते व्युत्पादनीयतया तत एवोदाहृतलोकदृष्टनियमस्याप्याभासीकरणसंभवादिति चेत्सत्यम्।

उपसंहारः—

मायां तु प्रकृतिं विद्यादिति श्वेताश्वतर एव तस्या उपादानत्वाभ्युपगमात् योनिशब्दप्रयोगेण च तस्या उपादानत्वप्रतीतेः। अत एव नास्ति निर्विकारत्वश्रुतिविरोधोऽपि। मायिकविकाराणां तात्त्विकनिर्विकारत्वाप्रतिक्षेपकत्वस्य गाधिवृत्तान्तलवणोपाख्यानादिषु लोके च प्रसिद्धतरत्वात्। तस्मात्सिद्धं ब्रह्म जगतो निमित्तमुपादानं चेति युक्तं ब्रह्मणो लक्षणम् ॥

एतेन सर्वे व्याख्याताः। स्पष्टोऽर्थः ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोः श्रीमदप्पयदीक्षितस्य कृतौ शारीरकन्यायरक्षामणौ प्रथमस्याध्यायस्य चतुर्थः पादः

प्रतिपाद्यविषयः—

श्रीमद्बादरायणकृतवेदान्तसूत्राणां विवरणरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। मुद्रितश्च दृश्यते ॥

## No. (385) 461 न्यायरक्षामणिः

ग्रन्थकर्ता—अप्पय्यदीक्षितः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—25×2 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—225-267

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—156
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

202 कोशवत् ।

उपसंहारः—

अत्र द्युमूर्धत्वादिरूपस्य ब्रह्मलिङ्गस्य कल्पनामात्रसिद्धत्वात् प्रादेशमात्रत्वश्रवणेनोपासकमूर्धादिषूपसंहृतत्वप्रतीतेः वेदबर्हिर्गार्हपत्यादिकल्पप्रतिरुद्धत्वाच्चारूपष्टता ॥

इति वैश्वानराधिकरणम्

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्य श्रीविद्याजिश्रीरङ्गराजाध्वरिसूनोरप्पयदीक्षितस्य कृतौ शारीरकन्यायरक्षामणौ प्रथमस्याध्यायस्य द्वितीयः पादः

प्रतिपाद्यविषयः—

202 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमद्वितीयपादमात्रं वर्तते ।

## No. (386) 3608 न्यायरक्षामणिः

ग्रन्थकर्ता—अप्पय्यदीक्षितः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—18×1½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-85, 1-4

प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

202 कोशवत् ।

उपसंहारः—

न च वाच्यमोदनभोक्तारं प्रत्येवानोदनयोरोदनत्वरूपकमवकल्पते । ततश्च यथा यस्य मृगयाविनोदिनो मृगाः परनरपतय इत्यत्रामृगेषु मृगत्वरूपके वस्तुतो मृगहन्ता क्षत्रिय एव तत्प्रतिसंबन्धी प्रतीयते न तु श्रोत्रियः कश्चित् ब्राह्मणः एवमत्रापि स्यादिति । तथा नियमाभावात् । 'त्वत्कृपाणभुजङ्गस्य क्षीरं विद्विषतां यशः' इत्यत्रोपचरितक्षीरप्रतिसंबन्धिनि कृपाणे तत्पातृत्वादर्शनादिति चेदुच्यते—

प्रतिपाद्यविषयः—

202 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायद्वितीयपादे अत्त्रधिकरणपूर्वपक्षपर्यन्तो ग्रन्थभागो विद्यते ।

## No. (387) 2804 न्यायरक्षामणिः

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः— 8 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—94 |
| प्रमाणम्—$18 \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—59–258 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

प्रथमे पादे स्पष्टब्रह्मलिङ्गानि निर्णीतानि वाक्यानि निर्णीतानि । अथास्पष्टब्रह्मलिङ्गानि वाक्यानि निर्णेतुं पादान्तरारम्भः । इदं च तत्र तत्राधिकरणे स्फुटीकरिष्यते । जन्मादिसूत्रे निर्णीतं ब्रह्मणो जगत्कारणत्वं तदाक्षिप्तं सर्वज्ञत्वं सर्वात्मत्वं नित्यत्वमित्यादयो धर्माः; इहासिद्धवद्ब्रह्मलिङ्गत्वेनोपादीयन्त इति प्रथमपादोपजीवतत्वात्तदानन्तर्यम् ॥

सर्वत्र प्रसिद्धोपदेशात् ॥

छान्दोग्ये श्रूयते—सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीता-थखलु क्रतुमय पुरुषो यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेत प्रेत्य भवति, स क्रतुं कुर्वीत, मनोमयः प्राणशरीरो भूमारूपस्सत्यसङ्कल्प आयते सर्वखल्विदं ब्रह्मतज्जालानिति ओंतउपासिताथखलुक्रतुमयः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः इत्यादि ।

उपसंहारः—

202 कोशवत् ।

प्रतिपाद्यविषयः—

202 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयतृतीयतुरीयपादाः विद्यन्ते ॥

## No. (388) 382 न्यायरक्षामणिः

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—72 |
| प्रमाणम्—$18\frac{1}{4}\times1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—अतिशिथिला |
| पत्राणि—111–238 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

द्युभ्वाद्यायतनं स्वशब्दात् । इहाप्यस्पष्टब्रह्मलिङ्गान्येव वाक्यानि विचार्यन्ते । पूर्वः पादः सविशेषप्रधानः, अयं तु निर्विशेषप्रधान इति पादभेदः । तमेवैकं विजानीथ आत्मानमन्यावाचो विमुञ्चथामृतस्यैष सेतुः, इत्याथर्वणिकोपनिषन्मन्त्रे द्युपृथिव्यादीनामोतत्ववचनेनावगम्यमानं तेषामायतनं..................................नात्संशये पूर्वपक्षः, प्रधानमेवैतन्न ब्रह्म, अमृतस्यैष सेतुरित्यमृतसंबन्धित्वसेतुत्वव्यपदेशात् । न ह्यमृत-मेव सदपारं ब्रह्मा मृतसंबन्धित्व........

24*

उपसंहारः—

ततस्तस्यार्थान्तरत्वज्ञापकानां तत्स्रष्टृत्वादिहेतूनां पूर्वोत्तराधिकरण विषयवाक्येषु विशिष्यापदेशात् स्पष्टं प्रतिपादनादिति तस्मिन्साध्ये प्रथमहेतोरर्थः। इहापि तस्य संसारिणो भेदेन व्यपदेशादिति द्वितीय-हेतोरर्थः। परमेश्वरस्यास्तित्वेऽपि तद्भेदे प्रतिपादनमिह कुतोऽपि शब्दान्नोपलभ्यत इति द्वितीयकल्पनिरासे पत्यादिशब्देभ्य इति द्वितीय सूत्रम्। सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशेऽभ्युपगम्यमाने पत्यादिशब्देभ्यः ............... ............

प्रतिपाद्यविषयः—

202 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे तृतीयपादमात्रं वर्तते।

## No. (389) 3609 न्यायरक्षामणिः

| | |
|---|---|
| ग्रन्थकर्ता— अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—46 |
| प्रमाणम्—13×2 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-39, 1-33, 1-23, (95) | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

कर्मकर्तृव्यपदेशात्। शब्दविशेषात्। स्मृतेश्च। यद्यपि एतमितः प्रेत्याभिसंभवितेत्यत्राप्यसमानविभक्तिशब्दरूपशब्दविशेषोऽस्ति तथापि तत्र प्राप्यप्राप्तृतारूपकर्मकर्तृव्यपदेशः साधकफलावस्थाभेदेनोपपद्यत इति शङ्कापरिहारायैकस्यामेवावस्थायां "स क्रतुं कुर्वीत मनोमयः प्राणशरीर" इत्याद्युपास्योपासकतारूपकर्मकर्तृव्यपदेशोऽपि प्रदर्शनीयः। तत्प्रदर्शने च एतमितः प्रेत्येत्यत्रापि अवस्थाभेदेनोपपत्तिशङ्का परिहृता भवति। न तु तत्प्रदर्शनं शब्दविशेषसूत्रेण कर्तुं शक्यम्। उपास्योपासकयोर्द्वयोरपि प्रथमान्तेन निर्दिष्टतया विशेषाश्रवणात्। अतस्तत्सङ्ग्रहाय कर्मकर्तृव्यप-देशसूत्रम्।

उपसंहार:—

तथापि न्यायव्युत्पादनाय प्रकरणं करेण पिधाय कृत्वाचिन्तारूपेण न्यायबलादवान्तरप्रकृतिपरत्वनिर्णयार्थमिदमधिकरणम् । अत एव भाष्ये प्रकरणानुसारेणास्य मन्त्रस्य मूलप्रकृतिपरत्वपक्षमपि प्रदर्श्य कृत्वा चिन्तोद्घाटनं कृतमिति सर्वमनवद्यम् । (इति चमसाधिकरणम् ।)
न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ।

बृहदारण्यके श्रूयते—
यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृ............... ॥

प्रतिपाद्यविषय:—

202 कोशवत् ।

वक्तव्यविशेष :—

अस्मिन्कोशे, प्रथमाध्यायद्वितीयपादे, कर्मकर्तृव्यपदेशाच्चेति सूत्रमारभ्य–तृतीयपादे अक्षराधिकरणपर्यन्तः, चतुर्थपादादितः चमसाधिकरणपर्यन्तश्च ग्रन्थभागो विद्यते ।

## No. (390) B 236/2 पञ्चदशाङ्गयोगप्रकरणम् (सव्याख्यम्)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः – 17 |
| पत्रविशेष:—कागद्पत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—26 |
| प्रमाणम्—$10\frac{1}{4}\times8$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–11 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रम:—

सद्गुरुं प्रणिपत्याहं सद्योमुक्त्येकसाधनम् ।
वक्ष्ये पञ्चदशाङ्गं तं योगं सव्याख्यमादरात् ॥

अत्र खलु श्रुतिस्मृतिपुराणादिप्रपञ्चितेषु कर्मभक्तिज्ञानयोगाख्येषु मोक्षसाधनेषु चतुर्षु सद्यो मुक्तिं प्रति योगस्यैवाव्यवहितसाधनत्वं शिष्टैः पूर्वैकैस्सर्वैरप्यभ्युपगतं दृश्यते । स च योगः यमाद्यष्टाङ्गयोगकः प्रसिद्धो

दर्शनोपनिषदादिषु पूर्वकैश्च बहुभिर्विद्वद्भिर्बहुषु प्रकरणेषु बहुधा प्रपञ्चितः एवं सतीहास्मत्प्रणीयमानेऽस्मिन् प्रकरणे पञ्चदशाङ्गकं योगं वक्ष्यामः। कानि पुनरेतानि पञ्चदशाङ्गानीत्यपेक्षायां तेजोबिन्दूपनिषत्प्रमाणानुरोधेन सप्रपञ्चमुपन्यस्यते—

श्रीमन्तं पूर्वपुण्यैर्गुरुवरमुपलभ्येश्वरस्य प्रसादात्
सर्वं ब्रह्मेति बोधात् प्रबलविषयसंसक्तमेतच्चिरेण ।
नानादुःखैकहेतुं मुहुरपि करणग्राममायस्य नित्यं
योऽहिंसाद्यैरुपेतो जयति सहजतस्सोऽग्रयोगी यमी स्यात् ॥

श्रीमन्तमिति ।

उपसंहारः—

सुषुप्तब्रह्मवादीत्विमास्सर्वाः प्रजा अहरहर्ब्रह्म गच्छन्त्य इत्यादिरुछान्दोग्यश्रुत्यविरोधेन सर्वेषां वेदान्तानां सुषुप्ते समन्वयमकार्षीत् तेन विशेषवचनानां सामान्यवचनैर्बाधो निरङ्कुशस्समजनि। सामान्यवचनानां तु सुषुप्तब्रह्मपराणां विशेषवचनैस्तुर्यब्रह्मपरैर्बाध उपपद्यत इति सर्वेषां विदुषांमभिमतम्। तर्हि सुषुप्तौ स्थूलसूक्ष्मविकाराभावेऽपि बीजविकारसद्भावान्निर्विशेषत्वाभाव इव प्रकृतनिर्विकल्पसमाधावपि

वृत्तयस्तु तदानीमज्ञाताऽप्यात्मगोचराः ।
स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थिता ॥

इति श्रुत्या वृत्तिसद्भावावगमाद्वृत्तिविस्मरणवचनमनुपपन्नमिति चेदत्रोच्यते—न हि निर्विकल्पसमाधिः प्रकृतः। ब्रह्मविच्छ्रेष्ठलभ्यत्वेन षष्ठस्य निर्वासनाख्यस्य समाधेरेव प्रकृतत्वात्। तृतीयो हि निर्विकल्पाख्यस्समाधिः ब्रह्मविल्लभ्यः प्रसिद्धः। तत्रापि प्रारब्धबीजसद्भावेऽपि सञ्चितागामिबीजाभावात् सुषुप्तिवैलक्षण्यमवगन्तव्यम् ॥

इति श्रीमदप्पय्यदीक्षितेन्द्रान्वयजेनाप्पय्यदीक्षितेन विरचितेषु पञ्चदशाङ्गयोगप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे तेजोबिन्दूपनिषदुक्तप्रकारेण यमनियमत्यागादिपञ्चदशयोगाङ्गाः, तादृशयोगिनः, तेषां जीवन्मुक्तिविदेहमुक्तिरूपं फलं च मूलव्याख्यानाभ्यां स्पष्टं निरूप्यते ॥

**वक्तव्यविशेषः—**

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (391) B 1019 पञ्चदशाङ्गयोगप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{1}{4} \times 6\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरिलिपिः
पत्राणि—1–25
प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—20
कालः—1934
स्थितिः (कोशस्य)—समीचीना
समग्रोऽसमग्रो वा—समग्रः

**उपक्रमः—**

B 236/2 कोशवत् ।

**उपसंहारः—**

B 236/2 कोशवत् ।

**प्रतिपाद्यविषयः—**

B 236/2 कोशवत् ।

**वक्तव्यविशेषः—**

B 236/2 कोशवत् ।

## No. (392) 3714 पञ्चदीपिका (ब्रह्मसूत्रभाष्यव्याख्या)

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्य.
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—16×1 अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–132
प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

अथातो ब्रह्मजिज्ञासेत्यादिसूत्रचतुष्टयम ।
सभाष्यं विस्तरेणैव व्याख्यास्ये सद्गुरुं स्मरन् ॥

अत्र खल्ववतारभाष्ये प्रथममुक्तम्—अस्मत्प्रत्ययगोचरपरमात्मोत्पन्नोऽहंप्रत्ययगोचरः कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यखिलधर्मोपेतश्च जीवात्मा प्रबलतरज्ञानसमुच्चितकर्मानुष्ठानसंस्कृतजीवान्तरपरिणतेश्वरसेवकत्वमात्मनो मत्वा अहमिदं ममेदमित्यभिमानवशात् पश्वाद्यविशिष्टः श्रौतस्मार्तादिनित्यनैमित्तिककाम्यनिषिद्धकर्मसु नियुक्तः प्रवृत्तो दृश्यत इति। अत्रायमाक्षेपः- कथमस्मत्प्रत्ययगोचरत्वं परमात्मनो भवितुमर्हति? अस्मत्प्रत्ययाहंप्रत्यययोरभिन्नत्वेन जीवात्मन एवास्मत्प्रत्ययगोचरत्वोपपत्तेः—

उपसंहारः—

न चैवं सति निदिध्यासितव्य इत्ययमपि विधिच्छायापन्न इति वाच्यम ; निदिध्यासनस्य ब्रह्मा......भिध्यानरूपत्वेन तदङ्गभूतासनादिसापेक्षतया कायिकर्मत्वसिद्धेः। न च धर्मो वा अरे द्रष्टव्य इत्येवमादिश्रवणे सत्ये वाक्यानि धर्मविषयाणि स्युरिति नियमोऽस्ति। आत्मनोऽपि धर्मित्वेन धर्मधर्म्यभेदोपचारवाक्यानां धर्मविषयत्वोपपत्तेः। नापि धर्मधर्म्युभ........स्तित्वाबुद्धिरुपपद्यते। नैरात्म्यावादप्रसङ्गात्। आत्मनि विदिते सर्वमिदं विदितं स्यादिति श्रुतेरात्मन एव धर्मिणो वेद्यत्वेन सिद्धान्त........त्वात्। यद्यपि नैरात्म्यसिद्धान्तदशामुपयाते....
................

प्रतिपाद्यविषयः—

स्वकृतस्य शारीरकमीमांसाभाष्यस्य व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः आदिकरणत्रयं समग्रं विद्यते, समन्वयाधिकरणं चासमग्रम्। अमुद्रितश्च ज्ञायते ॥

## No. (393) B 75/1 पञ्चपादिका

| | |
|---|---|
| ग्रन्थकर्ता—पद्मपादाचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$7\frac{3}{4}\times6$ अङ्गुलानि | काल (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थिति—समीचीना |
| पत्राणि—9–83 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

अनाद्यानन्तकूटस्थज्ञानानन्तसदात्मने ।
अभूतद्वैतजालाय साक्षिणे ब्रह्मणे नमः ॥
नमः श्रुतिशिरःपद्मषण्डमार्ताण्डमूर्तये ।
बादरायणसंज्ञाय मुनये शमवेश्मने ॥
नमाम्यभोगिपरिवारसम्पदं निरस्तभूतिमनुमार्धविग्रहम् ।
अनुग्रमुन्मृदितकाललाञ्छनं विना विनायकमपूर्वशंकरम् ॥
यद्वक्त्रमानससरःप्रतिलब्धजन्मभाष्यारविन्दमकरन्दरसं पिबन्ति ।
प्रत्याशमुन्मुखविनीतविनेयभृङ्गांस्तान् भाष्यचिन्तकगुरून्
प्रणमामि मूर्ध्ना ॥
पदादिवृन्तभारेण गरिमाणं बिभर्ति यत् ।
भाष्यं प्रसन्नगम्भीरं तद्व्याख्यां श्रद्धयारभे ॥

युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोरित्याद्यहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इत्यन्तं भाष्यम्, अस्यानर्थहेतोः प्रहरणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इत्यनेन भाष्येण पर्यवस्यच्छास्त्रस्य विषयः प्रयोजनंचार्थात्प्रथमसूत्रेण सूत्रिते इति प्रतिपाद्यत इति। एतच्च तस्माद्ब्रह्मजिज्ञासितव्यमित्यादिभाष्ये स्पष्टतरं प्रदर्शयिष्यामः ॥

उपसंहारः—

यदा पुनः स्वरूपं विस्मृतसुपर्णास्तदा स एव प्रमातृत्वाभिमतो निरस्तसंसारदोषः। सम्पन्नः कुतस्तस्य कर्तृत्वभोक्तृत्वे संभवतः।

यद्येव (द्यय) महामुल्लेखप्रमुखः प्रमातृत्वादिव्यवहारः कल्पितः कथमिदानीमस्य प्रामाण्यमित्याशङ्कयाह—देहात्मप्रत्यय इति। यथा देहे विशिष्टजातीये तद्व्यतिरिक्तस्याहं कर्तुरहं मानवन्धः कल्पितोऽपि स्वनिबन्धनलोकशास्त्रव्यवहारो यथावगतिहेतुः तथायं कल्पितोऽपि अलौकिकात्मस्वरूपप्रतिपत्तेः प्राक्प्रमाणं निश्चिततत्त्वप्रत्ययोत्पादनात् बाधानुपलब्धेश्चेति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपद्मपादाचार्यविरचितायां पञ्चपादिकायां समन्वयसूत्रं समाप्तम्

प्रतिपाद्यविषयः—

शंकराचार्यकृतशारीरकभाष्यव्याख्यानरूपो ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च ॥

## No. (394) 2201 पञ्चपादिका

| | |
|---|---|
| ग्रन्थकर्ता—पद्मपादाचार्यः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—17¾ × 1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-46 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 75/1 कोशवत्।

उपसंहारः—

B 75/1 कोशवत्।

प्रतिपाद्यविषयः—

B 75/1 कोशवत्।

वक्तव्यविशेषः—

B 75/1 कोशवत्।

## No. (395) C 652 पञ्चपादिका

ग्रन्थकर्ता—पद्मपादाचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—11 4$\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–31

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—46
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

B 75/1 कोशवत् ।

उपसंहारः—

अथातो ब्रह्मजिज्ञासेति। अस्यायमर्थः। शास्त्रस्य अयमस्यामादौ च प्रवृत्त्यङ्गतया प्रयोजनं विषयश्च प्रदर्शनीयः सूत्रं चैवदतो यः कश्चिदर्थः शब्दसामर्थ्येनार्थं बलाद्वानात्प्रेक्षते स सर्वस्तदर्थ एवेति भवत्ययमर्थ-कलाउपस्तन्महिमाधिगतः। एवं सूत्रस्यादित्वेन कारणेन सूत्रतया च विषयप्रयोजनं तत्सिद्धिकरं चाविद्याख्यं बन्धतत्सामर्थ्यावगतमापाद्य तत्र सूत्रसामर्थ्यं दर्शयितुं प्रतिपद व्याख्यामारभते ॥

इति पञ्चपादिकाप्रथमवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

B 75/1 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमवर्णकमात्रं वर्तते ॥

## No. (396) 3951 पञ्चपादिकाटीका

ग्रन्थकर्ता—नृसिंहाश्रमी
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—16$\frac{1}{4}$ × 1$\frac{3}{8}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—18–107

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—106
कालः (कोशस्य)—,,
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

क्त्वाप्रत्ययवशात्तस्य ........एव कल्प्यमित्याशंक्याह—उपसंहार इति। अध्यासभाष्यावसाने ताव ...................... ...................... एवं चाध्यासविषयोपक्र ............ ...... ध्यामिदं तद्द्वारा विषयप्रयोजनपरमेकं वाक्यम्। तत्र च व्यवहारस्याप्राधान्येन प्रतिपादने वाक्यभेदोध्यासद्वारा अवधृतं तत्तात्पर्यबाधश्च। न चात्र व्यवहारोऽध्यासानुवादोपयोगितत्साधकप्रमाणं च प्रमाणभाष्येणैव सिद्धम्, नैसर्गिकत्वविशेषणादपि लोकव्यवहारोऽध्यास एव, तस्यैवावसाने तथा प्रतीतेः। व्यवहारपदस्यात्राभिज्ञाभिवनादद्यर्थतया अध्यासादिसाधारण्येन सन्दिग्धार्थस्य वाक्यशेषपदेन निर्णयादिति न व्यवहारोऽध्यासादन्य इति भावः। यत एवमध्यासलोकव्यवहारयोर्भेदो न संभवति अतो यथा पुरुषस्य चैतन्यमिति षष्ठी यथाकथंचिद्भेदाभिप्राया एवमत्रापि क्त्वाप्रत्ययो व्यपदेशमात्रं न त्वभिमतभेदाभिप्रायः॥

उपसंहारः—

शास्त्रस्य वेदान्तविचारशास्त्रस्य आदिः प्रथमोऽयमेकदेशः अथात इत्यादिसूत्रमिति यावत्। प्रवृत्त्यङ्गतयेति। प्रेक्षावतां निष्प्रयोजने सन्दिग्धे च प्रवृत्त्यसंभवात्तदुभयं प्रवृत्त्यङ्गमित्यर्थः। ननु कथमेकस्य सूत्रवाक्यविशिष्टाधिकारिविचारकर्तव्यतां विषयप्रयोजनेष्वनेकेषु तात्पर्यं तत्राह—सूत्रं चेदमिति। अनेकार्थत्वमेकसूत्रस्य न दूषणम्। प्रत्युतानुगुणमेव। तदुक्तं "अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखमि" तीति भावः। एवं सूत्रस्य तात्पर्यमुपवर्ण्य अक्षरव्याख्यानवाऽह्यप्रघट्टकं तदवसरज्ञापनाय वृत्तानुवादपूर्वकमवतारयति—एवमिति

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीजगन्नाथाश्रमपूज्यपादशिष्यश्रीमन्नृसिंहाश्रममुनिविरचितायां पञ्चपादिकाटीकायां प्रथमवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

पञ्चपादिकाव्याख्यानरूपो ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः सप्तदशपत्राणि लुप्तानि। अमुद्रितोऽयं ग्रन्थः॥

No. (397) **3579** पञ्चपादिकाविवरणभावप्रकाशिका (पदयोजना)

ग्रन्थकर्ता—धर्मराजाध्वरी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम् —$18\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-88

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—80
कालः (कोशस्य)— ?
स्थितिः—अत्यन्तशिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

यदध्यासेन निखिलं विश्वं सद्व्यवहारभाक्
तदस्म्यहं परं ब्रह्म सच्चिदानन्दविग्रहम ॥
योगिनां गति.... ................... ........ ।
.............................................. .... ॥
.....................................द्वाचस्पतेः परः ।
वाग्देवीं तां नमस्यामि सर्वसिद्धिविधायिनीम ॥
समस्तदेवतोपास्य चरणाम्भोरुहद्वयम् ।
.... ....... .......घटुं विघ्नराजं नतोऽस्म्यहम् ॥
तर्कचूडामणिर्नाम टीका येन मणीकृता ।
टीकाशशधरस्यापि परिभाषा तथात्मनि ॥
तेन कंडरमाणिक्यग्रामरत्ननिवासिना ।
धर्मराजध्वरींद्रेण टीकाभावः प्रकाश्यते ॥
[असम्यग् विवृतापूर्वैरा . . . .
कृपालेशाद्विवृणोम्यात्मशुद्धये]

प्रेक्षावत्प्रवृत्त्यङ्गं विषयप्रयोजने दर्शयन् निर्विघ्नपरिसमाप्त्यर्थं मङ्गळमाचरितं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—अनादीति ।........अथ शास्त्रविषय इति सूचयितुमाह—आत्मन इति । नन्वहमस्मीत्यनुभवेन जीवस्य सत्यत्वं ब्रह्मणोऽतथात्वात्कथं तयोरभेद इत्यत आह—सदिति ।

उपसंहारः—

अनेनैव सूत्रेण वेदार्थस्यार्थवादादिलक्षणत्वाभावे सिद्धे तत्कोटिकविप्रतिपत्तिर्न स्यादित्यर्थः। इष्टापत्तिमाशङ्क्याह—सा चेति। उत्तरत्रेति। अर्थवादाधिकरणादावित्यर्थः। उपसंहरति अत इति। पूर्वोक्तेति। किमग्निहोत्रादिर्धर्म उत चैत्यवन्दनादीति भट्टोक्तप्रकारेणेत्यर्थः॥

इति श्रीधर्मराजाध्वरीन्द्रविरचितायां टीकापदयोजनायां द्वितीयवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

पञ्चपादिकाविवरणव्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितो वर्णकद्वयं विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (398) A 813 पञ्चपादिकापदयोजना

ग्रन्थकर्ता— धर्मराजाध्वरी
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$13\frac{1}{2} \times 8\frac{1}{2}$ अङ्गुलानि
लिपिः— आन्ध्रलिपिः
पत्राणि—1-237

प्रतिपुटं पङ्क्तयः—20
प्रतिपङ्क्त्यक्षराणि—14
कालः। (कोशस्य)—1941
स्थितिः—समीचीना।
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

3579 कोशवत्।

उपसंहारः—

3579 कोशवत्।

प्रतिपाद्यविषयः—

3579 कोशवत्।

वक्तव्यविशेषः—

3579 कोशवत्।

## No. (399) B 459 पञ्चब्रह्मोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः —कागदपत्रात्मकः
प्रमाणम् —$7\frac{1}{2}\times6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—151-162
प्रतिपुटंपङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—सह नाववत्विति शान्तिः। अथ पैप्पलादो भगवन् भो किमादौ किं जातमिति, सद्योजातमिति, किं भगव इति, अघोर इति किं भगव इति, वामदेव इति, किं वा पुनरिमे भगव इति, सर्वेषां दिव्यानां प्रेरयिता ईशान इति, ईशानो भूतभव्यस्य सर्वेषां देवयोनीनाम्। कति वर्णाः कति वेदाः, कति शक्तयो यत्सर्वं यद्गुह्यम्, तस्मै नमो महादेवाय, महारुद्राय प्रोवाच तस्मै भगवान् महेशः॥

यत्रोभयात्मकं ब्रह्मात्प्रोक्तं सगुणनिर्गुणं।
पञ्चब्रह्मोपनिषदं व्याख्यास्ये पंचताहरां॥

अथ पैप्पलादीनामतः महर्षीभगवन्तं पप्रच्छतिशेषः। प्रश्नप्रकारमाह॥

उपसंहारः—

भा—धर्मस्य जीवस्यैव निरूपयितृत्वात् यतः पारमार्थिक्यं मोक्षावस्थायां जीवस्यासत्वं सिद्धम्। अतो धर्मिनिरूपयितुरभावात्तत्तदप्यशक्यमिति युक्तमुक्तम्।

अस्मिन्ब्रह्मपुर इत्यादिच्छान्दोग्यभाष्ये व्याख्यातमेव। येनायं साक्षी शिवस्सर्वेषां हृदि स्थितः। तेन हेतुना हृदयमिति प्रोक्त इति।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पय्यदीक्षिताचार्यकृतौ पञ्चब्रह्मोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अघोर सद्योजात वामदेव ईशानाख्यानां मन्त्राणां तत्प्रतिपाद्यदेवानां चोत्पत्तिः तद्द्वारा ऋगादिवेदानां गार्हपत्याद्यग्नीनां स्वरवर्णादीनां क्रमेणोत्पत्तिः प्रदर्श्यते।

वक्तव्यविशेष :—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (400) 2035/11 पञ्चभ्रमप्रकरणम्

ग्रन्थकर्ता—?
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—13×1¼ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—162-164
प्रतिपुटं पङ्क्तयः—4
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

इदानीं पञ्च भ्रमा निरूप्यन्ते। तत्र प्रत्यगात्मा परमेश्वराद्भिन्न इत्येको भ्रमः। आत्मनि प्रतीयमानं कर्तृत्वादिकं वास्तवमिति द्वितीयो भ्रमः। शरीरत्रयावच्छिन्नात्मासङ्गी इति तृतीयो भ्रमः। इत्यादिः।

उपसंहारः—

रज्जुसर्पदृष्टान्तेन जगत्कारणस्य ब्रह्मणः विकारित्वभ्रमो निवर्तनीयः। स्वर्णलोहदृष्टान्तेन कारणाद्भिन्नस्य प्रपञ्चस्य सत्यत्वभ्रमो निवर्तनीयः। एते पञ्च भ्रमनिवर्तकाः। एते पञ्च भ्रमा अज्ञानेन प्राप्ता इति विचार्य पञ्चभ्रमनिवर्तकं ज्ञानं यस्तु सम्पादयति स एव जीवन्मुक्त इति सर्वशास्त्रसिद्धान्त इति सर्वं निष्प्रत्यूहम्।

इति पञ्चभ्रमप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन् जीवेशभेदादिपञ्चभ्रमास्तन्निरासप्रकाराश्च निरूप्यते।

वक्तव्यविशेषः—

अमुद्रितः।

## No. (401) B 330/2 पञ्चीकरणप्रक्रिया

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः- कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—14 |
| प्रमाणम्—8×6¼ अङ्गुलानि | कालः (कोशस्य)—16-5-1879 |
| लिपिः—मलयाललिपिः | स्थितिः—समीचीना |
| पत्राणि—65-89 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधरूपम्। लोकेन्द्रवन्द्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ॥

ஸத்தாயி சித்தியி ஆனந்தமாயிருக்கப்பட்ட பிரம்மத்தினிடத்திலெருக்தும் அஸத்தாயி ஜடமாயி துக்கரூபமாயி அநிர்வசனீயமாயிருக்கப்பட்ட மாயை உண்டாச்சு அந்த மாயைக்குத்தானே மாயையென்னும் மஹத்தத்வமென்னும், அஜ்ஞானமென்னும், அஹங்காரமென்னும் தமஸ் என்னும் பேர், அந்த மாயயினிடத்திலெருந்தும் மஹத் தத்வமெங்கிற ஈசுவரனுண்டாச்சு, மஹத்தத்வத்தினிடத்திலெருந்தும் அஹங்காரமுண்டாச்சு, அஹங்காரத்தினிடத்திலெருந்து அஜ்ஞான முண்டாச்சு.

उपसंहार:—

ஸுஷுப்தியில் காணுன்ன ஆத்மஸுகம் விவேகிகளாய ஜ்ஞானிகள்க ஜாக்ராவஸ்தையிலும் ஸ்வப்னாவஸ்தையிலும தோன்னிகொண்டிருக்கின்ன தாகையில் ஆத்மாவின்ன ஸுகஸ்வரூபாவஸ்திதமாயி இதுவரெ பறஞ்ஞ யுக்திகளால் ஆத்மாவின்ன ஸச்சிதானந்தஸ்வரூபவை ஸித்தமாயிரிக்க கொண்ட இப்ரகாரமிருக்குள்ள ஆத்மாவாகுன்னு தானென்ன வலாருமஹாத்மாவாகுன்ன புண்யசாலி அறியுன்னுவோ ஆமஹாத்மாவனவன் முக்தனுடென்னு என்ன வேதாந்தசாஸ்த்ரங்கள் கோஷிக்குன் ஸ்ரீகுருசரணாரவிந்தாப்யாம் நம: ।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे परमात्मनः सकाशात् महदादिक्रमेण सृष्टिः भूतपञ्चीकरणं पञ्चीकृतभूतेभ्यः प्रपञ्चसृष्टिः। पञ्चकोशस्वरूपं आत्मनः पञ्चकोशव्यतिरिक्तत्वं, तस्य सच्चिदानन्दस्वरूपत्वं च सम्यक्प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

ग्रन्थोऽयं मलयाळलिपिलिखितोऽपि मुद्रणालये मलयाळलिप्यभावात् भाषानुरोधेन तमिळुलिप्यामस्योपक्रमोपसंहारौ प्रदर्शितौ।

## No. (402) B 314/1 पञ्चीकरणवार्तिकम्

| | |
|---|---|
| ग्रन्थकर्ता—सुरेश्वराचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—$7\frac{3}{4}\times6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-6 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

श्रुतिस्मृतिपुराणानामालयं करुणालयम्।
नमामि भगवत्पादं शंकरं लोकशंकरम् ॥ १ ॥
शंकरं शंकराचार्यं केशवं बादरायणम्।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥ २ ॥
ओंकारः सर्ववेदानां सारस्तत्त्वप्रकाशकः।
तेन चित्तसमाधानं मुमुक्षूणां प्रकाश्यते ॥ ३ ॥
आसीदेकं परं ब्रह्म नित्यमुक्तमविक्रियम्।
यत्स्वमायासमावेशाद्बीजमव्याकृतात्मकम् ॥ ४ ॥
तस्मादाकाशमुत्पन्नं शब्दतन्मात्ररूपकम्।
स्पर्शात्मकस्ततो वायुस्तेजोरूपात्मकं ततः ॥ ५ ॥
आपो रसात्मकास्तस्मात्ताभ्यो गन्धात्मिका मही।
शब्दैकगुणमाकाशं शब्दस्पर्शगुणो मरुत् ॥ ६ ॥
शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते।
शब्दस्पर्शरूपरसगुणैरापश्चतुर्गुणः ॥ ७ ॥

उपसंहारः—

आनन्दममलं शुद्धं मनोवाचामगोचरम् ।
वाच्यवाचकनिर्मुक्तं हेयोपादेयवर्जितम् ॥ ६४ ॥
प्रज्ञानघनमानन्दं वैष्णवं पदमश्नुते ।
इदं प्रकरणं यत्नाज्ज्ञातव्यं भगवत्तमैः ॥ ६५ ॥
अमानित्वादिनियमैर्गुरुभक्तिप्रसादतः ।
इमां विद्यां प्रयत्नेन योगी सन्ध्यासु सर्वदा ॥ ६६ ॥
समभ्यसेदिहामुत्र भोगानासक्तधीः सुधीः ।
रागद्वेषादिरहितं स्वात्मानं चिन्तयेत्सदा ॥ ६७ ॥

इति श्रीमच्छंकरभगवत्पादपूज्यशिष्यश्रीसुरेश्वराचार्यविरचिते पञ्चीकरणवार्तिकं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अव्याकृतादाकाशादिपञ्चतन्मात्राणामुत्पत्तिः, तेषां पञ्चीकरणम्, पञ्चीकृतेभ्यस्तेभ्यो भूतेभ्यः इन्द्रियादीनामुत्पत्तिश्च सम्यक्प्रदर्शिता ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते, मुद्रितश्च दृश्यते ।

## No. (403) C 1137 पञ्चीकरणवार्तिकम्

ग्रन्थकर्ता—सुरेश्वराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—5¼×3 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-5

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—26
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

B 314/1 कोशवत् ।

उपसंहारः—

B 314/1 कोशवत् ।

प्रतिपाद्यविषयः—

B 314/1 कोशवत् ।

वक्तव्यविशेषः—

B 314/1 कोशवत् ।

## No. (404) 3541 पञ्चीकरणविवरणम्

ग्रन्थकर्ता—आनन्दज्ञानः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\frac{1}{2} \times 1\frac{3}{8}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-3
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—86
कालः (कोशस्य)—?
स्थितिः—अतिशिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यदबोधादिदं भाति यद्बोधाद्विनिवर्तते ।
नमस्तस्मै परानन्दवपुषे परमात्मने ॥

अतीतानेकजन्मसु कृतसुकृतप्रसादासादितशुद्धबुद्धीनां विवेकवैराग्यशमादिसाधनसम्पन्नानां परित्यक्तसर्वकर्मणां मोक्षमात्रमाकाङ्क्षतां तदुपायभूतं तत्त्वज्ञानमापाततः श्रुतिमुखादधिगतमपि सम्यगवाप्तुमिच्छतामतिलघुनोपायेन कथमिदमुत्पद्यतामिति मन्वानः सन्नाचार्य ओंकारं सर्ववेदसारभूतं तथाविधसम्यग्बोधसमुदयनिदानं प्रतिपद्य तदीयस्वरूपनिरूपणद्वारा तत्त्वं निवेदयितुकामः तदवयवमकारमवतारयन् अध्यारोपापवादन्यायमनुसरन् प्रतिपत्तिसौकर्यार्थं प्रथमं स्थूलप्रपञ्चमुपन्यस्यति—पञ्चीकृतेति ॥

उपसंहारः—

न चैकार्थत्वे पदभेदानुपपत्तिः; व्यावर्त्यभेदादर्थवत्त्वसिद्धेरिति द्रष्टव्यम् । आदिपदेन तत्वमस्यादिवाक्यानि तत्त्वंपदार्थविषयाणि अवान्तरवाक्यानि ब्रह्मात्मैकत्वपर्यवसितानि गृहीतव्यानि । तदेवमधिकारिणो वाक्यात् ब्रह्मात्मैकत्वसाक्षात्कारसमुत्पत्तावज्ञानतत्कार्यनिवृत्ता-

वनारब्धफलपूर्वोपार्जितकर्महानात् उत्तरकालीनकर्मणश्च नाश्लेषादारब्धफलकर्मणश्च भोगैकक्षयात् तदवस्थितिप्रयुक्तदेहावभासजगदवभासनिवृत्तौ तदात्मना तत्कारणकर्मात्मनाऽवस्थिताविद्यातत्कार्यनिवृत्तेर्वस्तुनः स्वरूपेणैव परिशेषात्प्रत्यगात्मा सच्चिदानन्दात्मकः सत्यज्ञानानन्दस्वरूपं ब्रह्मैवेति सिद्धम ॥

षड्विधं लिङ्गमाश्रित्य वेदान्ता यत्र निष्ठिताः ।
विधानप्रतिषेधाभ्यां तं वन्दे पुरुषोत्तमम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यश्रीभगवदानन्दज्ञानकृता पञ्चीकरणव्याख्या समाप्ता

**प्रतिपाद्यविषयः—**

श्रीशंकराचार्यविरचितपञ्चीकरणविवरणरूपोऽयं ग्रन्थः ।

**वक्तव्यविशेषः—**

अयं ग्रन्थः मुद्रितः, अस्मिन्कोशे समग्रश्च विद्यते ।

## No. (405) 984 पञ्चीकरणविवरणम्

ग्रन्थकर्ता —आनन्दज्ञानः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16\frac{1}{4} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—190–196

प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)—?
स्थितिः —समीचीना
समग्रोऽसमग्रो वा—समग्रः

**उपक्रमः—**

3541 कोशवत् ।

**उपसंहारः—**

3541 कोशवत् ।

**प्रतिपाद्यविषयः—**

3541 कोशवत् ।

वक्तव्यविशेषः—

3541 कोशवत्।

## No. (406) C 300 पञ्चीकरणविवरणम्

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञान: | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेष:—ताळपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—28 |
| प्रमाणम्—$9\frac{1}{2}\times6$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—कन्नडलिपि: | स्थिति:—समीचीना |
| पत्राणि—1-11 | समग्रोऽसमग्रो वा—असमग्र: |

उपक्रमः—

3541 कोशवत्।

उपसंहारः—

न च परस्परविरोधे सत्त्वासत्त्वयोर्विरोधान्तरानुपपत्तिः। संसर्गाभावान्योन्याभावयोर्भेदप्रतिपादको योऽन्योन्याभावः स यथा एतदुभयविलक्षणस्तद्वदत्रापि सत्त्वासत्त्वविलक्षण इत्यर्थः॥ संसर्गाभावान्योन्याभावयोरन्योन्याभावस्य तद्भावानभ्युपगमवदिहापि सत्त्वस्यासत्त्वस्य च अ....

प्रतिपाद्यविषयः—

3541 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे कारणशरीरनिरूपणपर्यन्तः ग्रन्थभागो विद्यते॥

## No. (407) 3579 पदयोजनिका (पञ्चपादिकाव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—धर्मराजाध्वरी | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—70 |
| प्रमाणम्—$18\frac{1}{2}\times1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—अत्यन्तशिथिला |
| पत्राणि—1-88 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

यदध्यासेन निखिलं विश्वं सद्व्यवहारभाक्।
तदस्म्यहं परं ब्रह्म सच्चिदानन्दविग्रहम् ॥

प्रेक्षावत्प्रवृत्त्यङ्गं विषयप्रयोजने दर्शयन् निर्वि..................प्त्यर्थं मङ्गळमाचरितं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—अनादीति।........... ................................दः शास्त्रविषय इति। सूचयितुमाह—आत्मन इति। नन्वहमस्मीत्यनुभवेन जीवस्य सत्यत्वं ब्रह्मणोऽतथात्वात्कथं तयोरभेद इत्यत आह—सदिति। असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति।...................... त्या ब्रह्मणोऽपि सत्यत्वमिति भावः। ननु ब्रह्म सद्भिन्नं, परिच्छिन्नत्वात्, शुक्तिरूप्यवदित्यत आह—अनन्तेति।

उपसंहारः—

ननु चोदनाप्रामाण्यस्योत्तरत्र साध्यमानत्वेऽपि "चोदनालक्षणोऽर्थो धर्म" इति सिद्धवत्कृत्य यथा लिखितं तथा वेदप्रामाण्यस्य साधयिष्यमाणस्यापि सिद्धवत्कारेणादौ लेखनं किं न स्यादित्यरुचेराह—मन्त्रार्थवादादिष्विति। अनेनैव सूत्रेण वेदार्थस्यार्थवादादिलक्षणत्वाभावे सिद्धे तत्कोटिकविप्रतिपत्तिर्न स्यादित्यर्थः। इष्टापत्तिमाशंक्याह—सा चेति। उत्तरत्रेति। अर्थवादाधिकरणादावित्यर्थः। उपसंहरति—अत इति। पूर्वोक्तेति। ............... .........न्द्रविरचितायां टीकापदयोजनायां द्वितीयवर्ण ....... .. ..........

प्रतिपाद्यविषयः—

487 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः द्वितीयवर्णकसमाप्तिपर्यन्तो ग्रन्थभागो विद्यते। अमुद्रितोऽयं ग्रन्थ इति भाति॥

## No. (408) B 460 परब्रह्मोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता— अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—13 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–12 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू— भद्रं कर्णेभिरिति शान्तिः। अथ हैनं महाशालः शौनकोऽङ्गिरसं भगवन्तं पिप्पलादं विधिवदुपसम्पन्नः पप्रच्छ। दिव्ये ब्रह्मपुरे के संप्रतिष्ठिता भवन्ति, कथं सृज्यन्ते. नित्यात्मन एष महिमा विभज्य एष महिमा विभुः क एषः। तस्मै स होवाच। एतत्सत्यं यत्प्रब्रवीमि ब्रह्मविद्यां वरिष्ठाम्। देवेभ्यः प्राणेभ्यः परं ब्रह्मपुरे विरजं निष्कळं शुभ्र-मक्षरं विरजं विभाति।

भा–सन्यासार्ह इति प्रोक्तो यत्नान्तरुपवीतवान्।
परब्रह्मोपनिषदं व्याख्यास्ये तामिमां शुभां॥

उपसंहारः—

भा नन्वेकयज्ञोपवीती तु नैव सन्नयस्तुमर्हतीत्युक्तया ब्रह्मचारिणः सन्नयासः प्रतिषिध्यते। ब्रह्मचर्यादेव प्रव्रजेदिति श्रुत्यन्तरे विधीयते च। कथमेतद्वचनद्वयं समन्वितं स्यादिति चेत् अत्रोच्यते—नात्रैक-यज्ञोपवीतित्वाभिधानं ब्रह्मचारिपरं मन्तव्यम्, बाह्याभ्यन्तरोपवीतद्वयस्य विवक्षितत्वात्। तथा चाह—बहिरन्तश्चोपवीती विप्रः सन्नयस्तु-मर्हतीति। तस्मादन्तःसूत्रवान् कूटस्थात्मदर्श्येव सन्नयासार्ह इति सर्वमनवद्यम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु परब्रह्मोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे परब्रह्मस्वरूपमुपवर्ण्य तादृशपरब्रह्मैव सूत्रं यस्यान्तर्हृदि वर्तते स एव सन्नयासार्ह इति प्रतिपाद्यते॥

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (409) C 1497 परमपदनिर्णायकप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता अमृतानन्दतीर्थः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः – कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—44 |
| प्रमाणम् —10 × 4¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि —1–13 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यं ध्यायन्ति यतीश्वराः स्वहृदये मायाप्रहाण्यै सदा
श्रौतस्मार्तवचःकदम्बमवलम्ब्याराक्तमोनाशकम् ।
विष्ण्वादेर्जगतोऽस्य साक्षिणमुमाकान्तं महेशं शिवं
हृत्पद्मे सततं मुदा परमया ध्यायामि तं श्रेयसे ॥

इह श्रीमत्साम्बसदाशिवाङ्घ्रिपद्मानुसन्धानपरायणो यतिरमृतानन्दतीर्थः परमपदनिर्णायकं प्रकरणं चिकीर्षुर्निर्विघ्नेन परिसमाप्तिप्रचयगमनार्थं शिष्टाचारप्राप्तं स्वेष्टदेवतानुसन्धानलक्षणं मङ्गलमाचरति—

यस्योमाङ्केऽस्ति वामे शशिसुरसरितौ मस्तके पार्श्वयोः स्त-
स्सुब्रह्मण्येभवक्त्रौ परित उरगशाय्यब्जयोन्यादिदेवाः ।
तिष्ठन्त्यग्र गणेशा अगणितविभवा नन्दिचण्डेशमुख्याः
स्थुर्मध्ये हैमासिंहासनगतमनिशं भावये तं महेशम् ॥

तत्र प्रथमं तावच्छिवस्य सर्वोत्कर्षं दर्शयितुं 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्, तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, विष्णोर्यत्परमं पद'मित्यादिश्रुतिषु—

उपसंहारः —

इदानीं प्रकरणमुपसंहरन् स्वस्य तत्करणप्रवृत्तौ हेतुं शिवकृपयैव स्वप्रवृत्तिप्रयोजनं च दर्शयति—

एवं श्रीपरमशिवेन्द्रेरितो विरच्य प्रेम्णेदं प्रकरणवरं तदङ्घ्रिपद्मे।
संस्थाप्यामृतयतिरत्र तत्कृपातो दुस्तर्काब्धिमशोषयदवैदिकानाम्॥

इदानीं श्रीमद्दीक्षितरूपिणं परमशिवं प्रणमति—

यद्वाग्वज्रवरप्रहारदळितस्वान्ता निपेतुर्भृशं
श्रृङ्गिध्वान्तमुखा अवैदिकमताऽभ्यासात्तदुर्बुद्धयः।
शैवा यद्वचनामृतं श्रुतिपुटैः पीत्वाऽऽसवन्तः शिवं
तस्मा अप्पयदीक्षिताकृतिमते साम्बाय नित्यं नमः॥

इति श्रीमत्परमहंसपरिव्राजकश्रीमद्ब्रह्मानन्दयतिवरशिष्यस्यामृतानन्दतीर्थस्य कृतौ परमपदनिर्णायकप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे—परमपदपरंधामेत्यादि श्रौतपदार्थभूतं जगत्कारणं ब्रह्म परमशिव एवेति सप्रमाणं निरूप्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते।

## No. (410) B 462 परमहंसपरिव्राजकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—13 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$8 \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-10 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ॐ भद्रं कर्णेभिरिति शान्तिः। अथ पितामहः स्वपितरमादिनारायणं उपसमेत्य प्रणम्य पप्रच्छ। भगवंस्त्वन्मुखाद्वर्णाश्रमधर्मक्रमं सर्वं श्रुतं विदितमवगतमिदानीं परमहंसपरिव्राजकलक्षणं वेदितुमिच्छामि। कः परिव्राजनाधिकारी। कीदृशं परिव्राजकलक्षणम्। कः परमहंसः। परिव्राजकत्वं कथं, तत्सर्वं मे ब्रूहीति होवाच। भगवानादिनारायणः

सद्गुरुसमीपे सकलविद्यापरिश्रमज्ञो भूत्वा विद्वान् सर्वमैहिकामुष्मिकसुखश्रमं ज्ञात्वा ईषणात्रयवासनात्रयममत्वाहंकारादिकं वमनान्नमिव हेयमुपगम्य... ....

परहंसाश्रमाचाराः प्रोच्यन्ते यत्र विस्तरात् ।
परहंसपरिव्राज श्रुतिर्व्याख्यास्यते त्वियम् ॥

नन्विह पितामहादि... ........

उपसंहारः—

भा—ननु नारदपरिव्राजके षण्णामप्याश्रमिणामनुष्ठानेषु पृथगुक्तेष्वपि प्रायेण तुर्यातीतावधूतयोरनुष्ठानसाम्यमवगम्यते, न तु परमहंसतुर्यातीतयोः । इह तु परमहंसस्याशाम्बरत्वमुच्यते । कथमेतत्सङ्गतं स्यादिति चेन्नैष दोषः, परमहंसस्याप्याशाम्बरत्वस्यादावेव सन्न्यासग्रहणकाले संसिद्धत्वात् । अशक्तया तु कंचित्कालं काषायादिसहितोऽभूत । पश्चाज्ज्ञानवैराग्यशक्तौ सत्यां गृहीतपूर्वाणां दण्डादीनां विसर्जने विधिर्निषेधो वा न कोऽप्यस्ति । तस्मान्नेह किंचिदप्यनुष्ठानवैषम्यं शङ्क्यम् ।

इत्यप्पयदीक्षितकृतिपु परमहंसपरिव्राजकोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे परमहंसाश्रमधर्माचारविचारसाङ्गत्यनिर्धारणपूर्वकं तादृशधर्मविचारः क्रियते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (411) B 461 परमहंसोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—30-33

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

परहंसाश्रमाचारो यस्यां सम्यक्प्रपञ्चितः ।
परहंसोपनिषदं व्याख्यास्ये सारसङ्ग्रहात् ॥

अथेति । कुटीचकबहूदकहंसपरमहंसाख्येषु चतुर्विधेषु सन्न्यासाश्रमेषु कुटीचकादीनां त्रयाणां बाहुळ्येऽपि तुर्यस्य बाहुळ्याभावाद्दुर्लभतर इति । बहुळ एव बाहुळ्यः । यद्येकः परमहंसाश्रमी भवेत् स एव नित्यपूतः । तत् नित्यपूतं यच्चित्तं सदा मयि निर्विशेषे परमात्मन्येवावतिष्ठते । स महापुरुषः अवस्थीयते अवतिष्ठते ।

उपसंहारः—

अत्रोच्यते-न हि देवालयप्रतिष्ठादिकर्माणि क्वचिदपि भिक्षोर्विधीयन्ते । यद्यविहितेषु तेषु प्रवर्तेत तदा कळत्राद्यर्थ इव रसेनैव स्वर्णादीन् परिग्रहेत् । ब्रह्महत्यादिदोषवांश्च भवेत् । तस्माद्य आत्मन्येवावस्थीयते । अवातिष्ठते । स पूर्णानन्दैकरसबोधः परमहंस एव कृतकृत्य इति ।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ परमहंसोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे परमहंसाश्रमिणः कौपीनाच्छादनदण्डादिधारणाचारः सम्यग्विचार्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (412) 1277/1 पराशरदीपिका

| | |
|---|---|
| ग्रन्थकर्ता— अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः— तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—124 |
| प्रमाणम् 21¾ × 2⅛ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-13 | समग्रोऽसमग्रो वा— समग्रः |

उपक्रमः—

दृष्ट्वात्मानमिदंतया दृशि परं ज्योतिः स्वरूपं ततः
श्रुत्वाऽखण्डतया यदाननसरोजाताच्च मत्वा ततः ।
ब्रह्मास्मीति च भावयन् भ्रमरतां कीटो यथाऽवाप्नुयात्
ब्रह्मत्वं तमिहाद्य नौमि परमाचार्यं दयासागरम् ॥

अत्र खलु व्याचिख्यासितस्य सर्ववेदान्तरहस्यार्थगर्भितस्य श्रीमत्पराशरोपपुराणगतस्य अन्तिमस्याष्टादशाध्यायस्य सर्वाध्यायसारत्वात् "कृते तु मानवाः प्रोक्तास्त्रेतायां गौतमा स्मृताः । द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृता" इति स्मृतेः पराशरवचनानामस्मिन्कलियुगे विशेषप्रामाण्याच्च मुमुक्षूणां निखिलहृदयग्रन्थिभेदनद्वारेण निर्विशेषपरब्रह्मसाक्षात्कारसिध्द्यै पञ्चलक्षणसंयुतं व्याख्यानं यथामत्यारभ्यते—

पराशरः—

अथ शास्त्रार्थसंक्षेपं प्रवक्ष्यामि समासतः ।
मुमुक्षुभिर्महाप्राज्ञैर्वेदितव्यं विशेषतः ॥

उपसंहारः—

पूर्वोक्तप्रकारेण सर्वं श्रुत्वा व्यासपुत्रशुकस्स्वपितामहं परमाचार्यभूतं प्रणम्य नमो रुद्रायेत्यादिविशेषणविशिष्टं महादेवं देवीं च प्रणनाम अष्टोत्तरसहस्रश्लोकेन निर्मिते अष्टादशाध्याययुतेऽस्मिन्नेव पुराणे शिवस्सम्यक्प्रदर्शितस्साक्षात्कारयोग्यत्वेनावबोधित इत्येवं व्याख्यानकर्तापि स्वाचार्यं प्रणौति ॥

श्रुतिशिरसि नित्यं यस्य निष्ठा वरिष्ठा
गळितनिखिलपाशो योऽमनस्को गृहस्थः ।
स्फुटतरमुपदिष्टं येन तत्त्वं स्वतत्त्वं
नम इह गुरवे श्रीसुन्दरेशाय नित्यम् ॥

प्रतिपाद्यविषयः—

पराशरोपपुराणाष्टादशाध्यायस्यायं विवरणपरो ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (413) B 306 पराशरदीपिका

ग्रन्थकर्ता —अप्पय्यदीक्षिताचार्यः
पत्रविशेषः— कागदपत्रात्मकः
प्रमाणम् —$7\frac{3}{4}\times6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-91

प्रतिपुटं पङ्क्तयः— 11
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)— ?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

1277/1 कोशवत्।

उपसंहारः—

1277/1 कोशवत्।

प्रतिपाद्यविषयः—

1277/1 कोशवत्।

वक्तव्यविशेषः—

1277/1 कोशवत्।

## No. (414) B 463 पाशुपतोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2}\times6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-21

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः – समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—ओं भद्रं कर्णेभिरिति शान्तिः। अथ ह वै स्वयंभूर्ब्रह्मा प्रजा स्सृजानीति कामकामो जायते। कामेश्वरो वैश्रवणः। वैश्रवणो ब्रह्मपुत्रो वालखिल्यस्स्वयंभु परिपृच्छति। जगतां का विद्या का देवता जाग्रत्तुर्ययोरस्य को देवः। युगानि कस्य वशानि। कालाः कियत्प्रमाणाः। कस्याज्ञया रविचन्द्रग्रहादयो भासन्ते। कस्य महिमा गगनस्वरूपः। एतदहं श्रोतुमिच्छामि, नान्यो जानाति, ब्रूहि ब्रह्मन्। स्वयंभूरुवाच—

भा—सगुणब्रह्मवशता जगतोऽथाद्वयस्थितिः ।
यस्य प्रोक्ता पाशुपतोपनिषत्सा प्रपञ्च्यते ॥

अत्र ब्रह्मवैश्रवणसंवादेऽहोरात्रादयो मत्संवर्धिताः काला इति ब्रह्मणा यदभिहितं एतदौपचारिकमेव मन्तव्यम् ।

उपसंहारः—

भा—सुषुप्तौ मिश्राष्षट्छतोत्तरसहस्रम् । अमिश्रं सहस्रद्वयम् । नष्टा अष्टशताधिकदशसहस्राणि । आहत्य षट्छतोत्तरैकविंशतिसहस्रश्वासास्सिद्धाः । वरिष्ठस्य जाग्रति अष्टशताधिकसहस्रश्वासेषु मिश्रं सार्धसहस्रम् । अमिश्रं शतत्रयम् । स्वप्ने मिश्रास्सहस्राणि । अमिश्राः श्शताष्टकम् । सुषुप्तौ मिश्राश्शताष्टकम् अमिश्रास्सहस्राणि । नष्टाः द्विशताधिकषोडषसहस्रसंख्याकाः । आहत्य षट्छताधिकैकविंशतिसहस्रश्वासास्सिद्धाः ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु पाशुपातोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जगतां विद्यादेवतादिकं, तेषां सगुणेऽधिष्ठितत्वं चोक्त्वा, निर्गुणस्वरूपं, प्रथमादिभूमिकास्थानां योगिनां श्वासपरिमाणं च स्पष्टं प्रदर्श्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (415) 4659/11 पुत्रनिमित्तदुःखप्रकरणम्

ग्रन्थकर्ता—आदिशेषार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 1$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—148–152

प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

लोके वेदान्तशास्त्राभिज्ञव्यतिरिक्तजनास्तार्किकलौकिकपामरविधवा आभासशास्त्रपुराणानि श्रुत्वा अपुत्राणामैहिकामुष्मिकसुखं नास्ति,

पुत्रवतामैहिकामुष्मिकसुखमस्तीति वदन्ति। तद्वाक्यानि केचिज्जनाः श्रुत्वा तदेव सत्यमिति बभ्रमुः। तद्भ्रमनिरासार्थं पुत्रवतामेव अधिक-दुःखमस्तीति शास्त्रं विचार्य मुमुक्षुणा पुत्रादिषु स्नेहं वर्जयित्वा आत्म-स्वरूपे स्वस्मिन्नेव प्रीतिं सम्पाद्य स्थेयमिति निरूपणार्थं च पुत्रनिमित्त-दुःखप्रकरणं निरूप्यते ॥

उपसंहारः—

पुत्रवतामेव सदा दुःखं पुत्रेभ्य ऐहिकामुष्मिकसुखं नास्तीति विचार्य मुमुक्षुणा पुत्रमित्रकळत्रादिषु प्रीतिं त्यक्त्वा आत्मस्वरूपे स्वस्मिन्नेव प्रीतिं कृत्वा सर्वदा आत्मनिष्ठतया स्थेयमिति सर्ववेदान्तसिद्धान्त इति सर्वं सुस्थम् ॥

इति श्रीमदादिशेषार्यगुरुविरचितं पुत्रनिमित्तदुःखप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे पुत्राद्यासक्तिमतामेव दुःखम्, स्वात्मन्यासक्तानां सुख-मित्येतत्स्पष्टं प्रतिपादितं दृश्यते ॥

वक्तव्यविशेषः—

अमुद्रितः।

## No. (416) 2035/25 पुत्रनिमित्तदुःखप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—15 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13 × 1¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—203–207 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

4659/11 कोशवत्।

उपसंहार:—

तस्माद्विद्यारण्यचरणैः पञ्चदशप्रकरणेऽप्युक्तम्—
अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ।
लब्धोऽपि पिण्डपातेन प्रसवेन तु बाधते ॥
जातस्य ग्रहरोगादि कुमारस्य च धूर्तता ।
उपनीतेऽप्यविद्वत्वमनुद्वाहश्च पञ्च ते ॥
यूनश्च परदारादिर्दारिद्र्यं च कुटुम्बिनः ।
पित्रोर्दुःखस्य नास्त्यन्तोऽधुना चेन्मीयते तदा ॥
एवं विचार्यपुत्रादौ प्रीतिं त्यक्त्वा निजात्मनि
धनाचेन्मीयते निश्चित्य परमां प्रीतिं कुर्यादेवमहर्निशम् ।
इति सुस्थम् ॥

इति पुत्रनिमित्तदुःखप्रकरणं समाप्तम् (उपसंहारे एतावानधिकोंऽशो वर्तते)

प्रतिपाद्यविषयः—

4659/11 कोशवत् ।

## No. (417) B 464 पैङ्गलोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–28 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू–ओं पूर्णमद इति शान्तिः ॥ अथ पैङ्गलो याज्ञवल्क्यमुपसमेत्य द्वादशवर्षशुश्रूषापूर्वकं परमरहस्यकैवल्यमनुब्रूहीति पप्रच्छ । स होवाच याज्ञवल्क्यः । सदेव सोम्येदमग्र आसीत् । तन्नित्यमुक्तमविक्रियं सत्यज्ञानानन्दपरिपूर्णं सनातनमेकमेवाद्वितीयं ब्रह्म । तस्मिन्मरुशुक्तिकास्थाणुस्फटिकादौ जलरौप्यपुरुषरेखादिवत् लोहितशुक्लकृष्णा गुणमयी गुणसाम्यानिर्वाच्या मूलप्रकृतिरासीत् ॥

भा—सारात्सारतरागमपाण्डित्यसुखग्राह्यां सदा पण्डितै-
श्श्लाघ्यां सर्वरहस्यबोधनपरां सूक्ष्मीभिरेवोक्तिभिः।
एतां पैङ्गलयाज्ञवल्क्यमुनिसंवादात्मिकामुत्तमां
व्याख्यास्ये भुवि पैङ्गलोपनिषदं पश्यन्तु मुक्तीच्छवः॥
नन्विह . . . .

उपसंहारः—

भा-एवमन्तर्भवत्सु कार्येषु संभवत्स्वपि ब्रह्मात्मैक्यसम्यग्ज्ञानहीनस्य न कथंचन मुक्तिर्जायते। न च क्रममुमुक्षोर्ज्ञानयोगोऽनावश्यक इति वाच्यम्। ब्रह्मलोकं गतस्यापि तस्य ब्रह्मसुखाज्ज्ञानयोगोपदेशादि प्रसिद्धेः। तस्माद्राजयोगारूढानामपि ज्ञानयोगाभ्यास आवश्यक इति स्थितम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु पैङ्गलोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे परमात्मस्वरूपं तस्मात्क्रमेण जगतः सृष्टिः, सृष्टिकर्तु-रीशस्य जीवत्वप्राप्तिः, महावाक्यविवरणं, ज्ञानिनो व्यवहारादिकं च सम्यङ्निरूप्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (418) C 702 प्रकृत्यधिकरणविचारः

| | |
|---|---|
| ग्रन्थकर्ता—त्र्यम्बकशास्त्री | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—$12\frac{1}{2} \times 4\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–10 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्। अत्रानुव्याख्याने ब्रह्मणो जगदुपादानता प्रतिषिद्धा। प्रतिषेधे अविकारोऽक्षरः शुद्ध इति श्रुतिर्मानमित्युक्तम्। अत्र विचार्यते—अविकार इति विकारसामान्याभावः प्रतिपाद्यते। विकारश्चान्यथाभावः, स एव परिणाम इति रीत्या तावत्त्वया

नोपादानता निराकर्तुं शक्यते। अणुत्वमहत्त्वयोरिव विकारित्व तदभाव-योरपि विरोधपरिहारेण ब्रह्मणि सत्त्वसंभवात्। भावयोरिव भावाभाव-योरपि लोकदृष्टविरोधस्य हातुं शक्यत्वात्। अस्थूलादिवाक्यस्याणुत्वा-दिपरतावत् कूटस्थतया अप्यविकारपदेन बोधयितुं शक्यत्वात्। किं च—

उपसंहार:—

एवं विकल्पो विनिवर्तेत कल्पितो यदि केनचिदित्यपि न सम्यक्; त्वया विपरीतस्या निष्प्रमाणतया अनापादानायोगादिति–तत्तुच्छम्, तदर्थानवबोधात्, तथाहि—प्रपञ्चो बोधोत्तरकालेऽपि विद्येत संशयो न निर्वर्तेत तद्धेतोरज्ञानस्य सत्त्वात्। ननु प्रपञ्चसत्त्वेऽपि कुतोऽज्ञानानु-वृत्तिरत आह श्रुतिः—मायामात्रमिदं द्वैतमिति। मायाधीनं यत इत्यर्थः। अन्यन्निगदव्याख्यातम्। इदं च ज्ञानेन मायिकद्वैतस्यैव कुतो न ब्रह्मणोऽपि निवृत्तिरिति शून्यवादिशङ्कापनोयादधिष्ठानस्यापि कर्तृत्वे आत्माश्रया-दिना कल्पनायोगात् निवर्त्यनिवर्त्य भावानुपपत्तेश्चेत्यादिकमूहनीयम्। प्रकृत्यधिकरणं समाप्तम् त्र्यम्बकीयम्॥

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे प्रकृत्यधिकरणे, अविकार इत्यादि श्रुतिविरोधात ब्रह्मणो जगदुपापादानत्वं न संभवतीति अयं पूर्वपक्षः, उदाहृतश्रुतेरर्थ-वर्णनपूर्वकं सयुक्तिकं निराक्रियते॥

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च दृश्यते॥

## No. (419) C 1200 प्रकृत्यधिकरणविचारः

| | |
|---|---|
| ग्रन्थकर्ता—त्र्यम्बकशास्त्री | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम्—13×4 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपि:—देवनागरीलिपिः | स्थिति:—समीचीना |
| पत्राणि—1-11 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

C 702 कोशवत् ।

उपसंहारः—

C 702 कोशवत् ।

प्रतिपाद्यविषयः—

C 702 कोशवत् ।

वक्तव्यविशेषः—

C 702 कोशवत् ।

## No. (420) B 1024 प्रकृत्यधिकरणविचारः

ग्रन्थकर्ता—त्र्यम्बकशास्त्री
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{1}{4} \times 6\frac{5}{8}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-20
प्रतिपुटं पङ्क्तयः—15
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 702 कोशवत् ।

उपसंहारः—

C 702 कोशवत् ।

प्रतिपाद्यविषयः—

C 702 कोशवत ।

वक्तव्यविशेषः—

C 702 कोशवत ।

## No. (421) 2035/14 प्रतिबन्धत्रयप्रकरणम्

ग्रन्थकर्ता—?
पत्रविशेष:—ताळपत्रात्मक:
प्रमाणम्—13×1¼ अङ्गुलानि
लिपि:—नागरीलिपि:
पत्राणि—170-174

प्रतिपुटं पङ्क्तय:—14
प्रतिपङ्क्त्यक्षराणि—50
काल: (कोशस्य)—?
स्थिति:—समीचीना
समग्रोऽसमग्रो वा—समग्र:

उपक्रम:—

आत्मतत्त्वज्ञानप्रतिबन्धकीभूतं प्रतिबन्धत्रयमिदानीं निरूप्यते। प्रतिबन्धस्त्रिविधः। भूतवर्तमानभाविभेदात्। तत्र भूतः प्रथमो निरूप्यते। . . . बहुकुटुम्बी कश्चिद्ब्राह्मणः जीवनार्थं कांचिन्महिषीं सम्पाद्य तन्महिष्याः पयोदधिघृतक्रयं कुर्वंस्तेन द्रव्येण पुत्रभार्यादिकुटुम्बरक्षणं कुर्वन्नेतां महिषीं तृणकार्पासबीजप्रभृतिभिः पोषयंस्तदेकनिष्ठः सन् स्थितः॥

उपसंहार:—

तस्मान्मुमुक्षुरेतत्प्रतिबन्धत्रयं विचार्यैतत्प्रतिबन्धेभ्यो निवृत्तस्तिष्ठेदन्यथा तस्य जन्मादिकं भविष्यति। एतत्प्रतिबन्धत्रयं यस्मिन् जन्मनि यस्य नश्यति तज्जन्मनि तस्य मुक्तिरेतत्प्रतिबन्धमध्ये अन्यतमसत्त्वेऽपि न तस्य मुक्तिः। अत एव विद्यारण्यस्वामिभिः प्रतिबन्धत्रयं निरूप्य तन्निवृत्तिप्रकारश्च पञ्चदशप्रकरणे निरूपितमिति सर्वं रमणीयम्॥

इति प्रतिबन्धत्रयप्रकरणं समाप्तम्

प्रतिपाद्यविषय:—

अस्मिन् सम्यग्ज्ञानप्रतिबन्धकीभूतमाध्यात्मिकादितापत्रयं निरूपितम्॥

वक्तव्यविशेष:—

अमुद्रितः॥

## No. (422) 2. प्रत्यक्तत्त्वप्रकाशिका

| | |
|---|---|
| ग्रन्थकर्ता—वासुदेवेन्द्रयतिः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—92 |
| प्रमाणम्— 16½×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–56 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सच्चिदानन्दरूपाय सृष्टिस्थित्यन्तहेतवे ।
प्रत्यग्रूपाय शुद्धाय श्रीरामब्रह्मणे नमः ॥
यत्कटाक्षसुधासिन्धौ मज्जता पुण्यपाकतः ।
मया ज्ञानमणिर्लब्धस्तं रामेन्द्रगुरुं भजे ॥
श्रीरामेन्द्रगुरोः पादयुग्मकञ्जरजो रविः ।
राजते मे हृदाकाशे मोहध्वान्तदमस्सदा ॥
नत्वा रामेन्द्रचरणौ वक्ष्ये मोक्षैकसाधनीम् ।
वेदान्तसारमुद्धृत्य प्रत्यक्तत्वप्रकाशिकाम् ॥
न ख्यातिपूजालाभेच्छा ग्रन्थसंग्रहणे मम ।
न विद्वत्तावलं चात्र मुक्तिरेव हि कारणम् ॥

तत्रादावुपोद्धातः प्रदर्श्यते ।

देवतावन्दनं चादौ ततश्च गुरुवन्दनम् ।
उपोद्धातस्ततः पश्चादनुबन्धचतुष्टयम् ॥
तथासाधनसम्पत्तिरध्यारोपस्ततः परम् ।
ईश्वरस्य स्वरूपं तु तथा मायानिरूपणम् ॥
जगद्रूपत्वमीशस्य देवरूपत्वमेव च ।
भूतसृष्टिस्ततः पश्चात्पञ्चीकरणमेव च ॥

उपसंहारः—

आकाशपुष्पमिव विश्वमिदं निरीक्ष्ये
संसारसागरसुदुर्गमपारमाप्य ।
प्रत्यञ्चमद्वयमखण्डसुखैकबोधं
साक्षात्कृतोऽस्मि पदभावनया गुरूणाम् ॥

रघुकुलवररत्नं राममन्यांश्च देवान्
मनुजपशुमृगादीन् ब्राह्मणादींश्च जाने ।
परमसुखसमुद्रे मज्जता तन्मयोऽहं
गलितनिखिलभेदस्सत्यबोधैकरूपः ॥
श्रीरामेन्द्रगुरोः पादसेवानिर्मलचेतसा ।
वासुदेवेन्द्रयतिना कृता तत्त्वप्रकाशिका ॥
प्रत्यक्तत्त्वप्रकाशाख्यग्रन्थोऽयं व्याहृतो मया ।
अवद्यमनवद्यं वा विपश्चिद्भिस्समर्थ्यताम् ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीरामेन्द्रगुरुचरणारविन्दभृङ्गायमान श्रीवासुदेवेन्द्रयतिना संग्रहीतप्रत्यक्तत्त्वप्रकाशिकायां प्रणवोपासनादिसर्वसंग्रहप्रकरणं नाम चतुर्थोऽध्यायः

प्रतिपाद्यविषयः—

प्रथमाध्याये-उपोद्घातः, अनुबन्धचतुष्टयं, ईश्वरस्य मायायाश्च स्वरूपनिरूपणं, भूतसृष्टिः, पञ्चीकरणं इन्द्रियसृष्टिः शरीरत्रयलक्षणं, पञ्चकोशस्वरूपनिरूपणमित्यादयो विषयाः । द्वितीये श्रवणमनननिधिध्यासनजीवन्मुक्तिविदेहमुक्तीनां स्वरूपाणि विचार्यन्ते । तृतीये—महावाक्यविचारः, षड्विधसमाधिनिरूपणं च । तृतीये—प्रणवोपासनं, सगुणोपासनं, देवयानादिविचारश्च प्रतिपाद्या विषयाः ॥

वक्तव्यविशेषः—

अयं ग्रन्थः अमुद्रितः, अस्मिन्कोशे समग्रश्च वर्तते ॥

## No. (423) 3614 प्रत्यक्तत्त्वप्रकाशिका

| | |
|---|---|
| ग्रन्थकर्ता—वासुदेवेन्द्रयतिः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—64 |
| प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-72 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

2 कोशवत् ।

उपसंहारः—

श्रीरामेन्द्रगुरोः पादसेवा निर्मलचेतसा ।
वासुदेवेन्द्ररचिता प्रत्यक्तत्त्वप्रकाशिका ॥

इति श्रीपरमहंस परिव्राजकाचार्य श्रीरामेन्द्रगुरुचरणारविन्द भृङ्गायमाण श्रीवासुदेवेन्द्र यतिना संगृहीत प्रत्यक्तत्त्वप्रकाशिकायां प्रणवोपासनादि सर्वसङ्ग्रहप्रकरणं नाम चतुर्थोऽध्यायः

प्रतिपाद्यविषयः—

2 कोशवत् ।

वक्तव्यविशेषः—

2 कोशवत् ।

## No. (424) 3336 प्रणवनिर्णयप्रकाशः (मूलसहितः)

ग्रन्थकर्ता—कृष्णानन्दयतिः
(मूलकारः रामभद्रः)
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—17×1½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—88

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)—?
स्थितिः—अतिशिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

कामक्रोधादिदूराय कल्याणगुणशालिने ।
कृष्णानन्दसरस्वत्यै करवै गुरवे नमः ॥

ओंकाराय नमस्तस्मै यन्मूला मन्त्रमातृका ।
सोऽहमात्मा यतः सोऽपि तां च शक्तिं परां भजे ॥

या परा या च पश्यन्ती मध्यमा वैखरी च या ।
तस्यै नमो नमो वाचे विश्वव्यञ्जनहेतवे ॥

मात्राभिस्तिसृभिर्विलाप्य सकलं विश्वादिमायामयं ।
मायातीतमनाविलं पदमनुध्यायन्ति यद्योगिनः ॥

यच्च ब्रह्म परापरं श्रुतिगिरामन्तेषु जोघुष्यते ।
शब्दब्रह्म तदोमहं सदभयं ज्योतिः परं मङ्गलम् ॥
सांख्यं संहननोपपन्नमधुना यैरेव संख्यायते ।
योगो यत्करुणानियोगपदवीपर्यन्तपान्थायिते ॥
तेऽमी संयमिपुङ्गवा विजयिनः श्रीरामभद्राह्वया ।
मायाकौशलशीलवञ्चनकला वैदेशिका देशिकाः ॥
नत्वा श्रीरामभद्रार्यभगवत्पादपादुकाम् ।
तत्सूक्ति . . . . प्रणवनिर्णयं विवृणोम्यहम् ॥

उपसंहारः —

पर्यन्तोपगतापवर्गशरणं पन्थानमुद्योजय
जीयादेतदमेयदिव्यमहिम स्वायंप्रकाशं महः ।
बाहुश्रुत्यपरिस्क्रियोज्ज्वलगुणा नाखण्डिता पाण्डिती
सूक्ष्मार्थावगमक्षमोहसरणिं मेधा . . . . . ॥
गम्भीरेषु मयार्यपादवचसां गुम्भेषु वागर्पिता
सूक्तं वाथ दुरुक्तमार्यचरणाः क्षाम्यन्तु भक्त्येति मे ।
यत्तत्त्वं परमं . . . . तदिह श्रीरामभद्राभिधं
व्युत्पाद्यापरतत्त्वयोगपदवीव . . . . . श्रुतेः ॥
तद्व्याख्या मम देशिकेन्द्रकरुणापीयूषसिक्ताक्षरा ।
सद्भिः सूक्तिदुरुक्तिदुर्व्यसनितामुत्सृज्य संसेव्यताम् ॥
वाचालयति यः सर्वं सर्वभूतगुहाशयः ।
वासुदेवो निबन्धं मे स क्षमात्मा स . . . ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीरामभद्रभगवत्पूज्यपादशिष्य श्रीकृष्णानन्दभगवतः कृतौ प्रणवनिर्णयप्रकाशे तृतीय उच्छेदः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ओंकाराख्यप्रणवयोगः सप्रपञ्चं निरूप्यते ॥

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च ॥

## No. (425) B 1040 प्रणवनिर्णयप्रकाशः (मूलसहितः)

ग्रन्थकर्ता—कृष्णानन्दयतिः
(मूलकारः रामभद्रः)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{1}{2} \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–194

प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—?
कालः (कोशस्य)—1936 क्रि. श.
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3336 कोशवत्।

उपसंहारः—

3336 कोशवत्।

प्रतिपाद्यविषयः—

3336 कोशवत्।

वक्तव्यविशेषः—

3336 कोशवत्।

## No. (426) 338/2 प्रणवार्थसुधोदयः

ग्रन्थकर्ता—वीणयन्नसुधीः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16\frac{3}{4} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—12–22

प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—68
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

चिन्मुद्रितकराम्भोजं श्रीकृष्णं गुरुरूपिणम्।
स्मृत्वा ध्यात्वा मुहुर्नत्वा मुमुक्षूणां हिताय च॥
श्रुत्यागमपुराणाभियुक्तवाक्यानुसारतः।
वीणयन्नसुधीः कुर्वे प्रणवार्थसुधोदयम्॥

प्रकर्षान्नवरूपत्वात्प्रणवः परिकीर्तितः ।
इति ज्ञापयितुं तारं नवावयवमुच्यते ॥

अकारश्च उकारश्च मकारोंकार एव च ।
अर्धमात्रा बिन्दुनादौ शक्तिः शान्तिश्च वै नव ॥

चत्वार्यास्ये पञ्च शिरो हृन्नाभ्याधारबिन्दुषु ।
स्थानेष्वेतेषु तिष्ठन्ति प्रणवावयवा नव ॥

वाचकप्रणवस्यास्य वाच्ययोरीशजीवयोः ।
कृत्योपाध्युपधेयैश्च त्रैविध्यमुपवर्ण्यते ॥

उपसंहारः—

अथ वा सच्चिदानन्दमनन्तं ब्रह्म सुव्रता ।
अहमस्मीत्यभिध्यायेत् ध्येयातीतं विमुक्तये ॥

इदंतया न देवेशामभिध्यायेन्मनागपि ।
ब्रह्मणः साक्षिरूपत्वान्नेदं यदिति हि श्रुतिः ॥

एवं ध्यानपरः साक्षाच्छिव एव न चान्यथा ।
अनेन सदृशो लोके नास्ति ब्रह्मविदां वरा ॥

इत्यादि सूतसंहितावचनरीत्या स एव शिव इत्यर्थः ॥

अथवा योगिनामेव कुले महति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥

इत्यादिगीतावचनरीत्या स एव दुर्लभ इत्यर्थः ॥

इति प्रणवार्थसुधोदयग्रन्थः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे प्रणवशब्दस्य अकाराद्यवयवानामर्थः जीवेश्वरभेदाः उपाधिपरित्यागेन तेषामैक्यं च सप्रमाणं निरूप्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च दृश्यते ॥

## No. (427) B 1023 प्रणवार्थसुधोदयः

ग्रन्थकर्ता—वीणयन्नसुधीः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{3}{8} \times 6\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-26

प्रतिपुटं पङ्क्तयः—15
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—1934
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

338/2 कोशवत्।

उपसंहारः—

338/2 कोशवत्।

प्रतिपाद्यविषयः—

338/2 कोशवत्।

वक्तव्यविशेषः—

338/2 कोशवत्।

## No. (428) 4683 प्रणवार्थसुधोदयः

ग्रन्थकर्ता—वीणयन्नसुधीः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16 \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-17

प्रतिपुटं पङ्क्तयः—5
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

338/2 कोशवत्।

उपसंहारः—

338/2 कोशवत्।

प्रतिपाद्यविषयः—

338/2 कोशवत् ।

वक्तव्यविशेषः—

338/2 कोशवत् ।

## No. (429) C 1153 प्रमाणतत्त्वम्

| | |
|---|---|
| ग्रन्थकर्ता—त्र्यम्बकशास्त्री | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—46 |
| प्रमाणम्—$12\frac{3}{4} \times 4\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-15 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

पूर्णानन्दैकनिर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥
कल्याणगुणपूर्णश्रीकरुणावरुणालयः ।
कल्याणानि विधत्तां नः कमलाकामुकः पुमान् ॥

ओं पदार्थो द्विविधः स्वसिद्धः परतः सिद्धश्चेति । तत्र स्वतःसिद्ध आत्मा, तदन्यः परतस्सिद्धः । परतः सिद्धोऽपि द्विविधः, केवलसाक्षिभास्यः, स्वस्वाकारवृत्तिमपेक्ष्यैव साक्षिभास्यश्चेति । आद्यो मनस्तत्परिणामसुखदुःखादिः । द्वितीयोऽपि द्विविधः अविद्यावृत्तिमपेक्ष्य साक्षिभास्यो मनोवृत्तिमपेक्ष्य साक्षिभास्यश्चेति । आद्यः सुषुप्त्यादिः, द्वितीयो घटादिः, तत्र ज्ञानरूपमनोवृत्तिस्तावत् षड्विधा, प्रत्यक्षानुमित्युपमितिशाब्दार्थापत्त्यनुपलब्धिभेदात् ॥ तत्करणमपि षड्विधम् । तच्चाग्रे निरूपयिष्यते । तत्र मनोभिन्नेन्द्रियजन्या मनोवृत्तिः प्रत्यक्षमुच्यते ।

उपसंहारः—

अत एव च सम्प्रदायविद्भिरेवं सति सांख्यमतापत्तिरित्याशंक्य कार्याणां परमार्थसत्यता नासदनुमत्या इत्येतावन्मात्रेण सांख्यदर्शनात्सत्कार्यवादांशे वेदान्तदर्शितस्य वैलक्षण्यमुपपादितम्। आरम्भणाधिकरणे भाष्यभानुप्रभायां विवेचितमस्माभिरिति सर्वं समञ्जसम्। तस्मादुक्तमभानापादकाज्ञान विषयतावच्छेदकविषयतादात्म्यवच्चैतन्यं साक्षात्कार इति। नन्वेवमपश्यस्य साक्षात्कत्वानुपपत्तिः तदाश्रितस्यत्व तन्निरूपितस्य वाऽज्ञानस्याप्रसिद्धेरिति चेन्न; तदीयत्वावच्छिन्नाज्ञानवृत्तिप्रतियोगिताकाभाववद्विषयतादात्म्यापन्नचितो जानाति साक्षात्करोत्यर्थः॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अद्वैतमतरीत्या प्रत्यक्षादिषट्प्रमाणानां स्वरूपं सम्यक्प्रतिपाद्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः असमग्रः, अमुद्रितश्च दृश्यते॥

## No. (430) 1773/2 प्रमाणमाला

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दबोधः | प्रतिपुटं पङ्क्तयः—13 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—82 |
| प्रमाणम्—$13\frac{3}{4}\times1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–16 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

आनन्दमात्मानमसत्यमेदं प्रणम्य विज्ञानतनुं मुकुन्दम्।
प्रसाधने तस्य सदोपयुक्तां प्रमाणमालां रचयामि रम्याम्॥

आनन्दो दुःखाभावो न भवति, दुर्निरूप्यत्वात्। यदित्थं तत्तथा यथा घटः, यद्वा आनन्दो भावरूपः, प्रतियोग्यनिरूप्यत्वात्। घटवत्। अवाच्ये सत्यपदवदानन्दपदस्यापि दुःखाभावे प्रवृत्तेः प्रतियोग्यनिरूप्यत्वमप्रसिद्धमितिचेत् मैवम्, अकस्मादुपनतविपञ्चीस्वरश्रवणादवान्तरेणापि

दुःखावमर्शमानन्दसंवेदनात्। आनन्दाभाव एव दुःखमिति पूर्ववाक्येन विपरिवृत्तिप्रसङ्गाच्च। तत्रानुभवविरोध इति चेत् अत्रापि समं समाधानम्।

उपसंहारः—

अन्यथा ज्ञानादेव तु कैवल्यं, नान्यः पन्था इत्यादिविरोधप्रसङ्गात्। यत्तु यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम्। एवं तपश्च विद्या च संयुक्तं भेषजं महदित्याद्याहृत्य समुच्चयपरं प्रतिभाति तत्सर्वं परिपक्वान्नाविद्याव्यतिरिक्ताया विद्यायाः त्कर्मणांतद्वारा......समुच्चयं प्रतिपादयतीत्यभ्युपेयम्। तथा ह्युक्तं नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्। ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत्..................अभ्यासात् पक्वविज्ञानः कैवल्यं लभते नरः इति। यत्तु कर्मणैव हि संसिद्धिमास्थिता जनकादय इति॥ तत्र संसिद्धिस्तत्त्वावबोध एव पर्यवस्यति। सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे, इतिप्राप्तव्यस्या......धानादिति सकलमनाकुलम्। तस्मादविद्यास्तमयो मोक्षो विद्यैकहेतुकः। युक्तया श्रुतिस्मृतिभ्यां स्वीकर्तव्यो मनीषिभिः। सदादित्य....नोऽस्य प्रकारः परितोषतः। यथायमुपपद्येत तथैव परिकल्प्यताम्॥

प्रमाणमाला गुणसङ्गतेयमपेतदोषा विहितादरेण।
प्रसाधयन्ती परमं पुमांसं प्रगल्भतां प्रार्थितसिद्धये नः॥

आत्मस्वभावमधिकृत्यमुकुन्दमेषा मालाभिधाननवरत्नमनोज्ञमाला।
आनन्दबोधयतिना निधिना गुणानामानन्दहेतुरकलङ्कधियाभ्यधायि॥

समाप्तेयं प्रमाणमाला॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अनन्दशब्दार्थः परमात्मैवेति प्रसाध्य तदाप्तये ज्ञानमेकमेव मुख्यसाधनमिति प्रतिपाद्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। मुद्रितश्च दृश्यते॥

## No. (431) 2035/20 प्रलयप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—5 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13×1½ अङ्गुलानि | कालः—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—192-193 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

इदानीं प्रलयस्वरूपं निरूप्यते। प्रलयः पञ्चविधः, नित्यावान्तर-दैनन्दिनब्रह्मात्यन्तिकभेदात्। तत्र समस्तप्राणिनां सुषुप्तिर्नित्यप्रळयः। अवान्तरप्रलयस्तु कृतत्रेताद्वापर कलियुगानां चतुर्णां सहस्रावृत्तौ ब्रह्मणो एको दिवसः। तस्मिन्नहनि चतुर्दशो....णां चतुर्दशमनूनामाधिपत्यं नश्यति, तदाधिपत्यनिर्गमनकाले लोकत्रयं भग्नं भवति। इत्यादिः।

उपसंहारः—

एते प्रलयाः अन्योन्यव्यावृत्ततया अनात्मस्वरूपाः। एतत्प्रलयाधारः प्रलयानुस्यूतः असङ्ग आत्मा अहमिति यो जानाति स एव जीवन्मुक्त इति सर्ववेदान्तसिद्धान्त इति सर्वं रमणीयम्॥

इति प्रलयप्रकरणं समाप्तम्.

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे नित्यादिभेदभिन्नानां पञ्चानां प्रलयानां स्वरूपं, तत्र सर्वत्रानुस्यूत आत्माऽहमिति भावयतो मुक्तिर्भवतीति च प्रतिपाद्यते।

वक्तव्यविशेषः—

अमुद्रितः॥

## No. (432) B 465 प्रश्नोपनिषद्भाष्यम्

ग्रन्थकर्ता— अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-40

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ओं भद्रं कर्णेभिश्शृणुयामदेवाः........दधातु । ओं शान्तिः ॥

सू सद्गुरुं सच्चिदानन्दस्वरूपं सुन्दराभिधम् ।
नत्वाधुनाहं व्याख्यास्ये प्रश्नोपनिषदं स्फुटम् ॥

सुकेशा च भरद्वाजः शैब्यश्च सत्यकामस्सौर्यायणी च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनः ते हैते ब्रह्मपराः ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः एष ह वै तत्सर्वं वक्ष्यतीति । ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नास्तान्ह सर्षिरुवाच ।

भा—सुकेशा च नामतः भरद्वाजस्यापत्यं भारद्वाजः शिबेरपत्यं शैब्यश्च . . . . .

उपसंहारः—

योऽस्माकमस्या अविद्यायाः अनादिसंसारबीजभूतायाः परं पारं परमात्मानं तारयसि प्रापयसि हि यस्मात्तस्मात्त्वमेव नः अस्माकं पिता रक्षकः । नमः परमऋषिभ्यः ब्रह्मविद्यासम्प्रदायकर्तृभ्यः । नमः परम ऋषिभ्य इति द्विर्वचनं प्रश्नपरिसमाप्त्यर्थम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ प्रश्नोपनिषद्भाष्ये षष्ठः प्रश्नः

प्रश्नोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

प्रश्नोपनिषद्विवरणरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (133) C 1521 प्रश्नोपनिषद्भाष्यविवरणम्

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञानः | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—$10\frac{1}{8} \times 4\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य) –? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–21 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यद्बोधादिदं याति यद्बोधाद्विनिवर्तते ।
नमस्तस्मै परानन्दवपुषे परमात्मने ॥

आथर्वणे ब्रह्मा देवानामित्यादिमन्त्रैरेवात्मतत्त्वस्य निर्णीतत्वात्तत्रैव ब्राह्मणेन तदभिधानं पुनरुक्तमित्याशंक्य तस्यैवेह विस्तरेण प्राणोपासनादिसाधनसाहित्येनाभिधानान्न पौनरुक्त्यमिति वदन् ब्राह्मणमवतारयति —मन्त्रेति। विस्तरेति। मन्त्रे हि द्वे विद्ये वेदितव्ये परा चैवापरा चेति उक्त्वा तत्रापरा ऋग्वेदाद्यभिधेयेत्युक्तम्। सा च विद्याकर्मरूपोपासनरूपा च। तत्र द्वितीयाद्वितीयतृतीयप्रश्नाभ्यां विव्रियते। आद्या कर्मकाण्डप्रवृत्तेति नो विव्रियते ॥ उभयोः फलं तु ततो वैराग्यार्थं प्रथमप्रश्ने स्पष्टीक्रियते ॥

उपसंहारः—

योऽस्माकमिति हेतूक्तस्तात्पर्यं वदन् पितृत्वोक्तिमात्रेण विद्यानिष्क्रियार्थं किं दत्तमित्यपेक्षायां स्वशरीरमेव परिचारकतया दास्यभावेन गुरवे दत्तमित्याह—तस्मादिति। पितृत्वादेव किं पूज्यतरत्वं परिचार्यत्वं स्वामित्वं किमु वक्तव्यमित्यर्थः। अत एव वाजसनेयके मां चापि सह दास्यायेत्युक्तमिति भावः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कैवल्येन्द्रशिष्यज्ञानेन्द्रगुरुचरणसेविनारायणेन्द्रसरस्वतीविरचितप्रश्नोपनिषद्भाष्यविवरणं समाप्तिमगमत्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे शंकराचार्यकृतप्रश्नोपनिषद्भाष्यं विव्रियते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते मुद्रितश्च। यद्यप्येतत्कोशान्ते अयं ग्रन्थः नारायणेन्द्रसरस्वतीकृत इत्यस्ति, तथापि ग्रन्थतः अयं आनन्दगिरीय एवेति निर्णीयते ॥

## No. (434) 1000/2 प्रश्नोपनिषद्विवरणम्

ग्रन्थकर्ता—आनन्दज्ञानः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—13 × 1½ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—21–75
प्रतिपुटं पङ्क्तयः—17
प्रतिपङ्क्त्यक्षराणि—46
कालः (कोशस्य) - ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 1521 कोशवत्।

उपसंहारः—

C 1521 कोशवत्।

प्रतिपाद्यविषयः—

C 1521 कोशवत्।

वक्तव्यविशेषः—

C 1521 कोशवत्।

## No. (435) B 466 प्राणाग्निहोत्रोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागद्पत्रात्मकः
प्रमाणम्—7½ × 6½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—163–172
प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू–ओं सह नाववंत्विति शान्तिः। अथातस्सर्वोपनिषत्सारं संसाराज्ञानातीतमन्त्रसूक्तं शारीरयज्ञं व्याख्यास्यामोऽयमस्मिन्नेव पुरुष-

इशरीरे विनाप्यग्निहोत्रेण विनापि सांख्येन संसारविमुक्तो भवतीति। स्वेन विधिनान्नं भूमौ निक्षिप्य या ओषधयस्सोमराज्ञीरिति तिसृभिः। अन्नवत इति द्वाभ्यां अनुमन्त्रयति। यास्त्वोषधयस्सोमराज्ञीर्बह्वीश्शतविचक्षणाः। बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वंहसः॥

भा---शारीरयज्ञो मोक्षार्थो यत्नोक्तो कर्मरूपकः।
प्राणाग्निहोत्रसंज्ञाया व्याख्याप्यारभ्यते श्रुतेः॥

अथात इति—

उपसंहारः—

भा–ननु भविष्यज्जन्मनेति वक्तुमयुक्तम्। वाराणासीमृतस्यानन्तर-जन्मानभ्युपगमात। अतः तेनैवैकेन जन्मना मुक्तिरिति व्याख्येयमिति। अत्रोच्यते--तस्य जन्मनः पूर्वजन्मनामिव गळितत्वेन निर्देश्यत्वानुप-पत्तेरनन्तरजन्मैवाभिप्रेतमिति। मुक्तिकोपनिषदि क्रममुक्त्यभ्युपगमात वाराणसीमृतस्य कालविळम्बसापेक्षकैवल्यार्थकसारूप्यमपेक्ष्यैकं जन्मपर-मित्यनवद्यम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ प्राणाग्निहोत्रोपनिषद्भाष्यम् समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मोक्षफलोद्देशेन प्राणाग्निहोत्रं सपरिकरं सम्यङ्-निरूप्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

No. (436) 2035/18 प्रारब्धत्रयप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—4 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13 × 1¼—अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—187–190 | समग्रोऽसमग्रोवा—समग्रः |

उपक्रमः—

इदानीं प्रारब्धत्रयं निरूप्यते। प्रारब्धं त्रिविधम्, इच्छानिच्छा-परेच्छाभेदात्। एतत्प्रारब्धत्रयं विवेक्यविवेकिनां समानमेव। तथापि भेदोऽस्ति। तथा हि अविवेकीच्छा आश्वीजमासमेघोपमा। तथा हि आश्वयुङ्मासे स्वल्पतया मेघः परिदृष्टः सर्वत्र व्यापी सन् कुम्भद्रोणरीत्या वर्षयित्वासस्यानुन्मज्जयित्वा गृहभित्तिसदनसम्पातनद्वारा बहूनर्थान् जनयति। तथैव—

उपसंहारः—

दाक्षिण्ययुक्तः सन् तत्कार्यं कृत्वा तज्जन्यसुखदुःखे अनुभवति। तादृशानुभवस्य विवेक्यविवेकिसाधारणत्वेन उभयोः समानम्। इदमेव परेच्छा प्रारब्धमित्युच्यते। तस्मादेवं विचार्यैतत्प्रारब्धानुभवोऽहंकार-स्यैव न त्वहंकारसाक्षिणो म इति यो जानाति स एव जीवन्मुक्त इति सर्व-वेदान्तसिद्धान्त इति सर्वमुपपन्नम् ॥

इति प्रारब्धत्रयप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे इच्छानिच्छापरेच्छा भेदेन प्रारब्धत्रैविध्यं तन्निरास-प्रकारश्च निरूप्यते।

वक्तव्यविशेषः—

अमुद्रितः।

## No. (437) B 223 प्रारब्धध्वान्तसंहृतिः

ग्रन्थकर्ता—अच्युतशर्मा
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—कन्नडलिपिः
पत्राणि—1-40

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रीमच्चन्द्रार्धचूडाङ्घ्रिनखचिन्मणिदीधितिम् ।
ध्यात्वाभिधास्ये श्रीशुद्ध्यै प्रारब्धध्वान्तसंहृतिम् ॥

नन्वत्र प्रारब्धस्य ध्वान्ताभिधसमिद्धान्धकारसाधर्म्यमभिदधता भवता तस्य वस्त्वावरकत्वमवश्यं वाच्यम्, तत्तु मूलाज्ञानस्यैवेति सर्ववादिघण्टाघोषः। न च व्यावहारिकवस्तुत्वशालिघटाद्यावरकत्वं तमसोऽपि दृष्टं, तथा सुप्त्याकारपरिणततमोगुणस्यापि अहङ्काराद्यावरकत्वं स्पष्टमेवेति तद्वदिदमपीति वाच्यम्; तथात्वे सर्वथा ज्ञानानुपपत्या अनिर्मोक्षप्रसङ्गात्। तथाहि—प्रारब्धं विना तु मनुष्यादिशरीराभावात्तस्य तु तत्वावरकत्वादुपदेष्टुरेवाभावः स्यात्। तत्तु सकलश्रुतिविरुद्धम् ॥

उपसंहारः—

एवं च तत्श्रवणादिनिरस्ते निखिलप्रतिबन्धे निरुक्तवाक्यादेव संजाते यावद्दृश्यमिथ्यात्वावधारणपूर्वकाद्वैतात्मस्वप्रकाशानन्दब्रह्मसाक्षात्कारे तेन ब्रह्मविदा यावत्प्रारब्धपरिसमाप्ति सत्यपि द्वैतप्रतिभासे पञ्चम्यादित्रिभूमिकजीवन्मुक्तिसिद्ध्यर्थं तत्वज्ञानाभ्यासमनोनाशवासनाक्षयाः प्रयत्नतः सम्पादनीया एवेति शिवम् ॥

स्वस्ति श्रीरघुवीरसद्गुरुपदाम्भोजप्रसादात्सदा
भव्यब्राह्मणवर्ण एव नृपतिः पृथ्वीं स्वधर्मैरलम्।
आसेत्वाहिमशैलमोदधियुगं संपालयत्वन्वहं
गाविप्रैकहितो रतोऽखिलशुभैः संमण्डितां नित्यशः ॥ १ ॥

इति शाके शशिवेदाश्वभूमिते हायने प्रमाथ्याख्ये।
अश्विनसितललिताभिधपञ्चम्यां पञ्चवटिकायाम् ॥ २ ॥

आसीत् श्रीगुरुकृपया प्रारब्धध्वान्तसंहृतिः पूर्णा।
अनया तुष्यतु भगवान् श्रीमद्रघुवीरसद्गुरुः स्वात्मा ॥ ३ ॥
श्रीमन्नारायणगुरू श्रीमहादेवदेशिकान्।
श्रीमद्रघूत्तमाचार्यान् प्रणमामि मुहुर्मुहुः ॥ ४ ॥

इति श्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येन्दिरारमणश्रीमन्नारायणशास्त्रि-चरणारविन्दद्वन्द्वमिलिन्दायमानमानसस्यमेतोपाह्वयस्य अच्युतशर्मणः कृतौ प्रारब्धनादध्वान्तसंहृतिः सम्पूर्णा

प्रतिपाद्यविषयः —

अस्मिन्ग्रन्थे प्रारब्धस्य स्वरूपं तद्भेदः तज्जन्यसुखदुःखादीनां भेदः, तत्त्वज्ञानेन तन्नाशद्वारा मुक्तिश्च भवतीत्ययमंशः स्पष्टं प्रतिपाद्यते ॥

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च दृश्यते ॥

## No. (438) 2035/8 प्रियतमत्वप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—$13 \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—158–160 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः —

मैत्रेयीब्राह्मणे—न वा अरे पत्युः कामाय जाया प्रिया भवतीत्यादिना आरभ्य नवा सर्वस्य प्रियाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवतीत्यादिना सर्वापेक्षया आत्मनः प्रियतमत्वं निरूपितम् । इदानीं युक्त्यनुभवाभ्यां निरूप्यते । तथाहि—

उपसंहारः—

एवं सम्यग्विचार्य पुत्रमित्रकळत्रदेहेन्द्रियादिकं सर्वं दुःखरूपमिति बुध्वा तदभिमानं त्यक्त्वा स्वस्मिन्नेव प्रीतिं कृत्वा स च प्रियतमोऽहमिति यो जानाति स एव जीवन्मुक्त इति सर्ववेदान्तराद्धान्त इति सर्वं रमणीयम् ॥

इति प्रियतमत्वप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मैत्रेयीब्राह्मणोक्तरीत्या आत्मनः सर्वापेक्षया प्रियतमत्वं तज्ज्ञानेन जीवन्मुक्तिश्च भवतीति प्रतिपाद्यते ।

वक्तव्यविशेषः —

अमुद्रितः ।

## No. (439) B 528/3 प्रौढानुभवः

ग्रन्थकर्ता—अमरेश्वरशास्त्री
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8 × 6½ अङ्गुलानि
लिपिः—कन्नडलिपिः
पत्राणि—209–213

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ब्रह्माण्डदेवालयमध्यसंस्थपिण्डाण्डगर्भालयचित्तपीठे।
विभासमानं विततं स्वकीयचैतन्यलिङ्गं शिवमाश्रयामः॥ 1–3

प्रौढः प्रौढनिजानुभूतिगलितद्वैतेन्द्रजालो गुरु-
गूढं गूढमहावदुष्टकुधियां स्पष्टं सुधीशालिनाम्।
स्वान्ते सम्यगिहानुभूतमपि सच्छिष्यावबोधायत-
त्त्वं संस्मृतवान् समस्तजनता नैजं निजालोकनात्॥

द्वैतं मय्यखिलं समुत्थितमिदं मिथ्यामनः कल्पितं
तोयं तोयविवर्जिते मरुतले भ्रान्त्यैव सिद्धं न हि।
यद्येवं खलु दृश्यमेतदनिशं नाहं न वा तन्मम
प्रौढानन्दचिदेकसन्मयवपुश्शुद्धोऽस्म्यखण्डोऽस्म्यहम्॥

देहो नाहमचेतनोऽयमनिशं कुड्यादिवन्निश्चितो
नाहं प्राणमयोऽपि वा धृतिध्नो वायुर्यथा निश्चितः।
सोऽहं नापि मनोमयः कपिचलः कार्पण्यदुष्टो न वा
बुद्धिर्बुद्धकुवृत्तिकेव कुनटी नाज्ञानमन्धंतमः॥

उपसंहारः—

योऽहं पूर्वमितः प्रशान्तकलनश्शुद्धोऽस्मि बुद्धोऽस्म्यहम्
यस्मान्मत्त इदं समुत्थितमभूदेतन्मया धार्यते।
मय्येव प्रळयं प्रयाति निरधिष्ठानाय तस्मै सदा
नित्यानन्दचिदात्मकाय विपुलप्रज्ञाय मह्यं नमः॥ १५॥

सत्ताचित्सुखरूपमस्ति सततं नाहं न च त्वं मृषा
नेदं वापि जगत्प्रदृष्टमखिलं नास्तीति जानीहि भो।
यत्प्रोक्तं करुणावशात्त्वयि मया तत्सत्यमेव स्फुटं
श्रद्धत्स्वानघ शुद्धबुद्धिरसि चेन्मात्रास्तु ते संशयः॥
स्वात्मैकसुबोधचारुमनसे प्रौढानुभूतिस्त्वयं
दातव्या न तु मोहदग्धकुधिये दुष्टान्तरङ्गाय च।
येयं रम्यविटार्पितोत्तमाशिरः प्रान्ते चकास्ति स्वयं
सा चेन्मर्कटहस्तदेशपतिता किं राजते केतकी॥
करम्भस्पाटिकुलोद्भूतेनामरेश्वरशास्त्रिणा।
कृतं प्रकरणं सम्यक्प्रौढानुभवशब्दतः॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे पृथिव्यादिसकलदृश्यप्रपञ्चव्यतिरिक्तं सच्चिदानन्दस्वरूपं ब्रह्मैवास्मीति दृढवैराग्यस्य ज्ञानिनः अनुभवप्रकारः प्रदर्श्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते॥

## No. (440) B 467 बह्वृचोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—21-8-1898 |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—239–244 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं वाङ्मनसीति शान्तिः। देवी ह्येकाग्र आसीत्। सैवं जगदण्डमसृजत। कामकलेति विज्ञायते। शृङ्गारकलेति विज्ञायते। तस्या एव ब्रह्मा अजीजनत्। विष्णुरजीजनत्। रुद्रोऽजीजनत्। सर्वे मरुद्गणा अजीजनन्। गन्धर्वाप्सरसः किन्नराः वादित्रवादिनस्समन्तादजीजनन्। भोग्यमजीजनत्। सर्वमजीजनत्। सर्वं शाक्तमजीजनत्।

भा — यस्यां देवी महावाक्यैश्चतुर्भिर्भाष्यते परा ।
बह्वृचाख्योपनिषदं व्याख्यास्ये तां द्विलिङ्गकाम् ॥ इत्येवमिति।

उपसंहारः —

भा—ये पुनस्तत्परब्रह्म इत् इत्थं पूर्वोक्तप्रकारेण विदुः विदितवन्तः त इमे वर्तमाना जीवन्मुक्ता एव समासते परब्रह्मणि सम्यगासीना भवन्तीत्यर्थः। अयं भावः—लोके अधीतसमस्तवेदमन्त्रोऽपि पुरुषस्तत्परमतात्पर्यभूतपरब्रह्मात्मैक्यापरोक्षज्ञानानुभवहीनश्चेत्तदा तदध्ययनश्रमश्चित्तशुद्धिमात्रप्रयोजनो भवेत । न तु सद्योमुक्तिप्रयोजन इति ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ बह्वृचोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः---

अस्मिन्ग्रन्थे शाम्भवी देवी, तत्त्वमस्यादिमहावाक्यप्रतिपाद्या, सगुणनिर्गुणात्मिका, तस्या एव सकाशात् चतुर्मुखादीनां तद्द्वारा निखिलप्रपञ्चस्य चोत्पत्तिरिति प्रतिपाद्यते ।

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (441) B 231/2 बालबोधिनी

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-9

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

प्रणम्य परमानन्दं मोहान्धतिमिरापहम् ।
तत्प्रसादबलेनैव क्रियते बालबोधिनी ॥
यस्य प्रसादलेशेन क्षीयन्ते भवभीतयः ।
तं सर्वसाक्षिणं यामि शरणं कृपणो ह्यहम् ॥

भो भगवन्नथात्मा कीदृशः। सद्रूपं सर्वदा भावरूपम्। चिद्रूपं विशुद्धबोधैकरूपम्। आनन्दं सुखरूपम्। नित्यं कालत्रयावस्थायि।

उपसंहारः—

ततः प्रारब्धभोगक्षये शरीरपातादिदेहकैवल्यं भवतीति परमपुरुषार्थसिद्धिः॥

विशुद्धबुद्धयो धीराः ज्ञानदीपकराः करे।
पश्यन्ति मणिवत्क्षिप्त्वा तमो ब्रह्म परं हि तत्॥

इति श्रीशंकराचार्यविरचिता बालबोधिनी समाप्ता

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे पटलद्वयं विद्यते। तत्र प्रथमे जीवेश्वरज्ञानानां स्वरूपं संक्षेपेण प्रतिपाद्य, द्वितीये मुमुक्षोः मोक्षसाधनत्वेन अनुबन्धचतुष्टयं प्रतिपाद्यते॥

वक्तव्यविशेषः—

असुद्रितः।

## No. (442) B 528/2 विम्बदृष्टिविचारः

| | |
|---|---|
| ग्रन्थकर्ता—अमरेश्वरशास्त्री | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेष—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—199-209 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ब्रह्माण्डदेवालयमध्यसंस्थपिण्डाण्डगर्भालयचित्तपीठे।
विभासमानं विततं स्वकीयचैतन्यलिङ्गं शिवमाश्रयामः॥ 1-5
यथोक्तसाङ्गश्रवणनिष्ठस्य ब्रह्मवादिनः।
बुद्धिशुध्यै मया सम्यग् विम्बदृष्टिर्विचार्यते॥

श्रोत्रियं निष्क्रियं शान्तं ब्रह्मानन्दैकनिष्ठितम् ।
श्रीगुरुं परिपप्रच्छ शिष्यः शिष्यगुणान्वितः ॥
श्रीगुरो त्वन्मुखाम्भोजादुपदेशामृतं च्युतम् ।
मया मनःपुटेनाद्य पीतं तृप्तिकरं महत् ॥
विज्ञापयामि यत्किंचित्त्यक्तलज्जो मनोगतम् ।
कया मन्त्रवती दृष्ट्वा गुप्तं प्रसवसङ्कटम् ॥
मननध्यानसंयुक्तं श्रवणं बहुधा कृतम् ।
ऐहिकामुष्मिकाशेषपदार्थाशा मयोज्झिता ॥
सर्वदा सर्वदृश्येषु ब्रह्मदृष्टिं करोमि च ।
अथापि मां प्रबाधन्ते रागद्वेषादिवासनाः ॥

उपसंहारः—

सर्वविप्रसमानेऽपि वेदशास्त्रार्थचिन्तने ।
मिश्रोत्कर्षमहापुण्यात्कश्चिद्वेत्ति तथा श्रुतेः ॥
सच्चिदानन्दसम्पूर्णं दृश्याभासविवर्जितम् ।
मौनैकगम्यं यद्ब्रह्म तदेवाहं परं पदम् ॥
इति स्वसाक्षिकस्वात्मतत्त्वविज्ञानकौशलात् ।
सदेहो वा विदेहो वा विमुक्तस्त्वं सुखी भव ॥
देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिने-
त्येवं प्राञ्जलिना मया सविनयं स्वप्नेऽर्थितस्येशितुः ।
यस्य श्रीकरुणाकटाक्षविभवप्राप्तात्मविद्योऽस्म्यहं
तं वन्दे मुनिवन्दनीयचरणं श्रीदक्षिणास्यं गुरुम् ॥
कम्भंपाटिकुलोद्भूतेनामरेश्वरशास्त्रिणा ।
शतश्लोक्या मनश्शुध्यै बिम्बदृष्टिर्विचारिता ॥

समाप्तोऽयं बिम्बदृष्टिविचारः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सच्चिदानन्दात्मकबिम्बदृष्ट्या तदहमस्मीति ज्ञानेन मनोवासनानाशद्वारा मुक्तिर्भवतीति प्रतिपाद्यते ।

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च दृश्यते ।

## No. (443) B 468 बृहज्जाबालोपनिषद्भाष्यम्

ग्रन्थकर्ता —अप्पय्यदीक्षिताचार्यः
पत्रविशेष:—कागदपत्रात्मक:
प्रमाणम्—$7\frac{3}{4}\times 6$ अङ्गुलानि
लिपि:—आन्ध्रलिपिः
पत्राणि—241–266

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्र:

उपक्रमः—

सू–भद्रं कर्णेभिरिति शान्तिः। ओं आपो वा इदमासंत्सलिलमेव स प्रजापतिरेकः पुष्करपर्णे समभवत्। तस्यान्तर्मनसि कामस्समवर्तत। इदं सृजेयमिति। तस्माद्यत्पुरुषो मनसाभिगच्छति। तद्वाचा वदति। तत्कर्मणा करोति। तदेषाभ्यनूक्ता। कामस्तदग्रे समवर्तताधि। मनसो रेतः प्रथमं यदासीत्। सतोबन्धुमसति निरविन्दन्। हृदि प्रतीष्या कवयो मनीषेति॥

भा–भूतिरुद्राक्षयोर्यत्र माहात्म्यं बहुधोच्यते।
बृहज्जाबालसंज्ञातां व्याख्यास्ये श्रुतिमद्भुतां॥
सलिलजोद्भवा ब्रह्म तस्य मनसीदं

उपसंहार:—

भा–अत्र हि शिवसायुज्यमुक्तिरेवाभिहितास्ति। सा तु मुक्तिः कैवल्यपर्यवसन्नापि सगुणमूर्तिसंयोगलक्षणैव। तादृशस्य तु तन्मूर्तिविलीनस्य मुक्तस्य निष्कामत्वेन पुनरावृत्तिरहिततया निर्गुणसायुज्यमुक्तत्वमेव भवति। तथा सति सर्वैश्वर्यसम्पन्नतया सर्वसिद्धिमत्त्वमुपपद्यते। न चास्यामुपनिषदि सायुज्यमुक्तिः। केवलमुक्ता न कैवल्यमितिवाच्यम्। "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्युपसंहारेण परमस्य विष्णुपदस्याभिहितत्वेन कैवल्यपदस्य संसिद्धत्वात्तस्मादनवद्यम्॥

इतिबृहज्जाबालोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषय.—

अस्मिन्ग्रन्थे विभूते रुद्राक्षस्य च माहात्म्यं धारणादिक्रमश्च सम्यङ्निरूप्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (144) 4614/3 बृहदारण्यकोपनिषद्दीपिका

ग्रन्थकर्ता—शंकरानन्दः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$18\frac{3}{4} \times 2$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—93–257

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—84
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

ओं—ब्रह्मादिकान्सार्वदिकानशेषान्नत्वा गुरूञ्छंकरवर्णलब्धान्।
नाथं नवानां रचयामि रम्यामारण्यकाब्धेस्तरणाय शीघ्रम् ॥

—निषत् ब्रह्मविद्या तत्प्रतिपादकोग्रन्थोऽपि साऽऽरभ्यते। उषा वा इत्यादिवाजसनेयिब्राह्मणोपनिषत्। तत्रापि पुण्यैर्विद्योत्पत्तितः सर्वेषां पुण्यानां चाश्वमेधस्य प्राधान्यादनधिकारिस्तस्य कर्तुमशक्यत्वात् कथं तेषामपि तत्फलं स्यादिति मन्वाना भगवती मातेव सानुकम्पा श्रुतिर्मानसत्वसाम्यादुपनिषदारम्भे अश्वमि-वयवे कालादिदृष्टिमाह–उषाः ब्राह्मं मुहूर्तं प्रातः वै प्रसिद्धम्। अश्वस्य प्रसिद्धस्य, अथ वा श्वो न तिष्ठतीत्यश्वो विराट् शरीरं तस्य मेधो तद्यज्ञस्य योग्यो मेध्यस्तस्य शिरः मूर्धा प्रधानत्वसाम्यात्।

उपसंहारः—

"ब्रह्म स्वयंभू ब्रह्मणे नमः", व्याख्यातम्। पौतिमाषीपुत्रादीनां ब्रह्मपर्यन्तानां पञ्चम्यन्तत्वेन च प्रथमान्तत्वात् प्रथमपाठशुद्धिः। इत्यष्टमस्याध्यायस्य पञ्चमं ब्राह्मणम्।

देवान्मुनीन्भूवलयेऽवतीर्णान्गौडान् सुगूडान् द्रविणांश्च लाटान्।
अन्धान्महाराष्ट्रगृहीतदेहान् गुरूनशेषान्प्रणतोऽस्मि भक्त्या ॥
यैः कर्मधार्मैर्निजबोधनावा पुण्यैरसूयैरनुकूलवातैः।
अनेकयुक्त्यौघझषः समन्तादारण्यकाऽब्धिः सहसैव तीर्णः ॥

अहो कृतार्था वयमद्य जाता वाचापि नोद्यैव फलं प्रसूतम् ।
यद्याज्ञवल्क्यस्य वचः प्रवाहे स्नाता दिनेशाद्रिविनिर्गतेऽस्मिन् ॥
अस्मिन्कृते या मनसोऽस्तितुष्टिस्तयैव तुष्यत्वखिलान्तरात्मा ।
हिरण्यवर्णः पुरुषः परस्तादस्मादशेषाज्जनतान्धकारात् ॥

इति श्रीपरमहंसपरिव्राजकाचार्यानन्दात्मबोधपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ बृहदारण्यकोपनिषद्दीपिकायामष्टमोऽध्यायः समाप्तः । समाप्ता च बृहदारण्यकोपनिषद्दीपिका ।

प्रतिपाद्यविषयः—

बृहदारण्यकोपनिषद्व्याख्यानरूपो ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे तृतीयाध्यायप्रभृति परिपूर्णो ग्रन्थो विद्यते । अमुद्रितश्च दृश्यते । कोशेऽस्मिन् १५१-१६४, १६७, १८८, १९९, २०७-२४०, २४२-२४७, २५१-२५२ इमानि पत्राणि, गळितानि, १३९-१४० सङ्ख्याद्वयमेकस्मिन्पत्रे, २२३-२३२ पत्रद्वयमिदं पुनरुक्तम् ।

## No. (445) 988/1 बृहदारण्यकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता — शंकराचार्यः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः — ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—90 |
| प्रमाणम्—$21\frac{3}{4} \times 2\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य) — ? |
| लिपिः—नागरीलिपिः | स्थितिः —समीचीना |
| पत्राणि — 1–123 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ज्ञानेन्द्रमूर्तये तुभ्यं दक्षिणामूर्तये नमः ।
यस्य प्रसादान्मूकोऽपि भवेद्वाचस्पतेः समः ॥

ओं नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः । एषा वा अश्वस्येत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत् । तस्या इयमल्पग्रन्था वृत्तिरारभ्यते संसारव्याविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये । सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादना । उपनिपूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते । सेयं षडध्यायरण्येऽ-

नूच्यमानत्वादारण्यकम् । बृहत्त्वात्परिमाणतो बृहदारण्यकमतस्तस्य कर्मकाण्डेन संबन्धोऽभिधीयते ।

उपसंहारः—

प्रजापतिमारभ्य यावत्पौतिमाषीपुत्रस्तावदधोमुखो नियताचार्यपर्वक्रमो वंशः । ब्रह्मणः प्रवचनाख्यस्य तद्वैतद्ब्रह्मप्रजापतिप्रमुखप्रबन्धपरम्परयाऽऽगत्यास्मास्वनेकधा विप्रसृतमनाद्यनन्तं स्वयंभु ब्रह्म नित्यं तस्मै ब्रह्मणे नमः । नमो वंशऋषिभ्यो ब्रह्मादिभ्यो नमस्तदनुवर्तिभ्यो नमो गुरुभ्यः । पञ्चमं ब्राह्मणम् । अष्टमोऽध्यायः ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीशंकरभगवतः परमहंसपरिव्राजकाचार्यस्य कृतौ बृहदारण्यकटीका समाप्ता

प्रतिपाद्यविषयः—

बृहदारण्यकोपनिषद्विवरणरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च दृश्यते ।

## No. (446) 2881/2 बृहदारण्यकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—104 |
| प्रमाणम्—18 × 1½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–32 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

988/1 कोशवत् ।

उपसंहारः—

स दृष्टान्तोऽध्यात्मं वागादीनामेषां प्राणानां मध्ये मध्यमः प्राणः मृत्युनाऽनाप्तः स्वकर्मणो न प्रच्यावितः स्वेन प्राणव्रतेनाभग्नव्रतो यथा एवमेतासामग्न्यादीनां देवतानां वायुरपि म्लोचन्त्यस्तं यान्ति स्वकर्मभ्य उपरमन्ते । यथाध्यात्मं वागाद्यान्या देवता अग्न्याद्या न वायुरस्तं याति........

प्रतिपाद्यविषयः—

988/1 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः 1-5-22 पर्यन्तो ग्रन्थभागो विद्यते ॥

## No. (447) B 469 बृहदारण्यकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—4 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8 × 6 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-57 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

मू—जनको ह वैदेह आसांचक्रेऽथ ह याज्ञवल्क्यः आवव्राज। तं होवाच, याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति। उभयमेव सम्राडिति होवाच। यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीत्। मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथामातृमान्पितृमानाचार्यवान् ब्रूयात्तथा तच्छैलिनिरब्रवीत् वाग्वै ब्रह्मेत्यवदतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीत्

भा—जनको ह वैदेह आसांचक्रे आसनं कृतवान् दर्शनकामेभ्य इत्यर्थः ॥

उपसंहारः—

भा—एष महत्वाजत्वाजरत्वामृतत्वादिलक्षणः परमात्मा ब्रह्म बृहदित्यणु जीवप्रतियोगिकमित्येवं यो वेददर्शन श्रवण मनन निदिध्यासनैः अपरोक्षतो विदितवान् स ब्रह्मैव भवति, ब्रह्म वेद ब्रह्मैव भवति ब्रह्मैव सन् ब्रह्माप्येतीत्यादिश्रुतिभ्यः ब्रह्मप्राप्तेर्ब्रह्मवेदनपूर्वकत्वावगमात्। प्राप्तप्राप्तिपक्षं पूर्वपक्षीकृत्य अप्राप्तप्राप्त्यपक्ष सिद्धान्ततयाऽऽश्रयितव्यः।

यथा चायमर्थश्चतुर्थपञ्चमषष्ठाध्यायैस्सप्रतियोगिकब्रह्मप्राधान्येन प्रदर्शितः एवं विद्वान् न कुतश्चन बिभेतीति सिद्धम् । मैत्रेयिब्राह्मणवंश ब्राह्मणयोश्चतुर्थे व्याख्यातत्वादलमतिप्रपञ्चेन ॥

इति श्रीसुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ बृहदारण्यकोपनिषद्भाष्ये षष्ठोऽध्यायः समाप्तः

**प्रतिपाद्यविषयः—**

बृहदारण्यकोपनिषद्व्याख्यानरूपोऽयं ग्रन्थः ।

**वक्तव्यविशेषः—**

अस्मिन्कोशे षष्ठाध्यायमात्रं विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (448) 830 बृहदारण्यकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—52 |
| प्रमाणम्—$12\frac{1}{2} \times 1\frac{1}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-171 | समग्रोऽसमग्रो वा—असमग्रः |

**उपक्रमः—**

आत्मैवेदमग्र आसीत् । ज्ञानकर्मभ्यां समुच्चिताभ्यां प्रजापतित्वप्राप्तिर्व्याख्याता । केवलप्राणदर्शनेन च तद्धैतल्लोकजिदेवेत्यदिना इदानीं प्रजापतेः फलभूतस्य सृष्टिस्थितिसंहारेषु जगतः स्वातन्त्र्यादिविभूत्युपवर्णनेन ज्ञानकर्मणोर्वैदिकयोः फलोत्कर्षो वर्णयितव्य इत्येवमर्थमारभ्यते । तेन कर्मकाण्डे विहितज्ञानकर्मस्तुतिः कृता भवेत्सामर्थ्यात् । विवक्षितं चैतत् । सर्वमप्येतज्ज्ञानकर्मफलं संसार एव भयारत्यादियुक्तत्वश्रवणात्कार्यकरणलक्षणत्वाच्च स्थूलव्यक्तानित्यतत्त्वविषयत्वाच्चेति । ब्रह्मविद्यायाः केवलाया वक्ष्यमाणाया मोक्षहेतुत्वमित्युत्तरार्थं चेति ॥

उपसंहार:—

हृदय इति होवाच। हृदयस्य हि वृत्तिः श्रद्धा यस्माद्धृदयेन हि श्रद्धां जानाति। वृत्तिश्च वृत्तिमतिप्रतिष्ठिता भवति। तस्माद्धृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य किं देवतोऽस्यां प्रतीच्यां दिश्यसीति। तस्यां वरुणोऽधिदेवता मम। स वरुणः कस्मिन्प्रतिष्ठित इति। अप्स्विति। अपां हि वरुणः कार्यं श्रद्धा वा आपः, श्रद्धातो वरुणमसृजत॥

प्रतिपाद्यविषयः—

988/1 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे 1-4-1 आरभ्य 3-9-22 पर्यन्तो ग्रन्थभागो विद्यते।

## No. (449) 3533 बृहदारण्यकोपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—18 × 1½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-58
प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—78
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रम:—

जनको ह वैदेह आसांचक्रे। अस्य संबन्धम्। शारीराद्यानष्टौ पुरुषान्निरुह्य प्रयूह्य पुनर्हृदये दिग्भेदेन च पुनः पञ्चधा व्यूह्य हृदये प्रत्यूह्य हृदयं शरीरं च पुनरन्योन्यप्रतिष्ठं प्राणादिपञ्चवृत्त्यात्मके समानात्मके जगदात्मनि सूत्र अपसंहृत्य जगदात्मानं शरीरहृदय सूत्रावस्थमतिक्रान्तवान्य औपनिषदः पुरुषो नेति नेतीति व्यपदिष्टः साक्षाच्चोपादानरूपेण च निर्दिष्टो विज्ञानमानन्दमिति। तस्यैव वागादि-देवताद्वारेण पुनरधिगमः कर्तव्य इत्यधिगमोपायान्तरार्थोऽयमारम्भो ब्राह्मणद्वयस्य॥

उपसंहार:—

अनधिकृतानां च पृथग्विधानात्पारिव्राज्यस्य स्नातको वा स्नातको वोत्सन्नाग्निरनग्निको वेत्यादि। तस्मात्प्रसिद्धान्याश्रमान्तराण्यधि-कृतानामेवेति पञ्चमं ब्राह्मणम्।

अथानन्तरं याज्ञवल्क्यस्य काण्डस्य वंश आरभ्यते यथा मधुकाण्डस्य वंशः व्याख्यानं तु पूर्ववदिति

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीमच्छंकरभगवतः कृतौ बृहदारण्यकटीकायां षष्ठोऽध्यायः

प्रतिपाद्यविषयः—

988/1 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे चतुर्थाध्यायमात्रं विद्यते ।

## No. (450) 95/1 बृहदारण्यकोपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—17×1¾ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–33

प्रतिपुटं पङ्क्तयः—22
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

3533 कोशवत् ।

उपसंहारः—

3533 कोशवत् ।

प्रतिपाद्यविषयः—

3533 कोशवत् ।

वक्तव्यविशेषः—

3533 कोशवत् ।

## No. (451) 95/2 बृहदारण्यकोपनिषद्भाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—17 × 1¾ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—34–71

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

988/1 कोशवत्।

उपसंहारः—

कार्यात्मके शरीरावस्थे क्रियात्मकस्तु प्राणस्तयोरुपष्टम्भको बाह्याभ्यां शरीरात्मकाभ्यामुपजनापायधर्माभ्यां छन्नोऽप्रकाशीकृतः। एतदेवं संसारतत्त्वमविद्याविषयं प्रदर्शितम्। इत ऊर्ध्वं विद्याविषय आत्मा अधिगन्तव्य इति चतुर्थ आरभ्यते॥

इति तृतीयः प्रपाठकः

प्रतिपाद्यविषयः—

988/1 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायमात्रं विद्यते॥

## No. (452) C 447 बृहदारण्यकोपनिषद्भाष्यम्।

| | |
|---|---|
| ग्रन्थकर्ता —अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—15 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—अतिशिथिला |
| पत्राणि —1–33 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

अथेदानीं जनकयाज्ञवल्क्यसंवादप्रधानोऽयं षष्ठोऽध्यायः आरभ्यते—

मू=जनको ह वैदेह आसांचक्रेऽथ ह याज्ञवल्क्यः आवव्राज, तं होवाच, याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति। उभयमेव सम्राडिति होवाच॥

भा=जनको ह वैदेह आसांचक्रे आसनं कृतवान्। दर्शनकामेभ्य इत्यर्थः। अथ ह तस्मिन्नवसरे याज्ञवल्क्य आवव्राज आगतवान्। आत्मनो योगक्षेमार्थं राज्ञो वा विविदिषां दृष्ट्वानुग्रहार्थम्॥

उपसंहारः—

ब्रह्म वेद ब्रह्मैव भवति, ब्रह्मैव सन्ब्रह्माप्येति इत्यादिश्रुतिभ्यः ब्रह्मप्राप्तेर्ब्रह्मवेदनपूर्वकत्वावगमात् प्राप्तप्राप्तिपक्षं पूर्वपक्षीकृत्याप्राप्तप्राप्तव्यपक्षसिद्धान्ततया आश्रयितव्यः। यथाचायमर्थश्चतुर्थपञ्चमषष्ठाध्यायैः सप्रति यौगिकब्रह्मप्राधान्येन प्रदर्शितः, एवं विद्वान् न कुतश्चन बिभेतीति सिद्धम्। मैत्रेयिब्राह्मणवंशब्राह्मणयोश्चतुर्थे व्याख्यातत्वादलमतिप्रपञ्चेन॥

इति श्री सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ
बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायः समाप्तः

प्रतिपाद्यविषयः—

बृहदारण्यकोपनिषद्व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे, षष्ठाध्यायभाष्यमात्रं विद्यते।

## No. (453) 3041 बृहदारण्यकोपनिषद्भाष्यटीका

ग्रन्थकर्ता—आनन्दज्ञानः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम् –19½×2 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–181

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—82
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यदविद्यावशाद्विश्वं दृश्यते रशनाबादत्।
यद्विद्यया च तद्धानिः तं वन्दे पुरुषोत्तमम्॥
नमस्त्रय्यन्तसंदोहसरसीरुहभानवे।
गुरवे परपक्षौघध्वान्तध्वंसपपीयसे॥
भगवत्पादपादाब्जद्वन्द्वं द्वैतनिबर्हणम्।
सुरेश्वरादिसद्भृङ्गैरवलम्बितमाभजे॥
बृहदारण्यके भाष्ये शिष्योपकृतिसिद्धये।
सुरेश्वरोक्तिमाश्रित्य क्रियते न्यायनिर्णयः॥

काण्वोपनिषद्विवरणव्याजेनाशेषामेवोपनिषदं शोधयितुकामो भगवान् भाष्यकारो विघ्नोपशमादिसमर्थं शिष्टाचारप्रमाणकं परापरगुरुनमस्काररूपमङ्गळमाचरति—नमो ब्रह्मादिभ्य इति। वेदो हिरण्यगर्भो वा ब्रह्म तन्नमस्कारेण सर्वदेवता नमस्कृता भवन्ति। तदर्थत्वात्तदात्मकत्वाच्च। "एष उ ह्येव सर्वा देवा" इति श्रुतेः।

उपसंहार:—

तच्चेति। प्रजापतिप्रमुखप्रबन्धः सैव प्रपञ्चपरम्परा, तयेति यावत्। तस्य परमात्मरूपेण स्वयंभुत्वमभिदधात्यनादीति। तस्यापौरुषेयत्वेनासंभावितदोषतया प्रामाण्यमभिप्रेत्य विशिनष्टि—नित्यमिति। आदिमध्यान्तेषु कृतमङ्गळा ग्रन्थाः प्रसारिणो भवन्तीति मन्वान स्तन्नाह—तस्मै ब्रह्मणे नम इति।

ओन्नमो जन्मादिसंबन्धबन्धविध्वंसहेतवे।
हरये परमानन्दपरिज्ञानवपुर्भृते॥

नमस्त्रय्यन्तसंदोहसरसीरुहभानवे।
गुरवे परपक्षौघध्वान्तध्वंसीपपीयसे॥

प्रतिपाद्यविषय:—

शंकराचार्यकृतबृहदारण्यकभाष्यव्याख्यारूपोऽयं ग्रन्थः॥

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च दृश्यते॥

## No. (451) 988/3 बृहदारण्यकोपनिषद्भाष्यटीका

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञानः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—90 |
| प्रमाणम्—$21\frac{3}{4}\times2\frac{1}{4}$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपिः—नागरीलिपि: | स्थितिः—समीचीना |
| पत्राणि—153-273 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

3041 कोशवत्।

उपसंहारः—

तस्मादिति। द्रष्टृस्मर्त्रोरेकत्वस्योक्तत्वाद्देहातिरिक्तः स्मर्ता चेद्द्रष्टापि तथा सिध्यतीति भावः। देहस्याद्रष्टृत्वे हेत्वन्तरमाह—मृते चेति। न तस्य द्रष्टृतेति शेषः। तदेवोपपादयति—देहस्यैवेति। देहव्यतिरिक्तमात्मानमुपसंहरति—तस्मादिति। चैतन्यं यत्तदोरर्थः। मा भूद्देहस्यात्मत्वमिन्द्रियाणां तु स्यादिति शङ्कते—चक्षुरादीनीति॥

प्रतिपाद्यविषयः—

3041 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः 4-3-6 पर्यन्तो ग्रन्थभागो विद्यते॥

## No. (455) 566 बृहदारण्यकोपनिषद्वार्तिकम्

| | |
|---|---|
| ग्रन्थकर्ता—सुरेश्वराचार्यः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—78 |
| प्रमाणम्—$19\frac{1}{4}\times1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—4-21, 29-82, | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

........णैर्हीनो ग्रस्ताध्यात्माधिदैवतः।
प्राणात्मा एक एवास्ते प्रज्ञानघनविग्रहः॥ 4-2-85
निर्विभागात्मनस्तस्य प्राञ्चः प्राणाः पुरस्य ये।
प्राची दिगेव संवृत्तास्तदव............... ॥ 4-2-86
.................................पि पश्चिमा।
उदीची दिगुदञ्चश्च सर्वे सर्वा दिशस्तथा॥ 4-2-87

यत्साक्षिकी तमःसिद्धिस्तत्कार्यस्य लक्ष्यते।
तद्भावाभावयोरात्मा न कार्यं नापि कारणम् ॥ 4-2-88
तेनैव ज्ञात्मनाऽसेषं तद्भ्रान्तं ध्वान्तजं तथा।
....................विद्वान्पूर्णदृष्ट्यावशिष्यते ॥ 4-2-89
एष मार्ग उपन्यस्त ऐकात्म्याज्ञानजन्मने।
न त्वर्चिरादिवत्तस्य प्राप्तये गतिकल्पना ॥ 4-2-90

उपसंहार:—

तत्त्वबोधान्न नाशः स्याद्व्यतिरेकान्वयौ न च ॥
प्रत्यङ्मात्रैकयाथात्म्यादविद्यादेरिहात्मनि ॥ 4-4-766
विनाशः क्रियते यत्र व्यतिरेकोऽथवान्वयः।
कार्यकारणसंबन्धान्मुक्तिस्तत्र सुदुर्लभा ॥ 4-4-767
ध्यानादिसंस्कृतं चेतो यदि मुक्तौ प्रणश्यति।
सभावनं सहेत्वेवं ज्ञानं सर्वमनर्थकम् ॥ 4-4-768
अथ मुक्तौ तदन्वेति कारणेन सहान्वयात्।
अज्ञाने सति संसारो वद केन निवार्यते ॥ 4-4-769
लोहादेः कारणं भूमिः ......................

प्रतिपाद्यविषय:—

बृहदारण्यकोपनिषद्व्याख्यान रूपोयं ग्रन्थः।

वक्तव्यविशेष:—

अस्मिन्कोशे 4-2-85 प्रभृति 4-4-769 वार्तिकपर्यन्तः ग्रन्थभागो विद्यते ॥ मुद्रितश्च दृश्यते

No. (456) 2881/1 बृहदारण्यकोपनिषद्वार्तिकटीका (शास्त्रप्रकाशिका)

ग्रन्थकर्ता—आनन्दज्ञान:
पत्रविशेष:—तालपत्रात्मक:
प्रमाणम्—18×1½ अङ्गुलानि
लिपि:—नागरीलिपि:
पत्राणि—1-65

प्रतिपुटं पङ्क्तय:—10
प्रतिपङ्क्त्यक्षराणि—104
काल: (कोशस्य)—?
स्थिति:—शिथिला
समग्रोऽसमग्रो वा—असमग्र:

उपक्रमः—

मोहेति (2-1-6) पुमर्थस्तद्धेतुश्च कुतोक्ताविल्याशंक्याह—आत्मेति। (2-1-7) तथा विद्यासूत्रानुसारेणेति यावत्। तस्य सूत्रितात्मज्ञानस्येत्यर्थः। आक्षेपपूर्वकं प्रयोजनं तदाहुरित्यादावुक्तमित्याह—प्रागिति॥ किं तत्प्रयोजनं तदाह—प्रतीचीति। (2-1-8) तदन्यार्थाभावादिति शेषः। तज्ज्ञाने किं स्यात्तदाह—निःशेषेति। आत्मज्ञानस्यैव परमपुरुषार्थत्वे विद्यासूत्रं प्रमाणयति—यत इति॥ (2-1-9) मोहमात्रान्तरायत्वादित्युक्तरीत्या प्रत्यग्धिय पुमर्थहेतुत्वसिद्धरात्मैवेत्यत्र स्वमहिमस्थमात्मानमेवानुसंदधन्मुमुक्षुरिति विवक्ष्यते अन्यथा सूत्रवैयर्थ्यादित्यर्थः। स्वमहिमप्रतिष्ठत्वार्थं विशिनष्टि—अद्वयमिति। पुमर्थतद्धेतुत्ववादं निगमयति—आत्मेति॥

उपसंहारः—

यस्मादिति। अयं हि वेदस्वभावतश्चिद्धातुः सत्तास्फूर्त्योः स्वतन्त्रो यतोऽनुभूते ततोऽसौ ब्रह्मैवोच्यते, स्वतन्त्रवस्त्वन्तरा.......एतेन वेदानामनित्यत्वं प्रत्युक्तम्। तस्मात्तस्मै ब्रह्मणे वेदात्मने श्रेयोऽर्थिभिस्त्रिविधापि नमो भक्तिश्रद्धाभ्यां सदा कार्यमित्यर्थः। तदनेनाध्यायेन ब्रह्मविद्यासूत्रं ब्राह्मणपञ्चकेन प्रपञ्चितं विद्याविषयस्य मधुकाण्डस्योप्रोक्षितत्वाशङ्कापि पराकृता भवति॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां सुरेश्वरवार्तिकटीकायां शास्त्रप्रकाशिकायां चतुर्थोऽध्यायः

प्रतिपाद्यविषयः—

सुरेश्वराचार्यकृतस्य बृहदारण्यकभाष्यवार्तिकस्य व्याख्यारूपोऽयं ग्रन्थः॥

वक्तव्यविशेषः—

अस्मिन्कोशे (2-1-6) प्रभृति अध्यायपरिसमाप्ति ग्रन्थभागो विद्यते। मुद्रितश्च दृश्यते॥

## No. (457) A 747 बृहदारण्यकोपनिषद्वृत्तिसंबन्धोक्तिः

ग्रन्थकर्ता—?
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$13\frac{1}{4} \times 8\frac{1}{2}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–160
प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—1928
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

वियदादिपृथिव्यन्तं जगद्यस्मात्समुद्गतम् ।
तस्मै नमोऽस्तु रामाय चित्तवृत्तिसाक्षिणे ॥
यैरिदं मोक्षदं ज्ञानं मुमुक्षुभ्यः प्रकाशितम् ।
कृपया वार्तिकालोकैः सुरेशाख्यान्नमामि तान् ॥
प्रत्यर्थिः (र्गीः) पूर्वको बोधध्वनिर्यत्र यथार्थकः ।
तानहं सर्वदा वन्दे गुरून्सम्मोहभेदिनः ॥
आरण्यवृत्तिश्लोकानां संम्बन्धोक्तिमविस्तराम् ।
करोमि श्रद्धया शक्तया न तु स्वल्पज्ञहेतुतः ॥
स्वाविद्याविभवप्रसूतविपुलद्वैतिप्रपञ्चाहित-
स्पष्टभ्रान्तितिरोहितात्ममतयो यं भागशो मन्वते ।
निर्भागं सकलाभिधानमननव्यापारदूरस्थितं
वन्दे नन्दितविश्वमव्ययमजं भक्तया तमेकं विभुम् ॥

नमस्कारव्याजेन श्रोतृणां सुखप्रबोधार्थं संक्षेपतो वृत्त्यर्थं दर्शयत्यनेन श्लोकेन । वृत्त्यर्थः क इति उच्यते । प्रत्यगात्मनि स्वाविद्या(याऽ)हंकारप्रमुखो द्वैतप्रपञ्चोऽध्यस्तो न तु परमार्थतः प्रत्यगात्मा तु नित्यशुद्धबुद्धमुक्तस्वभावः सर्वप्रमाणाविषयोऽनुदितानस्तमिताद्वयानन्दब्रह्मैवेत्ययमर्थः अत्र श्लोके प्रतीयते ।

उपसंहारः—

अथ ब्रूषे नियोगस्य कार्यत्वं नाम स्वग्राहकज्ञानेनैव परिच्छेद्यत्वम् । घटादेस्तन्नास्ति । न हि घटः स्वज्ञानेनैव परिच्छिद्यते स्वधर्मज्ञानेनापि । अतो नियोगस्य साध्यत्वमसाधारणमित्येतदाह—

अथासाधारणज्ञानपरिच्छेद्यत्वमिष्यते ॥ इति ॥
एतदपि सर्वपदार्थानां साधारणमित्याह—
तच्च सर्वपदार्थानां न दण्डैर्विनिवार्यते ॥ इति ॥
ननु नियोगमानं नियोगं कर्तव्यतया बोधयति, सिद्धमानमन्यथेति चेन्नैतत्सारमित्याह—
प्रमाणायत्तमेतावत्स्वप्रमेयावभासनम् ॥

प्रतिपाद्यवि :—

अस्मिन्ग्रन्थे सुरेश्वराचार्यकृतानां बृहदारण्यक संबन्धवार्तिकानां परस्परसंबन्धप्रदर्शनरूपं विवरणं क्रियते।

वक्तव्यविशेषः—

अस्मिन्कोशे 715 तमवार्तिकविवरणपर्यन्तो ग्रन्थभागो विद्यते। अमुद्रितश्च दृश्यते ॥

No. (458) A 776 बृहदारण्यकोपनिषद्वृत्तिसम्बन्धोक्तिः
(द्वितीयभागः)

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि--20 |
| प्रमाणम्—$13\frac{1}{4} \times 8\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—1930 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—161-378 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

कार्यताकार्यता वा तु मेयायत्ता न मानतः। इति। अयमर्थः—वेदशास्त्रमिदमिष्टसाधनमिति बोधयति नेदं कर्तव्यमिदमकर्तव्यमिति, तौ तु प्रत्ययौ मानसौ। इदमिष्टसाधनमिति बुद्धेस्तर्हि कर्तव्यमिति मानसः प्रत्यय उपजायते, तथानिष्टसाधनमिति बुद्धेर्न कर्तव्यमिति मानसः प्रत्यय उपजायते। अतो न तौ शास्त्रार्थाविति।

उपसंहारः—

इदं धीनामगम्यं यत् चित्रं स प्रथते हिरुक् ।
मन्वादिसृष्टेस्तत्पूर्वमात्मैवाभूदिदं जगत् ॥ इति ॥

अत्रापि मन्वादिसृष्टेरित्याकाशादिसृष्टेरित्यर्थः । पुरुषविधवाक्यस्यार्थकथनायाह—एतावद्वास्तवं वृत्तमिति । पुरुषविधवाक्यस्यार्थं संक्षेपतो दर्शयति—मोहोत्थं भण्यतेऽधुनेति । एतत्प्रपञ्चयति—कोशपञ्चकतां ।

प्रतिपाद्यविषयः—

A 747 कोशवत् ।

वक्तव्यविशेषः—

A 747 कोशवत् ।

## No. (459) 697 बृहदारण्यकोपनिषद्व्याख्या (मिताक्षरा)

| | |
|---|---|
| ग्रन्थकर्ता—नित्यानन्दाश्रममुनिः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—66 |
| प्रमाणम्—18×1¾ अङ्गुलानि | कालः—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-118 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

योऽनन्तोऽनन्तशक्तिः सृजति जगदिदं पालयत्यन्तरात्मा
संविश्यान्ते निपीय स्वकमहिमगतः सत्यचिन्मूर्तिरास्ते ।
योऽनुग्रस्सज्जनानां परमहिततमः पापिनामुग्रमूर्तिः
सोऽस्माकं वाञ्छितानि प्रदिशतु भगवानात्मदः श्रीनृसिंहः ॥ 1-3

उपनिषच्छब्देन तु मुख्यया वृत्त्या ब्रह्मविद्यैव वाच्या । उप समीपस्थं प्रत्यगात्मैकत्वं विनिश्चितं सत्तत्पराणां सहेतु संस्कारं साधयतीत्युपनिषदिति व्युत्पत्तिः ग्रन्थस्तु विद्यासमर्पकत्वेनोपचारादुपनिषदित्युच्यते । बृहत्त्वं चास्य ब्रह्मविद्याहेतूनामन्तरङ्गबहिरङ्गभूतानां बहूनासि-

ह्योपदेशादर्थतो ग्रन्थपरिमाणतश्च बहुत्वात् । आरण्यकत्वं चास्य नियमपूर्वकमरण्येऽनूच्यमानत्वात् ।

उपसंहारः —

इदं त्वाचार्यपरम्पराकथनं सर्वासु वाजिशाखासु वेदाख्यब्रह्मरभ्य पाठव्युत्क्रमेणाऽऽसाञ्जीवीपुत्रात्साञ्जीवीपुत्रपर्यन्तं समानम् । आदिमध्यान्तेषु कृतमङ्गला ग्रन्थाः प्रचारिणो भवन्तीति शिक्षयितुमाह— ब्रह्मणे नम इति ॥

इति श्रीबृहदारण्यकव्याख्यायां मिताक्षरायामष्टमाध्यायस्य पञ्चमं ब्राह्मणम्

यः सद्भूनिलयस्त्रिकाण्डकषडध्यायप्रभेदस्फुट-
स्कन्धः स्वस्तपदपल्लवालिविलसच्छाखामयब्राह्मणः ।
ब्रह्मात्मैक्यफलः सुवाक्यकुसुमो वंशालवालाम्बुवः
संसेव्यस्सततं बुधैः स बृहदारण्याह्वकल्पद्रुमः ॥

भाष्यवार्तिकतट्टीकामन्थन्यारण्यकं दधि ।
विमथ्य बुध्या यत्नेन नवनीतं समुद्धृतम् ॥

महतामाशयं बोद्धुं मादृशः कः क्षमो भवेत् ।
तथापि श्रद्धयास्माभिः सारमेतत्समुध्दृतम् ॥

यत्पादपद्ममकरन्दरसानभिज्ञा विश्राममाविधिपदादपि संचरन्तः ।
न प्राप्नुवन्ति पशुकर्मरता धनेहास्तस्मै नृसिंहवपुषे हरये नमस्ते ॥

एकं यद्बीजमेतज्जनयति सकलं नोप्तमन्यैर्न सिक्तं
न क्लेद्यंनैव दाह्यं न च भवति पुनः कालतो यस्य नाशः ।
यत्सत्तामात्रजीवी त्रिभुवनसुतरुः भाति नानारसाढ्य ।
स्तन्नः पायादपायात्सुखकरममलं श्रीनृसिंहाभिधानम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमपूज्यपादशिष्यनित्यानन्दाश्रममुनिविरचितायां बृहदारण्यकव्याख्यायां अष्टमोऽध्यायः

प्रतिपाद्यविषयः—

बृहदारण्यकोपनिषद्व्याख्यारूपोऽयं ग्रन्थः

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च दृश्यते ॥

## No. (460) 4563 बृहदारण्यकोपनिषद्व्याख्या (मिताक्षरा)

| | |
|---|---|
| ग्रन्थकर्ता—नित्यानन्दाश्रममुनिः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—16×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—120-165 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

. . . . पाधिकं यदिदं नामरूपोपाधिविशिष्टं व्यवहारापन्नं तदपि स्वेन निरुपाध्यात्मरूपेणैव पूर्णं न तु विशिष्टेन। एवं तत्त्वं पदयोः क्रमेण लक्ष्यांशमुक्त्वा तयोरेव वाच्यांशं कथयन् त्वंपदार्थस्य पूर्णत्वे हेतुमाह—पूर्णादिति। तदिदं विशेषरूपापन्नं ब्रह्म पूर्णात्कारणात्मनः सकाशात्पूर्णमेव उदच्यते उद्रिच्यते उद्गच्छति पूर्णात्मस्वभावस्य त्यागायोगात्॥

उपसंहारः—

697 कोशवत्।

प्रतिपाद्यविषयः—

697 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे सप्तमाष्टमाध्यायमात्रं विद्यते। यद्यप्येतत्कोशान्ते "स्वयंप्रकाशयतिना लिखितं"त्यस्ति, अथापि कोशान्तरेण मुद्रितपुस्तकेन च सह संवादात् नित्यानन्दाश्रममुनिरेवास्य कर्तेति विज्ञायते॥

## No. (461) C 1802 बोधसारः

| | |
|---|---|
| ग्रन्थकर्ता—माधवाचार्यः | प्रतिपुटं पङ्क्तयः—13 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—32 |
| प्रमाणम्—9½×5 अङ्गुलानि | कालः (कोशस्य)—जयसंवत् |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-62 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

चण्डमुण्डहरा चण्डी सर्वद्वन्द्वहरो गुरुः।
दास्यन्ति देवतास्तुष्टा धनमायुस्सुतान्यशः॥

ज्ञानं के नाम दास्यन्ति ऋते श्रीगुरुपादुकाम् ।
जयति श्रीगुरूणां हि चरणाब्जरजोगुणः ॥
हतास्त्रयो यदेकेन रजः सत्त्वतमोगुणाः ।
तार्यावयं तरिर्बोधस्तरणीय्यो भवार्णवः ॥
तत्कर्णधाररूपेण तारकं श्रीगुरुं भजे ।
तारकस्योपदेशेन गुरुर्भूत्वा विमुक्तिदः ॥
काश्यामपीश्वरस्तस्मादीश्वरादधिको गुरुः ।
गुरोरनुग्रहादीश ईश्वरानुग्रहाद्गुरुः ।
श्रीगुरोर्दर्शनं हेतुः परं त्वीश्वरदर्शने ॥
ईश्वरस्सर्वहेतुत्वाद्धेतुः संसारमोक्षयोः ॥

उपसंहारः—

आरुह्य तुङ्गपदवीं पतितादनार्या
न्नारूढ एव हि वरं प्रकृतौ स्थितो यः ।
अङ्गानि हन्त किल तस्य न चूर्णितानि
भेदो न चेतसि न वा परिहासपीडा ॥
नाडिं प्रविश्य यदि जीवति भीतभीतः
प्रान्ते च खादति मृतिश्चिरजीवनं किम् ।
देहात्मभावरहितः परमात्मभावे
तिष्ठन्मृतिं जयति चेच्चिरजीवनं तत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपरोक्षसाक्षात्कारमाधवाचार्यविरचिते बोधसारस्सम्पूर्णः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे, गुरुशिष्यविवेकः, ब्रह्मविचारः, वैराग्यनिरूपणं, कायलोभकर्मविडम्बनाः, साङ्ख्यपातञ्जलादियोगाः शिवविष्ण्वादिपूजनमित्यादयो बहवो विषयाः प्रतिपाद्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे, मुद्रितपुस्तकमपेक्ष्यासमग्र एव ग्रन्थो दृश्यते । मध्ये च मुद्रितापेक्षयान्यूनभावो वर्तते । कर्ता च मुद्रितपुस्तके नरहरिरिति, अस्मिंश्च माधवाचार्य इत्यस्ति । एतत्कोशस्थाः श्लोकाः परं मुद्रिता एवेति सम्यक्परीक्षिताः भवन्ति ॥

## No. (462) 4170 बोधामृतम्

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—17 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—88 |
| प्रमाणम्—$16\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—अतिशिथिला |
| पत्राणि—1–20 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यस्याङ्कुशाग्रेण निकृष्य विघ्नान्बध्वाथ पाशेन रदाग्रभिन्नान् ।
कृत्वा निजेभ्यो निजमोददायी नमो गणेशः कुरुताच्छुभानि ॥

शारदां शारदाभ्राभां सर्वविद्याविशारदाम् ।
सुरदां वरदां स्वानां भावये पारदां गिराम् ॥

फलन्ति मे यत्कटाक्षवृष्टिपातात्सकृत्सदा ।
हृद्भूमौ पुरुषार्थास्तं शिवराममुनिं भजे ॥

स्वाविद्यया संसृतिरात्मनः स्वयं प्रकाशरूपोऽसि निजात्मवेदनात् ।
इत्यादिशन्यो हृदि मेऽस्ति मां सदा स्वयंप्रकाशाख्यगुरुं नमामि तम्॥

यस्मिन्निदं विलसितं सदिवावभाति
यत्सत्तयानृतमपि स्रजि कुण्डलीव ।
यो नेति नेति वचसा परिशिष्यतेऽन्ते
तं सत्यरूपमनिशं हृदि राममीळे ॥

नानागुरुमुखाम्भोजगळच्छ्रुतिरसान्बहून् ।
संगृह्य बुद्धिपात्रेण कुर्वे बोधामृतं हितम् ॥

वेदान्तदुग्धाब्धिविचारमन्थादुद्भूतमाचार्यहरिप्रदत्तम् ।
बोधामृतं कर्णपुटैः पिबन्तु नराः परानन्दरसं भयघ्नम् ॥

ननु वेदान्तशास्त्रं तद्विषयादेकभावतः ।
नारम्भणीयमिति चेन्न तेषामत्र संभवात् ॥

अधिकार्यत्र शास्त्रोक्तैश्चतुर्भिः साधनैर्युतः ।
परापरात्मनोरैक्यमज्ञानं विषयः स्मृतम् ॥

प्रयोजनं तज्ज्ञातं सत्सम्बन्धोऽनेकधा स्मृतः ।
बोध्यबोधकभावादिस्तस्मादारभ्यतामिदम् ॥

उपसंहारः—

भक्त्यालवाले रघुनाथपादयोः स्वपुण्यबीजोद्गतसंविदङ्कुरम् ।
सद्देशिकोपघ्नविवृद्धमाफलं सिञ्चन्तु बोधामृतधारया नराः ॥
स्वपुत्रास्पष्टवाक्यानि श्रुत्वा तुष्टो यथा पिता ।
तथैवाव्यक्तमद्वाक्यैस्तुष्टो भवतु राघवः ॥
यस्यानुग्रहशीतांशौ जाते मद्भाग्यवारिधौ ।
तापत्रयार्कतापो मे शान्तस्तं गुरुमाश्रये ॥
नाम्नो यस्य........वामुनिश्च विभवं मन्त्रस्य शंभुः खगः ।
क्षान्तेर्वेदपथः शुचेर्मुनिवधूर्देवः कथाया विधिः ॥
सत्यस्यासुरनायको जलनिधिः कोपस्य रामस्य सा ।
भक्ताधीनगतिं पतच्च शबरी तामेव जानाम्यहम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्य सर्वतन्त्रप्रवर्तक निरवधिक-जनिसुखास्वादविस्मृताशेषविषयाणामशेषविशेष विधुरमधुरतर परमेश्वरस्वरूपावधारणविदारितान्तःकरणदोषाणां अल्पीकृतकल्पपादपस्वरूपै ........................ कामधेनुदुग्धधारावधीरिभिश्चकोरचञ्चुपुटकोटिकुट्टित पूर्णेन्दुमण्डलनिष्यन्दमानसुधाकरसुधाकथामन्थानचणशमदमयमनियमाद्यनेकागणितगुणमणिगणैरलंकृत दिक्कुम्भिकुम्भ................यंप्रकाशानां श्रीमत्स्वयंप्रकाशानन्द सरस्वतीपूज्यपादानां श्रीमच्चरणारविन्दमकरन्दास्वादनेन्दीवरायमान... ...........................रूपनिरूपणं नाम विंशतितमो विवेकः ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अधिकारिस्वरूपं, वैराग्यस्वरूपं, शमादिस्वरूपं, मूलाज्ञानस्वरूपं, ईश्वरस्वरूपं ब्रह्मण आनन्दस्वरूपत्वं, मुक्तिः, इत्यादयो विषयाः प्रतिपाद्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च दृश्यते ॥

## No. (463) B 1071 बोधामृतम्

ग्रन्थकर्ता—रामानन्दः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{1}{2} \times 6\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-49

प्रतिपुटं पङ्क्तयः—15
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—1941
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

4170 कोशवत्।

उपसंहारः—

4170 कोशवत्।

प्रतिपाद्यविषयः—

4170 कोशवत्।

वक्तव्यविशेषः—

4170 कोशवत्।

## No. (464) 4067 ब्रह्मतत्त्वप्रकाशिनी (गीताव्याख्या)

ग्रन्थकर्ता—?
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$9\frac{1}{4} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-177

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—44
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मार्ताण्डतिलकस्वामिमहागणपतीन्वयम्।
विश्ववन्द्यान्नमस्यामि सर्वसिद्धिविधायिनः॥
देव्या श्रीगिरिसुन्दर्या समेतं सुन्दरेश्वरम्।
सुन्दराचलमध्यस्थं वन्दे सुन्दरविग्रहम्॥

वन्दे कृष्णार्जुनौ वीरौ नरनारायणावुभौ ।
धार्तराष्ट्रकुलोन्मत्तगजारोहणवल्लभौ ॥

शेषाशेष मुखव्याख्या चातुर्यत्वेकवक्त्रतः ।
दधानमद्भुतं वन्दे भाष्यकारं महागुरुम् ॥

प्रणम्यपरमात्मानं कृष्णं तद्भक्तियन्त्रितः ।
गीताव्याख्यामहं कुर्वे ब्रह्मतत्त्वप्रकाशिनीम् ॥

भाष्यकारमतं सम्यक् तद्व्याख्यात्रेगिरस्तथा ।
यथा मति समालोड्य गीताव्याख्यां समारभे ॥

इह खलु सकललोकहितावतारः परमकारुणिको भगवान्देवकीनन्दनस्तत्त्वज्ञानविजृम्भितशोकमोहभ्रंशितविवेकतया निजधर्मत्यागपरधर्माभिसन्धिनमर्जुनं धर्मज्ञानरहस्योपदेशप्लवेन शोकमोहसागरादुत्ततार ॥

उपसंहारः—

कर्मनिष्ठा परम्परया बुद्धिशुद्धिवैराग्यद्वारा मोक्षहेतुः । ज्ञाननिष्ठा साक्षादेव मोक्षहेतुरिति गीताशास्त्रार्थनिर्णयः ॥

काण्डत्रयात्मकं शास्त्रं पदवाक्यार्थगोचरम् ।
आदिमध्यान्तषट्केषु व्याख्याया गोचरीकृतौ ॥

संक्षेपविस्तराभ्यां यो लक्षणैरुपपादितः ।
सोऽर्थोन्तिमेन संक्षिप्य लक्षणेन विवक्षितः ॥

प्राचामाचार्यपादानां पदवीमनुगच्छता ।
हरिप्रीत्यै कृतव्याख्या ब्रह्मतत्त्वप्रकाशिनी ॥

ओं तत्सदिति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां श्रीभीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु परब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रीभगवद्गीताव्याख्यायां ब्रह्मतत्त्वप्रकाशिन्यां सकलशास्त्रपरमार्थतत्त्वनिर्णयसाक्षान्मोक्षयोगो नामाष्टादशोऽध्यायः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च । अस्य च कर्ता न ज्ञायते ॥

## No. (465) 2769 ब्रह्मतत्त्वसुबोधिनी

| | |
|---|---|
| ग्रन्थकर्ता—वेंकटेशस्वामी | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—72 |
| प्रमाणम्—$17 \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-15 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

निर्मलाय प्रशान्ताय भक्तानां मुक्तिदायिने ।
सच्चिदानन्दरूपाय श्रीरामाय नमो नमः ॥

लोके तावन्निष्कामनया अनेकजन्मकृतसुकृतपरिपाकवशात् परिशुद्धान्तःकरणानां केवलमोक्षमात्रलिप्सूनां बहुग्रन्थावलोकनेष्वलसानां अध्यारोपापवादन्यायेन प्रत्यगभिन्नब्रह्मात्मतत्त्वनिरूपणार्थं तावदध्यारोपापवादप्रकारं निरूपयामः । अस्ति हि प्राक्सृष्टेर्निरस्तसमस्तप्रपञ्चं स्वप्रकाशचिदेकरसं ब्रह्म । तदेवानाद्यनिर्वचनीय्यत्रिगुणात्मकाविद्यासचिवमीक्षणपूर्वकमाकाशं त्रिगुणात्मकं शब्दगुणकमसृजत् ॥

उपसंहारः—

वार्तिकाचार्यैरप्युक्तम्—
प्रारब्धभोगशेषस्य संक्षये तदनन्तरम् ।
अविद्या . . . . . . . . . ॥
आनन्दममलं शुद्धं मनोवाचामगोचरम् ॥
वाच्यवाचकनिर्मुक्तं हेयोपादेयवर्जितम् ॥
प्रज्ञानघनमानन्दं वैष्णवं पदमश्नुत इति ।

नित्यशुद्धबुद्धमुक्तसत्यपरमानन्द . . . . . . . . . . . . . . . . ग्भूतचैतन्यं परं ब्रह्मोवाहमस्मीति यस्तिष्ठति स ब्रह्मैव भवतीति सकलवेदान्तसिद्धान्तः ।

इति श्रीब्रह्मतत्त्वसुबोधिन्यां जीवन्मुक्तिप्रकरणम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे, आकाशादिप्रपञ्चसृष्टिः, ब्रह्मण्यरोपितस्य प्रपञ्चस्य अपवादः, महावाक्यार्थविवेकः, जीवन्मुक्तिस्वरूपं च सम्यक्प्रतिपाद्यते ॥

वक्तव्यविशेष:—

अस्मिन्कोशे, अध्यारोपापवादप्रकरणं, महावाक्यार्थविवेकप्रकरणं, जीवन्मुक्तिप्रकरणं चेति प्रकरणत्रयं विद्यते ।

## No. (466) C 1535 ब्रह्मतत्त्वसुबोधिनी

| | |
|---|---|
| ग्रन्थकर्ता—वेंकटेशस्वामी | प्रतिपुटं पङ्क्तय:—20 |
| पत्रविशेष:—कागदपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—36 |
| प्रमाणम्—9×5 अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—आन्ध्रलिपि: | स्थिति:—समीचीना |
| पत्राणि—1-23, 1-10, 1-18, | समग्रोऽसमग्रो वा-असमग्रः |

उपक्रम:—

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥
चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।
यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥

अयमर्थः—चेतनमेव चैतन्यं ज्ञप्तिस्वरूपं सर्वगं स्वाविद्यापरिकल्पित-दिक्कालाकाशादिसर्वं व्याप्नोतीति सर्वगमित्युक्तिः परमार्थतः सर्वं तद्व्य-मस्तीत्याशङ्का मा भूदित्याह—सर्वमिति । अविद्यापरिकल्पितस्य स्वतोऽ-न्यत्त्वानुपपत्तेः । सर्वभूतगुहाशयम्—सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां गुहासु बुद्धिषु साक्षितया स्वाभासद्वारेण शेत इति यदेवं लक्षणं, (श्रुतिः प्रमाणं यो वेद निहितं गुहायां परमे व्योमन् )सर्वविषयातीतं परमार्थतोऽ-विद्यातत्कार्यरहितं सर्वं वेत्तीति सर्ववित् साभासाविद्याद्वारेण, तस्मै सर्वविदे नमः प्रह्वीभावः स्वरूपानुस्मरणमेव नमस्कारः । एवं नमस्कारव्याजेन वेदान्तवेद्यां परां देवतामुपन्यस्य तत्परत्वं वेदान्तानां वक्तुकामः कर्मकाण्डनिवृत्तमर्थमनूद्य तेन वेदान्तानां सङ्गतिमाह भगवान्भाष्यकारः ॥

उपसंहार:—

अस्तंगत इति शरीरेषु विक्रियमाणेष्वपि स्वयं विक्रियादिशून्यत्वात् कूटस्थवन्निर्विकार इत्याह—उदासीनस्वभाव इति । असङ्गो ह्ययं पुरुष

इति श्रुतिः स्पष्टार्था। अस्तिलोके शब्दस्य वृत्तिद्वयं शक्तिर्लक्षणा चेति। लक्षणायां च बीजद्वयम्। अन्वयानुपपत्तिस्तात्पर्यानुपपत्तिश्चेति।

इति श्रीमदखण्डब्रह्मविद्याविशारदज्ञानबलैश्वर्यवीर्यतेजः सौशील्याद्यसंख्येयकल्याणगुणगणरत्न-रत्नाकरानाद्यविद्यासंसारनिबिडान्धकारप्रचण्डमार्ताण्डोदयश्रीजयरामब्रह्मपूज्यपादशिष्य-श्रीवेंकटेशस्वामिकृतौ वेदान्तसारसंग्रहदीपिकायां ब्रह्मतत्त्वप्रबोधिन्यां समाधिप्रकरणं नवमं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे साधनचतुष्टयनिरूपणं, अध्यारोपापवादनिरूपणं पञ्च-भूतसृष्टिः, आत्मानात्मविवेकः, मुमुक्षुत्वं, अष्टाङ्गयोगः, महावाक्यार्थ-विचारः इत्यादयो विषयाः प्रतिपाद्यन्ते॥

वक्तव्यविशेषः—

अस्मिन्कोशे कानि चित्प्रकरणानि मूलमात्रं, केषांचिद्व्याख्या च विद्यते। ग्रन्थश्च समग्रोऽसमग्रो वेति न निर्णेतुं शक्यते। अमुद्रितश्च॥

## No. (467) B 235 ब्रह्ममीमांसाभाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$9\frac{1}{2} \times 7$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-184

प्रतिपुटं पङ्क्तयः—17
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ओं अस्मत्प्रत्यय गोचरपरमात्मोत्पन्नोऽहं प्रत्ययगोचरः कर्तृत्व भोक्तृत्व सुखित्व दुःखित्वाद्यखिलसंसारधर्मोपेतश्च जीवात्मा प्रब-लतरज्ञानसमुच्चितकर्मानुष्ठानसंस्कृतजीवान्तरपरिणतेश्वरसेवकत्वमात्मनो मत्वाऽहमिदं ममेदमित्यभिमानवशात् पश्चाद्यविशिष्टः श्रौतस्मार्ता-दिनित्यनैमित्तिककाम्यनिषिद्धकर्मसु नियुक्तः प्रवृत्तो दृश्यते। तत्रानेक-जन्मोपार्जित सुकृतपुञ्जापास्तनिषिद्धकाम्यकर्मणा केनचिन्निष्कामोपासकेन चित्तशुद्धिहेतोर्नित्यनैमित्तिककर्मभिः परमेश्वर उपास्यते च॥

उपसंहार:—

यतः सम्यग्दर्शनविध्वस्ताशेषतमसस्ते मनसा केवलेन पित्रादि-कामात्मन्तः कार्यब्रह्मलोकात्यये सति तदध्यक्षेण सह सप्रतियोगिकब्रह्म-ज्योतिः सम्पत्तिपूर्वकं निष्प्रतियोगिकपरब्रह्मस्वरूपेणाभिनिष्पद्यन्त इत्य-वोचाम। ततस्तेषामनावृत्तिरेवेति सिद्धम्॥ अनावृत्तिः शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ ब्रह्ममीमांसाभाष्ये
चतुर्थाध्यायस्य चतुर्थः पादः

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे श्रीवेदव्यासविरचितब्रह्मसूत्राणां अनुभवाद्वैतमतरीत्या विवरणं क्रियते॥

वक्तव्यविशेष:—

स्वकीयानामेव सूत्राणां स्वकीयं भाष्यं अनुभूतिमीमांसा भाष्य-मित्यन्यत्। इदं तु श्रीमद्व्याससूत्राणां स्वकीयं भाष्यं ब्रह्ममीमांसाभाष्य-मिति। इदमप्यमुद्रितं दृश्यते॥

## No. (468) B 687 ब्रह्मविदाशीर्वादपद्धतिः

| | |
|---|---|
| ग्रन्थकर्ता—विद्यारण्य: | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$7\frac{1}{2} \times 3$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थिति:—समीचीना |
| पत्राणि—1–17 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रम:—

ॐ ब्रह्मविदाशीर्वादपद्धतिर्विद्यारण्योक्ता। ओं हिरण्यगर्भादिस्थावरा-न्तेषु, शरीरेषु यदेकं चैतन्यमस्ति तदेवाहमस्मीति दृढज्ञानसिद्धिर्भूयात्। लयविक्षेपकषायरसास्वादेभ्यो चित्तमविघ्नेन ब्रह्मण्यव्यवस्थितं भूयात्।

नित्यनिर्विकारासङ्गाद्वितीयपरिपूर्णसच्चिदानन्दस्वप्रकाशब्रह्मात्मानुभव-सिद्धिर्भूयात् । अहमादिदृश्यविलक्षणास्मत्प्रत्ययानुभूतप्रत्यङ्मात्रानुभव-सिद्धिर्भूयात् । सजातीयविजातीयस्वगतभेदरहिताखण्डसच्चिदानन्दसिद्धि-र्भूयात् ॥

उपसंहार:—

निरवयवत्वेनासङ्गत्वेन च आत्मनः केनापि संबन्धाभावादात्मनि नित्यस्वरूपानुभवः सम्यग्भूयात् । अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वा-दात्मा स्वयंप्रकाश इति स्वयंप्रकाशात्मानुभवः सम्यग्भूयात् । साधना-न्तरनिरपेक्षतया स्वयमेव भासमानत्वादात्मा स्वयंप्रकाश इति स्वयं-प्रकाशात्मानुभवः सम्यग्भूयात् ।

इति श्रीविद्यारण्योक्तौ ब्रह्मविदाशीर्वादपद्धतिः संपूर्णा

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे नित्यनिरवयवसच्चिदानन्दब्रह्मात्मानुभवः सततं भूया-दिति ब्रह्मविदनुभवः आशीर्वादरूपेण प्रतिपाद्यते ॥

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च दृश्यते ॥

## No. (469) C 28 ब्रह्मविद्याभरणम्

ग्रन्थकर्ता—अमृतानन्दः
पत्रविशेष:—कागदपत्रात्मक:
प्रमाणम्—$8\frac{3}{4}\times4\frac{1}{2}$ अङ्गुलानि
लिपि:—आन्ध्रलिपि:
पत्राणि—691

प्रतिपुटं पङ्क्तय:—12
प्रतिपङ्क्त्यक्षराणि—35
काल: (कोशस्य)—?
स्थिति:—समीचीना
समग्रोऽसमग्रो वा—असमग्र:

उपक्रम:—

शंकराश्लेषविलसदानन्दामृतनिर्भराम् ।
विश्वोत्तंसितपादाब्जां ब्रह्मविद्यां विभावये ॥
वेदान्तनिकुरुम्बेण तात्पर्येण प्रकाशितः ।
स्वात्मानन्दैकरस्येन कल्याणाय शिवोऽस्तु नः ॥

स्वानन्दाम्बुधिमग्नचित्तमनिशं निर्धूतमायामलं
कारुण्यार्जवशान्तिसौरभममुं देव्या गिरां सेवितम् ।
रामानन्दमुनिं मुनीन्द्रनिकरैरासेवितं सर्वदा
चित्ते संकलयामि वेदशिरसस्तत्त्वावबोधाप्तये ॥
मुग्धं मामनुगृह्य यः करुणया (यत्या)तुर्योक्रुतिप्रस्फुर-
द्भासांवेदवतं विकल्पगळितां विद्यां ददौ चिन्मयीम् ।
भूमानन्दपदस्थितो गुरुरसौ पूज्यादिपूज्यः सदा
चेतो मे कुरुतादलंकृतमतिः स्वच्छैः स्वपादाम्बुजैः ॥
अथातो ब्रह्मजिज्ञासा ॥

अनेन सूत्रेण साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्म जिज्ञासितव्यमिति प्रतिपाद्यते । एतत्सूत्रावतारिकारूपेण "युष्मदस्मत्प्रत्ययगोचरयोरित्यादिना—सर्वे वेदान्ता आरभ्यन्ते" इत्यन्तेन भाष्येण कर्तृत्वादिबन्धस्याक्षेपसमाधानाभ्यां मिथ्यात्वं प्रतिपाद्यते ॥

उपसंहारः—

विमतं निर्मितं, मन्त्रार्थवादादिषु प्रदेशेषु कौषीतक्यादिगतेषु । एतेन सर्वे व्याख्याता इत्यादौ अध्यायपरिसमाप्तिद्योतनाय पदमेवाभ्यस्यते । कृत्स्नसूत्राभ्यासस्तु शास्त्रसमाप्तिं द्योतयतीत्याह—सूत्राभ्यास इति ॥

मद्ये पलाशविपिनमद्यासस्तुसहोमया ।
ओंकारस्परमं वेद्यं भावयामि सदाशिवं ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभूमानन्दसरस्वतीचरणानुग्रहलब्धसारस्वतपदस्य निरतिशयौदासीन्यादिगुणरत्नखचितयतिकुलोत्तंसश्रीरामानन्दतीर्थमुखारविन्दनिर्गत-शारीरकसूत्रभाष्यार्थस्वर्धुनीप्रवाहनिमज्जनसुहितस्याद्वैतानन्दस्य कृतौ शारीरक-भाष्यव्याख्यायां ब्रह्मविद्याभरणाभिधायां चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ अध्यायः शास्त्रं च समाप्तम्

प्रतिपाद्यविषयः—

श्रीशंकराचार्यकृतस्य ब्रह्मसूत्रभाष्यस्य व्याख्यारूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायः संपूर्णः, तृतीयाध्यायतृतीयपादमारभ्य ग्रन्थसमाप्तिपर्यन्तश्च ग्रन्थो वर्तते । मुद्रितश्च दृश्यते ॥

## No. (470) 4061 ब्रह्मविद्याभरणम्

| | |
|---|---|
| ग्रन्थकर्ता—अमृतानन्दः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—62 |
| प्रमाणम्—14×1¾ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-90 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 28 कोशवत् ।

उपसंहारः—

नच साधनतारतम्यात् फलतारतम्यमित्यपि नियन्तुं शक्यम्; दुर्बलेन बलवता च क्रियमाणे लौकिककार्ये आयासतारतम्ये सत्यपि बुद्धिमता अबुद्धिमता च क्रियमाणे वेदाध्ययने आयासतारतम्ये सत्यपि चेतनवेदग्रहणयोस्तारतम्यादर्शनात् ॥

प्रतिपाद्यविषयः—

C 28 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे, आदितः समन्वयाधिकरण द्वितीयवर्णकपर्यन्तः ग्रन्थभागो विद्यते ॥

## No. (471) 2030 ब्रह्मविद्याभरणम्

| | |
|---|---|
| ग्रन्थकर्ता—अमृतानन्दः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—42 |
| प्रमाणम्—16×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-167 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 28 कोशवत् ।

उपसंहारः—

एवमपशूद्राधिकरणे संवर्गविद्यायां जानश्रुतौ प्रयुक्तशूद्रशब्दो न जातिवचनः। किंतु व्यक्तिवचन इत्युक्तम्। समाननामरूपत्वादिति सूत्रेण इन्द्रादिशब्दानां जातिवचनत्वमाश्रितम्। तत्र तर्कशास्त्रोक्तं जातिव्यक्त्यादिलक्षणनिरूपणमुपयुक्तम्। तत्सर्वमत्र व्याख्यातृभिर्विशदीक्रियते। तदिहोपकरणतया विवक्षितम्॥

प्रतिपाद्यविषयः—

C 28 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाधिकरणमात्रं विद्यते॥

## No. (472) 994 ब्रह्मविद्याभरणम्

| | |
|---|---|
| ग्रन्थकर्ता—अमृतानन्दयतिः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—$14\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–261 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 28 कोशवत्।

उपसंहारः—

सूत्रयोजना पूर्ववदेव। परंतु आनन्दमय इति स्थाने ब्रह्मणीति द्रष्टव्यम्। यद्यपि प्रधान निराकरणोपयोगिपूर्वसूत्रमेतदनन्तरं पठनीय्यं, तथापि एतत्सूत्रोक्तं मोक्षाख्यं फलं प्रधाननिराकरणेऽप्युपयुज्यतां इत्येतस्मात्पूर्वं कृतम्। एतदधिकरणपूर्वपक्षे उपक्रमोपसंहारास्नात तत्तद्गुणविशिष्टब्रह्मपुच्छानन्दमयोपासना, तत एव च मोक्षाख्यं फलमिति सिध्यति। सिद्धान्ते तु निर्विशेषब्रह्मपरमेव कृत्स्ने प्रमाणम्। तद्विज्ञानादेव मोक्ष इति सिध्यति॥

इत्यानन्दमयाधिकरणम्

प्रतिपाद्यविषयः—

C 28 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आनन्दमयाधिकरणान्तो ग्रन्थभागो विद्यते ॥

## No. (473) B 471 ब्रह्मविद्योपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–17

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—सह नाववत्विति शान्तिः।
अथ ब्रह्मविद्योपनिषदुच्यते।

प्रसादाद्ब्रह्मणस्तस्य विष्णोरद्भुतकर्मणः।
रहस्यं ब्रह्मविद्याया ध्रुवाग्निं संप्रचक्षते।

ओमित्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः!
शरीरं तस्य वक्ष्यामि स्थानं कालत्रयं तथा ॥

तत्र देवास्त्रयः प्रोक्ता लोकदेवास्त्रयोऽग्नयः।
तिस्रो मात्रार्धमात्रा च त्र्यक्षरस्य शिवस्य तु।

ऋग्वेदो गार्हपत्यश्च पृथिवी ब्रह्म एव च।
अकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः ॥

उत्तरोत्तरमुत्कृष्टा यत्राचार्यास्त्रयोमताः ।
ब्रह्मविद्योपनिषदं व्याख्यास्ये तामिमामिह ॥

नन्वेकस्यामुपनिषद्युक्तार्थाः ।

उपसंहारः—

भा—न च द्विशतमात्राः केवलमजपात्मकशब्दानुविद्धसमाधयो मन्तव्याः । अपि त्वेकसहस्रषट्शताधिकव्ययुत श्वासग्रन्थीनां च शब्दानुविद्धसमाधिरूपत्वात् । पाशुपतोपनिषद्भाष्ये ब्रह्मविदः प्राणनाशा भावादित्युक्तिररूपनाशाभिप्रायाऽवगन्तव्या । दर्शनादिषु चतुर्षु प्राणानामपि सरूपनाशसंभवात् निर्विकल्पादिचतुर्ष्वरूपनाशसंभवाच्च । तस्मात्प्रमाणत्रयानुरोधेन प्रपञ्चितानिमान् सूक्ष्मार्थान् धीमन्तः सूक्ष्मया धियाऽवगच्छेयुरित्यस्मन्मनो विश्वलति ॥

इति ब्रह्मविद्योपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ससाधना हंसविद्या, योगाचार्यः सांख्याचार्यः स्वानुभवाचार्यश्चेत्युत्तरोत्तरमुत्कृष्टास्त्रय आचार्याश्च प्रतिपाद्यन्ते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (474) 1840 ब्रह्मसूत्रभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—44 |
| प्रमाणम्—$9\frac{1}{2}\times1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—अतिशिथिला |
| पत्राणि—1–116 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 405 कोशवत् ।

उपसंहारः—

2226 कोशवत् ।

प्रतिपाद्यविषयः—

C 405 कोशवत् ।

वक्तव्यविशेषः—

2226 कोशवत् ।

## No. (475) A 302/1-2 ब्रह्मसूत्रभाष्यम्

ग्रन्थकर्ता—चिन्मयमुनिः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 7\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-81, 1-173

प्रतिपुटं पङ्क्तयः—42
प्रतिपङ्क्त्यक्षराणि—30
कालः (कोशस्य)—1902
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

स्वं स्वं दैवमिदं परात्परमिदं ध्येयं सहेदं मुदा
सेवेतेति मतं मतौ विदधतो निन्दन्तु नन्दन्तु वा ।

कोदण्डाशुगधारिणः कुवलयश्यामाच्छरीरी भवत्
कारुण्यात्कथमस्मदीऽय्यरसना रामात्परं गाहते ॥

सत्यं ज्ञानमनन्तमाद्यममलं मायागुणैः स्वीकृत-
श्रीकान्तद्रुहिणेश्वराभिधमिळापुत्र्याजया नित्यया ।

तादात्म्यं प्रतिपद्य कल्पितमनाद्याविद्ययायज्जग-
ज्जन्मादावलमेतदस्मि तदहं रामात्मकं सन्महः ॥

भाष्यं विष्णुविनिर्मितं शिथिलतामभ्येत्रभावाद्गतं
तस्यैवार्थमसंशयं श्रुतिशिरः सर्वस्वसारोज्वलम् ।

निश्चित्यानिलनन्दनाद्भुतकपालस्थोऽस्य भाष्यं पुनः
सूत्राणां कुरुते स चिन्मयमुनिर्गृह्णन्तु विद्वज्जनाः ॥

ओं तत्त्वंपदार्थयोः ब्रह्मजीवयोस्तेजास्तिमिरवद्विधर्मणोः परस्परमैक्यानुपपत्तौ सिद्धायां तद्धर्माणामतितरानैक्यानुपपत्तिरित्यतस्तत्पदार्थे चिदानन्दघने परमात्मनि त्वंपदार्थस्य स्वस्वरूपज्ञानविकलस्य जीवस्य तद्धर्माणाञ्चाध्यासस्तद्विपर्ययेण तत्पदार्थस्य तद्धर्माणां च त्वंपदार्थेऽध्यासो मिथ्येति भवितुं युक्तम् । तथापि . . . . . . . . .

उपसंहारः—

एवमन्यत्रापि लिङ्गाभासाः प्रतीयमानाः उपक्रमोपसंहारानुसारेण वेदान्तैकसमधिगम्य ब्रह्मपरतया व्याख्येयाः । व्याख्याता व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति । तथा च श्रुतिषु अध्यायादिपरिसमाप्तौ पदाभ्यासो दृश्यते । तद्वास्य विजिज्ञाविति विजिज्ञाविति तं स्कन्द इत्याचक्षते । तं स्कन्द, । ओंकार एवेदगं सर्वमोंकार एवमिदगं सर्वमिति ॥ वेदान्तवेद्ये श्रीरामे वेदान्तानां समन्वयः ।

यथामति कृतस्सूत्र यथार्थार्थानुसारतः ॥

इति श्रीचिन्मयमुनिकृतौ श्रीशारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य चतुर्थः पादः ।

समाप्तश्चाध्यायः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे श्रीमद्बादरायणकृतशारीरकसूत्राणां विवरणं क्रियते ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायमात्रं विद्यते । मुद्रितश्च दृश्यते ॥

## No. (476) A 311 ब्रह्मसूत्रभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—चिन्मयमुनिः | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—26 |
| प्रमाणम्—$12\frac{1}{2}\times7\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—1902 |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-110, 1-130 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ

प्रथमे लक्षणे सर्वज्ञः सर्वेश्वरः प्रकृतितादात्म्यापन्नः परमात्मा सर्वस्य जगतः कारणमिति प्रतिपाद्य तत्रैव सर्वेषां वेदान्तानां समन्वयप्रदर्शनमुखेन तत्र तत्र प्रतीयमानलिङ्गाभासानवलम्ब्य प्रवृत्तस्य प्रधानकारणवादस्य निराकरणमकृत भगवान् सूत्रकारः। इदानीं पुनः स्वमते स्मृतिन्यायविरोधं परिजिहीर्षुः प्रधानादिकारणवादानां प्रतिपिपादयिषुः प्रतिवेदान्तं सृष्ट्यादिप्रतिपादनस्यावगीतत्वं च विवक्षुरिमं द्वितीयमध्यायमारभते ॥

उपसंहारः—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥ इत्याद्या श्रुतिरत्रैव तेषां ब्रह्मानन्दभावं दर्शयति ॥

अत्रानावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्रावृत्तिः शास्त्रपरिसमाप्तिं दर्शयति ॥

इति श्रीमच्चिन्मयमुनिकृतौ श्रीमच्छारीरकमीमांसाभाष्ये चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः।
समाप्तश्चाध्यायः

विद्या यस्य विवेकवैभवकृते श्रीश्वार्थिसंप्रार्थना-
पूर्त्यै योऽजनि मौनिभार्गवकुले वेंकार्यनामा विभुः।
तेनासाद्य हरेः प्रसादमनघं भाष्यं नवं निर्मितं
सन्तः साधु समीक्ष्य साम्यमतयो गृह्णन्त्वृते मायया ॥

श्रीरामचन्द्रचरणप्रणतिप्रभावा-
द्भाष्यं मयेदमविमुक्तसमस्तभाष्यम् ।
यत्नाव्यधायि यदि मे मतिवैपरीत्यं
तत्र क्षमन्तु दयया धरणीसुरेन्द्राः ॥

वेदान्तगङ्गाकृतमज्जनानां शास्त्रार्थ ......चामशुचिव्रतानाम् ।
भाष्यं तदेतद्धृतिमज्जनानामाभातु भानोरिव पङ्कजश्रीः ॥
ॐ तत्सत् ब्रह्मार्पणमस्तु

प्रतिपाद्यविषयः—

A 302 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयाध्यायप्रभृति समग्रो ग्रन्थो विद्यते ॥

## No. (477) C 405 ब्रह्मसूत्रभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{3}{4}\times5$ अङ्गुलानि
लिपिः— देवनागरीलिपिः
पत्राणि—1-109, 1-94, 1-90, 1-37

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासस्तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम् । तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोः धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः ॥

उपसंहारः—

अन्तवत्वेऽपि चैश्वर्यस्य यथानावृत्तिस्तथा वर्णितं कार्यात्यये तदध्यक्षेण सहातः परमित्यत्र। सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः। तदाश्रयणेनैव हि सगुणपरायणानामप्यनावृत्तिसिद्धिरिति ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दादिति अभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दपूज्यपादशिष्यश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्कृतौ श्रीमच्छारीरकमीमांसाभाष्ये चतुर्थोऽध्यायः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मसूत्राणि विव्रियन्ते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते, मुद्रितश्च।

## No. (478) C 463/1 ब्रह्मसूत्रभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12 \times 5\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—444

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—36
कालः (कोशस्य)—1752
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 405 कोशवत्।

उपसंहारः—

C 405 कोशवत्।

प्रतिपाद्यविषयः—

C 405 कोशवत्।

वक्तव्यविशेषः—

C 405 कोशवत्।

## No. (479) 2266 ब्रह्मसूत्रभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः— तालपत्रात्मकः
प्रमाणम्—$11 \times 2\frac{1}{8}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–216
प्रतिपुटं पङ्क्तयः—13
प्रतिपङ्क्त्यक्षराणि—54
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 405 कोशवत्।

उपसंहारः—

C 405 कोशवत्।

प्रतिपाद्यविषयः—

C 405 कोशवत्।

वक्तव्यविशेषः—

C 405 कोशवत्।

## No. (480) 3477 ब्रह्मसूत्रभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$19\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–240
प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—96
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 405 कोशवत्।

उपसंहारः—

C 405 कोशवत्।

प्रतिपाद्यविषयः—

C 405 कोशवत्।

वक्तव्यविशेषः—

C 405 कोशवत्।

## No. (481) 3535 ब्रह्मसूत्रभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—64 |
| प्रमाणम्—$17\times1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-163 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 405 कोशवत् ।

उपसंहारः—

सर्वधर्मोपपत्तेश्च । चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यस्मिन्नवधारिते वेदार्थे परैरुपक्षिप्तान्विलक्षणत्वादिदोषान्पर्यहार्षीदाचार्यः । इदानीं परपक्षप्रतिषेधप्रधानं प्रकरणमारीप्समानः स्वपक्षपरिग्रहप्रधानं प्रकरणमुपसंहरति—यस्मादस्मिन्ब्रह्मणि कारणे गृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारणधर्मा उपपद्यन्ते सर्वज्ञं सर्वशक्ति महामायं च ब्रह्मेति । तस्मादनतिशंकनीयमिदमौपनिषदं दर्शनमिति ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीशंकरभगवत्पादकृतौ द्वितीयस्याध्यायस्य प्रथमः पादः

प्रतिपाद्यविषयः—

C 405 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः पञ्च पादा विद्यन्ते ।

## No. (482) 3976 ब्रह्मसूत्रभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—80 |
| प्रमाणम्—$18\frac{1}{2}\times1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—231-359 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

समुपकरणोपबृंहितस्य जीवस्य संसारप्रकारस्तदवस्थान्तराणि च ब्रह्मणस्तत्त्वं विद्याभेदाभेदौ गुणोपसंहारानुपसंहारौ सम्यग्दर्शनात्पुरुषार्थसिद्धि.। सम्यग्दर्शनोपायविधिप्रभेदो मुक्तिफलनियमश्चेत्येतमर्थजातं तृतीयेऽध्याये चिन्तयिष्यते। प्रसङ्गागतं च किमप्यन्यत्। तत्र प्रथमे तावत्पादे पञ्चाग्निविद्यामाश्रित्य संसारगतिभेदः प्रदर्श्यते वैराग्यहेतोः। तस्माज्जुगुप्सेतेति चान्ते श्रवणात्।

उपसंहारः—

C 405 कोशवत्।

प्रतिपाद्यविषयः—

C 405 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे तृतीयतुरीयाध्यायमात्रं विद्यते॥

## No. (483) 1721 ब्रह्मसूत्रभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—9 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम् —19½×2 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नन्दिनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—3-120 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

........तिवचनावसरे प्रथमाहुतिस्थाने यद्यनपो होम्यद्रव्यं श्रद्धां नामावतारयेत् तथान्यथा प्रश्नोऽन्यथा प्रतिवचनमित्येकवाक्यता न स्यादिति। इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्युपसंहरन्नेतदेव दर्शयति। श्रद्धाकार्यं च सोमवृष्ट्यादिस्थूलीभवदब्बहुलं लक्ष्यते। सा च श्रद्धाया उक्तत्वे युक्तिः। कारणानुरूपं हि कार्यं भवति, न च श्रद्धानाम प्रत्ययो मनसो जीवस्य वा धर्मः सन् धर्मिणो निष्कृष्य होमायोपादातुं शक्यते॥

उपसंहारः—

C 405 कोशवत्।

प्रतिपाद्यविषयः—

C 405 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे तृतीयाध्यायप्रथमपादे प्रथमेऽश्रवणादितिसूत्रे सिद्धान्तग्रन्थमारभ्य ग्रन्थसमाप्तिपर्यन्तो ग्रन्थो विद्यते ॥

## No. (484) 2954 ब्रह्मसूत्रभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—5 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम्—$17\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-149 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

प्राणिशरीरं भारूपमेवमादयः। तस्यामेव शाखायां बृहदारण्यके पुनः पठ्यते—मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तरहृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं चेति। तत्र संशयः—किमयमेका विद्या अग्निरहस्यबृहदारण्यकयोर्गुणोपसंहारश्च, उत द्वे इमे विद्ये गुणानुपसंहारश्चेति ॥

उपसंहारः—

C 405 कोशवत्।

प्रतिपाद्यविषयः—

C 405 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे तृतीयाध्यायतृतीयपादे समानाधिकरणमारभ्य ग्रन्थः समग्रो विद्यते ॥

## No. (485) 2226 ब्रह्मसूत्रभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$15\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–86
प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—80
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 405 कोशवत्।

उपसंहारः—

तेषामप्युपोद्बलकं किंचिद्वैदिकं लिङ्गमापादेन मन्दमतीन्प्रति मायादित्यतः प्रधानमल्लनिबर्हणन्यायेनातिदिशति–एतेन प्रधानकारणवाद-प्रतिषेधन्यायकलापेन सर्वेऽण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता वेदितव्या। तेषामपि प्रधानवदशब्दत्वाच्छाब्दविरोधित्वा-च्चेति। व्याख्याता व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादकृतौ श्रीमच्छारीरकमीमांसाभाष्ये प्रथमाध्यायस्य चतुर्थः पादः। समाप्तश्चाध्यायः

प्रतिपाद्यविषयः—

C 405 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायमात्रं विद्यते।

## No. (486) 884/1 ब्रह्मसूत्रभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$17\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1–80
प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—86
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 405 कोशवत् ।

उपसंहारः—

2226 कोशवत् ।

प्रतिपाद्यविषयः—

C 405 कोशवत् ।

वक्तव्यविशेषः—

2226 कोशवत् ।

## No. (487) B 237 ब्रह्मसूत्रभाष्यदीपिका

ग्रन्थकर्ता—अप्पय्यदीक्षितः
पत्रविशेषः—कागद्पत्रात्मकः
प्रमाणम्—$8 \times 5\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—173
प्रतिपुटं पङ्क्तयः—15
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

अथातो ब्रह्मजिज्ञासेत्यादिसूत्रचतुष्टयम् ।
सभाष्यं विस्तरेणैव व्याख्यास्ये सद्गुरुं स्मरन् ॥

अत्र खल्ववतारभाष्ये प्रथममुक्तम्—अस्मत्प्रत्ययगोचरपरमात्मोत्पन्नोऽहंप्रत्ययगोचरः कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यखिलसंसारधर्मोपेतश्च जीवात्मा प्रबलतरज्ञानसमुच्चितकर्मानुष्ठानसंस्कृतजीवान्तरपरिणतेश्वरसेवकत्वमात्मनो मत्वा अहमिदं ममेदमित्यभिमानवशात् पश्वाद्यविशिष्टः श्रौतस्मार्तादिनित्यनैमित्तिककाम्यनिषिद्धकर्मसु नियुक्तः प्रवृत्तो दृश्यते इति ॥

उपसंहारः—

न च कर्मकाण्डोऽस्माभिरश्रुतिबुध्द्योपेक्षितः, काम्यकर्मसंजटिलत्वबुध्द्यैव मोक्षानुपयुक्तत्वेनोपेक्षितत्वात् । कपिलादयस्तु महर्षयस्सर्वज्ञा

अपि वेदविरुद्धमतप्रतिष्ठापनाय परमेश्वरेण नियमितत्वात् तन्मतमस्माभि-र्वैदिकैर्धिक्कार्यमेव। बादरायणस्तुसर्ववैदिकाचार्य इति प्रसिद्धत्वात्तन्मत-मनवद्यमिति स्थितम् ॥

इति समन्वयदीपिका समाप्ता

प्रतिपाद्यविषयः—

ब्रह्मसूत्रस्वकृततद्भाष्ययोः विवरणविचारः।

वक्तव्यविशेषः—

अमुद्रितोऽयं ग्रन्थः। अस्मिन्कोशे समन्वयाधिकरणपर्यन्तो ग्रन्थो वर्तते ॥

## No. (488) B 238 ब्रह्मसूत्रभाष्यदीपिका

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—32 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-180, 1-220, 1-100 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

अत्रायमाक्षेपः। न हि ब्रह्मणोऽपि निर्विशेषस्य कथंचिद्वीक्षितृत्वं भवितुमर्हति। कुतः? ईक्षणात्मकस्य कर्मणश्चक्षुराख्यककरणसापेक्षत्वेन ब्रह्मणोऽकरणत्वेन च लोकेक्षणकर्मासंभवात्। यद्यादौ जिज्ञास्यत्वेनोप-क्रान्तं ब्रह्म सविशेषं स्यात् तदा सशरीरत्वेन करचरणाद्यशेषावयववत्तया लोकेक्षणकर्म संभवेत् ॥

उपसंहारः—

नायं दोषः ? तस्य ब्रह्मोपासकत्वेन जीवोपास्यत्वेन चोभयसंभवात्। तथा हि—लोके देवदत्तस्य पित्रुपासकत्वं पुत्रोपास्यत्वं च भवतः। तस्मा-

त्प्रत्यग्जीवैक्यवादमुत्सृज्य तत् भेदवादाश्रयण एव मुमुक्षूणां परमपुरुषार्थ इत्यवगन्तव्यम् ॥

प्रतिपाद्यविषयः—

B 237 कोशवत् ।

वक्तव्यविशेषः —

अस्मिन्कोशे प्रथमाध्यायस्य प्रथमद्वितीयौ पादौ समग्रौ, तृतीयश्चासमग्रो वर्तते ॥

## No. (489) B 239/2 ब्रह्मसूत्रभाष्यदीपिका

ग्रन्थकर्ता—अप्पय्यदीक्षितः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—139–205, 1–212

प्रतिपुटं पङ्क्तयः—32
प्रतिपङ्क्त्यक्षराणि—24
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

अत्रायमाक्षेपः। नन्वेष दशमदृष्टान्तः शुद्धाद्वैतिभिरेव परिगृहीतः नान्यैः, तेषामेव च समञ्जसो भवति, नान्येषां विशिष्टाद्वैतिनामनुभवाद्वैतिनां वा भवताम्। कुतः? विशिष्टाद्वैतिनां भवतां चोभयेषामपि जीवान्यत्वाद्ब्रह्मणः। ते तु शुद्धाद्वैतिनो जीवानन्यदेव ब्रह्मावगच्छन्ति। अतो दशमस्य दशमत्वोपदेशोऽर्थवान्भवति ॥

उपसंहारः—

तथापि विराड्रूपमगुणोपासकस्यैव विवक्षितत्वेन निर्गुणब्रह्मव्यवहिततया तस्य च नित्यत्वोपपत्तेर्निष्कामोपास्यत्वमुपपद्यत इत्यदोषः। तस्मात्क्रममुक्तिजीवन्मुक्त्यतीतविदेहमुक्तिस्थानं निष्प्रतियोगिकं ब्रह्म अधुना प्रारब्धवतानुभवार्हमित्यसङ्गतम् ॥

इति भाष्यदीपिकायां द्वितीयाध्यायस्य प्रथमः पादः

प्रतिपाद्यविषयः—

B 237 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमस्य तृतीयपादावशिष्टो भागः, चतुर्थपादः, द्वितीयस्य प्रथमपादश्च समग्रो वर्तते ।

No. (490) **4853/1** ब्रह्मसूत्रभाष्यटीका (न्यायनिर्णयः)

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञानः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—86 |
| प्रमाणम्—19×2 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—2–140 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

प्रमातृत्वादेर्व्यावहारिकमानसिद्धत्वेऽपि तात्त्विकमानासिद्धतया तथाविधमानजनितबोधबाधाविरोधादुक्तविषयादि ............ मीमांसायाश्च वेदार्थैकदेशधर्ममात्रोपहिततया ब्रह्मस्पर्शितया तन्मीमांसया गतार्थतानवकाशादध्यक्षाद्यधिगतमिथ्याभावस्य बन्धस्य ज्ञाननिवर्त्यतया ॥

उपसंहारः—

अणुः पन्था इति ज्ञानमार्गस्तुतेरसदेवेदमित्यादिश्रुतेः समाहितत्वात् मृदादिदृष्टान्तानां च प्रतिज्ञानुरोधित्वात् ........................ दीनां प्रधानवदशब्दत्वाद्ब्रह्मकारणवादिशब्दविरोधित्वादुक्तान्यपि वाक्यानि ब्रह्मपराणीति ब्रह्मणि कारणे सिद्धः समन्वयो वेदान्तानामित्यर्थः । पुनरुक्तेस्तात्पर्यमाह—व्याख्याता इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृते शारीरकभाष्यन्यायनिर्णये प्रथमोऽध्यायः

प्रतिपाद्यविषयः—

2810 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायः समग्रो विद्यते । प्रथमपत्रं त्रुटितम् ॥

## No. (491) 2222 ब्रह्मसूत्रभाष्यटीका (न्यायनिर्णयः)

ग्रन्थकर्ता—आनन्दज्ञानः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—20×2¼ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–67

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

2810 कोशवत् ।

उपसंहारः—

अनेकलिङ्गानुगृहीतानन्यथासिद्धवैश्वानराग्निश्रुतिभ्यामेकं लिङ्गं नेयमित्याह—अत्रेति । जाठरेऽपि द्युमूर्धत्वादि कथंचिन्नीतमिति भावः । न जाठरे मुख्यं द्युमूर्धत्वादीत्यपरितोषादाह—अथ वेति । एष निर्देशो वैश्वानराग्निशब्दाभ्यामन्त्रः प्रतिष्ठानोक्त्या चेति शेषः । तत्रापि कुतो द्युमूर्धत्वादि सिद्धम्, तत्राह—तस्मादिति । अपिरीश्वरस्य दृष्टान्तार्थः । इमां पृथिवीमुत द्यामपि द्यावापृथिव्यामेव रोदसी यो भानुरूपेणाततान व्याप्तवानन्तरि. ......

प्रतिपाद्यविषयः—

2810 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे, आदितः 1–2–26 सूत्रव्याख्यानपर्यन्तो ग्रन्थभागो विद्यते ॥

## No. (492) 2810 ब्रह्मसूत्रभाष्यटीका (न्यायनिर्णयः)

ग्रन्थकर्ता—आनन्दज्ञानः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$18\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–61
प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—76
कालः (कोशस्य) —?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

आध्यस्तान्ध्यमपूर्वमर्थधिषणैर्ग्राह्यं पुमर्थास्पदं
लक्ष्यं लक्षणभेदतः श्रुतिगतं निर्धूतसाध्यार्थकम् ।
आम्नायान्तविभातविश्वविभवं सर्वाविरुद्धं परं
सत्यं ज्ञानमनर्थसार्थविधुरं ब्रह्म प्रपद्ये सदा ॥ 1–8 ॥
श्रद्धाभक्ती पुरोधाय विधायागमभावनाम् ।
श्रीमच्छारीरके भाष्ये करिष्ये न्यायनिर्णयम् ॥ 9 ॥

नित्याध्ययनविध्युपादापितवेदान्तवचोभिरापाततः प्रतिपन्नं शास्त्रारम्भौपयिकमनुबन्धजातं न्यायतो निर्णेतुं भगवान्बादरायणः सूत्रितवानथातो ब्रह्मजिज्ञासेति । तेन मातृत्वादिबन्धस्याध्यासत्वं धर्ममीमांसया गतार्थत्वाभावो विशिष्टाधिकारिसंभवो विषयादिसत्त्वं चेति चत्वारोऽर्थाः सूचिताः । तथा हि सत्यत्वे बन्धस्य बद्धाबद्धयोर्जीवब्रह्मणोरैक्यानुपपत्तेः सत्यस्य च ज्ञानादनिवृत्तेर्ज्ञानस्य चाज्ञानमात्रविरोधित्वादुत्तरज्ञानस्य विरोधिगुणतयापूर्वज्ञाननिवर्तकत्वाद्विषयप्रयोजनसिद्धिहेतुतया बन्धस्याध्यासहेतुता सूचिता ॥

उपसंहारः—

तस्माज्जीवप्राणब्रह्मणि सहैवोपास्यानि ब्रह्मैव वा प्रतिपाद्यमिति पदार्थवाक्यार्थयोर्बलाबलज्ञानेन सन्दिह्य दिवोदिवी ........................ ..................दार्थभेददृष्टौ तदपेक्षत्वेन गुणभूतवाक्यार्थदृष्टेरन्यथानयनात्पदार्थबुद्धेर्वाक्यार्थबुध्योपजीव्यत्वेन स्वातन्त्र्याद्वाक्यैक्यं......... सहोपास्यानीति प्रापय्य पदानां वाक्यार्थबोधोद्देशेन प्रवृत्तत्वात् पदार्थबोधस्य नान्तरीयकत्वाद्वाक्यार्थबोधप्राधान्यादुपक्रमोपसंहारैकरूप्यसिद्ध-

प्रधानवाक्यार्थभङ्गायोगात् प्राणादिलिङ्गानां च ब्रह्मणि नीतत्वादन्यादनन्यथासिद्धब्रह्मलिङ्गाद्ब्रह्मैवात्र प्रतिपाद्यमिति सिद्धान्तयितव्यम्। सर्वथापि प्रातर्दिनं वाक्यं ब्रह्मणि ज्ञेये समन्वितमिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते शारीरकन्यायनिर्णये प्रथमस्याध्यायस्य प्रथमः पादः

प्रतिपाद्यविषयः—

शंकराचार्यकृतशारीरकभाष्यव्याख्यानरूपो ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायप्रथमपादमात्रं विद्यते। मुद्रितश्च दृश्यते ॥

## No. (493) A 367 ब्रह्मसूत्रभाष्यवार्तिकम्

| | |
|---|---|
| ग्रन्थकर्ता—नारायणसरस्वती | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$12\frac{3}{4} \times 8$ अङ्गुलानि | कालः (कोशस्य)—25 |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-195 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

सगुणब्रह्मोपासकानामपि जगद्व्यापारवर्जं सावग्रहमैश्वर्यं न्यायेनावधारयिष्यते। तस्मान्नोपासिक्रियानः संसारिजीवस्यासंसारिब्रह्मभावसिद्धिः स्वभावहानापत्तेः। तत्त्वज्ञानेन तु मिथ्याकल्पितान्यभावस्य निवृत्तिस्तद्भावसिद्धिः स्यादेवेत्यभिप्रेत्याह—ब्रह्म वेद ब्रह्मैव भवतीति चैवमादीनि तद्भावापत्तिवचनानि सम्पदादिपक्षे सामञ्जस्येन नोपपद्येरन्निति ब्रह्मात्मैकत्वविद्यायाः सम्पदादिरूपतानिराकरणमुपसंहरति — तस्मान्न सम्पदादिरूपं ब्रह्मात्मैकत्वविज्ञानमिति। तस्मादुदाहृतश्रुतिविरोधादित्यर्थः। मास्तु सम्पदादिरूपम्, तत्वाभावात्किं तव सिद्धमत आह—त इति ॥

उपसंहारः—

अभिध्योपदेशाच्च । इतश्चात्मनः कर्तृत्वं प्रकृतित्वं च श्रुतेर्गम्यते । यतः "सोऽकामयत बहुस्यां प्रजायेये"ति, "तदैक्षत बहुस्यां प्रजायेये"ति चेत्येवमाकारमभिधानमात्मन उपदिशति श्रुतिः । तत्र, सोऽकामयत इत्यनेन स्वातन्त्र्यं लक्ष्यते बहुस्यामित्यनेन चोपादानत्वमिति ॥

प्रतिपाद्यविषयः—

ब्रह्मसूत्रशांकरभाष्यविवरणरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थस्योपक्रमः, प्रथमाध्यायोपसंहारश्च नास्ति । प्रथमाध्यायमात्रं विद्यते । कुत्राप्यमुद्रितश्चेत्यपि ज्ञायते ॥

## No. (494) 3623 ब्रह्मसूत्रभाष्यव्याख्या (न्यायनिर्णयः)

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञानः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—$15\frac{1}{4}\times1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–96 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

अधिदेशाधिकरणे प्रधानवदशब्दत्वं परमाण्वादीनामपीत्युक्तम् । सम्प्रति प्रधानस्य वैदिकशब्दवत्त्वाभावेऽपि स्मृतिरूपशब्दवत्त्वमाशंक्य परिहरति—स्मृतीति ।

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ।

पूर्वोत्तराध्याययोर्विषयविषयिभावसंबन्धं वक्तुं पूर्वाध्यायार्थं संक्षेपतोऽनुवदति—प्रथम इति । जन्मादिसूत्रमारभ्योत्पत्त्यादिकारणं ब्रह्मेति तत्र तत्रोक्तमनुभाष्यात्मभेदवादिसांख्यस्मृतिविरोधोद्भावनानुकूलत्वेन शास्त्रदृष्ट्येत्यादिप्रदेशेषु दर्शितमद्वितीयत्वमनुवदति—स एवेति ।

उपसंहारः—

तादात्म्याद्भेदोऽप्यस्तीत्याशंक्य भेदवादस्याफलत्वान्नैवमित्याह—न हीति। प्रतिज्ञाद्वयोऽपि हेतुं विभज्य व्याख्यायाविभागेनापि व्याख्याति—तथेति। श्रुत्यवष्टम्भेन पक्षद्वयं निराकृत्य करणवृत्तत्वे दोषान्तरमाह—न चेति। या चक्षुः साध्या वृत्तिः सैव न श्रोत्रसाध्या चक्षुरादीनां प्रत्येकमेकैकरूपादिग्रहणानां वृत्तौ स्वातन्त्र्यादतो न प्राणः सामान्यकरण-वृत्तिरित्यर्थः। समुदायस्य कारकत्वमुपेत्योक्तं तदेव नास्त्यवस्तुत्वात् द्वित्रिकरणविकलानां च—

प्रतिपाद्यविषयः—

2810 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयाध्यायादितः चतुर्थपादे "नैवायुविक्रिये पृथगुपदेशा" दिति सूत्रव्याख्यानपर्यन्तो ग्रन्थः विद्यते॥

## No. (495) C 1501 ब्रह्मसूत्रविषयवाक्यार्थः

ग्रन्थकर्ता—वासुदेवेन्द्रः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$15 \times 7\frac{3}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–14

प्रतिपुटं पङ्क्तयः—25
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

अथातो ब्रह्मजिज्ञासा "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते॥ यथा इह भूलोके कर्मणा चितः सम्पादितः पुत्रमित्रकळत्रादिलक्षणो लोकः जनः क्षीयते नश्यति एवमेवामुत्र स्वर्ग-लोकेष्वपि पुण्यचितः पुण्येन सम्पादितः पुत्रमित्रकळत्रादिलक्षणो लोकः

जनः क्षीयत इत्यर्थः। परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमाया-न्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥ कर्मणा चितान् सम्पादितान् चतुर्दशलोकान् लोकस्थजनांश्च परीक्ष्य अनित्यत्वेन निश्चित्य ब्राह्मणः ब्रह्मसाक्षात्कारकामः निर्वेदं वैराग्यं आयात् प्राप्नुयात् अकृतो मोक्षः कृतेन कर्मणा नास्ति न सम्पाद्यते। तत्तस्मात्कारणात् विज्ञानार्थं ब्रह्मज्ञानार्थं श्रोत्रियं साङ्गवेदाध्ययनवन्तं ब्रह्मनिष्ठं ब्रह्मसाक्षात्कारवन्तं गुरुं समित्पाणिः यथायोग्यं समिद्दन्त-काष्ठादिपाणिः सन् अभिगच्छेत्। एतादृशगुरुनिकटं प्राप्नुयादित्यर्थः॥

उपसंहारः—

एतेन सर्वे व्याख्याता व्याख्याताः। न्यग्रोधफलमाहरेति इदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति अण्व्य इमा धाना इति आसामेकैकां भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति न किंचन भगव इति श्रद्धत्स्व सोम्येति न्यग्रोधबीजावयवदृष्टान्तेन ब्रह्मणः दुर्विज्ञेयत्वं बोधयितुं गुरुः शिष्यं प्रत्याह—हे शिष्य वटफलमानय, शिष्य आह इदं भगव इति, पुनरपि गुरुराह—भिन्धीति अण्व्यः सूक्ष्माः धाना बीजानीत्यर्थः। तासां धानानां मध्ये एकां भिन्धीत्यर्थः न किंचन भगव इति श्रुत्या वटबीजावयवदृष्टान्तेन आसां सूक्ष्मपरमाणूनां जगत्कारणत्वं प्रतिपाद्यत इति नैय्यायिका वदन्ति, तदसङ्गतम्; बहुश्रुत्यनुसारेण वटबीजावयववत् इन्द्रियाग्राह्यस्याकाशवत्सर्वव्यापकस्य परमात्मनः अनया श्रुत्या जगत्कारणत्वं प्रतिपादयतीति भावः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवेन्द्रस्वामिविरचिते ब्रह्मसूत्रविषयवाक्यविवरणे प्रथमाध्यायविषयवाक्यविवरणं समाप्तम्।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मसूत्रविषयवाक्यानां स्पष्टमर्थो वर्ण्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायमात्रं विद्यते। अमुद्रितश्च दृश्यते।

## No. (496) 2811 ब्रह्मसूत्रवृत्तिः

| | |
|---|---|
| ग्रन्थकर्ता—कौण्डिन्यः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—44 |
| प्रमाणम्—$16\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-75 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

पुरुषाय पुराणाय कृष्णाय परमात्मने ।
पुण्यश्लोकाय पूर्णाय ज्योतिषां पतये नमः ॥
प्र . . . . . . . . . कौण्डिन्येन विपश्चिता ।
बादरायणसूत्रेषु ज्ञानकाण्डस्य दीपिका ॥

स्वाध्यायोऽध्येतव्य . . . . . . . धाय वेदाध्ययनस्य नित्यतय विहितत्वादधीतसाङ्गस्वाध्यायस्यार्थाविबोधोपयिकन्या . . . . . पादनषर्ं त्रिंशतिलक्षणं मीमांसाशास्त्रं परमकारुणिको भगवानाचार्यः प्रणिनाय । तत्र . . . . . . सूत्रेण वेदाध्ययनानन्तरं तत एव हेतोरुपकुर्वाणस्य धर्मजिज्ञासामवश्यकर्तव्यतया प्रतिज्ञाय द्वितीय . . . . . धर्मस्य लक्षण-प्रमाणे . . . . . . . . . . . . . . . . योगिदेवतातत्त्वं निरू . . . . . . . . . सेति । विद्यालक्षणं तु धर्ममग्रे लक्षणद्वयेन निरूपयिष्यति ॥

उपसंहारः—

तदनन्तरं च स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते इति वाक्येन य एषोऽन्तर्हृदय आकशस्तस्मिन्योऽयं विज्ञानमयः पुरुषः शेते स वा एष महानज आत्मेति विद्याफलभूतब्रह्मसम्पत्तिर्विदुषो व्यपदिश्यते । स वा एष महानज आत्मेत्यनेन "विरजः पर" आकाशादज आत्मा महान्ध्रुव इति प्रकृतपरमेश्वरपरामर्शात् । अतो न विज्ञानात्मपरमिदं वाक्यं किं तु परमेश्वरोपासनाविधिपरम् ।

पत्यादिशब्देभ्यः ॥ सर्वस्य वशी सर्वस्याधिपतिरित्यादयो ये शब्दास्तेभ्यः पत्यादिशब्देभ्यश्च हेतुभ्यः परमेश्वरपरमेवेति सिद्धम् ॥

इति मीमांसाशास्त्रे कौण्डिन्यविरचितायां विद्याकाण्डवृत्तौ प्रथमस्याध्यायस्य तृतीयः पादः

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः त्रयः पादाः विद्यन्ते। अमुद्रितश्च।

## No. (497) 4950 ब्रह्मसूत्रवृत्तिः

ग्रन्थकर्ता—प्रौढदेवरायः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$13\frac{1}{4} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-191

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—70
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यन्नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम्॥
स्थित्युद्भवप्रविलया जगतो यतः स्युः।
यं प्राहुरेकमजमव्ययमद्वितीयम्॥
तं हेमकूटनिलयं भवानीपतिमव्ययम्।
विरूपाक्षं महादेवं प्रत्यगात्मानमाश्रये॥
यद्भाष्यामृतपानेन जरामरणवर्जितम्।
परं याता हि विबुधाश्शंकरं नौमि तं गुरुम्॥

अनुष्ठितधर्मविदलितान्तःकरणस्याधिकारिणः पुरुषस्य तरति शोकमात्मवित्, ब्रह्म वेद ब्रह्मैव भवतीत्यादिवेदान्तवाक्येषु संशयो भवति, किमेतानि वेदान्तवाक्यानि सकलानर्थनिवृत्तिद्वारेण परमसुखस्वरूपब्रह्मात्मैकत्वलक्षणमोक्षप्रवृत्तिसाधनज्ञानायारम्भणीयान्युत नेति॥

उपसंहारः—

अनावृत्तिः शब्दादनावृत्तिः शब्दात्॥

ब्रह्मलोकं गतानां सातिशयैश्वर्याणामपि पुनरावृत्तिर्नास्ति, कुतः शब्दात्। "तयोर्ध्वमायन्नमृतत्वमेति", एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त इति शब्दप्रमाणादित्यर्थः। ब्रह्मणा सह तेषामपि सगुणब्रह्मविदुषां तत्समीपं प्राप्तानां महाप्रलये ब्रह्मात्मैकत्वज्ञानात्

क्रममुक्तिशास्त्रसिद्धादमृतत्वेनावृत्तेः कार्याध्यक्षेण सहात इत्यत्रोपपादितत्वाच्च। अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति।

इति श्रीराजाधिराजराजपरमेश्वरगजमृगयाधिराजश्रीवीरप्रतापप्रौढदेवरायमहाराजकृतौ पम्पायां ब्रह्मसूत्रवृत्तौ चतुर्थस्याध्यायस्य चतुर्थः पादः। समाप्तश्चायं ग्रन्थः

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते।

## No. (498) 27 ब्रह्मसूत्रवृत्तिः

| | |
|---|---|
| ग्रन्थकर्ता—सदाशिवब्रह्मेन्द्रः ? | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—$10\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—100 वत्सराः स्युः (कन्दर्प) |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-56 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

वेदान्तसूत्रग्रथितैः श्रुतितात्पर्यमौक्तिकैः।
भूषितं दक्षिणामूर्तेश्चरणद्वन्द्वमाश्रये॥
सूत्रकृद्भाष्यकृद्रूपौ नत्वा हरिहरौ गुरू।
वेदान्तसूत्रसिद्धान्ततात्पर्यं लिख्यते मया॥

इह श्रुत्यर्थनिर्णायकानां भगवद्व्याससूत्राणां भाष्यादिष्वर्थालोचनाया अतिगहनत्वात् सङ्ग्रहेण तज्ज्ञातुकामानां तत्तत्सूत्रसिद्धान्तार्थः क्रमेण संगृह्योच्यते :—

ओं अथातो ब्रह्मजिज्ञासा॥

अथ साधनचतुष्टयसम्पत्त्यनन्तरं अतः तद्यथेत्यादिना श्रेयःसाधनानामग्निहोत्रादिकर्मणामनित्यफलश्रवणेन साधनचतुष्टयसम्पत्तेश्च संभावितत्वाद्ब्रह्मजिज्ञासा कर्तव्येति॥

उपसंहारः—

अनावृत्तिः शब्दादनावृत्तिः शब्दात्। तत्सातिशयं चेदनित्यं स्यात्तथा चेद्विदुषामावृत्तिः प्रसज्जेतेति शङ्कायामर्चिरादिना ब्रह्मलोकं प्राप्तानां सगुणविदामनावृत्तिरेव न च पुनरावर्तत इत्यादिक्रममुक्त्य-भिधायकशब्दादतः सगुणविदामपि निर्गुणाश्रयणेनैवावृत्तिः।

सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्थेति ॥

इति श्रीसदाशिवब्रह्मेन्द्रकृतौ वेदान्तसूत्रवृतौ चतुर्थाध्यायस्य चतुर्थः पादः

कन्दर्पवत्सरे माघे दशम्यां भृगुवासरे।
लिखिता नरसिंहेन सूत्रवृत्तिरशेषतः ॥

प्रतिपाद्यविषयः—

ब्रह्मसूत्रव्याख्यानरूपो ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते, अमुद्रितश्च दृश्यते। यद्यप्य-स्मिन्कोशे प्रतिपादाध्यायसमाप्तौ "श्रीसदाशिवब्रह्मेन्द्रकृता"वित्येव कर्तृनामनिर्देशो दृश्यते, तथापि एतत्कर्तृकस्य वृत्त्यन्तरस्य एतद्विलक्षणस्य विद्यमानत्वात् अत्र निर्दिष्टः सदाशिवब्रह्मेन्द्रः अन्य इति ज्ञायते। अथ वा कर्त्रन्तरेण भवितव्यं स्यात् ॥

## No. (499) 2227 ब्रह्मसूत्रवृत्तिः

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—70 |
| प्रमाणम्—16×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-78 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

27 कोशवत्।

उपसंहारः—

27 कोशवत्।

..तिपाद्यविषयः—

27 कोशवत्।

वक्तव्यविशेषः—

27 कोशवत्।

No. (500) 4636 ब्रह्मसूत्रवृत्तिः

| | |
|---|---|
| ग्रन्थकर्ता—सदाशिवब्रह्मेन्द्रः ? | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—तालपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—62 |
| प्रमाणम्—14$\frac{1}{2}$×1$\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपि:—नागरीलिपिः | स्थिति:—शिथिला |
| पत्राणि—1-41 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

27 कोशवत्।

उपसंहारः—

चराचरव्यपदेशस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्। न जीवो म्रियत इत्यादिना शास्त्रोक्तजातकर्मादीनां देहविशेषणत्वेन जीवविषयत्वाभावात्तयोर्जन्ममरणयोर्व्यपदेशस्तु स्थावरजङ्गमविषयो मुख्य एव। जीवे तु भाक्तो गौणः स्यात्। कुतः? जन्ममरणव्यपदेशस्य तद्भावभावित्वात्। देहोत्पत्तिनाशान्वयव्यतिरेकानुविधायित्वादिति। नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः जीवात्मा नोत्पद्यते। कुतः? उत्पत्तिप्रकरणेषु जीवोत्पत्तेरश्रवणात्। ताभ्यः महानज आत्मा, अजो नित्य इत्यादि श्रुतिभ्यो जीवस्य नित्यत्वावगमाच्च। अतः परस्मादात्मनः सर्व एव आत्मानो व्युच्चरन्तीत्युत्पत्तिवाक्यमौपाधिकदेहादिजन्मालम्बनमिति। ज्ञाऽत एव॥

प्रतिपाद्यविषयः—

27 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः 2-3-17 पर्यन्तो ग्रन्थो विद्यते।

## No. (501) 3858 ब्रह्मसूत्रवृत्तिः (ब्रह्मतत्त्वप्रकाशिका)

| | |
|---|---|
| ग्रन्थकर्ता—सदाशिवेन्द्रः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—64 |
| प्रमाणम्—17×2 अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-86 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

आम्नायान्तैकसंसिद्धमादिमध्यान्तवर्जितम् ।
आनन्दघनमापूर्णं किंचित् ज्योतिरुपास्महे ॥

नमस्त्रय्यन्तकान्तारविहारैकपटीयसे ।
वादिमत्तभसंहर्त्रे व्यासकेसरिणे सते ॥

स्तुवन्मोहतमस्तोमभानुभावमुपेयुषः ।
स्तुमस्तान् भगवत्पादान् भवरोगभिषग्वरान् ॥

यद्वाणीद्युमणिध्वस्ता मन्मोहध्वान्तसन्ततिः ।
श्रीगुरून्भावयामस्तान् त्रय्यन्ताम्बुजभास्करान् ॥

श्रीमद्देशिकपादाब्जपरिचर्याबलादहम् ।
भाष्यानुगां ब्रह्मसूत्रवृत्तिं कुर्वे यथामति ॥

इह खलु भगवान्बादरायणः प्रेक्षावत्प्रवृत्त्यौपयिकमापाततस्त्रय्यन्तवचोभिः प्रतिपन्नमनुबन्धजातं न्यायतो निर्णेतुमिदमारचयाञ्चकार—अथातो ब्रह्मजिज्ञासेति ।

अत्राथशब्देन साधनचतुष्टयसंपत्त्यानन्तर्यमुच्यते, अतःशब्देन साधनचतुष्टयस्य संभावना ।

उपसंहारः—

निर्गुणब्रह्मविदां त्वावृत्तिशङ्कैव नास्ति यतः सगुणविदामपि (अत्र लोपः) अनावृत्तिः शब्दादिति सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्थः ॥

यज्ज्ञानाज्जीवतो मुक्तिरुत्क्रान्तिर्गतिरुत्तरा ।
ब्रह्मप्राप्तिः प्रत्यपादि तदस्मि ब्रह्म चिद्घनम् ॥

यस्यापाङ्गनिरीक्षणाद्भवरतिं भीतिप्रदामुज्झह-
स्त्र्यन्तार्थविमर्शनात् गतमहामायोऽभवं सन्ततम् ।
तं शुद्धाद्वयबुद्धमुक्तमनघं कारुण्यपूर्णं शिवं
पूर्णानन्दमहाप्रभावमतुलं वन्दे गुरुं शाश्वतम् ॥

जडः क्वाहं बालः क च गहनवेदान्तसरणि-
स्तथाप्याम्नायार्थं परमशिवयोगीन्द्रकृपया ।
विज्ञानव्याख्यानं व्यरचयमहं वेदशिरस-
स्तदेतत्क्षन्तव्यं मयि सदयदृष्ट्या बुधजनैः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्परमशिवेन्द्रसरस्वतीपादाब्जसेवापरायणेन श्रीसदाशिवेन्द्र-सरस्वत्या विरचितायां ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां चतुर्थस्याध्यायस्य चतुर्थः पादः । समाप्तश्चाध्यायः

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च दृश्यते ॥

## No. (502) A 408 ब्रह्मसूत्रार्थचिन्तामणिः

| | |
|---|---|
| ग्रन्थकर्ता—वाञ्छेश्वरः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—28 |
| प्रमाणम्—$12\frac{3}{4} \times 7\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-108 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

वन्दे दुण्डिं महालिङ्गं विश्वेशं मणिकर्णिकाम् ।
ईश्वरश्रीनिवासार्याहोबलाख्यगुरूत्तमान् ॥

श्रीमत्कवेरजातीरं विद्वद्बृन्दोपशोभितम् ।
अत्युत्तमशिवक्षेत्रविष्ण्वादिस्थानमस्ति हि ।
शाहजीन्द्रपुरं नाम तत्रास्ते दिक्षु विश्रुतम् ॥

तत्र वाञ्छेश्वरो नाम सर्वशास्त्रविशारदः ।
आसीत्तस्य सुतः श्रीमान् माधवः सर्वशास्त्रवित् ॥

तत्पुत्रो नरसिंहाख्यो वेदवेदाङ्गपारगः ।
तत्पुत्रः श्रुतिशास्त्रार्थविचारणकुतूहली ॥

श्रीवाञ्छेश्वरनामासौ शिष्टोऽह्मोवलवंशजः ।
माहिषं शतकं येन प्रपितामहनिर्मितम् ॥

व्याख्यातं सम्प्रदायार्थप्रतिपालनपूर्वकम् ।
हिरण्यकेशिसूत्रं च व्याख्यातं कृत्स्नमेव तु ॥

बोधायनप्रोक्तसोमसूत्रस्य विवृतिं मुदा ।
दत्तचिन्तामणिं चैव श्राद्धचिन्तामणिं तथा ॥

श्री भाट्टदीपिकाव्याख्यां भाट्टचिन्तामणिं तथा ।
कृतवान्काकतालीयवादार्थं योऽतिदुर्घटम् ॥

स ब्रह्मसूत्रसिद्धान्तान् संगृह्णाति यथामति ।
स्वमनीषाविशुध्यर्थं तद्गृह्णन्तु मुदा बुधाः ॥

प्रारीप्सितस्य ग्रन्थस्य निर्विघ्नेन परिसमाप्त्यर्थं शिष्टाचारपरिपालनाय च परममङ्गळरूपं ब्रह्म निर्दिशति—ब्रह्मानन्देति ।

ब्रह्मानन्दचिदात्मकं श्रुतिशिरोवेद्यं जगत्कारणं
नित्यं स्वप्रभमद्वयं सुविमलं जीवो यदंशश्श्रुतः ।
कर्तृत्वादिमतिस्तु दोषजनिता बुध्यात्मभेदाग्रहो
दोषस्तस्य निवृत्तयेऽस्य सततं कुर्याद्विचारं सुधीः ॥

उपसंहारः—

मुक्तो योगी भोग्यस्रष्टा स्वतन्त्रस्वाराज्यादीन्भुङ्क्ते ईशप्रसादात् ।
क्षित्यादीनां सृष्टिहेतुः परात्मा सर्वज्ञोऽसौ पालकः साम्बमूर्तिः ॥

ब्रह्मलोकं प्राप्तानामुपासकानां सङ्कल्पमात्रेण भोगयोग्यदेहेन्द्रियादिस्रष्टृत्वमेव न तु वियदादिप्रपञ्चस्रष्टृत्वम् । वियदादिसृष्टिप्रकरणेषु सर्वत्र परमात्मन एव जगत्स्रष्टृत्वावगमान्न कापि योगिनो जगत्स्रष्टृत्वमवगम्यते । (तेन तेषां जगत्स्रष्टृत्वं) अन्यथा अनेकेश्वराङ्गीकारे कस्यचित्सिसृक्षा

कस्यचित्संजिहीर्षेति जगद्व्यवस्थानापत्तेः। आप्नोति स्वराज्यमिति श्रुतिस्तु ईश्वराभिप्रायेणाप्युपपद्यते। ईश्वरो ह्युपासनया तोषितो भोगसिद्ध्यै तेषां स्वाराज्यं ददाति मुक्तिं च तत्त्वविद्योत्पादनेन प्रयच्छति तस्माज्जगत्सृष्टौ स्वातन्त्र्याभावेऽपि भोगेषु स्वातन्त्र्यमस्तीतीश्वरस्यैव जगत्सृष्ट्यादिस्वातन्त्र्यसिति शिवम्। भो रामात्रसाम्यलिङ्गाच्चेति सूत्रार्थः॥

इति श्रीवाञ्छेश्वरविरचिते सूत्रार्थचिन्तामणौ निर्गुणसगुणब्रह्मोपासकानां मुक्तिब्रह्मलोकप्राप्तिनिरूपणं नाम षोडशं प्रकरणम्। चतुर्थाध्यायसूत्रार्थः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मसूत्रसिद्धान्तार्थः मूलव्याख्यारूपेण सम्यग्वर्ण्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते॥

No. (503) A 736 ब्रह्मसूत्रार्थसारसङ्ग्रहः (पुरुषार्थसुधानिधिः)

ग्रन्थकर्ता—ज्ञानेन्द्रस्वामी
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13×8¼ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-86

प्रतिपुटं पङ्क्तयः—22
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—1926
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 1499 कोशवत्।

उपसंहारः—

3565 कोशवत्।

प्रतिपाद्यविषयः—

C 1499 कोशवत्।

वक्तव्यविशेषः—

3565 कोशवत्।

## No. (504) C 1499 ब्रह्मसूत्रार्थसारसङ्ग्रहः (पुरुषार्थसुधानिधिः)

| | |
|---|---|
| ग्रन्थकर्ता —ज्ञानेन्द्रस्वामी | प्रतिपुटं पङ्क्तयः—25 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—$14\frac{3}{4} \times 7\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-32 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

अथातो ब्रह्मजिज्ञासा ॥ शान्तो दान्त इत्यादिश्रुतेः आत्मा वा अरे द्रष्टव्य इत्यादिश्रुतेश्च। अथ साधनचतुष्टयसम्पत्त्यनन्तरं, अतः अधिकारस्य सम्पूर्णत्वात् ब्रह्मजिज्ञासा कर्तव्या, ब्रह्मविचारः कर्तव्य इत्यर्थः। जिज्ञास्यस्य यतः यतो वा इमानि भूतानि जायन्त इत्यादिश्रुतौ अस्य प्रपञ्चस्य जन्मादि यतः कारणाद्भवति तद्ब्रह्मेत्यर्थः। जगज्जन्मस्थितिलय-कारणत्वं ब्रह्मलक्षणमुक्तं भवति। लक्षणमुक्त्वा प्रमाणमाह। शास्त्र-योनित्वात्। तन्त्वौपनिषदं पुरुषं पृच्छामीत्यादिश्रुत्या शास्त्रप्रमाणकत्वा-द्ब्रह्मणः अप्रामाणिकत्वं नास्तीत्यर्थः॥

उपसंहारः—

न च गङ्गाशन्तनुचक्रवर्तिप्रभृतीनां ब्रह्मलोकवासिनामपि हिरण्यगर्भ-शापवशात् भूलोके प्रत्यावृत्तिः पुराणादिषु प्रतिपाद्यत इति वाच्यम्; ब्रह्मलोकवासिभिः कैरपि रागद्वेषादिकं न कर्तव्यमिति ब्रह्मलोकवासिनां शिक्षार्थं हिरण्यगर्भेण शापे कृते सति तं शापं कंचित्कालं भूलोके अनुभूय पुनर्ब्रह्मलोकं गतानां शन्तनुचक्रवर्तिप्रभृतीनां ब्रह्मणा सह मुक्तेस्तेष्वेव पुराणेषु प्रतिपादितत्वेन न विरोधादिति भावः॥

इति ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः।

अनावृत्तिपादः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अद्वैतमतानुसारेण ब्रह्मसूत्राणामर्थो वर्ण्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते।

## No. (505) 3565 ब्रह्मसूत्रार्थसारसङ्ग्रहः (पुरुषार्थसुधानिधिः)

ग्रन्थकर्ता—ज्ञानेन्द्रस्वामी
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—17 × 1½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–60

प्रतिपुटं पङ्क्तयः—17
प्रतिपङ्क्त्यक्षराणि— 64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 1499 कोशवत्।

उपसंहारः—

व्यतिहारो विशिंषन्ति हीतरवत्। सगुणब्रह्मजीवयोः व्यतिहारः परस्पराभेद एव ध्यातव्यः। कुतः विशिंषन्ति, त्वं वा अहमस्मि भगवता देव ते अहं वै त्वमसीत्यादिश्रुतयः परस्पराभेदं ध्यातव्यं विशिंषन्ति प्रतिपादयन्ति खलु। तत्र दृष्टान्तमाह—इतरवत्। त्वं ब्रह्मासि अहं ब्रह्मास्मीत्यादिवाक्यवदित्यर्थः। यथा त्वं ब्रह्मासि अहं ब्रह्मास्मीति प्रतिपादयतीत्यर्थः। वाक्यं निर्गुणब्रह्मजीवयोः परस्पराभेदं ध्यातव्यं प्रतिपादयति। एवं त्वं वा अहमस्मीत्यादिवाक्यं सगुणब्रह्मजीवयोः परस्पराभेदमेव ध्यातव्यं प्रतिपादयतीत्यर्थः। उपसंहारो अर्थाभेदादिसूत्र सामान्यतः सजातीऽयोपासनासु भिन्नशाखागतानां गुणानां उपसंहार उक्तः, इदानीं तु................।

प्रतिपाद्यविषयः—

C 1499 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितस्तृतीयाध्यायतृतीयपादे व्यतिहारो विशिंषन्ति हीतरवदिति सूत्रपर्यन्तो ग्रन्थो विद्यते। मुद्रितश्च दृश्यते॥

## No. (506) 1554 ब्रह्मामृतवर्षिणी (सूत्रवृत्तिः)

ग्रन्थकर्ता — धर्मभट्टः
पत्रविशेषः — ताळपत्रात्मकः
प्रमाणम् — $19\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः — आन्ध्रलिपिः
पत्राणि — 1-117

प्रतिपुटं पङ्क्तयः — 10
प्रतिपङ्क्त्यक्षराणि — 94
कालः (कोशस्य) — ?
स्थितिः — समीचीना
समग्रोऽसमग्रो वा — समग्रः

उपक्रमः—

श्रीरामभद्राश्रमपादपद्मं
वन्दारुवृन्दारकवृक्षतुल्यम् ।
प्रणम्य सद्यस्सकलार्थसिद्ध्यै
लिखामि पाराशरसूत्रवृत्तिम् ॥
श्रीरामचरणद्वन्द्वमद्वन्द्वानन्दसाधनम् ।
नमामि यद्रजोयोगात्पाषाणोऽपि सुखं गतः ॥

नित्याध्ययनविधिना आधीतस्वाध्यायमापातज्ञानवन्तं पुरुषार्थवन्तं ऐहिकामुष्मिकफलेषु विरक्तमुपलभमानः परमकारुणिको मुनिः सूत्रयामास— अथातो ब्रह्मजिज्ञासेति ॥ अत्राथशब्देन साधनचतुष्टयसंपत्त्यानन्तर्यमुच्यते। तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत इत्यादिना कर्मफलानामनित्यत्वम्, परीक्ष्य लोकान्कर्मचितान्। निर्वेदमायान्नास्त्यकृतः कृतेनेति। वैराग्यम्, कर्मफलेषु सूचितम्। शान्तो दान्त इत्यादिना शान्तिः, न पुनरावर्तत इतिश्रुत्या मोक्षस्य नित्यत्वेन तत्रेच्छा। एतदानन्तर्यमेव साधनचतुष्टयसम्पत्त्यानन्तर्यम्। अर्थान्मोक्षकामोऽधिकारी सूच्यते ॥

उपसंहारः—

तस्माद्ब्रह्मविदां निरस्तानर्थव्रातानां स्वप्रभनिरतिशयानन्दात्मनाऽवस्थितिरिति सिद्धम् ॥ सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्था ॥

यस्सर्वश्रुतिवन्दिवन्दिततनुर्मायात्मनिद्रां गतः
सुप्तोऽस्मिन्भवपट्टणे परिमिते कल्पान्ततल्पान्तरे ।
यस्सर्वापरिपन्थिनाङ्गनयजाप्रज्ञाप्रवातान्तज-
प्रज्ञालभ्यसुखाकृतिः कृतिमिमां रामः स गृह्णातु नः ॥

अत्राध्यायचतुष्टयार्थः सूचितः ॥

विदुषां कण्ठभूषेयं मया वृत्तिः कृता प्रभो।
व्यासवाङ्मणिसंदब्धा प्रीतये तेऽस्तु सर्वदा ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमुकुन्दाश्रमश्रीचरणशिक्षितस्य श्रीमहोपाध्यायश्रीरामचन्द्रार्य-प्रेमास्पदशिष्यस्य तिरुमलार्यतनूजस्य धर्मभट्टस्य कृतौ ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां चतुर्थस्याध्यायस्य चतुर्थः पादः। समाप्तश्चाध्यायः। समाप्तं चेदं शास्त्रम्.

प्रतिपाद्यविषयः—

ब्रह्मसूत्राणां विस्तृतव्याख्यानरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। मुद्रितश्च दृश्यते।

## No. (507) C 1771 ब्रह्मामृतवर्षिणी (सूत्रवृत्तिः)

| | |
|---|---|
| ग्रन्थकर्ता—धर्मभट्टः | प्रतिपुटं पङ्क्तयः—28 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—12×4 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-147, 1-15 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

1554 कोशवत्।

उपसंहारः—

1554 कोशवत्।

प्रतिपाद्यविषयः—

1554 कोशवत्।

वक्तव्यविशेषः—

1554 कोशवत्।

## No. (508) 2179 ब्रह्मामृतवर्षिणी (सूत्रवृत्तिः)

ग्रन्थकर्ता—धर्मभट्टः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$14\frac{3}{4} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–253

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)— ?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

1554 कोशवत् ।

उपसंहारः—

सांपराये तर्तव्याभावात्तथाह्यन्ये ॥ पूर्वं विद्यायाः कर्म ....... वं सिद्धं कृत्वा केवलहानश्रवणे उपायनस्योपसंहार उक्तः । इदानीं विद्यायाः कर्महानि ......... नास्तीत्याक्षेपात्सङ्गतिः । पर्यङ्कस्थ-ब्रह्मोपासकस्य देह .........

प्रतिपाद्यविषयः—

1554 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः 3-3-27 पर्यन्तो ग्रन्थः विद्यते ॥

## No. (509) 4242 ब्रह्मामृतवर्षिणी (सूत्रवृत्तिः)

ग्रन्थकर्ता—धर्मभट्टः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$18 \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1–191

प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—70
कालः (कोशस्य)— ?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

1554 कोशवत् ।

उपसंहार:—

दर्शनाच्च। दर्शयति च श्रुतिरङ्गाश्रितोपासनानामसमुच्चयम्। एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽधिरक्षतीति। ऋग्वेदादिविहिताङ्गलोपे व्याहृतिहोमप्रायश्चित्ताभिज्ञत्वं ब्रह्मण एवंवित्त्वम्‌ सर्वोपासनानां समुच्चये हि विज्ञानवताब्रह्मणा परिव्यात्वमितरेषामृत्विजां न स्यात्सर्वेषां सर्ववित्त्वादस्ति च परिपाल्यत्वकीर्तनम्। तस्मान्न सर्वोपासनासमुच्चय इति सिद्धम्॥

इति ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां तृतीयाध्यायस्य तृतीयः पादः

प्रतिपाद्यविषयः—

1554 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः तृतीयाध्यायतृतीयपादसमाप्तिपर्यन्तो ग्रन्थभागो विद्यते॥

## No. (510) 81 ब्रह्मामृतवर्षिणी (सूत्रवृत्तिः)

ग्रन्थकर्ता—धर्मभट्टः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$18\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि 1-49

प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—86
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

1554 कोशवत्।

उपसंहारः—

कल्पनात्। समाप्तः प्रासङ्गिकोऽधिकारविचारः। इदानीं प्रकृतवाक्यार्थविचारं प्रवर्तयिष्यामः। शब्दादेव प्रमित इत्यत्र ब्रह्मवाक्ये जीवानुवादो ब्रह्मज्ञानायेत्युक्तम्। न तथेह यदिदमिति वाक्ये प्राणानुवादो युक्तः। स्वरूपेणापि कल्पितस्य प्राणस्य ब्रह्मैक्यायोगादिति प्रत्युदाहरणसङ्गत्यास्यारम्भः। प्रासङ्गिकत्वान्नाव्यवहितेन सङ्गत्यपक्षौ। पूर्वपक्षे प्रणोपास्तिः फलम्। सिद्धान्ते निर्विशेषब्रह्मज्ञानमिति भेदः। काठकवाक्यं पठ्यते।

प्रतिपाद्यविषयः—

1554 कोशवत्।

वक्तव्यविशेषः —

अस्मिन्कोशे 1-3-39 सूत्रव्याख्यानपर्यन्तभागो ग्रन्थो विद्यते॥

## No. (511) B 470 ब्रह्मोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—7½×6¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-13 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू-ओं सह नाववत्विति शान्तिः। अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति। नाभिर्हृदयं कण्ठं मूर्धा च। तत्र चतुष्पादं ब्रह्म विभाति। जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्तौ रुद्रस्तुरीयमक्षरमादित्यो विष्णुश्चेश्वरश्च स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्विदितम्। यत्र लोका न लोका देवा न देवा वेदा न वेदा यज्ञा न यज्ञा माता न माता पिता न पिता, स्नुषा न स्नुषा, चण्डालो न चण्डालः पौल्कसो न पौल्कसः।

भा—ब्रह्माख्यं परमं सूत्रं प्रोच्यते यत्र पावनं।
एतां ब्रह्मोपनिषदं व्याख्यास्येऽन्वर्थसंज्ञकां॥

अथेति

उपसंहारः—

भा-सर्पिरिव सर्वव्यापिनं सप्रतियोगिकं परमात्मानं सर्वतपसां मूलं तत्परं निष्प्रतियोगिकं ब्रह्म उपनिषत् समीपे तदभेदेन नितरां सीदतीति द्विकर्मणि क्तः। यथा सामान्यात्मविद्या जीवात्मानं परमात्मानं नयति तथा विशेषात्मविद्या परमात्मानं परं ब्रह्म नयतीति सर्वमनवद्यम्। तद्ब्रह्मोपनिषत्। परमित्यभ्यास उपनिषत्परिसमाप्तिद्योतनार्थः।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ ब्रह्मोपनिषद्भाष्यम् समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मविष्णुरुद्रतुरीयभेदेन ब्रह्मणश्चतुष्पात्वं परिकल्प्य, तुरीयं ध्यायतः सर्वत्र समुच्चित्तत्वं, अन्तः सूत्रस्य परमात्मानुभवरूपस्य विद्यमानत्वात् बहिः सूत्राभावेऽपि तस्य ब्राह्मणत्वसम्पत्तिश्च प्रदर्श्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (512) C 463/2 भगवद्गीताभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः

पत्रविशेषः—कागदपत्रात्मकः

प्रमाणम् —12×5¼ अङ्गुलानि

लिपिः— देवनागरीलिपिः

पत्राणि —1–152

प्रतिपुटं पङ्क्तयः—11

प्रतिपङ्क्त्यक्षराणि —52

कालः (कोशस्य)—1760 (विक्रमसंवत्सरे)

स्थितिः—समीचीना

समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकास्सप्तद्वीपा च मेदिनी ॥

स भगवान्सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तं ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणधर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास । द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च जगतः स्थितिकारणं प्राणिनामभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्रह्मणाद्यैर्वर्णिभिराश्रमिभिश्चानुष्ठीयमानो दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवृद्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन किल संबभूव ॥

उपसंहारः—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥

यत्र यस्मिन्पक्षे योगेश्वरः सर्वयोगानामीश्वरः, तत्प्रभवत्वात्सर्वयोगबीजस्य, कृष्णः सर्वयोगेश्वरः कृष्णो यत्र पार्थो यस्मिन्पक्षे धनुर्धरो गाण्डीवधन्वा तत्र श्रीः तस्मिन्पाण्डवानां पक्षे श्रीः विजयः तत्रैव श्रियोविशेषो विस्तारो भूतिः, ध्रुवा अव्यभिचारिणी नीतिः नयः इत्येव मतिः ममेति एवमिति ॥

इति श्रीमद्गोविन्दभगवत्पादपूज्यपादशिष्यश्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवत्पादकृतौ श्रीभगवद्गीताभाष्ये सर्वोपनिषदर्थप्रतिपादनमोक्षयोगो नामाष्टादशोऽध्यायः ।

श्रीगीताभाष्यं समाप्तम्

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

विक्रमसंवत्सरश्रावणशुद्धत्रयोदश्यां कोदण्डरामभट्टलब्राशिनदि गीताभाष्यं समग्रम् ॥

प्रतिपाद्यविषयः—

श्रीभगवद्गीतायां अद्वैतरीत्या विवरणं क्रियते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च दृश्यते ॥

## No. (513) C 258 भगवद्गीताभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—7×4¾ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–62, 1–16,

प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

सप्तमेऽध्याये द्वे प्रकृती सूचिते परमेश्वरस्य—त्रिगुणात्मिका अष्टधा भिन्ना अपरा, तस्याः संसारहेतुत्वात्, परा चान्या जीवभूता क्षेत्रज्ञलक्षणा ईश्वरात्मिका। याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते। तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वत ईश्वरस्य तत्त्वनिर्धारणाय क्षेत्राध्याय आरभ्यते ॥

**उपसंहारः—**

एतद्धि जन्मसामग्रथमिति च मानवं वाक्यम् यतः । एतत्परमार्थतत्त्वं श्रुतवानसि अतः कृतार्थस्त्वं भारतेति ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यशंकरभगवत्पादकृतौ श्रीगीताभाष्ये पञ्चदशोऽध्यायः

**प्रतिपाद्यविषयः—**

C 463/2 कोशवत् ।

**वक्तव्यविशेषः—**

अस्मिन्कोशे त्रयोदशपञ्चदशाध्यायद्वयमात्रं विद्यते ॥

## No. (514) B 240 भगवद्गीताभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—30 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$7\frac{3}{4} \times 6$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1–171 | समग्रोऽसमग्रो वा—समग्रः |

**उपक्रमः—**

(प्रथमपत्रे अङ्गन्यासादिकम्) द्वितीये—

कृष्णात्मैक्यमवाप यत्प्रकटितैर्योगैः सदैवार्जुनो
यस्यामेव समस्तवेदशिरसामर्था निगूढाः स्वयम् ।
यामाश्रित्य तरन्ति संसृतिमिमां सर्वेऽपि लोका इमां
गीतां भागवतीं सुभाष्यसहितां निर्माय शर्माश्रुयाम् ॥
सर्वासूपनिषत्स्वधीत्य विधितः सन्निश्चितार्थास्त्वपि
श्रीमत्पञ्चमवेदसारभरिता लोकोपकाराय च ।
गीतार्थास्तु यथार्थतो मनसि मे सर्वे निगूढा अपि
श्रीमत्सुन्दरतातपादकृपया प्रादुर्भवन्तु स्फुटम् ॥

अत्र खलु मुमुक्षूणां सकलवेदान्तरहस्यार्थान् सम्यगवबोधयितुकामेन परमकारुणिकेन भगवता वेदव्यासेन श्रीकृष्णार्जुनसंवादात्मिका गीता मध्ये महाभारतं प्रतिष्ठापितास्ति। तामेनां पूर्विकैर्बहुशो व्याख्यातपूर्वामपि भागवतीं गीतामीशादिमुक्तिकान्ताष्टोत्तरशतोपनिषदित्यविरोधेन सभाष्यां विधातुं सर्वान्तर्यामिणा भगवता नियुक्तेन मया भाष्यं यथावदारच्यते।

उपसंहारः—

ननु पूर्वगीतायामष्टादशभिरध्यायैर्विस्तरेणोक्तमेवार्थमुत्तरगीताभिरध्यायैः संक्षेपेणावगतिसौकर्य.................. ..या भगवानुक्तवानित्यतः पूर्वोत्तरगीतयोरेकवाक्यतैव वक्तव्या। अन्यथा धर्मब्रह्मजिज्ञासा ........योः पूर्वोत्तरमीमांसयोरिव ब्रह्मतदनुभूतिजिज्ञासाविषययोरुत्तरमीमांसोत्तरोत्तरमीमांसयोरिव चोभयवाक्यतापत्तेरिति चेदत्रोच्यते—नायं दोषः; अष्टोत्तरशतोपनिषच्छास्त्रस्यैकवाक्यतायां सत्यामपि पूर्वोत्तरविभागेन प्रवृत्तः....................तयोः साधनप्रवचनतारतम्येनोभयवाक्यतापत्तेः। यद्येतेषामष्टादशसङ्ख्यानामध्यायानां मध्ये यत्र कुत्रापि ब्रह्मप्रणवविवरणादीनि साधनान्युक्तानि स्युः तदा भगवानुक्तमेवार्थं पुनरुक्तवानिति वक्तुं शक्यम्। न तु तदस्ति; न चार्जुनस्य अनवगतगीतार्थत्वं विस्मृतगीतार्थत्वं वा वाच्यम्, 'नष्टो मोहः स्मृतिर्लब्धेत्यर्जुनवाक्यदर्शनात्।' तस्मादुत्तरगीताशेषत्वादनेन पूर्वगीताशास्त्रेण साधकस्य जीवन्मुक्तिरेव स्यादिति सिद्धम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ

भगवद्गीताभाष्येऽष्टादशोऽध्यायः

प्रतिपाद्यविषयः—

भगवद्गीताव्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (515) A 773 भगवद्गीताभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागद्पत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—$13\frac{1}{4} \times 8\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—1934 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–230 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 240 कोशवत् ।

उपसंहारः—

B 240 कोशवत् ।

प्रतिपाद्यविषयः—

B 240 कोशवत् ।

वक्तव्यविशेषः—

B 240 कोशवत् ।

## No. (516) 2534 भगवद्गीताभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—96 |
| प्रमाणम्—$19\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–138 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

C 463/2 कोशवत् ।

उपसंहारः—

C 463/2 कोशवत् ।

प्रतिपाद्यविषयः—

C 463/2 कोशवत् ।

वक्तव्यविशेषः—

C 463/2 कोशवत् ।

## No. (517) 984 भगवद्गीताभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-189

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 463/2 कोशवत् ।

उपसंहारः—

C 463/2 कोशवत् ।

प्रतिपाद्यविषय—

C 463/2 कोशवत् ।

वक्तव्यविशेषः—

C 463/2 कोशवत् ।

## No. (518) A 271 भगवद्गीताभाष्यम् (पैशाचम्)

ग्रन्थकर्ता—हनूमान्
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{4} \times 7\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-142

प्रतिपुटं पङ्क्तयः—20
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

प्रणम्य परमात्मानं विष्णुं विष्णुं जगद्गुरुम् ।
परमात्मावबोधार्थं गीताव्याख्या मयोच्यते ॥

अस्य संबन्धाभिधेयप्रयोजनान्युच्यन्ते । मोक्षस्तावत्प्रयोजनम् । स च गीताशास्त्रप्रतिपादनात्परमात्मसंबन्धादेवेति परमात्मस्वरूपमभिधेयम् । परमात्मस्वरूपावबोधस्यास्य च गीताशास्त्रस्य साधनलक्षणः संबन्ध

इति विशिष्टसंबन्धाभिधेयप्रयोजनवद्गीताशास्त्रम् । अत्र चार्जुनस्य राज्यार्थं शत्रून् विजिगीषोर्धार्तराष्ट्रैः सह युद्धं संप्राप्तम् । अत्र च सहायार्थं वृतेन भगवता वासुदेवेन सह योद्धुं युद्धभूमिं प्रविष्टोऽर्जुन उभयोरपि सेनयोर्योद्धुं व्यवस्थितानाचार्यपितृपितामहपुत्रमित्रादीन् दृष्ट्वा एते मया हन्तव्याः मदर्थं चैते मरिष्यन्तीति पर्यालोच्य शोकमोहाभिभूत-चित्ततया बहु प्रलप्य न योत्स्ये इत्युक्त्वा युद्धादुपरराम ॥

उपसंहारः—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥

यत्र यस्मिन्पक्षे योगेश्वरः सर्वयोगानामीश्वरः कृष्णः स्थितः, यत्र पार्थो धनुर्धरः उद्यतगाण्डीवः तत्र तस्मिन्पक्षे श्रीर्देवता विजयार्थं विजयः शत्रूणां धर्षणार्थं भूतिः विभूतिः ध्रुवा नित्या नीतिः नयः प्रतिज्ञाताधिका इति इत्थं मम मतिः निश्चयः मम सञ्जयस्य ॥ इतिकरणं गीताशास्त्रस्य परिसमाप्त्यर्थम् ॥

इति पैशाचे श्रीभगवद्गीताभाष्ये अष्टादशोऽध्यायः

प्रतिपाद्यविषयः—

भगवद्गीताव्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च दृश्यते ॥

## No. (519) 1758 भगवद्गीताभाष्यम् (पैशाचम्)

ग्रन्थकर्ता—हनूमान्
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्— $10\frac{3}{4} \times 2$ अङ्गुलानि
लिपिः—मलयाळलिपिः
पत्राणि—1–109

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—44
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

A 271 कोशवत् ।

उपसंहारः—

A 271 कोशवत् ।

प्रतिपाद्यविषयः—

A 271 कोशवत् ।

वक्तव्यविशेषः—

A 271 कोशवत् ।

## No. (520) 2479 भगवद्गीताभाष्यम् (पैशाचम्)

| | |
|---|---|
| ग्रन्थकर्ता—हनूमान् | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—72 |
| प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-53 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

A 271 कोशवत् ।

उपसंहारः—

तपामीति । अहं तपामि अहमादित्यो भूत्वाऽष्टौ मासानहं निगृह्णामि आदित्यो भूत्वा चतुरो मासान् अमृतं चैव देवानाम्, मृत्युश्च मर्त्यानाम् सत्तासंबन्धितया विद्यमानं सद्विपरीतमसत् हे अर्जुन ।

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥

प्रतिपाद्यविषयः—

A 271 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः नवमेऽध्याये "ते तं भुक्त्वा" तिश्लोकपर्यन्तो भागो विद्यते ॥

## No. (521) 129 भगवद्गीताभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—18×1¾ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-23

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—84
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 463/2 कोशवत् ।

उपसंहारः—

तस्मात्पापिष्ठं अज्ञानसंभूतं अज्ञानादविवेकाज्जातं हृत्स्थं हृदि बुद्धौ स्थितं ज्ञानासिना शोकमोहादिदोषहरं सम्यग्दर्शनं ज्ञानं तदेवासिः तेन ज्ञानासिनात्मनः स्वस्य, आत्मविषयत्वात् न हि परस्य संशयः परेण च्छेत्तव्यतां प्राप्ता, येन स्वस्येति विशेष्यते । अत आत्मविषयोऽपि स्वस्यैव भवति । छित्त्वैनं संशयं स्वविनाशहेतुभूतं योगं सम्यग्दर्शनोपायं कर्मानुष्ठानमातिष्ठ कुर्वित्यर्थः । उत्तिष्ठ च युद्धायेदानीं वा भारतेति ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य शंकरभगवत्पादस्य कृतौ श्रीगीताभाष्ये चतुर्थोऽध्यायः

प्रतिपाद्यविषयः—

C 463/2 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितश्चत्वारोऽध्यायाः विद्यन्ते ॥

## No. (522) 745 भगवद्गीताभाष्यटिप्पणी

ग्रन्थकर्ता—अनुभूतिस्वरूपः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—8×1½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-84
प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—38
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥

श्रीगीताशास्त्रं व्याचिख्यासुर्भगवान्भाष्यकारः विघ्नोपशमनादिप्रयोजनसिध्यर्थं "स्मृते सकलकल्याणभाजनं यत्र जायते ।" इत्यादिस्मृतिविहितनारायणानुस्मरणं मङ्गळं चिकीर्षुः पुराणान्तर्गतमेव श्लोकं पठति स्म । पुराणानामपि गीतार्थपरत्वप्रकटनाय पुराणव्याख्यातृसम्प्रदायप्रकटनाय च "नारायणः परोऽव्यक्ता" दिति । नराणां प्रतिबिम्बकल्पानां जीवानामयनमधिष्ठानबिम्बकल्पं ब्रह्म नरायणः नरायण एव नारायणः तद्धितोऽनन्यार्थः राक्षसवायसादिवत् । ननु—

उपसंहारः—

एकदेशिमतेन कर्मश्रुतेर्गतिमुक्त्वा इदानीं स्वाभिप्रायमाह—साक्षादेवेति । क्रियाकारकादिद्वैतस्य मिथ्यात्वेऽवगतेऽप्यर्थक्रिया सामर्थ्यानपहाराद्व्यावहारिकप्रामाण्यमिति भावः । यत्त्वित्यादिना दृष्टान्तावष्टम्भेन मिथ्याज्ञानं विनाप्यात्मनो मुख्यकर्तृत्वमाशंक्य परिहृतम् । उक्तं प्रमेयजातं संक्षेपतो निगमयति सुखप्रतिपत्तये—तस्मात्सन्निधिमात्रेणेत्यादिना ।

अनुभूतिस्वरूपाख्यो यतिश्चक्रेह टिप्पणिम् ।
व्याख्यासामर्थ्यसन्तापि पुंसां चित्तानुरञ्जकम् ॥

इति गीताभाष्यटिप्पणे अष्टादशोऽध्यायः

प्रतिपाद्यविषयः—

श्रीशंकराचार्यकृतस्य गीताभाष्यस्य संक्षेपतः व्याख्यारूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च दृश्यते ॥

No. (523) 3564 भगवद्गीताभाष्यटिप्पणी

| | |
|---|---|
| ग्रन्थकर्ता—अनुभूतिस्वरूपः | प्रतिपुटं पङ्क्तयः—13 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—76 |
| प्रमाणम्—$19 \times 2\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-24 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

745 कोशवत् ।

उपसंहारः—

745 कोशवत् ।

प्रतिपाद्यविषयः—

745 कोशवत् ।

वक्तव्यविशेषः—

745 कोशवत्

No. (524) 3541 भगवद्गीताभाष्यटीका

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञानः | प्रतिपुटं पङ्क्तयः—13 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—80 |
| प्रमाणम्—$17\frac{3}{4} \times 2$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—अतिशिथिला |
| पत्राणि—1-130 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

दृष्टिं मयि विशिष्टार्थकृपापीयूषवर्षिणीम् ।
हेरम्ब धेहि प्रत्यूहक्ष्वेळव्यूहनिवारिणीम् ॥

यद्वक्त्रपङ्केरुहसंप्रसूतं निष्ठामृतं विश्वविभागनिष्ठम् ।
साध्येतराभ्यां परिनिष्ठिताभ्यां तं वासुदेवं प्रणतोऽस्मि नित्यम् ॥

प्रत्यञ्चमच्युतं नत्वा गुरूनपि गरीयसः ।
क्रियते शिष्यशिक्षार्थे गीताभाष्यविवेचनम् ॥

कर्मनिष्ठाज्ञाननिष्ठेत्युपायोपेयभूतं निष्ठाद्वयमधिकृत्य प्रवृत्तं गीताशास्त्रं व्याचिख्यासुर्भगवान्भाष्यकारो विघ्नोपप्लवशमनादिप्रयोजनप्रसिद्धये प्रामाणिकव्यवहारप्रमाणकमिष्टदेवतातत्त्वानुस्मरणं मङ्गळाचरणं सम्पादयन्ननविशेषेणेतिहासपुराणयोर्व्याचिख्यासितगीताशास्त्रेणैकवाक्यतामभिप्रेत्य पौराणिकमेव श्लोकमन्तर्यामिविषयमुदाहरति—नारायण इति ॥

उपसंहारः—

राज्ञो धृतराष्ट्रस्य स्वपुत्रेषु विजयाशां शिथिलीकृत्य पाण्डवेषु तत्प्राप्तिमैकान्तिकीमुपसंहरति—इत्येवमिति । उपायोपायभावेन निष्ठाद्वयस्य प्रतिष्ठापितत्वात् कर्मनिष्ठा परम्परया ज्ञाननिष्ठाहेतुरिति शास्त्रार्थमुपसंहर्तुमितीत्युक्तम् । काण्डत्रयात्मकं शास्त्रं पदवाक्यार्थगोचरमादिमध्यान्तषट्केषु व्याख्यायागोचरीकृतं संक्षेपविस्तराभ्यां यो लक्षणैरुपपादितः सोऽर्थोऽन्तिमेन संक्षिप्य लक्षणेन विवक्षितः ॥

गीताशास्त्रमहार्णवोत्थममृतं वैकुण्ठकण्ठोद्भवं
श्रीकण्ठापरनामवन्मुनिकृतं निष्ठाद्वयद्योतितम् ।
निष्ठा यत्र मतिप्रसादजननी साक्षात्कृतिं कुर्वती
मोक्षे पर्यवसास्यती प्रतिदिनं सेवध्वमेतद्बुधाः ॥

प्राचामाचार्यपादानां पदवीमनुगच्छता ।
गीताभाष्ये कृता टीका टीकतां पुरुषोत्तमम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते गीताभाष्यविवेचनेऽष्टादशोऽध्यायः

प्रतिपाद्यविषयः—

शंकराचार्यकृतभगवद्गीताभाष्यव्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च दृश्यते ॥

## No. (525) 3602 भगवद्गीताभाष्यटीका

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञान: | प्रतिपुटं पङ्क्तय:—19 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—80 |
| प्रमाणम्—$18\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-163 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

3541 कोशवत् ।

उपसंहारः—

3541 कोशवत् ।

प्रतिपाद्यविषयः—

3541 कोशवत् ।

वक्तव्यविशेषः—

3541 कोशवत् ।

## No. (526) 4139 भगवद्गीताभाष्यटीका

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञानः | प्रतिपुटं पङ्क्तय:—16 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—36 |
| प्रमाणम्—$8 \times 2\frac{1}{4}$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—आन्ध्रलिपि: | स्थिति:—समीचीना |
| पत्राणि—1-143 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

3541 कोशवत् ।

उपसंहारः—

3541 कोशवत् ।

प्रतिपाद्यविषयः—

3541 कोशवत् ।

वक्तव्यविशेषः—

3541 कोशवत् ।

No. (527) 3845 भगवद्गीताभाष्यटीका

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञानः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—46 |
| प्रमाणम्—14 × 2½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—3-116 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

दर्शपूर्णमासादि स्वर्गसाधनं तथा श्रौतस्मार्तकर्मोपकृतमेव ब्रह्मज्ञानमिति ज्ञानकर्मसमुच्चयपरं शास्त्रमित्यर्थः। इति पदमाहुरित्यनेन पूर्वेण संबध्यते। पूर्वापरपर्यालोचनायां शास्त्रस्य समुच्चयपरत्वं निर्धारितमित्याशंक्याह—ज्ञापकं चेति। न केवलं ज्ञानं मुक्तिहेतुरपि तु समुच्चितमित्यस्यार्थस्य स्वधर्माननुष्ठाने पापप्राप्तिवचनसामर्थ्यलक्षणं लिङ्गं गमकमित्यर्थः।

उपसंहारः—

तथा चेति। तदनेन भगवतो नानाविधा विभूतिर्ध्येयत्वेन ज्ञेयत्वेन चोपदिश्य सर्वप्रपञ्चात्मकमस्येष्टं रूपं दर्शयित्वा "त्रिपादस्यामृतं दिवीति" प्रपञ्चातीतं निरुपाधिकं तत्त्वमुपदिशता परिपूर्णः सच्चिदानन्दैकतानस्तत्वदलक्ष्यार्थो निर्धारितः॥

इति गीताभाष्यटीकायां दशमोऽध्यायः

प्रतिपाद्यविषयः—

3541 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे अशोच्याननितिश्लोके "किं तर्ह्यग्निहोत्रादिश्रौतस्मार्तकर्मे" ति भाष्यव्याख्यामारभ्य 10 अध्यायाः समग्रा विद्यन्ते॥

## No. (528) 985 भगवद्गीताभाष्यानन्दगिरीयसंग्रहः

ग्रन्थकर्ता— ?
पत्रविशेषः —ताळपत्रात्मकः
प्रमाणम्—16 × 1¾ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—25-165

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—70
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3541 कोशवत् ।

उपसंहारः—

उपायोपेयभावेन निष्ठाद्वयस्य प्रतिष्ठापितत्वात् कर्मनिष्ठा परंपरया ज्ञाननिष्ठाहेतुः, ज्ञाननिष्ठा साक्षादेव मोक्षहेतुरिति शास्त्रार्थमुपसंहर्तुमितीत्युक्तम् ।

काण्डत्रयात्मकं शास्त्रं पदवाक्यार्थगोचरम् ।
आदिमध्यान्तषट्केषु व्याख्यायां गोचरीकृतम् ॥

श्रीगोविन्दमुखाब्जनिःसृतवचःपीयूषसंमिश्रितं
द्वन्द्वघ्नं भवदीर्घरोगशमनं तापापहं ग्रन्थिभित् ।
श्रीमच्छंकरयोगिवर्यरचितं निश्रेयसारोग्यदं
गीताभाष्यरसायनं सुमतयः सेवध्वमेतत्सदा ॥

इति श्रीगीताभाष्यानन्दगिरीयसंग्रहेऽष्टादशोऽध्यायः

प्रतिपाद्यविषयः—

3541 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः संमग्रो वर्तते । अमुद्रितश्च दृश्यते ॥

## No. (529) 746 भगवद्गीतामृत(निम्नगा)तरङ्गिणी
## (कर्णाटकभाषामयी गीताव्याख्या)

ग्रन्थकर्ता—राजकण्ठीरवः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—18 × 1¾ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-141

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—108
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

त्रिणयनमहं वन्दे देवं फणीन्द्रविभूषणं
शशियुतजटाजूटं वामीकृतार्धशरीरकम् ।
गरळधृतगरं विश्वोत्पत्तिस्थितिप्रलयप्रभुं
परमपुरुषं कन्दर्पघ्नं सदा ........ ॥

नवनीतलसत्कराम्बुजं परमानन्दमयं विलोकयेऽहम् ।
नवनीरदनीलदेहमेनं वसुदेवार्जितपुण्यपुञ्जमन्तः ॥

विघ्नसङ्घातभोगीन्द्रवैनतेयमहं भजे ।
मत्तेभमुखमव्यक्तं, महः सुरसुपूजितम् ॥

विद्याकुमुदसद्देहकौमुदीं वागधीश्वरीम् ।
सन्ततं नौम्यहं वाचां शारदा .......दां मुदा ॥

निर्धूताध्व....कुतर्कषण्डं सद्धीरसंसेवितपादपद्मम् ।
अद्वैतसिद्धान्तवचोऽनुकूलं चिद्रूपयोगीन्द्रमहं नमामि ॥

श्रीमद्देवनृपालरत्नविलसद्वंशाब्धिसंवर्धन-
प्रोद्यद्धामविभिन्नशत्रुनिवहप्रौढान्धकारोत्करः ।
राजा राजसमाननाब्जविभवो भूस्वर्गदेवप्रियो
विद्वन्मण्डलपोषणैकनिरतोऽभूद्राजकण्ठीरवः ॥

यस्य श्लक्ष्णकटाक्षमात्रविभवो हाराः सुदाराः शिरो-
भूषानूपुरकुण्डलप्रविलसत्काञ्च्यो रणत्कङ्कणे ।
आसीत्स्वादु सुवर्णमन्नमनघं स्वर्णं सुपर्णं नवं
क्षौमं क्षेममतोऽहमन्यमनिशं धन्यं न मन्ये भुवि ॥

तारहारवरकुण्डलकाञ्चीदामनूपुररणत्कटकाद्यैः ।
गेहवाह-रवत्तुदूकूलैः पोषयत्ययमहो निकटस्थान् ॥
श्रीराजकण्ठीरवभूवरेन्द्रः पुराणजालानि निशम्य सम्यक् ।
भयामयघ्नं भगवत्सुगीतं विचार्य चैतद्विवृतीप्सुरासीत् ॥
स राजकण्ठीरवभूमिपालो व्याख्यां सुकर्णाटकभाषयैव ।
करोति गीतामृतनिम्नगाख्यां गीतामृतस्यास्य जगद्धिताय ॥

ईजगत्तिनल्लि सकललोकहितार्थवागि देवकीदेवियल्लि अवतरिस्तन्था षड्गुणैश्वर्यसम्पन्ननाद श्रीकृष्णदेवरु शोकमोहगळिन्द केडिसल्पट्ट विवेकवुळ्ळ........नदिन्द स्वधर्मत्यागवर्णान्तरविहितधर्मानुष्ठानगल .. .... वुळ्ळ अर्जुननन्नु धर्मरहस्यज्ञानरहस्यगल उपदेशरूपवाद तेप्पदिन्द शोकमोहसागरदल्लि मुलुगि इद्दवनन्नु येत्तिदनु ।

उपसंहार:—

हे पार्थ यले अर्जुन एतानि कर्माण्यपि ई यज्ञादिकर्मगळन्नु सङ्गवन्नु फलवन्नु अपेक्षिसि माडलु योग्यवागिद्दन्थावल्ल.......। सङ्गं कर्तृत्वाभिमानवन्नु फलानि च फलगळन्नु त्यक्त्वा त्यजिसि कर्तव्यानीति माडलु योग्यवागिद्दन्थावु यम्बुदु मे ननगे निश्चितम् । नि.......... ......................
........................................................................................ .................
परिकीर्तितः हेळल्पट्टितु ।

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥

यत्कर्म आवदानोन्दु कर्मवन्नु दुःखमित्येव दुःखवु यन्दे कायक्लेशभयात् कायक्लेशवादीतु यम्ब भीतिदेशेयिन्द त्यजेत् त्यजिसुवनु सः आतनु राजसं त्यागं राजसवाद त्यागवन्नु कृत्वा माडि त्यागफलं त्यागके फलवाद मोक्षवन्नु न लभेत् पडयनु ॥ ८ ॥

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे कर्णाटकभाषया गीतायाः पदार्थौ वर्ण्यते ॥

वक्तव्यविशेष:—

अस्मिन्कोशे आदित अष्टादशाध्याये अष्टमश्लोकव्याख्यानपर्यन्तो ग्रन्थभागो विद्यते । अमुद्रितश्च दृश्यते ॥

## No. (530) A 490 भगवद्गीतार्थप्रकाशिका (मूलसहिता)

ग्रन्थकर्ता—रामचन्द्रेन्द्रः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$13\frac{1}{4} \times 8\frac{1}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–298
प्रतिपुटं पङ्क्तयः—49
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा —समग्रः

उपक्रमः—

गीतार्थं प्रत्यगद्वैतप्रविभक्तचतुष्पदम् ।
आत्मारामं नतिपदं कुर्वे नारायणाभिधम् ॥
त्रिपान्नारायणव्याप्तपाणिपादरजांसि नः ।
कुलदैवं नमस्तेभ्यः पुनस्तेभ्यो नमो नमः ॥
यस्मिन्वसति विश्वाळिर्विश्वाळौ यो वसन्स्वयम् ।
देदीप्यमानरूपोऽभूत्तं भजे देशिकोत्तमम् ॥
नत्वा श्रीगुरुपादाब्जं भाष्यसूक्त्यनुरोधतः ।
मन्दबुध्यनुरोधेन गीता व्याक्रियते मया ॥
अस्ति भाष्यादिकं तत्र पण्डितात्यधिकारतः ।
मन्दाळयनधकाशत्वात् तदर्थोऽयमुपक्रमः ॥
भाष्यानुरोधाद्व्याख्याया अनुबन्धादिकर्म यत् ।
न पृथग्वचनीयं स्यात् तदेवात्रोपयुज्यते ॥
नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥

इति श्रीमद्भगवद्गीताभाष्यादौ भाष्यकारप्रयुक्तश्रुत्यर्थपर्यालोचनयोपोद्घातसिद्धिः स्यादिति तदर्थं उच्यते ॥

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं प्राहुस्तेन नारायणः स्मृतः ॥

यद्वा नरशब्दतश्चराचरात्मकं शरीरजातमुच्यते । तत्र सन्निहिताश्चिदाभासा नारा उच्यन्ते ॥

उपसंहार:—

यत्र यस्मिन्पाण्डवपक्षे योगानां योगिनां चेश्वरः श्रीकृष्णो भगवान्वर्तते यत्र च पार्थो गाण्डीवधनुर्धरो जागर्ति तत्रैव ध्रुवा राज्यश्रीः ध्रुवो विजयो ध्रुवा विभूतिः ध्रुवा नीतिर्न्यायोऽपीति मे मम मतिर्निश्चयः ॥ इतिशब्दः शास्त्रपरिसमाप्त्यर्थः ॥

येन वेदान्तसिद्धान्तसारः सम्यक्प्रकाशितः ।
यान्ति यज्ज्ञानतो मुक्तिं तस्मिन् शाम्यतु मे मनः ॥
येन पार्थाय गीतान्त्यषट्कतस्तत्त्वमर्थयोः ।
लक्ष्यैक्यं फणितं मेऽद्य कैवल्यं सम्प्रयच्छतु ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवेन्द्रशिष्यरामचन्द्रेन्द्रकृतौ श्रीमद्भगवद्गीतार्थप्रकाशिकायां सर्ववेदान्तसिद्धान्तनैष्कर्म्यमोक्षयोगो नामाष्टादशोऽध्यायः समाप्तः

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च दृश्यते ॥

## No. (531) 3716 भगवद्गीताव्याख्या (तत्त्वार्थचन्द्रिका)

ग्रन्थकर्ता—राघवानन्दसरस्वती
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$18 \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः —ग्रन्थलिपिः
पत्राणि—1-67

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—68
कालः (कोशस्य) –?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

प्रणम्य कृष्णमीशानं श्रीनृसिंहं गिरं गुरून्
गीताशास्त्रार्थतत्त्वज्ञास्तदुक्तीः परिभाव्य च ।
सन्मुमुक्षुचकोराणामलसानां बहूक्तिषु
विरच्यते मुदे गीताशास्त्रतत्त्वार्थचन्द्रिका ॥

यत्सत्तामात्रमग्रे जगदिदमभवद्याद्वयैकस्वभावा
येक्षापूर्वं कृशानुं कमवनिमसृजन्नामरूपे च दिव्या ।

या चेदं स्वात्मसृष्टं जगदवति सदा संविदानन्दमूर्ति-
र्गीताङ्गा भारती सा मतिमतिविशदां मह्यमिष्टां प्रदद्यात् ॥

गीतादिव्यधुनीं प्राप्य मद्वाग्रथ्याविलोदकम् ।
प्राप्नुयादेव संशुद्धिमिति मे सफलः श्रमः ॥

अथ स भगवान् श्रीवासुदेवः सर्वज्ञः सर्वशक्तिरजोऽव्ययः सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुरग्रे मरीच्यादीन् प्रजापतीनुत्पाद्य वेदोक्तं प्रवृत्तिलक्षणमग्निहोत्रादिधर्मं ग्राहयामास । ततोऽन्यान्सनकसनन्दनादीन्महायोगिन उत्पाद्य वेदोदितं निवृत्तिलक्षणं ज्ञानवैराग्यादिधर्मं ग्राहयामास ॥

उपसंहारः—

अनिर्विण्णचेतसा अनिर्विण्णं निर्वेदरहितं चेतः तेन, "उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुने"ति न्यायेनापरिखिन्नचित्तेन योक्तव्यः कर्तव्य इत्यर्थः । पुनश्च किं कृत्वा स योक्तव्य इत्यत्राह—

सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥

सङ्कल्पप्रभवान् सङ्कल्पः शोभनाध्यासः प्रभवो हेतुर्येषां ते सङ्कल्पप्रभवाः तान् सर्वान्कामानशेषतो निःशेषं निर्लेपेन त्य ...........

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः षष्ठाध्याये चतुर्विंशतितमश्लोकव्याख्यानपर्यन्तो भागः विद्यते । अमुद्रितश्च दृश्यते ॥

## No. (532) 154 भगवद्गीताव्याख्या (पदयोजिनी) (मूलसहिता)

| | |
|---|---|
| ग्रन्थकर्ता—रामचन्द्रानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—52 |
| प्रमाणम्—$18 \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–162 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

श्रीरामादिदशावतारसमये रक्षोवधं कुर्वता-
कृष्णो जन्मनि राजगोपललनासक्तेन यल्लम्पटम् ।
तन्मोक्तुं हरिरेव जीवकलया सानन्दमाविर्बभौ
ब्रह्मानन्दसरस्वतीति यतिराट् नीलाद्रिसिंहासने ॥
(तद्दासदासोऽस्म्यहम् ॥)

इत्यादिरुपोद्घातः ।

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥

हे सञ्जय—धर्मक्षेत्रे पुण्यभूमौ कुरुक्षेत्रे मामकाः मत्पुत्राः पाण्डवाः पाण्डुपुत्राश्चैव युयुत्सवः योद्धुमिच्छन्तः समवेताः मिलिताः सन्तः किमकुर्वत किं चक्रुः ॥

सञ्जय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥

राजा दुर्योधनः व्यूढं व्यूहरचनया स्थितं, व्यूहो नाम पद्माद्याकारेण सेनासन्निवेशनम्, पाण्डवानीकं पाण्डवसैन्यं दृष्ट्वा तदा तस्मिन्काले आचार्यं द्रोणाचार्यं उपसङ्गम्य समीपं गत्वा वचनं वक्ष्यमाणं वाक्यमब्रवीत् ॥

उपसंहारः—

यत्र यस्मिन्पक्षे योगेश्वरः योगमायेश्वरः कृष्णः यत्र यस्मिन्पक्षे धनुर्धरो गाण्डीवधन्वा पार्थः तत्र तस्मिन् पाण्डवानां पक्षे श्रीः राज्यलक्ष्मीः ध्रुवा स्थिरा तत्रैव विजयः ध्रुवः तत्रैव भूतिः श्रियो विशेषविस्तारः ध्रुवा तत्रैव नीतिर्नयः ध्रुवा इति मे मम मतिर्निश्चयः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यब्रह्मानन्दसरस्वतीशिष्यरामचन्द्रानन्दसरस्वतीविरचितायां भगवद्गीताव्याख्यायां पदयोजिनीसमाख्यायां परमार्थतत्त्वनिर्णयमोक्षयोगो नामाष्टादशोऽध्यायः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे भगवद्गीतायाः संक्षेपेणार्थवर्णनं क्रियते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च ।

## No. (533) 3173 भगवद्गीताव्याख्या (पदयोजिनी)

ग्रन्थकर्ता—रामचन्द्रानन्दसरस्वती
पत्रविशेष:—ताळपत्रात्मकः
प्रमाणम्—$11\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपि:—ग्रन्थलिपि:
पत्राणि—1-150

प्रतिपुटं पङ्क्तय:—10
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—1191
स्थिति:—शिथिला
समग्रोऽसमग्रो वा—समग्र:

उपक्रम:—

154 कोशवत्।

उपसंहार:—

154 कोशवत्।

प्रतिपाद्यविषय:—

154 कोशवत्।

वक्तव्यविशेष:—

154 कोशवत्।

## No. (534) 3217 भगवद्गीताव्याख्या (पदयोजिनी)

ग्रन्थकर्ता—रामचन्द्रानन्दसरस्वती
पत्रविशेष:—ताळपत्रात्मक:
प्रमाणम्—$16 \times 1\frac{3}{4}$ अङ्गुलानि
लिपि:—ग्रन्थलिपि:
पत्राणि—1-133

प्रतिपुटं पङ्क्तय:—19
प्रतिपङ्क्त्यक्षराणि—64
काल: (कोशस्य)—खरवत्सरे
स्थिति:—अतिशिथिला
समग्रोऽसमग्रो वा—समग्र:

उपक्रम:—

154 कोशवत्।

उपसंहार:—

154 कोशवत्।

प्रतिपाद्यविषय:—

154 कोशवत्।

वक्तव्यविशेष:—

154 कोशवत्।

## No. (535) 321 भगवद्गीताव्याख्या (पदयोजनी)

| | |
|---|---|
| ग्रन्थकर्ता—रामचन्द्रानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—80 |
| प्रमाणम्—$16\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—अतिशिथिला |
| पत्राणि—1-51 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

154 कोशवत्।

उपसंहारः—

हे अर्जुन अथ वा तवैतेन एवमादिना बहुना ज्ञातेन किं स्यात् त्वं साऽवशेषेण अनवशेषमुच्यमानमर्थं श्रृणु। अहं एकांशेनैकावयवेन एकपादेन सर्वभूतस्वरूपेणेत्यर्थः। इदं जगद्विष्टभ्य विशेषतस्तम्भनं कृत्वा स्थितः। तथा च श्रुतिः "पादोऽस्य विश्वा भूतानीति"

इति श्रीमत्परमहंसपरिव्राजकाचार्यविरचितायां श्रीमद्भगवद्गीताव्याख्यायां पदयोजना-समाख्यायां विभूतिविस्तारयोगो नाम दशमोऽध्यायः

प्रतिपाद्यविषयः—

154 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः दशाध्याया विद्यन्ते॥

## No. (536) 2039 भगवद्गीताव्याख्या (पदयोजनी)

| | |
|---|---|
| ग्रन्थकर्ता—रामचन्द्रानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—70 |
| प्रमाणम्—$14\frac{1}{2} \times 1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-85 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

154 कोशवत्।

उपसंहारः—

321 कोशवत्।

प्रतिपाद्यविषयः—

154 कोशवत्।

वक्तव्यविशेषः—

321 कोशवत्।

## No. (537) C 1543 भगवद्गीताव्याख्या (मूलसहिता)

| | |
|---|---|
| ग्रन्थकर्ता —श्रीधरस्वामी | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—$12\frac{1}{4} \times 5$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–107 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

शेषाशेषमुखव्याख्याचातुर्यं त्वेकवक्त्रतः ।
दधानमद्भुतं वन्दे परमानन्दसद्गुरुम् ॥
श्रीमाधवं प्रणम्याहं रामं विश्वेशमादरात् ।
तद्भक्तियन्त्रितः कुर्वे गीताव्याख्या सुबोधिनीम् ॥
भाष्यकारमतं सम्यक् तद्व्याख्यातृगिरस्तथा ।
यथामति समालोच्य गीताव्याख्यां समारभे ॥
गीता व्याख्यायते यस्मात्पाठकानाम (मात्राद्) (पाठमात्रप्र) यत्नतः ।
सेयं सुबोधिनीटीका सदा ध्येया मनीषिभिः ॥

इह खलु सकललोकवन्दितचरणः परमकारुणिको भगवान् देवकीनन्दनस्तत्त्वज्ञानविजृम्भितशोकमोहभ्रंशितविवेकतया निजधर्मत्यागपरधर्माभिसन्धिनमर्जुनं धर्मज्ञानरहस्योपदेशप्लवेन तस्माच्छोकमोहसागरादुद्दधार। तमेव भगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैरुपनिबबन्ध ॥

उपसंहारः—

किं च—राजन्निति। हृष्यामि रोमाञ्चितगात्रो भवामि। हर्षं प्राप्नोमि वा। स्पष्टमन्यत्। किं च—तच्चेति। तत्रेति विश्वरूपं निर्दिशति। स्पष्टमन्यत्। अतस्त्वत्पुत्राणां राज्यादिशङ्कानापरित्यजेत्याशयेनाह—यत्रेति। यत्र येषां पक्षे योगमायेश्वरः कृष्णो वर्तते, यत्र च पार्थो धनुर्धरः तत्रैव श्रीः राज्यलक्ष्मीः तत्रैव विजयः तत्रैव च भूतिः उत्तरोत्तराभिवृद्धिश्च। नीतिर्न्यायोऽपि तत्रैव ध्रुवा निश्चितेति सङ्गच्छते इति मम निश्चयः।

इति श्रीभगवद्गीताटीकायां सुबोधिन्यां मोक्षसन्न्यासयोगो नामाष्टादशोऽध्यायः

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। मुद्रितश्च दृश्यते ॥

## No. (538) C 607 भगवद्गीताव्याख्या (मूलसहिता)

| | |
|---|---|
| ग्रन्थकर्ता—श्रीधरस्वामी | प्रतिपुटं पङ्क्तयः—19 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—6×4 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-64 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 1543 कोशवत्।

उपसंहारः—

यदि कर्मयोगिनोऽप्यन्ततः सन्नयासेनैव ज्ञाननिष्ठा तर्हि आदित एव सन्नयासः कर्तुं युक्त इति मन्वानं प्रत्याह—सन्नयास इति। अयोगतः कर्मयोगं विना सन्यासः प्राप्तुं दुःखहेतुः। अशक्य इत्यर्थः। चित्तशुध्यभावेन ज्ञाननिष्ठाया असंभवात्। योगयुक्तः शुद्धचित्ततया मुनिः सन्यासी भूत्वा चिरेणैव ब्रह्म अधिगच्छति, अपरोक्षं जानाति। अतश्चित्तशुद्धेः प्राक्कर्मयोग एव ..........

वक्तव्यविशेषः—

अस्मिन्कोशे आदितश्चत्वारोऽध्याया विद्यन्ते।

## No. (539) C 693 भगवद्गीताव्याख्या (मूलसहिता)

| | |
|---|---|
| ग्रन्थकर्ता—श्रीधरस्वामी | प्रतिपुटं पङ्क्तयः—26 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—44 |
| प्रमाणम्—10×4 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-79 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 1543 कोशवत्।

उपसंहारः—

फलितमाह — तस्मादिति। इदं कार्यमिदमकार्यमिति अस्यां व्यवस्थायां तव शास्त्रं श्रुतिस्मृतिपुराणादिकमेव प्रमाणम्। अतः शास्त्रविधिनोक्तं कर्म ज्ञात्वा इह कर्माधिकारे वर्तमानो यथाधिकारं कर्म कर्तुमर्हसि। तन्मूलत्वात्सत्त्वशुद्धिसम्यग्ज्ञानमुक्तीनामित्यर्थः।

देवदैतेयसम्पत्तिसंविभागेन षोडशो।
तत्त्वज्ञानेऽधिकारस्तु सात्त्विकस्येति दर्शितम्॥

इति श्रीधरस्वामिकृतौ श्रीभगवद्गीताटीकायां सुबोधिन्यां दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः षोडशाध्याया विद्यन्ते।

## No. (540) 1724 भगवद्गीताव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—श्रीधरस्वामी | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—$13\times1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—अतिशिथिला |
| पत्राणि— 1–144 | समग्रोऽसमग्रो वा — समग्रः |

उपक्रमः—

C 1543 कोशवत्।

उपसंहारः—

इति मम मतिर्निश्चयः। अत इदानीमपि—इत्यादि, सत्कर्णधारं विनेत्यन्तो ग्रन्थः अधिको वर्तते।

वक्तव्यविशेषः—

C 1543 कोशवत्। अस्मिन्कोशे मुद्रितपुस्तकवत् पाठो वर्तते॥

## No. (541) C 544 भगवद्गीताव्याख्या (कर्नाटकभाषामयी)

ग्रन्थकर्ता—?
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–86, 1–20
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—26
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

शेषाशेषेत्यादिश्लोकचतुष्टयं C 1543 कोशवत्। इल्लि उंटल्ला समस्तलोकर्दिद वंदिसल्पुपट्ट पादारविंदउल्ल परमकारुणिकनाद देवकीनन्दननाद श्रीकृष्णन स्वरूपवनरियदे इदरिंद प्रकटिशि तोरुव शोकमोहगलिन्द विवेकवु भ्रंशवागलागि आ अविवेकदिन्द युद्धरूपवाद निजधर्मव बिट्टु भिक्षाटनरूपवाद परमधर्मवन्नु आश्रयिसेन् यंब अर्जुनगे धर्मज्ञानरहस्योपदेशवेंब हडगिनिंद आ शोकमोहवेंब सागरददशेयिन्द उद्धरिशिदनु। आ भगवदुपदिष्टवाद अर्थवन्नु वेदव्यासरु येल्नूरु श्लोकगलिन्द संग्रहिशिदरु। आ संग्रहिसुवाग श्रीकृष्णन मुखदिंद होरटंथा श्लोकगलु बरदु आ श्लोकगलिगे तावु केवल ग्रन्थगल रचिशिदरु। ई श्लोकगलु श्रीकृष्णन मुखदिंदले होरटंथावु यंबल्लि गीतामाहात्म्यदल्लि संमतिय तोरुत्तिद्धानु।

गीता सुगीता कर्तव्या किमन्यैः शास्त्रसंग्रहैः।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता॥

उपसंहारः—

यः आवातनु मद्गतेन नन्नल्लि आसक्तवाद अन्तरात्मना मनःशिनिंद श्रद्धावान् श्रद्धेयोडने कूडिदंथातनागि मां परमेश्वरनाद नन्नन्नु भजते भजिसुत इद्धानु सः आतनु सर्वेषामपि योगिनां समस्तयोगिगल मध्यदल्लि युक्ततमः अतिश्रेष्ठनादंथातनु। मे मतः ननगे संमतनादंथातनु। इदुकारण नन्न भक्तनागबेकु यंबुदीग तात्पर्य॥ श्रीधराचार्यश्लोकः—

आत्मयोगमवोचद्यो भक्तियोगशिरोमणिम्।
तं वन्दे परमानन्दं माधवं भक्तिशेवधिम्॥ ओं तत्सत्॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रीधरस्वामिविरचितायां भगवद्गीताव्याख्यायां आत्मसंयमयोगो नाम षष्ठोऽध्यायः

**प्रतिपाद्यविषय:—**

अस्मिन्ग्रन्थे भगवद्गीतायाः अर्थः कर्नाटकभाषया सम्यक् स्पष्टीकृतः ॥

**वक्तव्यविशेषः—**

अस्मिन्कोशे आदितः षडध्याया विद्यन्ते। टीकाकर्ता न ज्ञायते, आदावन्ते च मङ्गळमात्रं श्रीधरस्वामिकृतं दृश्यते ॥

## No. (542) A 237/3 भगवद्गीताव्याख्या (केरळभाषा)

ग्रन्थकर्ता— ?
पत्रविशेष:—कागदपत्रात्मक:
प्रमाणम्—12 × 7¾ अङ्गुलानि
लिपि:—मलयाळलिपि:
पत्राणि—1–172

प्रतिपुटं पङ्क्तय:—14
प्रतिपङ्क्त्यक्षराणि—16
काल: (कोशस्य)—कोल्लं 1060 (1885)
स्थिति:—समीचीना
समग्रोऽसमग्रो वा—समग्रः

**उपक्रम:—**

(आदितः द्वितीयाध्याये नवमश्लोकान्तं मूलमात्रम्)

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

ரண்டு ஸேனகளுடேயும் மத்யத்திங்கல் தேரில் இருந்து அர்ஜுனன் இங்ஙினெவிஷாதிக்குந்நு குருஜனங்ஙளோடு யுத்தம் செய்தால் பாபம் ஸம்பவிக்குமல்லோ, அதுகொண்ட் என்னால் யுத்தம் கழியுந்நதல்ல, எந்நப்போள் பகவான் பரிஹஸிக்குந்ந போலெ ஆயிட்ட் அர்ஜுனனோடு இங்ஙினேயுள்ள வாக்கினே பறயுந்நு ।

**उपसंहार:—**

अर्जुन उवाच— नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥

அல்லயோ அச்யுத நின் திருவடியுடெ வாக்குகளெ கேட்டிட்ட் என்டே அறிஞ்ஞு கூடாய நசிச்சுபோயி எந்நல்ல புத்திக்க் ஒரு உண்ர்ம எனிக்கு கிட்டி; இப்போள் ஞான் ஸம்சயம் ஒக்கெ தீர்ந்

இரிக்குந்நவனாயி. இனி நின் திருவடி பறயுக்நதினே ஞான் நடத்தாம்..............................

ओं तत्सदिति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां श्रीभीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सकलशास्त्रार्थकथनमोक्षोपदेशयोगो नामाष्टादशोऽध्यायः

प्रतिपाद्यविषयः—

श्रीभगवद्गीतायाः व्याख्यानरूपोऽयं ग्रन्थः केरळभाषामयः ।

वक्तव्यविशेषः—

मुद्रणालये मलयाळलिप्यभावात् अत्रोपक्रमोपसंहारयोः द्राविडलिपिरुपयुक्ता । अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (543) 2762 भगवद्गीतालघुव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—राघवानन्दतीर्थः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम् —$17\frac{1}{2}\times1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-204 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ओं महेशं दक्षिणामूर्तिं मन्दहाससमन्वितम् ।
अर्धेन्दुशेखरं पूर्णं वन्दे गौरीशमच्युतम् ॥
नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥

प्रज्ञाचक्षुर्धृतराष्ट्रः चक्षुरिन्द्रियरहितत्वेन बाह्यार्थान् प्रत्यक्षत्वेन ज्ञातुमशक्तः सन् स्वस्य हितोपदेष्टारं समीपवर्तिनं सञ्जयं प्रत्युवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥

हे सञ्जय धर्मस्य तद्बुद्धेश्चाभिवृद्धिकारणे कुरुक्षेत्रे युयुत्सवः योद्धुमिच्छवः मामका मदीयाः दुर्योधनप्रभृतयः पाण्डवाश्चैवापरे पाण्डुपुत्रा धर्मपुत्रप्रभृतयः समवेताः सन्तः संयुक्ताः सन्तः किमकुर्वत किं कृतवन्त इत्यर्थः ॥

उपसंहार:—

योगेश्वरः सर्वयोगानां सर्वयोगः ज्ञानं कर्म वा तत् कारणं शास्त्रीयज्ञानवैराग्यादि, तद्धि भगवदधीनम्, तदनुग्रहविहीनस्य तदयोगात्। अतो योगतत्फलयोर्भगवदनुग्रहायत्तत्वात् भगवतो योगेश्वरत्वमित्यर्थः। कृष्णः यत्र यस्मिन्पक्षे वर्तते धनुर्धरः गाण्डीवाख्यधनुर्धरः अर्जुनः यत्र यस्मिन्पक्षे वर्तते तत्र तस्मिन्पाण्डवानां पक्षे श्रीः राज्यलक्ष्मीः विजयश्च परेभ्य उत्कृष्टत्वेन भूतिः सकलसम्पद्विस्तारः नीतिर्न्यायश्च ध्रुवा अव्यभिचारिणी इति मे मम मतिर्निश्चयः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीरामचन्द्रेन्द्रसरस्वतीपूज्यपादशिष्यश्रीराघवानन्दतीर्थविरचिता भगवद्गीतालघुव्याख्या समाप्ता

प्रतिपाद्यविषयः—

भगवद्गीतायाः संग्रहेण अर्थो विचार्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते॥

## No. (544) 4118/1 भगवद्गीतालघुव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—राघवानन्दतीर्थः | प्रतिपुटं पङ्क्तयः—24 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—$9\frac{1}{2} \times 2\frac{1}{4}$ अङ्गुलानि | कालः कोशस्य—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-56 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

2762 कोशवत्।

उपसंहारः—

2762 कोशवत्।

प्रतिपाद्यविषयः—

2762 कोशवत्।

वक्तव्यविशेषः—

2762 कोशवत्।

## No. (545) 2035/26 भर्जुप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—5 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि--50 |
| प्रमाणम्—13 × 1¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—207-209 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

लोके श्रुतिस्मृतीतिहासपुराणवाक्यैस्तत्त्वमस्यादिभिर्बहुधा जीवब्रह्मैक्ये बोधितेऽपि गुरुभिस्त्वं ब्रह्मासीति श्रुतियुक्त्यनुभवैर्बहुप्रकारमुपदिष्टेऽपीश्वरगुरुकटाक्षरहितानां पापात्मनां बुद्धिर्दुर्मार्गोपदेशतः सच्चिदानन्दस्वरूपमात्मानमपरिगृह्य देहेन्द्रियादिसङ्घातमात्मत्वेन गृह्णातीत्ययमर्थो दृष्टान्तपुरःसरं निरूप्यते ॥ इत्यादिः ।

उपसंहारः—

एवं श्रुतिस्मृत्यनुभवपुराणेतिहासयुक्त्यागमैः परीक्षितेऽपि बहुवारं गुरुभिरुपदिष्टेऽपि दुर्जनोपदेशतः प्रतिबन्धयुक्ता विपरीतदेहेन्द्रियादिसङ्घात एवाहमिति निश्चिन्वन्ति । अत एवोक्तं सङ्क्षेपकाचार्यैः पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयापि यथा न फलाय भर्जुविषया भवति श्रुतिसंभवापि तु तथात्मनिधिरिति ॥

इति भर्जुप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे पापात्मानः श्रुतिस्मृत्यादिभिस्तत्त्वमसीति बहुधा बोध्यमाना अपि तेषां ईश्वरगुर्वनुग्रहं विना अहं ब्रह्मास्मीति ज्ञानं नोदेतीत्ययं धर्मगुप्तराजभर्जमन्त्रिदृष्टान्तप्रदर्शनपुरःसरं प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अमुद्रितः ।

## No. (546) B 472 भस्मजाबालोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता —अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–9 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू–भद्रं कर्णेभिरिति शान्तिः। अथ जाबालो भूसुण्ढः कैलासशिखरावासमोंकारस्वरूपिणं महादेवमुमार्धकृतशरीरं सोमसूर्याग्निनयनमनन्तेन्दुरविप्रभं व्याघ्रचर्माम्बरधरं मृगहस्तं भस्मोद्धूलितविग्रहं तिर्यक्पुण्ड्ररेखाविराजमानफालप्रदेशं स्मितसम्पूर्णपञ्चविधपञ्चासनं वीरासनारूढमप्रमेयमनाद्यन्तं निष्कळं निर्गुणं शान्तं निरञ्जनमनामयं हुंफट्कुर्वाणम्—

भा :—यस्यां संप्रोच्यते मुक्त्यै भस्मधारणवैभवम् ।
सयन्तु भस्मजाबालश्रुतिर्व्याख्यास्यतेऽधुना ॥

नन्विह शिवनामान्यनिशमुच्चरन्तमित्युक्तम् कथमेतदुपपद्यते ।

उपसंहारः—

भा–कुतस्तर्हि ब्रह्मज्ञानमात्रप्रतिपादिकासूपनिषत्स्वेवं भस्मधारणादिस्थूलबाह्यकर्मप्रसक्तिरिति चेन्नायं दोषः, ज्ञानाङ्गानां चोपनिषत्सु प्रतिपादनावश्यकत्वात् ॥

इति श्रीसुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु भस्मजाबालोपनिषद्भाष्ये प्रथमोऽध्यायः

अस्य द्वितीयाध्यायस्य बृहज्जाबालोपनिषदि प्रकृतत्वेन व्याख्यातपूर्वत्वादिहाव्याख्यातत्वमवगन्तव्यम् ।

इति भस्मजाबालोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे भस्मत्रिपुण्ड्रधारणं, भस्मस्वरूपं, धारणस्य मुक्तिं प्रति श्रवणादिवन्मुख्याङ्गत्वं च प्रतिपाद्यते ॥

वक्तव्यविशेषः –

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

No. (547) B 236/1 भागवतव्याख्या (तत्त्वार्थचन्द्रिका)

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{1}{4} \times 8$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-109

प्रतिपुटं पङ्क्तयः—20
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रीमान्नीरदनीलदीप्तिरखिलाधीशः प्रसन्नानन-
स्सत्यज्ञानसुखामलाद्वयपराकाशस्वरूपः स्वयम्।
नीरोपोऽविषयश्च वाङ्मनसयोर्द्वन्द्वातिगो यः प्रभुः
पायान्नः क्रमशस्त्रिलिङ्गक इह श्रीवासुदेवो हरिः ॥

वाच्यं लक्ष्यमतीतमित्यपि भवेल्लिङ्गत्रयं वैदिकं
तस्मिन्निर्गुणमोक्षकामिभिरभिध्येयं हि तन्मध्यमम्।
यस्मान्मोक्षनिमित्तमस्ति न परं नैवापरं प्राणिनां
तद्विष्णोः परमं पदं भवतु नः साक्षात्स्वयं निर्गुणम् ॥

भेदाभेदौ भवत इति यो निर्णयश्चात्मनोर्नः
सद्यो मुक्तिर्भवति परमाद्वैतसंराधनेन।
सोऽयं येषां स खलु भगवान् सर्ववेदान्तवेद्यः
श्रीगोविन्दो भव भवमहामोहपाशादिहाव्यात् ॥

यदेकांशो जीवत्रितयमपि चेशत्रयमिदं
जगत्सर्वं चाभूद्दिवि चिदि यदंशत्रयमपि।

यदूर्ध्वो नीरूपः स्वयममृतपादत्रयविदां
भविष्यत्यन्ते तद्धरिभजननिष्ठः स मतिमान् ॥

अत्र खलु पदवाक्यप्रमाणज्ञेन भगवता बादरायणाचार्येण प्रणीतेषु ब्राह्माद्यष्टादशपुराणेषु यदिदं सकलमोक्षसाधनगर्भितं मन्दमध्यमोत्तमाधिकारिसाधारणं द्वादशस्कन्धोपेतं श्रीमद्भागवताख्यं पुराणं सर्ववेदान्तसारभूतं प्रसिद्धं विजयते ।

उपसंहारः—

य इति । अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यत इत्यादिश्रुत्यनुरोधेन प्रयतः कृष्णस्य परामुत्कृष्टां पदवीं गतिं यः कीर्तयति स क्रमेण ब्रह्मवित्सन् तामेव गतिमाप्नोति (14) । आत्मानमिति । कृष्णेन गीतैः सदुक्तिभिः सत्या अवितथा उक्तयो येषु तैः

"नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥"

इत्यादिभिः ॥ (22) इत्थमिति । शंतमानि परममङ्गळानि परमहंसगतौ श्रीकृष्णो ॥ (28)

मुक्तैः प्राप्यमिहैव वाङ्मनयोर्दूरं विरूपं परं
यत्प्राप्यं च मुमुक्षुभिः परमकं ज्योतिः स्वरूपं च यत् ।
प्राप्यं यच्च मुमुक्षुभिर्गुणमयं तच्चित्तशुद्धीच्छुभिः
यस्यैतत्त्रयमस्ति लिङ्गमनिशं कृष्णाय तुभ्यं नमः ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ तत्त्वचन्द्रिकायामेकत्रिंशोऽध्यायः

प्रतिपाद्यविषयः—

महाभारतव्याख्यानरूपेऽस्मिन् ग्रन्थे विशेषतया भगवतः श्रीकृष्णस्य सगुणं निर्गुणं अतीतं चेति त्रिलिङ्गकत्वं प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे एकादशस्कन्धः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (548) C 1161 भानुप्रभा (भाष्यव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—त्र्यम्बकशास्त्री | प्रतिपुटं पङ्क्तयः—9 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—52 |
| प्रमाणम्—13 × 4½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-42 | समग्रोऽसमग्रोवा—असमग्रः |

उपक्रमः—

यद्वेदान्तपयोनिधावमृतमित्याहुर्गिरामप्यसौ
दूरे यन्महिमाजनुःप्रभृतयो दोषा न यत्रासते ।
जन्मादिर्जगतो यतो ननिरियं तस्मै सुखाम्बोधये
सर्वस्मै सकलागमाशयविदां स्वस्मै परस्मै सते ॥

पूर्णज्ञानाय निर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥

भास्वद्भाष्यमयूखमालिनि भिदापाण्डित्यसाहंकृति
ध्वान्तध्वंसविधायिनं श्रुतिशिरः कं जातनिद्राभिदि ।
जाग्रत्यद्वयशासनासहजडध्वान्तोक्तिमात्रेण यो
मन्दानामजनि भ्रमस्तमधुना भङ्क्तुं श्रमोऽयं मम ॥

युष्मदस्मत्प्रत्ययगोचरयोरित्याद्यं श्रीमद्भाष्यमस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इत्यन्तमस्य शास्त्रस्य प्रेक्षावत्प्रवृत्त्यङ्गभूतविषयप्रयोजनादिप्रदर्शनपरम् । तत्र यद्यपि विषयप्रयोजनादिप्रतिपत्तिमन्तरा प्रवृत्त्ययोगात्तदुपदर्शनस्यावश्यकत्वेऽप्यात्मानात्मनोः परस्पराध्यासवर्णनमनुपयुक्तम् । एवमाद्यसूत्रभाष्येण विषयप्रयोजनयोः सुज्ञेयतया तदुपदर्शनमपि नार्थवत् ॥

उपसंहारः—

असद्वैलक्षण्यमपि सत्त्वेन प्रतीयमानत्वम् । न चोभयस्य एकविशिष्टापरस्य वा साधने एकदेशादिसिध्द्या सिद्धसाधनता तार्किकानुमता, तार्किकादिकं प्रति गुणादिकं गुण्यादिना भिन्नाभिन्नं इति

भाट्टादिप्रयोगदर्शनात्। न च व्याहतिः, उक्तसदसद्विलक्षणत्वासद्विलक्षणत्वयोः शुक्तिरूप्यादौ समावेशदर्शनात् त्वां प्रति सद्विलक्षणत्वमात्रस्य साध्यतया दृष्टान्ते साध्यवैकल्याभावाच्च। न च शशशृङ्गमित्यादिप्रतीत्या असतोऽपि सत्त्वेन ..............

प्रतिपाद्यविषयः —

अस्मिन् ग्रन्थे शारीरकभाष्यवाक्यानि आदाय तदुपरि द्वैतमतखण्डनपूर्वकं विचारः (स्वतन्त्रः) क्रियते।

वक्तव्यविशेषः—

अस्मिन् कोशे जिज्ञासाधिकरणमात्रं (असमग्रं) वर्तते। अमुद्रितश्च दृश्यते॥

## No. (549) 3606/2 भामती

| | |
|---|---|
| ग्रन्थकर्ता — वाचस्पतिमिश्रः | प्रतिपुटं पङ्क्तयः — 10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—84 |
| प्रमाणम्—18×1¾ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि — 193–203 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः —

लक्षणप्रमाणप्रवृत्तिविघ्नोपशमनेन वा विद्यासाधनत्वम्। श्रवणादीनां त्वनपेक्षाणामेव विद्योत्पादकत्वम्। न च प्रमाणेष्वप्रवर्तमानाः प्रमातार ऐहिकमपि चिरभाविनं प्रमोत्पादकं कामयन्ते, किं तु तादात्विकमेव, प्रागेव तु पारलौकिकम्। न हि कुम्भदिदृक्षुश्चक्षुषी समुन्मीलयति कालान्तरीयाय कुम्भदर्शनाय। किं तु तादात्विकाय। तस्मादैहिक एव विद्योत्पादो नानियतकालः। श्रुतिस्मृती च पारलौकिकं विद्योत्पादं स्तुत्या ब्रूतः। इत्थंभूतानि नाम श्रवणादीन्यावश्यकफलानि यत्कालान्तरेऽपि विद्यामुत्पादयन्तीति॥

उपसंहार:—

स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमत इति हि वायुनिमित्तमूर्ध्वाक्रमणं श्रुतम्। न तु वायुनिमित्तमादित्यगमनम्। स आदित्यमागच्छतीत्यागमनमात्रप्रतीतेः। न च तेनेत्यनन्तर श्रुतोर्ध्वाक्रमणक्रियासंबन्धि(न्ध)निराकांक्षमादित्यगमनाक्रिययापि संबन्धमर्हति। न चादित्य गमनस्य तेनेति विना काचिदनुपपत्तिर्येनान्यसंबद्धमप्यनुषज्यते। तत्राग्निलोकमागच्छतीत्यादिसन्दर्भगतस्य पाठस्य कचिन्नियामकत्वेन क्लृप्तसामर्थ्यादग्निवायुवरुणलोकक्रमनियामकत्वम्, श्रुत्याद्यभावादिति प्राप्ते—उच्यते। "ऊर्ध्वशब्दो न लोकस्य कस्यचित्प्रतिपादकः"। तद्ध...............।

प्रतिपाद्यविषयः—

884/2 कोशवत्।

वक्तव्यविशेषः—

अस्मिन् कोशे तृतीयाध्यायचतुर्थपादे "ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" इत्यधिकरणीयसिद्धान्तमारभ्य, 4-3-2 पर्यन्तो भागो विद्यते।

## No. (550) 884/2 भामती

| | |
|---|---|
| ग्रन्थकर्ता—वाचस्पतिमिश्रः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—82 |
| प्रमाणम्—$17\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-127 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो
विवर्ता यस्यैते वियदनिलतेजोऽबवनयः।
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं
नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम्॥ 1-5॥

नत्वा विशुद्धविज्ञानं शंकरं करुणाकरम् ।
भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते ॥ ६ ॥

आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥ ७ ॥

अथ यदसन्दिग्धमप्रयोजनं न तत्प्रेक्षावत्प्रवृत्तिगोचरः यथा समनस्केन्द्रियसन्निकृष्टः स्फीतालोकमध्यवर्ती घटः। करटदन्ता वा। तथा चेदं ब्रह्मेति व्यापकविरुद्धोपलब्धिः तथाहि—बृहत्वाद्बृंहणत्वाद्वा आत्मैव ब्रह्मेति गीयते। स चायमाकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणतन्मात्रस्येदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यः विवेकेनाहमित्यसन्दिग्धाविपर्यस्तापरोक्षानुभवसिद्ध इति न जिज्ञासास्पदम्। न हि जातु कश्चिदत्र सन्दिग्धेऽहं वा ना वेति। न च विपर्यस्यति नाहमेवेति।

उपसंहारः—

स्यादेतत् मा भूत्प्रधानं जगदुपादानम्। तथापि न ब्रह्मोपादानत्वं सिध्यति। परमाण्वादीनामपि तदुपादानानामुपप्लवमानत्वात्। तेषामपि हि किञ्चिदुपोद्बलकं लिङ्गमस्ति वैदिकमित्याशंकामपनेतुमाह सूत्रकारः—एतेन सर्वे व्याख्याता व्याख्याताः ॥

निगदव्याख्यातेन भाष्येण व्याख्यातं सूत्रम्। प्रतिज्ञालक्षणं लक्ष्यमाणे पदसमन्वये वैदिकः। स च तत्रैव नान्यत्रेत्यत्र साधितम्।

श्रीमदाचार्यवाचस्पतिमिश्रविरचिते शारीरकभगवत्पादभाष्यभागे भामत्यां
प्रथमाध्यायस्य चतुर्थः पादः समाप्तः अध्यायश्च समाप्तः

प्रतिपाद्यविषयः—

शङ्कराचार्यकृतशारीरकमीमांसाभाष्यव्याख्यारूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन् कोशे प्रथमाध्यायमात्रं विद्यते। मुद्रितश्च ॥

## No. (551) B 879 भामती

| | |
|---|---|
| ग्रन्थकर्ता—वाचस्पतिमिश्रः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—12 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-619 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

884/2 कोशवत् ।

उपसंहारः—

वाक्यान्तरेभ्यश्च ब्रह्मावगतेः प्राप्तत्वात्तदनूद्याप्राप्तोपासना भावार्थो विधेयस्तस्य च भेदाद्विद्यावृत्तिलक्षणो वाक्यभेदोऽतिस्फुट इति भाष्यकृता नोद्घाटितः, स्वव्याख्यानोक्तप्रायणत्वादिति सर्वमवदातम् ॥

इति श्रीमदाचार्यवाचस्पतिमिश्रविरचिते भगवत्पादीय भाष्यविभागे भामत्यां प्रथमस्याध्यायस्य प्रथमः पादः ॥

प्रतिपाद्यविषयः—

884/2 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन् कोशे प्रथमपादमात्रं विद्यते ॥

## No. (552) B 880 भामती

| | |
|---|---|
| ग्रन्थकर्ता—वाचस्पतिमिश्रः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—14 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-105, 1-229, 1-93 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

अथ द्वितीयं पादमाशित्सुः पूर्वोक्तमर्थं स्मारयति वक्ष्यमाणोपयोगितया प्रथमे पाद इति। उत्तरत्र हि ब्रह्मणो व्यापित्वनित्यत्वादयः सिद्धवद्धेतुतया व्यपदेक्ष्यन्ते। न चैते साक्षात्पूर्वमुपपादिता इति कथं हेतुभावेन शक्या ह्यपदेष्टुमिति अत उक्तं—समस्तजगत्कारणस्येति। यद्यप्येते न पूर्वं कण्ठोक्ताः। तथा हि जगज्जन्मादिकारणत्वोपपादनेन अधिकरणसिद्धान्तन्यायेन उपक्षिप्ता इत्युपपन्नः तेषामुत्तरत्र हेतुभावेनोपन्यास इत्यर्थः। अर्थान्तरप्रसिद्धानां चेति।

उपसंहारः—

884/2 कोशवत्।

प्रतिपाद्यविषयः—

884/2 कोशवत्।

वक्तव्यविशेषः—

अस्मिन् कोशे प्रथमाध्याये द्वितीयपादादिचतुर्थपादान्तो ग्रन्थो विद्यते॥

## No. (553) B 881 भामती

| | |
|---|---|
| ग्रन्थकर्ता—वाचस्पतिमिश्रः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः – कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—14 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-109, 1-243, 1-106, 1-53 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

1842 कोशवत्।

उपसंहारः—

तस्मादसति बाधके श्रुतिराञ्जसी नान्यथा कथंचिन्नेतुमुचितेति। कंचिद्दोषमित्युक्तं तद्दोषं दर्शयति अत्राह पूर्वपक्षी—यदि सर्वमेवेति। वैशेष्यात्तु तद्वादस्तद्वादः। त्रिवृत्करणाविशेषेऽपि यस्य यत्र भूयस्त्वं तेन तस्य व्यपदेश इत्यर्थः।

इति श्रीमद्वाचस्पतिमिश्रविरचिते श्रीशंकरभगवत्पादकृतभाष्यविभागे भामत्यां द्वितीयोऽध्यायः॥

प्रतिपाद्यविषयः—

884/2 कोशवत्।

वक्तव्यविशेषः—

अस्मिन् कोशे द्वितीयाध्यायमात्रं विद्यते॥

## No. (554) 1842 भामती

| | |
|---|---|
| ग्रन्थकर्ता—वाचस्पतिमिश्रः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—64 |
| प्रमाणम्—16¾ × 1 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-219 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

ओं स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्। वृत्तवर्तिष्यमाणयोः समन्वयविरोधपरिहारलक्षणयोः सङ्गतिप्रदर्शनाय सुखग्रहणाय चैतयोः संक्षेपतस्तात्पर्यार्थमाह—प्रथमेऽध्याय इति। अनपेक्षवेदान्तवाक्यस्वरससिद्धसमन्वयलक्षणस्य विरोधतत्परिहाराभ्यामाक्षेपसमाधानकरणादनेन लक्षणे नास्ति विषयाविभागः संबन्धः। पूर्वलक्षणार्थो हि विषयः, तद्गोचरत्वादाक्षेपसमाधानयोरेष च विषयीति। तदेवमध्यायमवतार्य तदवयवमधिकरणमवतारयति — तत्र प्रथमं तावदिति।

उपसंहारः—

तच्चैतदुभयमतीन्द्रियत्वाद्भवति शास्त्रलक्षणं प्रमाणान्तरप्राप्ये शास्त्रस्यार्थवत्त्वात् ब्रह्मात्मत्वप्रतिपत्तेस्तज्जीवन्मुक्तेन दृष्टत्वान्नास्तीह तिरोहितमिव किंचनेति किमत्र शास्त्रं करिष्यति। नन्वे ........ फलान्युपासनानि तत्र नियोज्यनियोगलक्षणस्य च कर्मणि स्वमित लक्षणस्य च संबन्धस्यातीन्द्रियत्वात्तत्र सकृत्करणादेव शास्त्रार्थसमाप्तौ प्रा ........।

प्रतिपाद्यविषयः—

884/2 कोशवत्।

वक्तव्यविशेषः—

अस्मिन् कोशे द्वितीयाध्यायादितः चतुर्थप्रथमे प्रायणाधिकरणपर्यन्तो ग्रन्थो विद्यते ॥

## No. (555) 152 भामती

| | |
|---|---|
| ग्रन्थकर्ता—वाचस्पतिमिश्रः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—94 |
| प्रमाणम्—16×1¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—7–292, मध्ये 283–291 पत्रलोपः | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

मेव हि चिदात्मनोऽपि सत्त्वम्, न तु तदतिरिक्तः सत्तासामान्यसमवायः अर्थक्रियाकारिता वा; द्वैतापत्तेः, सत्तायाश्चार्थक्रियाकारितायाश्च सत्तान्तरार्थक्रियाकारितान्तरकल्पनेऽनवस्थानात्, प्रकाशमानतैव सत्ताभ्युपेतव्या। तथा च देहादयः प्रकाशमानत्वान्नासन्तः, चिदात्मवत्, असत्त्वे वा न प्रकाशमानाः, तत्कथं सत्यानृतयोर्मिथुनीभावः, तदभावे वा कस्य कुतो भेदाग्रहः, तदसंभवे वा कुतोऽध्यास इत्याशयवानाह— आक्षेप्ता—कोऽयमध्यासो नाम, क इत्याक्षेपः। समाधाता- लोकसिद्धमध्यासलक्षणमाचक्षाण एवाक्षेपं प्रतिक्षिपति—उच्यते स्मृतिरूपः परत्र पूर्वदृष्टावभासः।

उपसंहारः—

न च चिरोत्पादानुत्पादावन्तरेण विद्यायामपि रूपतो भेदः कश्चिदुपलक्ष्यते। तस्या अप्येकरूपत्वेन श्रुतेः। सगुणाया विद्यायास्तु गुणावापोद्वापाभ्यां तत्कार्यस्य फलस्योत्कर्षनिष्कर्षौ युज्येते। न चात्र विद्यात्वं सामान्यतो दृष्टं भवति। आगमतत्प्रभवयुक्तिबाधितत्वेन कालात्ययापदिष्टत्वात्। तस्मात्तस्या मुक्त्यवस्थाया ऐकरूप्यावधृतेर्मुक्तिलक्षणस्य फलस्या(नियमवि)विशेषो युक्त इति ॥

इति श्रीवाचस्पतिमिश्रविरचिते शारीरकभाष्यविभागे भामत्यां तृतीयस्याध्यायस्य चतुर्थः पादः।
समाप्तश्चाध्यायः

प्रतिपाद्यविषयः—

884/2 कोशवत्।

वक्तव्यविशेषः—

अस्मिन् कोशे "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इतिभाष्यव्याख्याप्रभृति तृतीयाध्यायसमाप्तिपर्यन्तो ग्रन्थो विद्यते।

## No. (556) B 882 भामती

ग्रन्थकर्ता — वाचस्पतिमिश्रः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8 \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–62, 1–81, 1–379, 1–123

प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—14
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्। द्वितीयतृतीयाध्याययोर्हेतुहेतुमद्भावलक्षणसंबन्धं दर्शयन् सुखाववोधार्थं अर्थसंक्षेपमाह—द्वितीऽयेध्याय इति। स्मृतिन्यायश्रुतिविरोधपरिहारेण ह्यनध्यवसायलक्षणम् प्रामाण्यं परिहृतम। तथा च प्रामाण्ये शिथिलीकृते तार्तीयो विचारो भवति अन्यथा निर्बीजतया न सिध्येदिति॥

**उपसंहार:—**

152 कोशवत् ।

**प्रतिपाद्यविषयः—**

884/2 कोशवत् ।

**वक्तव्यविशेषः—**

अस्मिन् कोशे तृतीयाध्यायमात्रं विद्यते ॥

## No. (557) 3603 भामती

| | |
|---|---|
| ग्रन्थकर्ता—वाचस्पतिमिश्रः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—$15\frac{1}{4}\times1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—324-480 | समग्रोऽसमग्रो वा—असमग्रः |

**उपक्रमः—**

B 882 कोशवत् ।

**उपसंहारः—**

सम्यग्दर्शनविध्वस्ततमसामिति । द्विविधा-अविद्या तमः । निरुपाधि-ब्रह्मसाक्षात्कारस्तत्त्वदर्शनम् । न चैतन्निर्वाणं स्वरूपावस्थानलक्षणं कार्यम् , येनानित्यं स्यादित्यत आह—नित्यसिद्धेति ।

भङ्क्त्वा वाद्यसुरेन्द्रवृन्दमखिलाविद्योपधानातिगं
येनाम्नायपयोनिधिर्नयमथा ब्रह्मामृतं प्राप्यते ।
सोऽयं शंकरभाष्यजातविषयो वाचस्पतेः सादरं
सन्दर्भः परिभाव्यतां सुमतयः स्वार्थेषु को मत्सरः ॥ 1-6

इति वाचस्पतिमिश्रविरचिते शारीरकभगवद्भाष्यविभागे भामत्यां
चतुर्थस्याध्यायस्य चतुर्थः पादः

प्रतिपाद्यविषयः—

884/2 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन् कोशे तृतीयतुरीयाध्यायमात्रं विद्यते ।

## No. (558) 369/2 भारतसारसङ्ग्रहः

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—104 |
| प्रमाणम्—$20\frac{1}{4} \times 2$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—114-120 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

अथ श्रीमहाभारतस्य शिवपारम्यप्रख्यापनपरतामाविष्कर्तुं कृतस्य सिवस्तोत्रस्यायमाद्यः श्लोकः—

श्रीवादरायणमुनिः .................... त्तमधिकृत्य कृतं प्र ........ ।
...................................................... दादितत्त्वम् ॥

श्रीवादरायणनामा प्रसिद्धो मुनिः स्वयमेव विष्णु—
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ॥"

इतिवचनात् । स च श्रीमहा ............................................ .... .
.............................................................. न्तर्गततन्माहात्म्यवर्णनात्मकं च निर्ममे वासुदेवस्य माहात्म्यं पाण्डवानां च सत्यताम् । पृष्ठताः धार्तराष्ट्राणामुक्तवान्भगवानृषिः ॥" इति वचनात् ।

उपसंहारः—

भूतभव्यभविष्यादिधर्मकामार्थनिश्चयम् ।
सिद्धसङ्घपरिज्ञातं पुराकल्पं सनातनम् ॥
प्रवक्ष्यामि महाप्राज्ञ पदमुत्तममद्य ते ।
बुध्वा यदिह सन्दिग्धा भविष्यन्ति मनीषिणः ॥

इति ........ क्तिमुपन्यस्य तत्र श्रोतुरत्यादरसिद्ध्यै महर्षीणां चतुर्मुखस्य च संवादरूपमत्र विशेषमहदुपाख्यानमाचार्येणोपदिष्टमिति तदुपाख्यान-मुखेन ........ ।

प्रतिपाद्यविषयः—

अस्मिन् ग्रन्थे महाभारतस्य शैवपरत्वं तद्गतैरेव प्रमाणैः स्पष्टं समर्थ्यते ॥

वक्तव्यविशेषः—

अस्मिन् कोशे ग्रन्थः असमग्रो वर्तते । मुद्रितश्च दृश्यते ॥

## No. (559) B 275/4 भारतीयमननम् (गुरुशिष्यसंवादः) (मलयालतात्पर्यसहितम्)

| | |
|---|---|
| ग्रन्थकर्ता — ? | प्रतिपुटं पङ्क्तयः—40 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—10 |
| प्रमाणम्—8×5¼ अङ्गुलानि | कालः (कोशस्य)—1889 |
| लिपिः—मलयाळलिपिः | स्थितिः—समीचीना |
| पत्राणि—29 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

आत्मेति परमात्मेति जीवात्मेति त्रिधा भिधा ।
आत्मानं वृत्तिभेदेन विजानीयाद्विचक्षण ॥
परामर्शे प्रपञ्चस्य चिन्मात्रमवशिष्यते ।
तदेवात्मेति संप्रोक्तः सर्वागमविशारदैः ॥
तस्यावकाशो देहः स्यात्तदन्तः स्फुरितः स्वयम् ।
यथा क्षीरे घृतं व्याप्तं तथाकाशे परः पुमान् ॥
क्षीरस्य चावकाशस्य दृश्यत्वं सर्वसंमतम् ।
दृग्वत्वं कुत्रचिन्नास्ति घृतस्य च परात्मनः ।
पयसश्चागमाब्धेश्च मथनादविवादतः ।
दृश्यत्वं स्यात्तयोस्तात स्वानुभूत्या च चक्षुषा ॥

उपसंहारः—

अवैदिकानां श्रेष्ठोऽसौ चार्वाकः परवीरहा ।
अस्य प्रमाणं प्रत्यक्षमन्येषां तत्र संभवात् ॥
तेषां प्रमाणसिद्धत्वान्न सन्तीह निरूपणे ।
तस्मात्प्रमाणसिद्धं यत् प्रमेयं तदिहोच्यते ॥
देह एव प्रमाणं स्यात्स्थूलोऽहमिति दर्शनात् ।
कृशोऽहमितिमानेन चैतन्यस्याश्रयो हि सः ॥
ताम्बूलपूगचूर्णानां रागः स्यान्मेलने यथा ।
संयोगे सति तत्त्वानां संभूतश्चेतनस्तथा ॥
देहरूपेण चोत्पत्तिः विनाशश्च पुनः पुनः ।
चतुष्टयानां भूतानां स्वभावादेव जायते ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे आत्मेश्वरादिस्वरूपं निरूप्य तत्रैव प्रपञ्चस्योत्पत्त्यादिकं मायास्वरूपं अवैदिक चार्वाक मतनिरूपणं च सामान्यतः गुरुशिष्यसंवादरूपेण क्रियते ।

वक्तव्यविशेषः—

अस्मिन्कोशे तृतीयादिषष्ठोपदेशपर्यन्तः ग्रन्थो विद्यते । अमुद्रितश्च दृश्यते ।

## No. (560) B 473 भावनोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—40 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-8 | समग्रोऽसमग्रो वा —समग्रः |

उपक्रमः—

मू—भद्रं कर्णेभिरिति शान्तिः । श्रीगुरुः परमकारणरूपा शक्तिः । केन नवरन्ध्ररूपो देहः । नवशक्तिमयं श्रीचक्रम् । वाराही पितृरूपा

कुरुकुल्ळा भेरुण्डा देवता मता। पुरुषार्थास्सागराः, देहो नवरत्नद्वीपः, आधारनवकमुद्राशक्तयः। त्वगादिसप्तधातुभिरनेकैस्संयुक्ताः सङ्कल्पाः कल्पतरवः। तेजः कल्पकोद्यानम्। रसनया भाव्यमाना मधुराम्ल-तिक्तकटुकषायलवणरसाष्षड्तवः। क्रियाशक्तिः पीठम्। कुण्डलिनी ज्ञानशक्तिर्गृहम्।

भा :—श्रीचक्राराधनं स्थूलं निन्द्यते भावनान्तरात्।
यस्यां व्याख्यास्यते सेयं भावनोपनिषन्मया॥

अत्र खलु परमकारणभूताशक्तिः श्रीगुर्वनन्येति।

उपसंहारः—

भा— परिपूर्णध्यानमेव च तत् पादुका निमज्जनमित्येवं मुहूर्तत्रयं भावयतो देवताया आत्मना सहैक्यं सिध्यति। तथा च श्रुत्यन्तरं—त्वं वाहमस्मि भगवो देवतेऽहं वै त्वमसीति। एवं प्रत्यक्परैक्यपर्यवसन्ना-मिमां भावनोपनिषदं बाह्यश्रीचक्राराधनाधारभूतां मन्यमानानां पण्डितत्वं को नु ब्रूयात्। न च चिन्तितकार्यसिध्यभिधानात् सगुणोपासनमेवा-त्रोक्तं स्यादिति शङ्क्यम्। निर्गुणोपासकानामपि मोक्षकार्यसिद्धेः। तस्मात् सर्वमनवद्यमवगन्तव्यम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु भावनोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे श्रीचक्रोपासनाक्रमः सम्यङ्निरूप्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च।

## No. (561) C 421 भावनोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता— भास्करराय: | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—8×4 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-24 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

श्रीनाथांघ्रिपरागैकोपरागादपरागधीः ।
भावनोपनिषद्भाष्यं भाषते भास्करस्सुधीः ॥

इह खलु श्रीमहात्रिपुरसुन्दर्याः स्थूलसूक्ष्मपररूपभेदेन त्रिविधाया उपास्तिरूपायाः क्रिया अपि त्रिविधाः । कायिकी वाचिकी मानसी चेति । तासां च बहिर्याग जपान्तर्यागादिरूपाणामेकैकस्यामितरयोस्संवलितत्वेऽपि प्राधान्यप्राचुर्याभ्यां कायिकत्वादिव्यपदेशः । एतास्वादिमद्वयं त्रिपुरातापिन्याद्युपनिषत्सु उपदिश्य ततोऽपि रहस्यभूतां कालचक्रान्तर्गत श्रीचक्रस्य भावनानाम्नीं तृतीयामुपास्तिमथर्वणनामा वेदपुरुषो योगिजनानुजिघृक्षया प्रकाशयन्नादौ सद्गुरोः परं रूपं विधत्ते— श्रीगुरुस्सर्वकारणभूता शक्तिरित्यादि वाक्यद्वयेन । अत्र चौपनिषदं श्रूयमाणं भावनापरो जीवन्मुक्तो भवतीति वाक्य यदाग्नेयादिवाक्यवद्भावनया जीवन्मुक्तिं भावयेदिति परिणतं सदपूर्वो विधिः ।

उपसंहारः—

अस्या उपनिषद ईदृशभावनाप्रतिपादकत्वमिति पदशो वाक्यशश्च यो वेद स एवाथर्वणशिरोऽध्ययनवान्न तु शब्दमात्राध्ययनवान् । अध्ययनकरणकभावनया अर्थावबोधभाव्यकत्वादिति भावः । "योऽर्थज्ञ इत्सकलं भद्रमश्नुते" इति श्रुत्यन्तरे सकलपदस्वारस्यात्तु शब्दमात्रपाठादपि । किं च भद्रमस्त्येवेति लभत इति शिवम् ॥

इति भावनोपनिषदोऽथर्वणशिरसोऽतनोद्भाष्यम् ।
भास्कररायो विदुषां तुष्ट्यै जीवन्मुमुक्षूणाम् ॥

इति भावनोपनिषद्भाष्यं सम्पूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मीमांसान्यायोदाहरणपूर्वकं भावनोपनिषत्सम्यग्व्याख्यायते ॥

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते, मुद्रितश्च दृश्यते ॥

## No. (562) A 116 भावनोपनिषद्भाष्यम् (समूलम्)

| | |
|---|---|
| ग्रन्थकर्ता—भास्करराय: | प्रतिपुटं पङ्क्तय:—10 |
| पत्रविशेष:—कागदपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—12¼×7¾ अङ्गुलानि | काल (कोशस्य)—? |
| लिपि:—आन्ध्रलिपि: | स्थिति: - समीचीना |
| पत्राणि—1-30 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रम:—

C 421 कोशवत्।

उपसंहार:—

C 421 कोशवत्।

प्रतिपाद्यविषय.—

C 421 कोशवत्।

वक्तव्यविशेष:—

C 421 कोशवत्।

## No. (563) B 206 भावनोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—भास्करराय: | प्रतिपुटं पङ्क्तय:—10 |
| पत्रविशेष:—कागदपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—14 |
| प्रमाणम्—8×6½ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—आन्ध्रलिपि: | स्थिति:—समीचीना |
| पत्राणि—1-29 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रम:—

C 421 कोशवत्।

उपसंहार:—

C 421 कोशवत्।

प्रतिपाद्यविषय:—

C 421 कोशवत्।

वक्तव्यविशेष:—

C 421 कोशवत्।

## No. (564) B 611 भावनोपनिषद्भाष्यम्

ग्रन्थकर्ता—भास्करराय:
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{1}{4} \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–25
प्रतिपुटं पङ्क्तयः—13
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 421 कोशवत्।

उपसंहारः—

C 421 कोशवत्।

प्रतिपाद्यविषयः—

C 421 कोशवत्।

वक्तव्यविशेषः—

C 421 कोशवत्।

## No. (565) 689 भावनोपनिषद्भाष्यम्

ग्रन्थकर्ता—भास्करराय:
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{1}{4} \times 4\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–7
प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—42
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 421 कोशवत्।

उपसंहारः—

C 421 कोशवत्।

प्रतिपाद्यविषयः—

C 421 कोशवत्।

वक्तव्यविशेषः—

C 421 कोशवत्।

## No. (566) 3441 भावप्रकाशिका (भाष्यटीका)

ग्रन्थकर्ता—चित्सुखमुनिः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—14½×2 अङ्गुलानि
लिपिः—मलयाळलिपिः
पत्राणि—1-214
प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—72
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यत्साक्षात्सच्चिदानन्दं प्रत्यगक्रियमद्वयम् ।
तन्नमासि नृसिंहस्य योगगम्यं परं पदम् ॥

ज्योतिर्यद्दक्षिणामूर्तिव्यासशंकरशब्दितम् ।
ज्ञानोत्तमाख्यं तद्वन्दे सत्यानन्दपदोदितम् ॥

भगवत्पादपादाब्ज पांसवः पान्तु सन्ततम् ।
अपारासारसंसारसागरोत्तारसेतवः ॥

सम्प्रदायविदामुक्तीः संकलय्याभिधीयते ।
मुनिना चित्सुखाख्येन भाष्यभावप्रकाशिका ॥

नाना निबद्धपदलब्धसदर्थमाना सत्सम्प्रदायपदवीरनुवर्तमाना ।
वाचस्पतेरपि वचांसि विवर्तयन्ती वागीश्वरीव विदुषां कृतिरिष्टदैषा ॥

स वायमात्मा ब्रह्म इत्यादिवाक्यप्रतिपन्नं जीवब्रह्मणोरेकत्वलक्षणं विषयम्, ब्रह्मविदाप्नोति परम्, तरति शोकमात्मविदित्यादिश्रुतिप्रतिपन्नं प्रयोजनं च प्रथमसूत्रेण शास्त्रारम्भसिद्धयेऽर्थात्सूचितं प्रतिपादयितुं तत्प्रत्यनीकस्य बन्धस्याध्यासात्मकत्वं लक्षणसंभावनासद्भावप्रमाणैः सिषाधयिषुः प्रथमं तावदध्यासमाक्षिपति—युष्मदस्मदित्यादिना—मिथ्येति भवितुं युक्तमित्यन्तेन भाष्येण ।

उपसंहारः—

एतदुत्तरत्वेनाचार्यं पूजयन्नुत्तरसूत्रमवतारयति भगवान् भाष्यकारः—अत उत्तरं भगवानिति । ऐश्वर्यस्यान्तवत्त्वं त्वया साध्यते, किं वा मुक्त्यभावः । तत्र पूर्वस्मिन्कल्पे सिद्धसाधनता । उत्तरत्र श्रुतिविरोधः, तेषां क्रममुक्तिप्रतिपादनादित्याह नापि रश्मीति । ननु निर्गुणब्रह्म-

विदामनावृत्तिः किमिति नोक्तेति तत्राह—सम्यग्दर्शनेति। तेषामावृत्तिशङ्काया अप्यभावादित्यर्थः। सगुणब्रह्मविदामपि ब्रह्मलोकं गतानां तत्रोपपन्नसम्यग्दर्शनप्रमादादेव मुक्तिरित्यप्यवगमात् सम्यग्दर्शिनामनावृत्तिः सुतरां सिध्यतीत्याह—तदाश्रयणेनैव हीति। सूत्रा(त्रव्या)भ्यासस्य प्रयोजनमाह—"अनावृत्तिश्शब्दादनावृत्तिः शब्दादिति" सूत्रव्यासदशास्त्रपरिसमाप्तिं द्योतयतीति।

इति चतुर्थोऽध्यायः समाप्तः

प्रतिपाद्यविषयः—

शंकराचार्यकृतशारीरकभाष्यव्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। समन्वयाधिकरणान्तो मुद्रितो दृश्यते॥

## No. (567) 880 भाष्यरत्नप्रभा

| | |
|---|---|
| ग्रन्थकर्ता—गोविन्दानन्दः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—80 |
| प्रमाणम्—15¾ × 1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1–88 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

वियदादिविधातारं सीतास्याब्जमधुव्रतम्।
नित्यचिद्विश्वकर्त्रात्माभिन्नं सर्वेश्वरं भजे॥

जीवस्यानुत्पत्तिप्रसङ्गेनाकाशस्याप्युत्पत्त्यसंभवमाशंक्य परिहरन्नादावेकदेशिमतमाह—न वियदश्रुतेः। वियत्प्राणपादयोरर्थं संक्षिपन्पूर्वपादेन सङ्गतिमाह—वेदान्तेष्विति। भिन्नोपक्रमत्वमेवाह—केचिदित्यादिना। भूतभोक्तृश्रुतीनां मिथोविरोधशङ्कानिरासो वियत्पादार्थः। लिङ्गशरीरश्रुतीनां तन्निरासः प्राणपादार्थः॥

उपसंहारः—

C 659 कोशवत् ।

प्रतिपाद्यविषयः—

C 659 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयाध्यायतृतीयपादमारभ्य चतुर्थाध्यायसमाप्तिपर्यन्तो ग्रन्थभागो विद्यते ॥

No. (568) **3721/2 भाष्यविवरणसङ्ग्रहः**

| | |
|---|---|
| ग्रन्थकर्ता—गङ्गाधरप्रकाशमुनिः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—96 |
| प्रमाणम्—19½ × 1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-313 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

भाष्यं गभीरभावं विकटतरपदाटोपभावस्य टीका
तस्याः प्राणापमाना विवरणसरणीर्विस्तरेणास्तगाहा ।
व्याख्याव्याख्येयभावस्सकलजनमनःखेदहेतुश्च तेषां
तेनाहं सारमात्रं विशदतरपदैः संग्रहीष्यामि किंचित् ॥

अथ टीकाकारो भाष्यं व्याख्येयत्वे प्रत्यक्षास्तदेतद्विकटमिव प्रतिभाति युष्मदस्मादित्यादेरभाष्यत्वात् न च भाष्यकारकृतत्वेन भाष्यत्वम्, तदीयश्लोकादौ व्यभिचारात् । इतरेतराश्रयप्रसङ्गाच्च.

उपसंहारः—

अविनाशी वा अरे अयमात्मा इत्यादिश्रुत्यन्तरेण विरोधात् । विशेषविज्ञानाभावमात्रगोचरत्वाच्च । एवं.......सुखमस्वाप्समिति परामर्शोऽपि ना .........सुषुप्ते स्वरूपचैतन्यस्यैव मूलभूतसुखानुभवत्वात् । तस्मान्न शून्यमात्मदेहादिव्यतिरिक्तः कर्ता भोक्ता चेत्यपरे ॥ हरिः ओम् ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मसूत्रशांकरभाष्यटीकागता विषयाः संक्षिप्य निर्दिश्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे आदितो वर्णकत्रयं समग्रं, चतुर्थं चासमग्रं वर्तते। अमुद्रितश्च दृश्यते ॥

No. (569) 4413 भाष्यविवरणसङ्ग्रहः

ग्रन्थकर्ता—गङ्गाधरप्रकाशमुनिः
पत्रविशेषः—तळपत्रात्मकः
प्रमाणम्—$13\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-141

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

3721/2 कोशवत्।

उपसंहारः—

तथा हि—दुरितैश्चित्तकृत विपरीतप्रवृत्तिभिर्विषयासंभावनया देहेन्द्रियादिविपरीतभावनया च प्रतिबन्धः संभवति। ततो निश्चयापरोक्षानुभवो न ज्ञायते। तत्र स्वधर्मानुष्ठानाद्दुरितापगमः। शमादिसेवया चित्तस्य विपरीतप्रवृत्तयो रुध्यन्ते........................।

प्रतिपाद्यविषयः—

3721/2 कोशवत्।

वक्तव्यविशेषः—

3721/2 कोशवत्।

## No. (570) 3375 भाष्यहृदयम्

| | |
|---|---|
| ग्रन्थकर्ता— वेंकटेशशास्त्री | प्रतिपुट पङ्क्तयः—9 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—16⅞ × 1¼ अङ्गुलानि | कालः (कोशस्य) – ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-60, 1-2, 1-32, 1-9 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यन्मयं च यदाधारं यदात्मकमिदं जगत् ।
तन्मङ्गळं परं ब्रह्म सोऽहमस्मीति भावये ॥

जिज्ञासाधिकरणन्यायेन मुक्तौ ब्रह्मज्ञानं साधनम् । तत्र च श्रवणादिकं साधनम् । तत्र च साधनचतुष्टयसम्पन्नः अधिकारीति स्थितः । तथा पुरुषार्थोऽतःशब्दादिति बादरायण इत्यधिकरणन्यायेन ज्ञानादेव तु कैवल्यमिति स्थितम् । तथा हि ब्रह्मविदाप्नोति परम्, तरति शोकमात्मवित् इति श्रूयते । ब्रह्मविदित्यस्याः श्रुतेरयमर्थः ब्रह्मवेत्तीति ब्रह्मवित् । विद ज्ञाने । ब्रह्मज्ञानी । अहं ब्रह्मास्मीति साक........ का—वान् परकैवल्यं ब्रह्मसायुज्यलक्षणं आप्नोति प्राप्नोति ब्रह्म प्राप्नोति ब्रह्मैवावतिष्ठते ।

उपसंहारः—

लक्षणया विचारलक्षणं वेदान्तश्रवणं कर्तव्यम् । तत्र वेदान्तश्रवणे साधनचतुष्टयसम्पन्नः अधिकारीति ब्रह्मज्ञानान्मुक्तिः तत्र च श्रवणं साधनम् । तत्र च साधनचतुष्टयसंपन्नोऽधिकारीति जिज्ञासाधिकरणे सिद्धान्तितम् ।

इति श्रीवत्सगोत्रतिरुमलावधानिपुत्र वेंकटम्मातनयताम्रपर्णीतीर आतूरुग्रामवासिना ब्रह्मज्ञानि-
वेंकटेश्वरशास्त्रिणा कृते भाष्यहृदयग्रन्थे मायानिरूपणप्रकरणं सम्पूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अद्वैतपराणां श्रुतिवाक्यानामर्थवर्णनं, यज्ञादिकर्मकर्तॄणां स्वर्गादिस्थानवर्णनं, कर्मक्षये स्वर्गादवतरतां तत्र तत्र जन्मनिरूपणं, नित्यादिप्रलयनिरूपणं, मायानिरूपणमित्यादिविषयाः ब्रह्मसूत्रशांकरभाष्याभिप्रायवर्णनमुखेन क्रियन्ते यस्वाजिज्ञासाधिकरणसमाप्तिः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च दृश्यते ॥

## No. (571) B 474 भिक्षुकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–3 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं पूर्णमद इति शान्तिः । अथ भिक्षूणां मोक्षार्थिनां कुटीचक-बहूदक-हंस-परमहंसाश्चेति चत्वारः । कुटीचको नाम गौतम-भारद्वाज-याज्ञवल्क्य-वसिष्ठप्रभृतयः । अष्टौ ग्रासं चरन्तो योगमार्गे मोक्षमेव प्रार्थयन्ते । अथ बहूदका नाम त्रिदण्ड-कमण्डलु-शिखा-यज्ञोपवीत-काषाय-वस्त्रधारिणो ब्रह्मर्षिगृहे मधुमांसं वर्जयित्वा अष्टौ ग्रासान् भैक्षाचरणं कृत्वा योगमार्गे मोक्षमेव प्रार्थयन्ते ॥

भा :—कुटीचकादि सन्न्यासाश्चत्वारो यत्र वर्णिताः ।
भिक्षुकोपनिषत्सेयं मुक्त्यै व्याख्यास्यतेऽधुना ॥

ननु तमेव धीरो विज्ञायेति ।

उपसंहारः—

भा-तथा सति चतुर्णोऽप्याश्रमांस्त्यजतामपि ध्यानयोगैकनिष्ठत्वात्तत्र ब्रह्ममार्गे सम्यक्सम्पन्ना इत्युक्त्या ध्यानयोगाभ्यासमार्गेण ब्रह्मात्मैक्यसम्यग्दर्शनसम्पन्नत्वाच्च न कथंचिदपि तेषां स्वेच्छाचारः शंक्यः । तस्मात् सर्ववर्णभिक्षावतामप्यतिवर्णाश्रमिणां त्यक्ताशेषलौकिकव्यापारत्वे सति न कश्चिदपि प्रत्यवाय इति मन्तव्यम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु भिक्षुकोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे कुटीचक-बहूदक-हंस-परमहंसानां लक्षणादीनि प्रतिपाद्यन्ते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (572) 171/2 भेदधिक्कारः

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—79 |
| प्रमाणम्—$17 \times 1\frac{1}{2}$ अङ्गुलानि | कालः—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–9 | समग्रोऽसमग्रो वा—समग्र |

उपक्रमः—

वेदान्तवनसंचारि नीलाचलगुहाशयम् ।
ज्योतिर्विराजते ध्वस्तमायावरणवारणम् ॥

किं न त्वं नरसिंह एव यदि वा नाहं न नो चेत्कथं
बन्धो मय्यखिलेश्वरे त्वयि विभो किं नास्ति मत्तः परः ।
भूयादर्थवदात्मबन्धहर इत्याद्यं वचोऽपौरुषं
न त्वं ना तदहं त्वमेव नृहरे भूयासमात्मंस्त्वयि ॥

हृदयालयमालम्ब्य करुणारससुन्दरम् ।
गुरूणां चरणाम्भोजं कुर्वे भेदस्य धिक्कृतिम् ॥

ॐ अन्तःकरणातिरिक्तोऽहमिति प्रतीयमानो जीवः परस्मान्न भिद्यते, चेतनत्वात्पदार्थत्वाद्वा, ब्रह्मवत्, विपक्षे भेदग्राहकप्रमाणाभावात् अभेदश्रुत्यप्रामाण्यप्रसङ्गाच्च नाप्रयोजकत्वम् । तथा हि—

मानाभावादयुक्तेश्च न भिदेश्वरजीवयोः ।
जीवानामचितां चैव नात्मनो न परस्परम् ॥

उपसंहारः—

भेदश्चास्माकं साक्षिभास्य इति न तत्र प्रतियोगिकत्वादिज्ञानापेक्षा । धर्मिप्रतियोगिस्वरूपस्य तत्स्वरूपाच्च नातिप्रसङ्गः धर्म्यादौ प्रमाणस्यापेक्षितत्वात् । अत एव समूहालम्बनभेदोऽपि भेदिभिः सहैवावभासते । (भेदोऽपि भेदिन इवावभासते ।)

तस्मात्तत्त्वमसीत्यादेः सत्यज्ञानसुखात्मकम् ।
जीवो ब्रह्मेति संसिद्धमद्वैतं ज्योतिरस्तु मे ॥

आस्तामन्यप्रमाणत्वमभेदे सर्ववस्तुनः ।
भेदप्रमाणमेवैतदद्वैतं साधयेत्स्फुटम् ॥

गुरुचरणसकाशात् हृद्गतं निर्गतं त-
द्विगुणमनुगुणं वा वीक्ष्यतां तत्क्षमात्मा ।
अपि विसृजति कश्चित्काचमालावमत्या
शतमखमणिमालां शारदाकाशनीलाम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यजगन्नाथाश्रमपूज्यपादशिष्यश्रीनरसिंहाश्रममुनि-
विरचितो भेदधिक्कारः समाप्तः

प्रतिपाद्यविषयः---

अस्मिन्ग्रन्थे जीवब्रह्मभेदे प्रमाणभूतानां 'नाहमीश्वर' इत्यादि-प्रत्यक्षादीनां निरासपूर्वकं तयोरभेदे श्रुत्यादिप्रमाणान्युपन्यस्य जीव-ब्रह्मणोरैक्यं समर्थ्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च दृश्यते ॥

## No. (573) 3885/2 भेदधिक्कारः

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—32 |
| प्रमाणम् —$9\frac{1}{2}\times1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-25 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

171/2 कोशवत् ।

उपसंहार:--

न च घटादिस्वरूपं भेद: पटादिमात्रात्मक तदभेदविरोधि तदुभय-सामानाधिकरण्यधर्मधर्मिभावसत्त्वात् न च परस्य घटादिनिरूपितोऽन्यो-भेदाख्योऽस्ति। सप्रतियोगिकभेदस्य निष्प्रतियोगिस्वरूपत्वानुपपत्तेः। भेदयोर्धर्मधर्मि भावानुपपत्तेश्च। तस्मात्परपक्षे भेदप्रतीतिर्नि........

प्रतिपाद्यविषय:—

171/2 कोशवत्।

वक्तव्यविशेषः—

171/2 कोशवत्।

## No. (574) 634/1 भेदधिक्कारः

| | |
|---|---|
| ग्रन्थकर्ता– नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः – 6 |
| पत्रविशेष:-- ताळपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—82 |
| प्रमाणम्— $17\frac{1}{4}\times1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपि:--आन्ध्रलिपिः | स्थिति:—समीचीना |
| पत्राणि—1–13 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

171/2 कोशवत्।

उपसंहारः—

171/2 कोशवत्।

प्रतिपाद्यविषयः—

171/2 कोशवत्।

वक्तव्यविशेषः—

171/2 कोशवत्।

## No. (575) A 187 भेदाधिकारटिप्पणी

ग्रन्थकर्ता—?
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13¼×8 अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-114

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—30
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

...तिवाच्यम्, सर्वगतप्रसृतचैतन्यैकदेशाध्यस्तान्तःकरणो ... नुभवोऽपीति मतेनाद्वितीयब्रह्मण एवेदं लक्षणम्। वस्तुतस्तु बिम्बत्वोपहितरूपेण जगदभि .................. यैवेति तत्त्वम्। स्वेष्टदेवतेति। स्वेष्टदेवतास्मरणात्मकमपि मङ्गळं सूचयितुमिति भावः। नर ... सति ... रिवेति .... संहरवद्विरुद्धधर्माक्रान्तमिति तदर्थः। यदि चावच्छेदकभेदेन काल्पनिक तद्धर्मिभेदेन वा तदुभयसत्त्वाविरोधः तत्प्रकृतेऽपि समानमिति भावः। साक्षात् ...... प्रतिबन्धा परोक्षज्ञानवत्वं विवक्ष ...... प्रतिबन्धापरोक्षज्ञानवत्त्वं वा। नाद्यः, असंभवात्। अन्यथा इदानीं सर्वमुक्तिप्रसङ्गात्। न द्वितीयः, तस्य सर्वसाधारणत्वात्॥

उपसंहारः—

एवं ब्रह्मणो जीवरूपेण संसारित्वमुपपाद्य प्रपञ्चात्मकतामपि दर्शयति—इन्द्रो मायाभिरिति। श्रुत्यर्थमभिप्रेत्य प्रतिबिम्ब हेत्वज्ञानस्य उपक्रमावगतमुक्ति न चाद्यरूपं तदस्यैवाज्ञानमर्थः तथास्ति रूपं रूपमिति पदवीप्सयैवाज्ञानभेदस्य स्फुटत्वेन मायाभिरिति बहुवचनप्रत्ययनिर्देशस्य प्रमाणत्वेनोपन्यासानुपपत्तेः अतो वर्णितं नित्यैवेति श्रुत्यर्थोऽभिमत इति मन्तव्यम्। याभिक्तत्वेति। युक्ता ह्यस्येति वाक्यस्य ब्रह्मण इन्द्रियादितादात्म्या ...... योगो मायाकृत इत्येवमर्थकत्वादिति भावः। बाधेति। मुखादिप्रतिबिम्बप्रतियोगिकभेदस्याविद्याप्रतिबिम्बात्मनः सत्वादित्यर्थः। न च तत्प्रतिबिम्ब .........।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थस्योपक्रमोपसंहारौ न स्तः। ग्रन्थकर्तृनामनी च स्पष्टं न ज्ञायेते। अमुद्रितश्च।

## No. (576) 4789 भेदधिक्कारप्रकाशः (न्यक्कारहुंकारः)

| | |
|---|---|
| ग्रन्थकर्ता — वेंकटनाथभट्टः | प्रतिपुटं पङ्क्तयः - 9 |
| पत्रविशेषः — ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि— 88 |
| प्रमाणम् — 19 × 1½ अङ्गुलानि | कालः (कोशस्य)–180(प्रमाथिवत्सरे) |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि— 1–103 | समग्रोऽसमग्रोवा-समग्रः(द्वौपरिच्छेदौ) |

उपक्रमः—

यस्मिन्भानुमरीचिकाजलसमं विश्वं जगत्कारणे
वेदान्तप्रतिपाद्यमानपरमार्थानन्दबोधानन्दबोधात्मनि ।
अध्यस्तं सदिव प्रकाशत इवाभाति स्वयं मायया
ध्यायामस्तदपास्तदोषममलं सच्चित्परं शाश्वतम् ॥

श्रीमन्मौद्गल्यगोत्राम्बुनिधिहिमकरो रम्यतोण्डीरदेशे
ग्रामश्रेष्ठं महान्तं मुसलमुरुगुणैर्भूषितं सूरिमुख्यैः ।
अध्यासीनं स . . . . . . . विद्यगुरु . . . . . . .
. . . . . . . . . . . मुनिरचितं भेदधिक्कारमेतत् ॥

श्रीमद्वेंकटनाथाख्यो राजराजप्रतिष्ठितः ।
ग्रामे नल्लगुळाख्येऽहं कुर्वे न्यक्कारहुंकृतिम् ॥

. . . वेदान्तशास्त्रसंबन्ध किंचित्प्रकरणमारभमाणस्तत्र प्रेक्षावत्प्रवृत्ति सिध्यर्थं विषयप्रयोजने दर्शयन् चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तये . . . . . . यच्चानुष्ठितमीश्वरतत्त्वानुस्मरणरूपमङ्गळं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—वेदान्तेति । लक्षणप्रमाणाभ्यां वस्तुसिद्धेः प्रथमं लक्षण. . . . . . . . . तिस्वरूपलक्षणं तस्य तटस्थलक्षणं विराजत इति विविधनाना-रूपप्रपञ्चात्मना दिव्यत इत्यर्थः। अनेन ज्योतिषः प्रपञ्चात्मत्वप्राप्तया कार्यं व . . . . . . . . च्छिन्नस्फूर्तिमत्तया कर्तृत्वं च सूचितम् ॥

उपसंहारः—

शतमखमणिमालां इन्द्रनीलमणीनां मालां इन्द्रनीलरत्नमाला न अकार्त्रिद्वानिः । किंतु नघस्तन्महिमा । तथैव वर्तत इति सिद्धमिति ।

येनेदं भुवनं जातं सच्चिदानन्दलक्षणम् ।
सोऽनन्तः परमात्मा नः पायान्नरमृगाकृतिः ॥

इति श्रीमन्मौद्गल्यगोत्रपयोनिधिजातेन श्रीमद्वेंकटनाथभट्टेन विरचिते न्यक्कारहुंकार-भेदधिक्कारप्रकाशे प्रमेयखण्डनरूपः द्वितीयः परिच्छेदः परिपूर्णः

प्रतिपाद्यविषयः—

अयं ग्रन्थः भेदधिक्कारस्य व्याख्यानरूपः। अर्थात् भेदधिक्कार-खण्डनरूपस्य न्यक्कारस्य खण्डनपरः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। अमुद्रितश्च दृश्यते। अस्मिन्ग्रन्थे प्रतिपुटं ग्रन्थविच्छेदः संदृश्यते ।

## No. (577) 171/3 भेदधिक्कारसत्कारः

| | |
|---|---|
| ग्रन्थकर्ता—नारायणाश्रमीः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—82 |
| प्रमाणम्—17×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—10-55 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मृषामायाशक्त्याऽऽवृतमहिमनि ब्रह्मणि परे
जगज्जालं जातं स्फुरति वियतीवोरुनगरम् ।
विरिञ्चिश्रीशेशत्रिदशनरतिर्यग्गतभिदा
कुतोऽतो भूमाहं निरवधिसदानन्दघनचित् ॥

काशते कलितं यस्य पदं वैदिकमस्तकैः ।
भक्तमुक्त्यै समीहन्तं तं नृसिंहगुरुं भजे ॥

गभीरभावभारेण दुर्वहा गौरवी कृतिः ।
तथापि भेदधिक्कारसत्क्रियां श्रद्धयारभे ॥

यद्यपि श्रुतिस्मृतीतिहासपुराणागमैः क्रियासमभिहारेण जगन्निदाने सर्वज्ञे परमात्मनि सजातीयादिसमस्तभेदो निन्दितो निषिद्धश्च। यद्यपि चात्र भगवद्भिर्बादरायण-भगवत्पादादिभिः पूर्वाचार्यैरारम्भणाधिकरण-न्यायतोऽपि भेदसत्ता निराकारि। तथा—

उपसंहारः—

निर्गतं ग्रन्थरचनया बहिः प्रकाशितं यत्तद्विगुणं पुरुषार्थानुपयोगित त्तदनुगुणं वेति वीक्षतां विचारयतु, कः तत्क्षमात्मा तद्विचारे क्षमः समर्थः आत्मा (अन्तःकरणं यस्य सः विचारे सत्यत्र किंचिदपि वैगुण्यं नेति भावः। अत्र विचार रहितानामनपेक्षामात्रेण वैगुण्यं न संभावनीयमित्यत्र दृष्टान्तमाह—) तमाह—अपीति। स्वच्छामिन्द्रनीलमणिमालां कश्चि-दविचार्य काचमणिमाला भ्रान्त्या त्यजत्यपि नैतावता सा प्राज्ञैरुपेक्ष्यत इत्यर्थः।

वेदान्तबृन्दविपिने विततं विशुद्धमद्वैतमार्गमपवर्गपदोधिरोहम्।
श्रीमद्गुरूक्तनयनुन्नसमस्तशङ्कामास्थाय यान्तु पदमुत्तममस्तदोषाः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यभगवन्नृसिंहाश्रमचरण परिचरण निरत नारायणाश्रम-
विरचिता भेदधिक्कारसत्क्रिया समाप्ता

प्रतिपाद्यविषयः—

भेदधिक्कारव्याख्यानरूपोऽयं ग्रन्थः, अर्थात् भेदधिक्कारन्यक्कारस्य खण्डनपरश्च।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च दृश्यते॥

## No. (578) 3885/1 भेदधिक्कारसत्कारः

| | |
|---|---|
| ग्रन्थकर्ता—नारायणाश्रमी | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—32 |
| प्रमाणम्—$9\frac{1}{2}\times1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-89 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

171/3 कोशवत्।

उपसंहारः—

171/3 कोशवत्।

प्रतिपाद्यविषयः—

171/3 कोशवत्।

वक्तव्यविशेषः—

171/3 कोशवत्।

## No. (579) 634/2 भेदधिक्कारसत्कारः

ग्रन्थकर्ता— नारायणाश्रमी
पत्रविशेषः – ताळपत्रात्मकः
प्रमाणम्—$17\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—14-72

प्रतिपुटं पङ्क्तयः – 6
प्रतिपङ्क्त्यक्षराणि—82
कालः (कोशस्य)—?
स्थितिः— समीचीना
समग्रोऽसमग्रो वा— समग्रः

उपक्रमः—

171/3 कोशवत्।

उपसंहारः—

171/3 कोशवत्।

प्रतिपाद्यविषयः—

171/3 कोशवत्।

वक्तव्यविशेषः—

171/3 कोशवत।

## No. (580) 1217 भेदधिक्कारसत्कारः

ग्रन्थकर्ता—नारायणाश्रमी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$13\frac{1}{4}\times1\frac{3}{5}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-98

प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—48
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

171/3 कोशवत्।

उपसंहारः—

171/3 कोशवत्।

प्रतिपाद्यविषयः—

171/3 कोशवत्।

वक्तव्यविशेषः—

171/3 कोशवत्।

## No. (581) C 1730 भेदधिक्कारसत्कारः

ग्रन्थकर्ता—नारायणाश्रमी
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$9\frac{3}{4}\times4\frac{1}{3}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-50

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—46
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

171/3 कोशवत्।

उपसंहारः—

171/3 कोशवत्।

प्रतिपाद्यविषयः—

171/3 कोशवत्।

वक्तव्यविशेषः—

171/3 कोशवत्।

## No. (582) 1835/1 भेदनिरासप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—अन्नम्भट्टः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—88 |
| प्रमाणम्—17×1¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–16 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यस्याः प्रसादलेशेन मूकोऽपि विबुधायते।
कमलासनकान्तां तां वाग्विभूत्यै नमाम्यहम्॥

तत्र ताव"त्सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय्यमिति" श्रुतिपन्नमद्वैतं भेदग्राहिप्रमाणविरोधादनुपपन्नमिति मन्यमानाः केचिदभेदश्रुतीनामन्यार्थं कल्पयन्ति। तद्दर्शितानां वैदिकानामन्यथा प्रतिपत्तिर्मा भूदिति तद्विरोधो निरस्यते। तत्रेदमस्माद्भिन्नमिति प्रतीयमानो भेदः धर्मिस्वरूपं धर्मो वा। तत्र न तावदाद्यः; इदमस्माद्भिन्नम्, घटः पटो न भवतीत्यादौ प्रकारतया भासमानस्य धर्मिस्वरूपत्वानुपपत्तेः। अयं घटः घटः पटाद्भिन्नमिति प्रतीत्योरविशेषप्रसङ्गाच्च। विषयवैचित्र्यव्यतिरेकेण प्रतीतिवैचित्र्यस्य वक्तुमशक्यत्वात्।

उपसंहारः—

न निर्विशेषब्रह्माद्वैतसिद्धिरिति तदतिस्थवीयः। उपक्रमादिबलतात्पर्यलिङ्गसहितपरः सहस्रनिर्विशेषाद्वैतश्रुत्यनुरोधेन सत्यकामादिश्रुतिवत् बृहन्तो ह्यस्मिन्गुणा इति श्रुतेरपि व्यावहारिक (पत्रलोपः) ब्रह्मनिर्विकल्पकं नाज्ञाननिवर्तकम्। समान ............ प्रकारत्वविवक्षायामपि स्वरूपविषयकस्यावश्यकत्वे लाघवेन स्वरूपविशेषविषयकत्वेनैव विरोधकल्पनात्। तस्मादविद्यया अभेदानुपलम्भसंभावनाद्वैतश्रुतेरनुपलब्धिविरोधः। संभवैतिह्ययोर्मानान्तरत्वेऽपि नाद्वैतबाधकत्वम्। तस्मादद्वैतश्रुतीनां न प्रमाणान्तरविरोधगन्धोऽपीति सर्वमनवद्यम्।

इति श्रीमहोपाध्यायश्रीमदद्वैतविद्याचार्यश्रीराघवसोमयाजिकुलावतंस श्री तिरुमलाचार्यवर्यस्य सूनोरन्नम्भट्टस्य कृतिषु भेदनिरासप्रकरणं समाप्तिमगमत्

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे भेदग्राहि प्रत्यक्षादि प्रमाणविरोधान्नाद्वैते प्रमाणमस्तीति पूर्वपक्ष: भेदग्राहक प्रमाणानामाभासीकरणपूर्वकं बलवता सदेवेत्यादि-श्रुतिप्रमाणेनाभेदः समर्थ्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च दृश्यते ॥

## No. (583) B 475 मण्डलब्राह्मणोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता— अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपि:— आन्ध्रलिपि: | स्थिति:—समीचीना |
| पत्राणि—1-18 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रमः—

मू–ओं पूर्णमद इति शान्तिः। याज्ञवल्क्यो ह वै महामुनिरादित्य-लोकं जगाम, तमादित्यं नत्वा भो भगवन्नादित्य आत्मतत्त्वमनुब्रूहीति । स होवाच नारायणः ज्ञानयुक्तः यमाद्यष्टाङ्गयोग उच्यते । शीतोष्णाहार-निद्राविजयः सर्वदा शान्तिः निश्चलत्वं विषयेन्द्रियनिग्रहश्च ते यमाः । गुरुभक्तिसत्यमार्गानुरक्तिसुखागतवस्त्वनुभवश्च तद्वस्त्वनुभवेन तुष्टिः निस्सङ्गता ।

भाः—अथेदानीं निष्प्रपंचाखण्ड परंजोतिर्भावानानपेक्षं भ्रूमध्या-द्याधार ज्योतिर्निष्ठमात्रेणाखण्डं स्वयमेव प्राप्यतेत्यादि.

उपसंहारः—

भा–यदि चिरसमाधिजनित ब्रह्मामृतपानपरायणो यः कश्चिद्भवेत् स तुरीयाश्रम्यन्यो वा सन्न्यासीति सर्वैरपि पूज्यस्स्यात् । इह तु सन्न्यासवेषमात्रवतामपचरितानि वाचामगोचराणि दृश्यन्ते । तस्मात्

कलौ पञ्च विवर्जयेदिति स्मृतिवचनं सुदृढं निश्चित्य तुरीयाश्रमविमुखा एव ब्रह्मप्रणवार्थविचारादिभिः कृतार्था भवेयुरित्यवगन्तव्यम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु मण्डलब्राह्मणोपनिषद्भाष्ये पंचमं ब्राह्मणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे यमाद्यष्टाङ्गयोगाः, अन्तर्लक्ष्यस्वरूपं, अमनस्कलक्षणं, व्योमपञ्चकलक्षणं च निरूप्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (584) A 655 मध्वमतध्वान्तदिवाकरः

| | |
|---|---|
| ग्रन्थकर्ता—भास्करदीक्षितः | प्रतिपुटं पङ्क्तयः— 11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि —20 |
| प्रमाणम्—13×8½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-256 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

प्रणम्य सर्वान् शिरसा सर्वशास्त्रप्रवर्तकान् ।
कुर्वे तदाज्ञया मध्वमतध्वान्तदिवाकरम् ॥
अथातो ब्रह्मजिज्ञासा ॥

अत्र सूत्रे कर्तव्येति पदं अध्याहर्तव्यम् । अन्यथा निरर्थकानुपपत्तेः कर्तव्यता च । प्रकृतिप्रत्ययार्थयोरनुपपत्तेरिति विचारो लक्ष्यते । तथा सति तरति शोकमात्मवित्, इत्यादिशास्त्रपर्यालोचनया मोहहेतुत्वेनात्मज्ञस्य इच्छाविषयत्वसंभवात् तदर्थं ब्रह्मविचारः कर्तव्य इति पर्यवस्यति । ब्रह्मशब्देन देशकालवस्तुरूप त्रिविधपरिच्छेदशून्यं अद्वितीयमानन्दरूपं स्वप्रकाशचिदात्मकं अनाद्यविद्यातद्विकारानधिष्ठानात्मकं हेयप्रत्यनीकं शुद्धबुद्धमुक्तस्वभावात्मकमुच्यते—तमेवं विदित्वा अतिमृत्युमेति ' तमेवं विद्वानमृत इह भवति '। नान्यः पन्था अयनाय विद्यते । "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादिश्रुतिस्मृतीनां तदर्थाभिव्यञ्जकानां सत्वात् ।

उपसंहार:—

तत्र "ब्रह्मा विष्णुर्जातो जातवेदा" इति श्रुत्या
सदाशिवेश्वरो रुद्रस्तथा नारायणो विधिः।
इति नाम्ना प्रकीर्त्यन्ते तेषु रुद्रश्शिवाज्ञया॥

पुरस्तादण्डसर्गस्य ससर्जापो द्विधा पुनः।
असामेकांशके विद्वन् स्वकं वीर्यमुपासृजत्॥

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिञ्जज्ञे स्वयं विष्णु र्ब्रह्मेशानसमन्वितः॥

इति स्कान्दसारसंहितायां वचनेन लिङ्गपुराणवासिष्ठलैङ्ग्यवचनाभ्यां च अवगतमिति। तदपि विष्णुमात्रप्रवृत्तसाधारणलिङ्गाभावात् कथमत्र रुद्रव्यावृत्तब्रह्मसिद्धिरिति दिक्। आकाशस्तल्लिङ्गात्॥

केताण्डपट्टि निगमान्त चक्रवर्तितनूजेन श्रीकृष्णचक्रवर्तिना लिखितोऽयं ग्रन्थः।

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे उपजीव्यत्वादिना आक्षिप्तं प्रत्यक्षस्य प्राबल्यमाभासीकृत्य श्रुत्या जीवपरयोरैक्यं समर्थ्यते। प्रत्यधिकरणं द्वैतिभिरुक्तं नारायणस्य प्रतिपाद्यत्वं सप्रमाणं निराकृत्य शिवपारम्यं च समर्थ्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे आकाशाधिकरणपर्यन्तो ग्रन्थो विद्यते। अमुद्रितश्च दृश्यते॥

## No. (585) 3313 मध्वमतचपेटा (सव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—रामकृष्णभट्टः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः - तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि —72 |
| प्रमाणम्—18×1½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः — शिथिला |
| पत्राणि—1–22 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

व्या-त्रिमूर्तिभिन्नं शिवमव्ययं च श्रुत्यन्तवेद्यं निखिलप्रपञ्चे।
सृष्ट्यादिहेतुं सततं नमामो विघ्नौघशान्त्यै सकलैश्शरण्यम्॥

वेंकटाद्रिकुलोत्पन्नतिर्मलार्यस्य सूनुना।
चपेटायाः प्रदीपोऽयं रामकृष्णेन तन्यते॥

निर्विघ्नपरिसमाप्तिकामः शिष्यशिक्षायै वाग्देवीनमस्काररूपं मङ्गलं ग्रन्थत उपनिबध्नाति—

मू-रसनारङ्गभूमौ मे या नरीनर्ति भारती।
लीलयेदं बरीभर्ति सा चरीकर्तु शं शिवा॥

व्या-नृत्यतेर्यङ्लुगन्ताल्लुटि "रुग्रीकौ चे" त्यभ्यासस्य रीगागमः। "यङो वे"ति विकल्पादीडभावः। बिभर्तेर्यङ्लुकि "ऋतश्चे"ति—रीगिति विशेषः।

मू-रामकृष्णाख्यभट्टोऽहं तातं तिरुमलाभिधम्।
नत्वा सद्युक्तिभिः कुर्वे मध्वतन्त्रचपेटिकाम्॥

व्या-तत्र तावन्नित्यशुद्धबुद्धमुक्तानन्दाद्वयपरब्रह्मपरतया "अथातो ब्रह्मजिज्ञासे"त्यादिचतुर्लक्षणीं व्याचिख्यासवः प्रथमसूत्रे अद्वितीयं ब्रह्मैव जिज्ञास्यत्वेन प्रतिज्ञाय तस्यैव "जन्माद्यस्य यत" इत्यनेन स्वरूपतटस्थलक्षणे अभिधाय "शास्त्रयोनित्वा"दित्यनेन श्रुत्यन्तैरवेद्यत्वमुपपाद्य "तत्तु समन्वया"दित्यनेन सकलश्रुत्यन्तगिरां तत्र तात्पर्यवत्त्वरूपं समन्वयमुक्त्वा प्रधानादौ जगज्जन्मादिकर्तृत्वरूपब्रह्मलक्षणमतिव्याप्तमित्याशङ्कामपाकर्तुमीक्षत्यधिकरणं व्याख्याय—

उपसंहारः—

तस्मादघटितघटनासमर्थानादिसिद्धशक्त्यात्मकमायाशबलं ब्रह्मैव शिवपदवाच्यं मूर्तित्रयनियामकं वस्तुतस्तदभिन्नमारोप्य प्रपञ्चाधिष्ठानमेव जगज्जन्मादिकर्तृ तदपि न सर्वशब्दाभिधेयमिति सर्वेष्टसिद्धिः।

इत्थं पञ्चाधिकरणीं प्रस्तुत्येह विचारितम्।
अन्येष्वप्यधिकारेषु माध्वतीर्थप्रसङ्गतः॥

संक्षेपतो यथाबुद्धि रामकृष्णाख्यसूरिणा ।
विद्वत्स्वकारि विज्ञप्तिस्तेन तुष्यतु शंकरः ॥

इति श्रीमन्महोपाध्यायवेदशास्त्रपारंगत वेंकटाद्रिकुलोत्तंस तिरुमलभट्टात्मज रामकृष्णभट्ट-कृत माध्वतन्त्रचपेटाप्रदीपस्सम्पूर्णतामगात्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे श्री आनन्दतीर्थीयसीक्षत्यधिकरणं व्याकरणन्यायमीमांसाविरोधोद्भावनपूर्वकं दूष्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च। यद्यप्युपसंहार-श्लोके आदितः पञ्चानामधिकरणानां विचारः प्रतीयते, तथाप्यस्मिन्ग्रन्थे आद्यन्तपर्यालोचनया पञ्चमस्यैवायमधिकरणस्य विचार इति गम्यते ॥

## No. (586) 3 मध्वमतविध्वंसनम् (मूलसहितम्)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—9 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—74 |
| प्रमाणम्—16×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-51 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

व्या—उद्घाट्य योगकलया हृदयाब्जकोशं
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयस्स मे दिशतु शाश्वतिकं मुकुन्दः ॥

मध्वतन्त्रमुखमर्दनं मया यत्कृतं प्रकरणं मिताक्षरम् ।
पद्यरूपमनतिस्फुटाशयं तत्सुखावगतये विविच्यते ॥

आनन्दतीर्थप्रवर्तित शारीरकशास्त्र प्राथमिकपञ्चाधिकरणप्रक्रियां प्रायस्तन्मतमर्यादयैव दूषयितुं प्रकरणमारभमाणः प्रारीप्सितप्रकरणनिर्विघ्न-

समाप्त्यादिप्रयोजनायादौ विशिष्टेष्टदेवतानुसन्धानसङ्कीर्तनरूपं मङ्गलमाचरन्नेव प्रकरणारम्भं तावदाक्षिपति—

मू—शिवं वा विष्णुं वा यद्यभिदधति शास्त्रस्य विषयं
तदिष्टं ग्राह्यं नस्सगुणमपि तद्ब्रह्म भजताम् ।
विरोधो नातीव स्फुरति न हि निन्दानयविदां
न सूत्राणामर्थान्तरमपि भवद्वार्यमुचितम् ॥

व्या—वस्तुतो निर्विशेषे ब्रह्मणि प्रतिष्ठितस्यापि शारीरकमीमांसाशास्त्रस्य केचन शिवं विष्णुं वा विषयं वदन्ति चेत्तदिष्टमेव ।

उपसंहारः—

मू—असुरान्विजिगीषोः स्वयमद्वैतब्रह्मदिव्यरत्नहरान् ।
विबुधेन्द्रस्य सखायः श्लोका मरुत इव सन्त्विमे मुख्याः ॥

व्या—असुराः खलु वैरोचनीमुपनिषदमाश्रिता देहात्मवादिनः प्राकृताः परेऽपि जीवस्यैव करचरणादि सकल कर्म ज्ञानेन्द्रियसहित देहरूपत्वं तेनैव देहेन स्वप्ने मुक्तौ व्यवहारानपि वदन्तो देहात्मवादिन इति साम्येनासुरशब्देनातिशयोक्त्या परे निर्दिष्टाः मुख्याः मुखे वदने भवाः सेनामुखवर्तिनश्च ॥

अथ स्वनाम ग्रन्थनाम च कीर्तयन् प्रकरणसमाप्तिं दर्शयति—

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ।
श्रीरङ्गराजमखिनः श्रितचन्द्रमौळिरस्त्यप्पदीक्षित इति प्रथितस्तनूजः ॥

सोऽयं मितपदमकरोन्महितार्थं मध्वशास्त्रमुखभङ्गम् ।
प्रीत्यै पुरामरातेः श्रीकामाक्षीसमेतस्य ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य श्रीविश्वजिद्याजि श्रीरङ्गराजाध्वरि वर सूनोरप्पदीक्षितस्य कृतौ मध्वतन्त्रमुखभङ्गव्याख्यानं मध्वमतविध्वंसनं संपूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे श्री आनन्दतीर्थविरचित शारीरकभाष्ये आदितः पञ्चस्वधिकरणेषु तदीयामेव प्रक्रियामनुरुध्य दूषणान्युद्धाट्यन्ते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च दृश्यते ।

## No. (587) 3881 मध्वमतविध्वंसनम् (मूलसहितम्)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—13 × 2 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—126-176 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

3 कोशवत्।

उपसंहारः—

सावकाशनिरवकाशादि न्यायविचारः प्रवर्तनीयः स्यात्। तस्मान्मते सृष्टिवाक्यानामनुमान विशेषवचनानुसारेणानेकस्रष्टृपरत्वं भवेदेवेति न पूर्वपक्षोपन्यस्तानुमानदूषणं युक्तमिति भावः॥

इत्यप्पयदीक्षितकृतौ कृतिनां मतेऽस्मि
न्नानन्दतीर्थकृतशास्त्रमुखावमर्दे।
एतत्तृतीयमधिकृत्य नयं प्रवृत्तं
दोषप्रदर्शनमुपस्करणीयमार्यैः॥

प्रतिपाद्यविषयः—

3 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितोऽधिकरणत्रयविचारपर्यन्तो ग्रन्थो विद्यते॥

## No. (588) 4134 मध्वमतविध्वंसनम् (मूलसहितम्)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदिक्षितः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—70 |
| प्रमाणम्—17½×1½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—147-207 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

3 कोशवत् ।

उपसंहारः—

3 कोशवत् ।

प्रतिपाद्यविषयः—

3 कोशवत् ।

वक्तव्यविशेषः—

3 कोशवत् ।

## No. (589) 2246 मध्वमतविध्वंसनम् (मूलसहितम्)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—76 |
| प्रमाणम्—17 × 1½ अङ्गुलानि | कालः (कोशस्य)—प्रायः 127 वत्सराः |
| लिपिः—आन्ध्रलिपिः | स्थितिः—अतिशिथिला |
| पत्राणि—1-61 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

3 कोशवत् ।

उपसंहारः—

3 कोशवत् ।

प्रतिपाद्यविषयः—

3 कोशवत् ।

वक्तव्यविशेषः—

3 कोशवत् ।

## No. (590) B 958 मध्वमतासाङ्गत्यप्रदर्शनम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—8½×6½ अङ्गुलानि | कालः (कोशस्य)—20-5-1919 |
| लिपिः—कन्नडलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-52 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

अत्रायं निर्गळितोऽर्थः सायुज्यमुक्तिभाजो देवाः स्वोच्च उत्तमदेवता अनुप्रवेशक्रमेण भगवद्देहमनुप्रविश्य ग्रहावेशन्यायेन भगवद्देहेन्द्रियैः तद्भुक्तानेव भोगान् भुञ्जानः कदाचिद्बहिर्निर्गत्य आत्मस्वरूपभिन्नैः चिन्मात्रदेहेन्द्रियैः स्वसङ्कल्पोपनतानभोगानभुञ्जानाः आनन्दवल्ल्युक्तक्रमेण स्वरूपानन्दैश्वर्यभोगेषु चोत्तरोत्तरं शतगुणोत्कृष्टाः पूर्ववदेव मुक्तावपि यथा स्वं ब्रह्मेन्द्रवरुणचन्द्रसूर्यादितत्तदाधिकारिकदेवतापदं तदनुसारिणमुत्तमाधमभावं पूज्यपूजकत्वादि व्यवस्थां चानुभवन्तो विहरन्ति। देहव्यतिरिक्तास्तु सालोकयादिमुक्तिभाजो यथाधिकारं भूरादिषु सप्तसु लोकेषु भगवल्लोकेषु च स्थितानि भगवतः स्थानानि प्राप्य स्वेच्छया गृहीतबाह्यदेहैः चिन्मात्रर्वाहैःस्वसङ्कल्पोपनतान् भोगान् भुञ्जानाः पूर्ववत् वर्णाश्रमादिभेदं तदनुसारिणीं पूज्यपूजकत्वादिव्यवस्थां ज्ञानानन्दैश्वर्यतारतम्यंच प्राप्ताः सन्तः विहरन्ति। न चैवं मुक्तानां तारतम्यवत्वे तद्दर्शनकृतदुःखद्वेष्यादि ........मुक्तेरपुरुषार्थत्वप्रसङ्गः। निर्दोषाणां तेषां गुरुशिष्यवत् तदप्रसक्तेः। मुक्तानामन्तःकरणाभावाच्च "ईर्ष्यादीनामन्तःकरण धर्मत्वेन तदभावे असंभवादिति मध्वमतम्" अत्रेदं वक्तव्यमस्ति—

उपसंहारः—

किं चैवं पुराणानां तामसत्वप्रतिपादकश्रुतेरभावेन मूलभूतप्रमाणाभावेन "तामसेषु पुराणेषु माहात्म्यं त्रिपुरद्विप" इति पद्मपुराणवाक्यस्य बहुपुराणप्रामाण्यकल्पनापेक्षया लाघवेन वाक्यमात्रस्यैव अप्रामाण्यकल्पना युक्तत्वाच्च। न द्वितीयः; कर्तुः तमोगुणाधिष्ठितत्वं विना तामसत्वमात्रेण प्रामाण्यस्य वक्तुमशक्यत्वाच्च। तथा चा 'ष्टादशपुराणानां कर्ता सत्यवती सुत', इत्यनेन व्यासकर्तृकत्वेन सर्वेषां पुराणानां तत्तत्कल्पस्थित तत्तद्देवतामाहात्म्यप्रदर्शनपूर्वकत्वेनमकृततया अचतुर्वेदनं ब्रह्मेत्यादिना त्रिमूर्तिस्वरूपव्यासस्य अत्यन्तनिर्मलचित्ततया तत्कृतसर्वपुराणविषयकतामसत्वादिव्यवस्थाकल्पनविरहेण प्रामाणिकतया तद्विरोधेन पद्मपुराणवचनस्यैव प्रामाण्याभावस्य कल्पनौचित्यात्। यदि पाद्मवचनबलेन तामसत्वं तथा इदं पुराणं मुक्त्यैकं नास्त्यन्यत्साधनं परमिति स्वोत्कर्षार्थमुक्तवचनेन तत्तत्पुराणोत्कर्षकत्व प्रतिपादकवचनैश्च विरोधापत्तेश्च॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे द्वैतसिद्धान्तानुसारेण मुक्तिस्वरूपमुपवर्ण्य, तस्मिन्—श्रुत्यादिप्रमाणप्रदर्शनपूर्वकमसाङ्गत्यं प्रदर्श्यते। पुराणानां तामसत्व-निराकरणं च॥

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः असमग्रो वर्तते। अमुद्रितश्च दृश्यते।

No. (591) B 329/2 मन्त्रानुष्ठानक्रमः (श्रुत्युक्तनामसंकीर्तनम्)

ग्रन्थकर्ता— ?

पत्रविशेषः—कागदपत्रात्मकः

प्रमाणम्—7½×6 अङ्गुलानि

लिपिः—मलयाळलिपिः

पत्राणि—1-77

प्रतिपुटं पङ्क्तयः—10

प्रतिपङ्क्त्यक्षराणि—12

काल: (कोशस्य)—कोल्लं 1062 (1887)

स्थितिः—समीचीना

समग्रोऽसमग्रो वा—समग्रः

उपक्रम:—

मुहूर्ते ब्राह्म उत्थाय निषण्णः शयने निजे।
ऊर्ध्वकेशी विरूपाक्षी शुक्लाङ्गी नरभोजिनी॥
तिष्ठ देवि शिखामध्ये चामुण्डी ह्यपराजिते।

इति शिखां बध्वा—

अपलापायपापानामादावेवं समाचरेत्।

प्रथमं नामसंकीर्तनं कार्यं, तत्प्रकारश्च—

शुक्लाम्बरधरं............शान्तये। ममोपात्त...प्रीत्यर्थं जननमरण निवृत्त्यर्थं निरतिशयब्रह्मानन्द ब्रह्मज्ञानावाप्त्यर्थं सद्गुरुपूजाङ्गं निष्कामकर्म-नामावलीमहामन्त्रजपं करिष्ये। ध्यानम्—

विप्राणां यतियोगिनां श्रुतिमतां वेदान्तिनां कर्मिणां
चण्डालादिषु सङ्गमं च भजतामेकान्ततो वासिनाम्॥
हत्यापानसुवर्णचौर्यविकृतां दारैर्गुरोः सङ्गिनां।
सर्वेषामिदमेव नाम शरणं विष्णोः पदं शाश्वतम्॥

उपसंहारः—

वामकरे कनिष्ठप्रथमपर्वणि तं नमः। तद्द्वितीये पर्वणि थं नमः। तत्तृतीये दं नमः। तदनामिक प्रथमपर्वणि धं नमः। तद्द्वितीये नं नमः। तत्तृतीये पं नमः। तन्मध्यमप्रथमपर्वणि फं नमः। तद्द्वितीये बं नमः। तत्तृतीये भं नमः। तत्तर्जनीप्रथमपर्वणि मं नमः। तद्द्वितीये यं नमः। तत्तृये रं नमः। तदङ्गुष्ठप्रथमपर्वणि लं नमः। तद्द्वितीये वं नमः। तत्तृतीये शं नमः। एवं क्रमेण न्यसेत्। हस्तद्वयेऽपि अङ्गुष्ठे षं नमः। तर्जन्योः सं नमः। मध्यमयोः हं नमः। अनामिकयोः ळं नमः। कनिष्ठिकयोः क्षं नमः। एवं व्याप्य युगपदेव न्यसेत्॥

(1062 व्ययनाम संवत्सरं मकरं 14 तेदि संपूर्णः)

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे प्रातरुत्थानादि कर्तव्यताक्रमः तत्तद्देवतोद्देश्यक मन्त्रानुष्ठानप्रकारश्च सप्रपञ्चं प्रतिपाद्यते॥

वक्तव्यविशेषः—

मुद्रणालये मलयाळलिप्यभावात् देवनागरीलिपि रुपयुक्ता। अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (592) B 476 मन्त्रिकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—373–376 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं पूर्णमद इति शान्तिः।
अष्टपादं शुचिं हंसं त्रिसूत्रमणुमव्ययम्।
त्रिवर्त्मानं तैजसोऽहं सर्वतः पश्यन्न पश्यति॥
भूतसंमोहने काले भिन्ने तमसि वैखरे।
अतः पश्यन्ति सत्वस्था निर्गुणं गुणगह्वरे॥

अशक्यस्सोऽन्यथा द्रष्टुं ध्यायमानः कुमारकैः ।
विकारजननीमाज्ञामष्टरूपामजां ध्रुवाम् ॥
ध्यायतेऽन्वासिता तेन तन्वते प्रेर्यते पुनः ।
सूयते पुरुषार्थं च तेनैवाधिष्ठितं जगत् ॥
भाः-मन्त्रैराथर्वणैर्यस्यां ब्रह्मनिष्ठाभिधीयते ।
मन्त्रिकोपनिषत्सेयं सभाष्या क्रियतेऽधुना ॥
अष्टपादमिति—

उपसंहारः—

भा-अतस्तत्तदात्मब्रह्मणोरैक्येऽपि भेदसिद्धिः । यस्मिन्निति । भावाः विकारपदार्थाः यस्मिन्नुत्पद्यन्ते प्रलीयन्ते च तं क्षेत्रज्ञे जीवात्मन्यधिष्ठितं साक्षित्वेन विद्यमानं प्रत्यगात्मानं स भगवान् सर्वज्ञत्वादिगुणकः परमेश्वरः कारणैरव्यक्तादिभिस्सह विद्यते । अन्ये जीवाः पुनः पुनरेतदुत्पत्तिप्रळयवज्जगत्पश्यन्ति । अथ सृष्टिकाले आयान्ति ये ब्रह्म सगुणं ब्रह्म निर्गुणमिति विदुस्ते ब्राह्मणा अत्रैव लयं यान्ति ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ मन्त्रिकोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे निर्गुणब्रह्मनिष्ठा संक्षेपतो निरूप्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (593) 4659/4 मनीषापञ्चकम्

ग्रन्थकर्ता—?
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$12\frac{1}{2}\times1$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—105-106

प्रतिपुट पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य) —?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्र.

उपक्रमः—

सत्याचार्यस्य गमने कदाचिन्मुक्तिदायकम् ।
काशीक्षेत्रं प्रति सह गौर्या मार्गे तु शंकरम् ॥

अन्त्यवेषधरं दृष्ट्वा गच्छ गच्छेति चाब्रवीत् ।
शंकरः सोऽपि चण्डालस्तं पुनः प्राह शंकरम् ॥
अन्नमयादन्नमयमथ वा चैतन्यमेव चैतन्यात् ।
यतिवर दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छ गच्छेति ॥

प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधाम्बुधौ
विप्रोऽयं श्वपचोऽयमित्यपि महान् कोऽयं विभेदग्रहः ।
किं गङ्गाम्बुनि बिम्बितेऽम्बरमणौ चण्डालवीधीपयः
पूरे (वा) चान्तरमस्ति काञ्चनघटे मृत्कुम्भयोर्वाम्बरे ॥

उपसंहारः—

यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो निर्वृताः
यश्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः ।
यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मवित्
यः कश्चित्स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे चण्डालवेषधरं श्रीशंकरमुद्दिश्य आचार्येण स्वमनीषा-विष्करणप्रकारः आविष्क्रियते ॥

वक्तव्यविशेषः—

अयं मुद्रितः ?

## No. (594) B 478 महानारायणोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{1}{4} \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः— आन्ध्रलिपिः
पत्राणि—1–32

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू–ओं भद्रं कर्णेभिरिति शान्तिः। अथ परतत्त्वरहस्यजिज्ञासुः परमेष्ठी देवमानेन सहस्रसंवत्सरं तपश्चचार । सहस्रवर्षेऽतीतेऽत्युग्रतीव्र-

तपसा प्रसन्नं भगवन्तं महाविष्णुं ब्रह्मा परिपृच्छति । भगवन्परतत्त्वरहस्यं मे ब्रूहीति । परतत्त्वरहस्यवक्ता त्वमेव नान्यः कश्चिदस्ति । तत् कथमिति तदेवोच्यते । त्वमेव सर्वज्ञः । त्वमेव सर्वशक्तिः । त्वमेव सर्वाधारः ।

भा—यत्रोच्यते पादचतुष्टयं तत्
स कोपि साकार निराकृतेच ।
व्याख्यास्यते सा महतीत्विदानीं
नारायणस्योपनिषद्रहस्यम् ॥

नन्विह त्वमेवसर्वज्ञ इत्यादि................... ।

उपसंहारः—

भा—तर्हि तदीयोन्मेषनिमेषयोरेवाविद्यादिसंसारप्रवृत्तिनिवृत्तिशक्तित्वात्तदुन्मेषकालेऽस्मिन् कस्यचिदपि जीवस्य संसारबन्धनिवृत्त्यसंभवान्मोक्षार्थकपरिश्रमो जीवानां वृथैवेति चेन्न ; इदानीं तस्य निमेषाभावः पिपीलिका, किं तु सर्वजीवमोक्षमात्रस्य प्रतिबन्धकः । न तु वाक्यार्थ श्रवणादि मोक्षसाधनवतां मोक्षस्य, सद्योमुक्त्यर्थक शास्त्राणां तेनैव प्रणीतत्वात् । तस्मात् सर्वमनवद्यम ।

इति चतुर्थोऽध्यायः । पूर्वकाण्डः समाप्तः । महानारायणोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अद्वितीयं ब्रह्मस्वरूपं, तस्याविद्यादिपादचतुष्टयं, तस्यैव साकारनिराकारस्वरूपं च निरूप्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ।

## No. (595) 1968/7 महावाक्यनिरूपणम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$14\frac{1}{4} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—113–114

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः —

द्रष्टृदृश्यान्तराळस्थं संविन्मात्रमखण्डितम् ।
भावयन्तं स्वमात्मानं शिवरामगुरुं भजे ॥

यदज्ञानादिदं भाति यज्ज्ञानाल्लीयतेऽखिलम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥

सर्वोपाधिविनिर्मुक्तज्ञानसत्त्वैकरूपिणे ।
अनन्ताकाशसङ्काशवपुषे हरये नमः ॥

तापत्रयाहि संदष्टो भवदावगतः सुधीः ।
आत्मानं रक्षितुं कश्चिन्नत्वा मुनिमभाषत ॥

यज्ज्ञानान्मुच्यते जन्तुः जन्मसंसारबन्धनात् ।
तदहं ज्ञातुमिच्छामि ब्रूहि मे कृपया प्रभो ।

सम्यक् पृच्छमिमां साधो ज्ञानं मोक्षैकसाधनम् ॥
तीर्त्वा मोहार्णवं तेन सुखमक्षयमश्नुते ॥

तादात्म्यविषयं ज्ञानं ततस्तत्त्वंपदार्थयोः ।
यत्तदाश्रित्य मुक्तस्त्वं भव संसारबन्धनात् ॥

कस्त्वं पदार्थं कस्स्यात्त तत्पदार्थो वा तयोर्द्वयोः ।
कथमैक्यं भवेन्नाथ ब्रूहि मे कृपया मयि ॥

उपसंहारः—

अथ सर्वमयं देवं सच्चिदाकारमद्वयम् ।
अखण्डैकपरात्मानमात्मत्वेन विचिन्तय ॥

ततः सर्वाणि भूतानि स्वात्मानं चाखिलं जगत् ।
अब्धौ फेनादिवत्पूर्णे परमात्मनि भावय ॥

इत्थमन्योन्यतादात्म्यं विजानानः क्रमाद्धिया ।
जीवन्मुक्ततयास्वस्थो लोके विहर लीलया ॥

यः पठेच्छ्रद्धया चैतन्महावाक्यनिरूपणम् ।
विभिन्नहृदयग्रन्थिः स कैवल्यमवाप्नुयात् ॥

इति महावाक्यनिरूपणं समाप्तम्

सप्तत्रिंशतश्लोकैर्दर्शितोऽनुभवो मम ।
गुरोः प्रसादात्संप्राप्तः करामलकवन्मया ॥
जीवप्रबोध इत्येकश्चैकं स्वात्मनिरूपणम् ।
स्वात्मप्रकाशकश्चैकश्चैकं वाक्यनिरूपणम् ॥
ज्ञानामृतं तथा चैकमेका तारावलिस्तथा ।
विविच्यैवमहं सोढा प्रोक्तवान्ज्ञानमात्मनः ॥
स्वात्मत्वेनैतदखिलं भावयन्तं निरन्तरम् ।
स्वात्मन्यैवात्मनः साक्षाच्छिवरामगुरुं भजे ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे गुरुशिष्योपदेशरूपेण तत्त्वमसिवाक्यार्थः सम्यग्वर्ण्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च दृश्यते ॥

## No. (596) 2269 महावाक्यरत्नावळिः (प्रभा)

| | |
|---|---|
| ग्रन्थकर्ता —रामचन्द्रेन्द्रः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—30 |
| प्रमाणम्—$9\frac{1}{2} \times 1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः —शिथिला |
| पत्राणि—1-46 | समग्रोऽसमग्रो वा —समग्रः |

उपक्रमः—

यो विध्यादिविदेहान्त महावाक्यार्थविग्रहः ।
श्रीरामचन्द्ररूपाय तस्मै भूमात्मने नमः ॥
यः पूज्यो यतिभिः स्वधर्मनिरतैः ध्यायन्ति यं योगिनो ।
येनात्तं निगमान्तवेद्यमनिशं यस्मै हविर्दीयते ॥
यस्मात् स्थावरजङ्गमं समभवद्यस्यांशमात्रो वरो ।
यस्मिन्लीनमिदं प्रणौमि सततं तं वासुदेवं गुरुम् ॥
नत्वा श्रीवासुदेवेन्द्रं पादपङ्केरुहद्वयम् ।
ग्रथ्यते वै महावाक्यरत्नावळिरियं मया ॥

अथ खलु ऋग्वेदादिविभागेन वेदाश्चत्वारः। तत्रैकविंशतिशाखा ऋचः। नवाधिकशतशाखा यजुषः। सहस्रशाखास्साम्नः। पञ्चाशच्छाखा अथर्वणस्य। एकैकस्याश्शाखाया एकैकोपनिषत्। अष्टाशीतिसहितशताधिकसहस्रसंख्याका उपनिषदः। तासु श्रीरामचन्द्रेण रामभूताय सारतरोपनिषदऽष्टोत्तरशतसंख्याका उपदिष्टाः। तथा च मुक्तिकोपनिषत्स्थाष्टोत्तरशतोपनिषन्नामश्लोका लिख्यन्ते ॥

ईशाकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा ॥

इत्यादि ......................

उपसंहारः—

ओंकारवाच्यहीनात्मा सर्ववाच्यविवर्जितः।
अवस्थात्रयहीनात्मा वैदेहीमुक्त एव सः॥

इति साध्यान्तिकविदेहवाक्यानि सप्तसप्ततिः। अथ साध्यान्तिकविध्यादिविदेहकैवल्यान्त महावाक्यान्यष्टोत्तरसहस्रम् ॥

विध्यङ्घ्रिः बन्धमुग्गुल्फो ह्यविद्यद्वेयजङ्घकः।
जगन्मिथ्याजानुदेश उपदेशोरुदेशकः॥

ब्रह्मात्मैक्यकटीदेशो विद्वन्मनननाभिकः।
जीवन्मुक्त्याख्यदहरः स्वानुभूतिकरद्वयः॥

स्वसमाधिस्कन्धदेशः स्वस्वरूपाख्यकन्धरः।
फलभूतमहावाक्यफालो वैदेहमस्तकः॥

एवं विध्याद्यदेहान्त महावाक्य कळेबरः।
वस्तुतो निर्विशेषात्मा त्रिपान्नारायणोऽस्म्यहम् ॥

यन्महावाक्यसिद्धान्तं मुक्तचित्तैकगोचरम्।
वासुदेवेन्द्र संज्ञं तं नौमि सर्वात्मकं महः॥

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीवासुदेवेन्द्रसरस्वतीचरणकमलमकरन्दतृप्तस्वान्तरामचन्द्रेन्द्र ग्रथिताष्टोत्तरशतोपनिषत्साराष्टोत्तरसहस्रमहावाक्यरत्नावळिः

प्रतिपाद्यविषयः —

अस्मिन्ग्रन्थे ऋगादि वेदानां शाखभेदान् निर्दिश्य, तत्तच्छाखागतोपनिषन्नामनिर्देशपूर्वकं उपनिषद्गतानि महावाक्यानि संगृह्य, तेषु केषां विधिपरत्वं, केषांचिन्मोक्षपरत्वं, केषांचिदविद्वन्निन्दापरत्वं, केषांचित् जगन्मिथ्यात्वपरत्वं, केषांचिदुपदेशपरत्वं, केषांचिज्जीवब्रह्मैक्यपरत्वं, केषांचिन्मननपरत्वं, केषांचिज्जीवन्मुक्तिविषयत्वं, केषांचिद्ब्रह्मानुभवरूपत्वं, केषांचित्स्वरूपपरत्वं, केषांचित्फलपरत्वं, केषांचिद्विदेहमुक्तिविषयत्वमित्येवं त्रयोदशधा विभागश्च अनुभवाद्वैतमतमनुसृत्य वर्ण्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च दृश्यते ।

No. (597) 2872 महावाक्यरत्नावळिः (प्रभा)

ग्रन्थकर्ता—रामचन्द्रेन्द्रः
पत्रविशेषः— ताळपत्रात्मकः
प्रमाणम्—14¼×1⅜ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-26

प्रतिपुटं पङ्क्तयः—17
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

2269 कोशवत् ।

उपसंहारः—

2269 कोशवत् ।

प्रतिपाद्यविषयः—

2269 कोशवत् ।

वक्तव्यविशेषः —

2269 कोशवत् ।

## No. (598) 4119 महावाक्यरत्नावलिः (प्रभा)

ग्रन्थकर्ता – रामचन्द्रेन्द्रः
पत्रविशेषः – ताळपत्रात्मकः
प्रमाणम् $8\frac{3}{4} \times 2$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-89
प्रतिपुटं पङ्क्तयः— 16
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य) — ?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—
2269 कोशवत् ।

उपसंहारः—
2269 कोशवत् ।

प्रतिपाद्यविषयः—
2269 कोशवत् ।

वक्तव्यविशेषः—
2269 कोशवत् ।

## No. (599) 4483 महावाक्यरत्नावलिः

ग्रन्थकर्ता – रामचन्द्रेन्द्रः
पत्रविशेषः – ताळपत्रात्मकः
प्रमाणम्—$17 \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः – नागरीलिपिः
पत्राणि—1-19
प्रतिपुटं पङ्क्तयः —16
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)— ?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः —
2269 कोशवत् ।

उपसंहारः—
अथ सार्धन्तिक स्त्रीलिङ्गस्वरूपवाक्यानि-अलौकिकपरमानन्दलक्षणा-खण्डामिततेजोराशिः भावाभाव कळाविनिर्मुक्ता चिद्विद्या द्वितीयब्रह्म-संवित्ति सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव

विभाति, सर्वसङ्कल्परहिता सर्वसंज्ञाविवर्जिता सैषा चिदविनाशात्मा स्वात्मेत्यादिकृताभिधा आकाश शतभागाच्छाङ्गेषु निष्कळरूपिणी नास्त-मेति न चोदेति नोत्तिष्ठति न तिष्ठति ॥

प्रतिपाद्यविषयः—

2269 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे सार्धान्तिकस्त्रीलिङ्गस्वरूपबोधकवाक्यनिरूपणपर्यन्तो ग्रन्थो विद्यते ॥

## No. (600) A 418 महावाक्यरत्नावळीकिरणावळिः (मूलसहिता

ग्रन्थकर्ता—व्याख्याता – उपनिषद्ब्रह्मेन्द्रः

पत्रविशेषः—कागदपत्रात्मकः

प्रमाणम्—13×8½ अङ्गुलानि

लिपिः—ग्रन्थलिपिः

पत्राणि—1-91

प्रतिपुटं पङ्क्तयः—24

प्रतिपङ्क्त्यक्षराणि—18

कालः (कोशस्य)— ?

स्थितिः—समीचीना

समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ईशाद्युपनिषत्प्रोद्यन्महावाक्यकळेबरम् ।
विकळेबरकैवल्यं रामचन्द्रपदं भजे ॥

विश्वाधिष्ठानसन्मात्र वासुदेवेन्द्रमूर्तये ।
श्रीदेशिकस्वरूपाय परस्मै ब्रह्मणे नमः ॥

नत्वा श्रीदेशिकं ब्रह्म मात्रानन्दाप्तिमिच्छताम् ।
महावाक्यरत्नजातकिरणावळिरीर्यते ॥

इह खलु परमदयाकळेबरेयं भगवती लीलाविभूतिः स्वांशजप्राणि-पटलनिष्प्रतियोगिकनिर्विशेषब्रह्ममात्राप्तये ऋगादिचतुर्वेदप्रविभक्तेशाद्यष्टो-त्तरशतोपनिषत्प्रसिद्धाष्टोत्तरसहस्रमहावाक्यरत्नान्युद्धृत्य विध्यादिवि-देहान्तभेदेन त्रयोदशधा विभज्य तत्र स्वरूपमहावाक्यजातं नाना-

लिङ्गाद्यवशिष्टान्तभेदेनाष्टधा विधाय मुख्याधिकारिणामुपदिश्य तत्तदर्थ-बुभुत्सूनां परस्परसापेक्षतो महावाक्यरत्नजातप्रकाशकैकोत्तरसप्तशत-प्रकरणगर्भितप्रभावळीं तद्भासक लोचनं च प्रकटयामास । तस्य विस्तरत्वेन पण्डिताधिकारत्वात्तदवलोकनासमर्थानुकम्पया ऽनुबन्धचतुष्टयवद्विंशति-प्रकरणगर्भितविध्यादिविदेहान्तमहावाक्यजातपदयोजनताकोपोद्घात प्रकर-णस्थश्रीरामचन्द्रं छन्दोमयाङ्गतया नमस्करोति य इति—

मू—यो विध्यादिविदेहान्तमहावाक्यार्थविग्रहः ।
श्रीरामचन्द्ररूपाय तस्मै भूमात्मने नमः ॥

उपसंहारः—

यन्महावाक्यसिद्धान्तं स्वातिरिक्तभ्रममुक्तचित्तैकगोचरं यस्सर्व-भासकतया वस्तु पारयति स वासुः प्रत्यगात्मा, तदभेदेन दीव्यते दीव्यत इति देवः परमात्मा, वासुश्चासौ देवश्चेति वासुदेवः प्रत्यगभिन्नः परमात्मा, तद्गतेष्टं निष्प्रतियोगिकं सप्रतियोगिकमनिष्टं द्रावयतीति वासुदेवेन्द्र इति संज्ञा यस्य तद्वासुदेवेन्द्रसंज्ञं महः यत्तेजोमात्रमवशिष्यते तत्स्वमात्रतया नौमीति पर्यवसन्नो भवामीत्यर्थः ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मेन्द्रयोगिना ।
महावाक्यरत्नजातकिरणावळिरीरिता ॥

महावाक्यरत्नजातकिरणग्रन्थसंचयः ।
द्विपञ्चाशत्संख्यतोऽधिद्विसहस्रमुदीरितम् ॥

इति किरणावल्याख्यव्याख्ययासमेता महावाक्यरत्नावली समाप्ता

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे रामचन्द्रेन्द्रविरचित अष्टोत्तरशतोपनिषद्गतमहावाक्य-रत्नावळिर्व्याख्यायते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च दृश्यते । अनुभवा-द्वैतमतानुसार्ययं ग्रन्थ इति च प्रतिभाति ।

## No. (601) 2100/1 महावाक्यरत्नावळी किरणावळिः

ग्रन्थकर्ता — उपनिषद्ब्रह्मेन्द्रः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$14\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-54

प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः— समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

A 418 कोशवत् ।

उपसंहारः—

A 418 कोशवत् ।

प्रतिपाद्यविषयः—

A 418 कोशवत् ।

वक्तव्यविशेषः—

A 418 कोशवत् ।

## No. (602) B 375 महावाक्यरत्नावळी किरणावळिः

ग्रन्थकर्ता— उपनिषद्ब्रह्मेन्द्रः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{4}\times6\frac{1}{2}$ अङ्गुलानि
लिपिः—कन्नडलिपिः
पत्राणि—1-114

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—24
कालः (कोशस्य) - ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

A 418 कोशवत् ।

उपसंहारः—

A 418 कोशवत् ।

प्रतिपाद्यविषयः—

A 418 कोशवत् ।

वक्तव्यविशेषः—

A 418 कोशवत् ।

No (603) A 424-425 महावाक्यरत्नावळी (प्रभालोचनव्याख्यासहिता)

ग्रन्थकर्ता—उपनिषद्ब्रह्मेन्द्रः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$13\frac{1}{4} \times 8$ अङ्गुलानि
लिपिः – ग्रन्थलिपिः
पत्राणि—1–396
प्रतिपुटं पङ्क्तयः—25
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा – समग्रः

उपक्रमः—

ईशाद्यष्टोत्तरशतवेदान्ताळिकळेबरः ।
वस्तुतः कैवल्यरामचन्द्र एवावशिष्यते ॥

सर्ववेदान्तनिर्दिष्टमूर्तये गुरुमूर्तये ।
वासुदेवेन्द्रसंज्ञाय परस्मै ब्रह्मणे नमः ॥

निर्विशेषत्रिपाद्ब्रह्म यत्प्रसादाद्भवाम्यहम् ।
तन्नौमि स्वेतरग्रास वासुदेवपराक्षरम् ॥

विध्यदेहान्तिवाग्रत्नप्रभाभासकलोचनम् ।
छन्दोमयाङ्गश्रीरामोपसकानां वितन्यते ॥

इह खलु भगवती परमदयाकळेबरेयं लीलाविभूतिर्निर्हेतुजातकरुणया स्वांशज मोहभूतिपटलनवांशं बौद्धमीमांसक द्वैताद्वैतमतनैरपेक्ष्येणानायासेन झटिति सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणविकळेबरकैवल्यसत्रभाजनं करवाणीति प्रतिज्ञापूर्वकं स्वांशज प्राणिपटलानन्तकोटिजन्मसुकृतपरिपाकतः स्वयं कैवल्यध्वजरूपिणी भूत्वा स्वनिस्वासायमान ऋग्यजुः सामोथर्वणविभक्ताशीत्यधिकशतोत्तरसहस्रशाखामस्तकपटलसार भूतेशाद्यष्टोत्तरशतवेदान्तेषु प्रसिद्धसारसारतराष्टोत्तरसहस्रमहावाक्यान्युध्दृत्य विध्यादिविदेहान्तभेदेन त्रयोदशधा विभज्य.... .. ....

उपसंहारः—

तत्र तदज्ञानमुदेति, तदज्ञानसमकालं विद्वांसो विकळेबरकैवल्यरूपेणावशिष्यत इत्यत्र ब्रह्मवेद ब्रह्मैव भवतीत्यादिश्रुतिर्मानम् । अस्य प्रकरणजालस्य लीलाभूतिफणितत्वमाह—श्रीवास्विति ।

श्रीवासुदेवेन्द्रगुरुप्रसादाच्छ्रीरामचन्द्रेन्द्रमुनीश्वरेण ।
कृता महावाक्यसहस्रवेद्य श्रीरामचन्द्रस्तुतिरादरेण ॥

इति महावाक्यसहस्रवेद्य विकळेवरकैवल्य श्रीरूपेण राजमानमहसः स्वातिरिक्तप्रपञ्चद्रावकत्वेन श्रीरामचन्द्रस्स्वमात्रतयाशिष्यत इत्यनुसन्धानमेव श्रीरामचन्द्रस्तुतिरित्यर्थः ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मेन्द्रयोगिना ।
कृतं विदेहवाग्रत्नप्रभाभासकलोचनम् ॥

इति विदेहमुक्तिमहावाक्यरत्नावळीप्रभाभासकलोचनं संपूर्णम्

प्रतिपाद्यविषयः—

महावाक्यरत्नावळीप्रभाव्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च दृश्यते ॥ अयं ग्रन्थः अनुभवाद्वैतमतानुसारीति ज्ञायते ॥

## No. (604) A 551 महावाक्यरत्नावळी (प्रभालोचनव्याख्यासहितम्)

ग्रन्थकर्ता—उपनिषद्ब्रह्मेन्द्रः
पत्रविशेषः— कागदपत्रात्मकः
प्रमाणम्—13×8 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि —32–469

प्रतिपुटं पङ्क्तयः—22
प्रतिपङ्क्त्यक्षराणि—28
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

A 424–425 कोशवत् ।

उपसंहारः—

A 424–425 कोशवत् ।

प्रतिपाद्यविषयः—

A 424–425 कोशवत् ।

वक्तव्यविशेषः—

A 424–425 कोशवत् ।

## No. (605) B 231/3 महावाक्यविवरणम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8 × 6½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–6

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—24
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ओं नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः।

यदज्ञानप्रभावेन दृश्यते सकलं जगत्।
यज्ज्ञानाच्छ्रेय माप्नोति तस्मै ज्ञानात्मने नमः॥

साधनचतुष्टयसम्पन्नस्य विधिवदुपसन्नस्य ब्रह्मज्ञानाय वेदान्तमहावाक्यार्थं विचारयामः। महावाक्यार्थो नाम, तत्त्वमसि, ब्रह्माहमस्मि, अयमात्मा ब्रह्म, एष त आत्मान्तर्याम्यमृतः, स यश्चायं पुरुषो, यश्चासावादित्ये। स एकः, प्रज्ञा प्रतिष्ठा, प्रज्ञानं ब्रह्म, विज्ञानमानन्दं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म, स एवमेव पुरुषो ब्रह्म, सर्वं खल्विदं ब्रह्म, एकमेवाद्वितीयं ब्रह्म, इत्यादीनि वाक्यानि सकृच्छ्रुत्वा वाक्यार्थज्ञानं नैवोपपद्यते पुरुषस्य कुतः? तत्त्वंपदार्थशोधनाभावात्। यतस्तस्मात्पदार्थपरिशोधनपूर्वकं वाक्यार्थं विचिन्तयेत्॥

उपसंहारः—

त्वं तदसि, तत्त्वमसि इत्यखण्डैकरसं मुख्याधिकारेण प्रतिपादयति एवं विद्वान् कृतकृत्यो भवति। ब्रह्मविदाप्नोति परं। ब्रह्मवेद ब्रह्मैव भवति। तरति शोकमात्मवित्,

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥

तत्र को मोहः कः शोक एकत्वमनुपश्यतः। अभयं वै जनक प्राप्तोऽसि,

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति॥

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।

अहं त्वा इत्यादि श्रुतिस्मृतीतिहासपुराणेभ्योवमर्थोंसगम्यते। ब्रह्मविद्भ्यः परं नास्ति न भूतो न भविष्यति ॥

इति श्रीमच्छंकराचार्यविरचिते महावाक्यविवरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे तत्त्वंपदयोर्वाच्यार्थलक्ष्यार्थौ जहदादिभेदेन लक्षणात्रैविध्यं च निरूप्य महावाक्यार्थः निरूप्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । , मुद्रितश्च ।

## No. (606) 955/5 महावाक्यविवरणम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—46 |
| प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः —ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—6–63 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

B 231/3 कोशवत् ।

उपसंहारः—

B 231/3 कोशवत् ।

प्रतिपाद्यविषयः—

B 231/3 कोशवत् ।

वक्तव्यविशेषः—

B 231/3 कोशवत् ।

## No. (607) 4642/1 महावाक्याखण्डार्थवादः

| | |
|---|---|
| ग्रन्थकर्ता शंकराचार्यः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—40 |
| प्रमाणम्—8×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः— आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—2-33 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

इह खलु षड्विधलिङ्गोपेतसकलवेदान्तैरहङ्कारातिरिक्तमवस्थात्रयसाक्षिभूतमनाद्यनन्त स्वप्रकाशं प्रत्यगभिन्नं परमानन्दरूपमद्वितीय्यं ब्रह्म प्रतिपाद्यमिति प्रसिद्धम्। तच्चाध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यत इति न्यायमाश्रित्य लक्षणप्रमाणाभ्यां विचार्यते। तत्र तावत्तत्त्वमसि अहं ब्रह्मास्मि अयमात्मा ब्रह्म प्रज्ञानं ब्रह्म स यश्चायं पुरुषे, यश्चासावादित्ये स एक इत्यादिमहावाक्यानि, सत्यं ज्ञानमनन्तं ब्रह्म योऽयं विज्ञानमय इत्याद्यवान्तरवाक्यानि च प्रमाणम्॥

उपसंहारः—

तस्माददद्वितीयमेवायमात्मा सन्मात्रो नित्यः शुद्धो बुद्ध सत्यो मुक्तो निरञ्जनो विभुरद्वयः आनन्दः परः प्रत्यगेकरसः, तद्वा एतद्ब्रह्मद्वयं बृहत्वान्नित्यं शुद्धं बुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं चिदानन्दचिन्मात्रं आत्मैवाव्यवहार्यं केचन तदेतदात्मानमोमित्यपश्यन्तः पश्यत तदेतत्सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यमित्युः........सत्यतत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्।

ज्ञानत्वेनाहते सिद्धे सर्वं ब्रह्ममयं भवेत्,
ऐतदात्म्यमिदं सर्वम् नेह नानास्ति किंचन।
अद्वैतमेवशास्त्रार्थः शंभोः पादौ स्पृशाम्यहम्।

तस्मान्निर्भेदं ब्रह्मैक सर्ववेदान्तप्रतिपाद्यमिति सर्ववेदान्तसंमतिसिद्धम्॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे तत्त्वं पदयोर्वाच्यार्थलक्ष्यार्थवर्णनपूर्वकं अखण्डो वाक्यार्थो विचार्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते । कर्ता स्पष्टं न ज्ञायते ॥

## No. (608) B 479 महावाक्योपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता — अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः — ? |
| पत्रविशेषः— कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि — 11 |
| प्रमाणम्—7½×6 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः — समीचीना |
| पत्राणि — ? | समग्रोऽसमग्रो वा —समग्रः |

उपक्रमः —

मू :—ओं भद्रं कर्णेभिरिति शान्तिः । अथ होवाच ब्रह्मा । अपरोक्षानुभवपरोपनिषदं व्याख्यास्यामः । गुह्याद्गुह्यतरैषा न प्राकृतायोपदेष्टव्या । सात्त्विकायान्तर्मुखाय परिशुश्रूषवे । अथ संसृतिबन्धमोक्षयोर्विद्याविद्ये चक्षुषी उपसंहृत्य विज्ञाय अविद्यालोकान्धं तमोद्दृक् तमोह शारीरप्रपञ्चमा ब्रह्मस्थावरान्तमनन्ता खलाण्डभूतं निखिलनिगमोदित सकामकर्मव्यवहारो लोकः ॥

भा :— महावाक्येष्वनुक्तेषु प्रसिद्धेष्वपि यन्महत् ।
हंस इत्यादि वाक्यं च तद्वत्त्वादभिधा तथा ॥

उपसंहारः—

भा-यत्र स्वर्गे पूर्वे पूर्वीकास्साध्याः कर्मसिद्धा देवा ब्राह्मणास्सन्ति । कर्मसाध्यलोकस्था इन्द्रादयो वा यत्र सन्ति तन्नाकमिति । यद्वा श्रवणादिभिः प्रथ धर्मैर्ज्ञानयज्ञं यजन्तः अकं दुःखं तन्नभवतीति नाकं ब्रह्म

यान्तीति। स इति सोऽहं ब्रह्मस्वरूप एकः परंज्योतिः अर्कज्योतिषा व्याप्तिं दिनं चाहमेव। असावहोवामित्योंकारस्वरूपत्वं चात्मन इति एतदथर्वशिरोऽधीत इत्यादि स्पष्टार्थमन्यत्।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ महावाक्योपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अजपाविद्यामनुसृत्य ब्रह्मध्यानं निरूप्यते ॥

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (609) B 477 महोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-30
प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रम:—

ॐ शुकस्य जनकस्याथ संवादोर्भुनिदाघयोः।
यस्यां महोपनिषदि व्याख्यास्ये तामिमामिह ॥

आदौ निर्विशेषे परस्मिन्नाकाशवत्सर्वगतेब्रह्मणि तदभिन्नाकृतिरेको नारायण आसीत्। तदा न ब्रह्मदयो देवा आसन्। अत एकाकित्वान्ना रमत। अथ तस्य ध्यानान्ते शारीरं यज्ञस्तोममुच्यते। तस्मिन्नुक्तपञ्च-विंशतितत्त्वात्मको जीवाख्यः पुरुषोऽजायत। तं पुरुषं स नारायणाख्यः परमपुरुषो निवेश्यास्य जीवस्य न प्रधानवयांसि जायन्ते ॥

उपसंहार:—

इदानीं ऋभु निदाघयो....क्पूर्वाशेषार्थसारसंग्रहोक्ति द्वारोपनि-षदमुपसंहर्तुमाह—सं शान्तेति। सम्यक्शान्तास्सर्वे ऐहिकामुष्मिकास्स ङ्कल्पा यस्य सः। प्रशान्ताः सकलाः पुत्रा दीषणा यस्य सः

तथाविधः सन् त्वं निर्विकल्पं निर्गताश्शब्दानुविद्धसमाधिगता अशेषा विकल्पाः यस्मात्तत्पदं निर्विकल्पहि समाधिस्थानं गत्वा हि मुनीश्वर निदाघस्वस्थः स्वस्वरूपनिष्ठो भव ॥

इत्यप्पयदीक्षिताचार्यकृतिषु महोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अनादीनामपि जीवेश्वरादीनां औपचारिकोत्पत्तिः शुकजनकसंवादमुखेन ऋभु निदाघ संवादमुखेन च सर्वतो विरक्तस्य ब्रह्मज्ञानप्राप्तिर्भवतीति च प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (610) 2463/2 माण्डूक्योपनिषत्कारिकाभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—68 |
| प्रमाणम्—16×1½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—ग्रन्थलिपिः | स्थितिः— समीचीना |
| पत्राणि—1–22 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

उपासनाश्रितो धर्मो ज्ञाते ब्रह्मणि वर्तते ।
प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः ॥

ओंकारनिर्णये उक्तः प्रपञ्चोपशमश्वः अद्वैत आत्मेति प्रतिज्ञामात्रेण ज्ञाते द्वैतं न विद्यत इति। तत्र द्वैताभावो वैतथ्यप्रकरणेन स्वप्नमाया-गन्धर्वनगरादिदृष्टान्तैर्दृश्यत्वाद्यन्तवत्त्वादि हेतुभिस्तर्केण च प्रतिपादितः। अद्वैतं किमागम मात्रेण प्रतिपत्तव्यं, आहोस्वित्तर्केणापीत्यत आह—शक्यते तर्केणापि ज्ञातुमिदं। तत्कथमद्वैतप्रकरणमारभ्यते। उपास्योपासनादि-भेदजातं सर्वं वितथम्, केवलमात्मा अद्वयः परमार्थत इति स्थितम् अतीते प्रकरणे यतः उपासनाश्रितः उपासनमात्मनो मोक्षसाधनत्वेन गत उपासकोऽहं ममोपास्यं ब्रह्म।

उपसंहारः—

अजं साम्यं विशारदम्। ईदृक्पदम्, अनानात्वं नानात्व विवर्जितं बुध्वा अवगम्य तत्भूताः सन्तः नमस्कुर्मस्तस्मैपदाय। अव्यवहार्यमपि व्यवहारगोचरमापद्य यथाबलं यथाशक्यतीत्यर्थः॥

अजमपि जनियोगं प्रापदैश्वर्ययोगा-
द्गति च गतिमत्तां प्रापदेकं ह्यनेकम्।
विविधविषयधर्मग्राहि मुग्धेक्षणानां
प्रणतभयविहन्तृ ब्रह्म यत्तन्नमस्ये॥

प्रज्ञावैशाखवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं
भूतान्यालोक्य मिन्नान्यविरतजननग्राहघोरे समुद्रे।
कारुण्याद्दुग्धधारामृतमिदममरैर्दुर्लभं भूतहेतो-
र्यस्तं पूज्याभिपूज्यं परमगुरुमसुं पादपातैर्नतोऽस्मि॥

प्रज्ञालोकावभासा प्रतिहतिमगमत्स्वान्तमोहान्धकार-
न्मज्जोन्मज्जच्च घोरे ह्यसकृदुपजनोदन्वति त्रासनेमे।
यत्पादावाश्रितानां श्रुतिशमविनयप्राप्तिरग्र्या ह्यमोघा
तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्यै॥

इत्याचार्य श्लोकाः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ गौडपादभाष्ये आगमशास्त्रविवरणे अलातशान्त्याख्यं चतुर्थं प्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

माण्डूक्योपनिषद्व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे अद्वैतालातशान्त्याख्यप्रकरणद्वयं विद्यते। मुद्रितश्च दृश्यते।

## No. (611) C 620 माण्डूक्योपनिषद्दीपिका

| | |
|---|---|
| ग्रन्थकर्ता—शंकरानन्दः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—40 |
| प्रमाणम्—8×4½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-4 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

माण्डूक्योपनिषद्व्याख्यां करिष्ये पदचारिणीम्।
ओमात्माभेदसंबोधादानन्दात्मप्रकाशिनीम्॥

नामनामिनोर्लोके भेदस्याप्रसिद्धत्वाद्वस्तुतश्चोंकारस्य ब्रह्मविवर्तत्वाद्विवर्तानां च विवर्ताधिष्ठानेन भेदशून्यत्वात् अत ओंकारं ब्रह्म नामधेयं ब्रह्मदृष्ट्या वा(ह)—ओं—अवति ब्रह्मबुध्या द्रष्टॄनित्यों इति ओंकारानुकरणार्थम्। एतत् उक्तमोंकाररूपं जगत्पर्णस्य शङ्कुस्थानीयं ब्रह्मणा तादात्म्यं प्राप्तं ब्रह्मणो विकारो नामधेयं च। अक्षरं वर्णात्मकम्। इदं विविधप्रत्ययगम्यं चेतनाचेतनात्मकं जगत्सर्वं निखिलं तस्य सर्वात्मकस्य ओंकारस्य उपव्याख्यानं उप सामीप्येन व्याख्यानं उप सामीप्ये स्पष्टम्। आसमंतात्कथनं उक्ता विवरणमित्यर्थः।

उपसंहारः—

ओंकार आत्मैव स्पष्टं संविशति सम्यक्प्रवेशं करोति आत्मनः। ओंकारेण आत्मानं आनन्दात्मस्वरूपम्। यः ओंकारात्मज्ञः एवमुक्तेन प्रकारेणोंकारात्मनोस्तादात्म्यं वेद जानाति तस्योंकाररूपानन्दात्मप्राप्तिफलमर्थसिद्धम्। ततः श्रुत्या नोक्तम्। अथ वा संविशत्यात्मनात्मानमितीदं फलवाक्यमस्तु॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्म पूज्यपादशिष्य श्रीशंकरानन्दभगवतः कृतिर्माण्डूक्योपनिषद्दीपिका समाप्ता

प्रतिपाद्यविषयः—

माण्डूक्योपनिषद्व्याख्यानरूपोऽयं ग्रन्थः॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते। मुद्रितश्च।

## No. (612) 21/3 माण्डूक्योपनिषद्दीपिका

ग्रन्थकर्ता—शंकरानन्दः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16\frac{1}{4} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः आन्ध्रलिपिः
पत्राणि -34–35

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—104
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 620 कोशवत् ।

उपसंहारः—

C 620 कोशवत् ।

प्रतिपाद्यविषयः—

C 620 कोशवत् ।

## No. (613) B 480 माण्डूक्योपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—35–68

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू=ओं भद्रं कर्णेभिः... ...दधातु । ओं शान्तिश्शान्तिश्शान्तिः । ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानमिदंभूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्र कालातीतं तदप्योंकार एव सर्वं ह्येतत् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् जागरितस्थानो बहिः प्रज्ञस्सप्ताङ्ग एकोनविंशतिमुखस्थूलभुग्वैश्वानरः प्रथमः पादः । स्वप्नस्थानोऽन्तःप्रज्ञस्सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पादः ॥

तुर्यातीतस्वरूपं तन्नत्वा श्रीसुंदरेश्वरम् ।
माण्डूक्योपनिषद्भाष्यं रचयाम्यहमादरात् ॥

ओमित्येतदक्षरसिदं,

उपसंहारः—

भा–एवं चतुर्थस्य परमार्थदशापेक्षया चतुर्थत्वं सत्यमेवेत्यत उपचर्यत इत्ययुक्तम् । अव्यवहार्यत्वादि तु वेदान्तेतरैरित्यवादिष्म । आकाशवत्सर्वगतस्य च निष्प्रतियोगिकत्वमनुपपन्नम् । असर्वगतजीवप्रतियोगिकत्वात् । तस्मात्सप्रतियोगिकस्सन्मात्रः अर्धमात्रा तुर्यस्वरूपश्शिव एवामात्रशब्द इति व्याख्यानं समञ्जसमिति स्थितम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ
माण्डूक्योपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

माण्डूक्योपनिषद्व्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (614) A 85-86 मानदीपिकाप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—बालब्रह्मानन्दः
(व्याख्याता वासुदेवभट्टः)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 7\frac{1}{2}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-236, 1-215

प्रतिपुटं पङ्क्तयः—15
प्रतिपङ्क्त्यक्षराणि—25
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यत्स्वरूपं विचार्यान्तर्ज्ञात्वा मुच्येत संसृतेः ॥
सर्वात्मकमनन्यार्थमात्मानं तं समाश्रये ॥
ब्रह्मात्माद्वैतमानानां सङ्ग्रहेण प्रकाशिनी ।
व्याख्यायते यथाबोधं सन्मुदे मानदीपिका ॥

इह खल्वनादौ संसारे केचिज्जन्तवो बहुविधतमो दुष्कर्मवशान्नानाविधस्थावरतिर्यग्योनिषु पुनःपुनर्जननमरणप्रवाहपरवशपरिभ्रमणपरिभूतपरतत्त्वाः ; ततः कथंचित्पुण्यवशाद्द्विजोऽधिकमानुषत्वाधिगमेऽपि चाण्डालपुल्कसाभीरयवन शक कङ्क रजक नापित स्वर्णकार लोहकारकुम्भकार तन्तुवायादिजात्याभासकर्मपारवश्येनायोग्यतया च दूरीभूत हरिवार्ताः ततः पुण्यपुञ्जेन ब्राह्मण्यं बहुभिरवाप्यते तपोभिरिति व्यासस्तुतब्राह्मण्यलाभेऽप्यनतिक्रमणीयप्रारब्धाःराजयक्ष्मज्वरापस्माराक्षिकुक्षिशूलगलत्कुष्ठभगन्दरबहुमूत्रस्वास श्वासवात दन्तोरः शिरः शूलाद्यत्यन्तवेदनासहनतयानिर्वाच्या विद्यासादिताहं ममाभिमानतया च हा हतोऽस्मि मरिष्यामि अज्ञोऽहमल्पशक्तिर्मूढा मूर्खोमुष्याहं पुत्रोऽस्म्यमुष्याहं पितामुष्याहं ममाभिमानतया ।

उपसंहारः—

ननु शान्तो दान्त इत्याद्युक्तरीत्या मुक्तिसाधनात्मज्ञानसम्पादनमकृत्वा किं त्वदीयप्रमाणजातं समीचीनं मदीयं वेति वाद विवादरूप संघर्षणेनेत्यत आह संघर्षजादिति । संघर्षो लोके लोहपाषाणसंघर्षात्मकः । अन्यत्रगुरुशिष्यकथारूपवादात्मकः अचिद्ज्ञानम् । गुरोर्हृदिस्थित्वा हितोपदेष्टुः आदावन्ते च लक्ष्मीशब्दप्रयोगेण ग्रन्थस्य लक्ष्मीकरत्वं सूच्यते ।

कृतप्रकरणीमानदीपिका विवृतेः कलौ ।
नष्टे च द्वापरे त्रेताश्रद्धानस्यकृत भवेत् ॥

मानदीपोद्दीपनेन नष्टे च द्वापरे कालौ ।
कृतादीदं यद्विभाति स आत्मास्मीति निश्चितम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छिन्नकाशीविश्वेश्वरमणिकर्णिकातीरस्थ श्रीजयकृष्णानन्द पादपद्माराधक श्रीवेंकटकृष्णानन्दशिष्य ब्रह्मानन्दसूरिशिष्य वासुदेवानन्दभट्ट विरचितायां मानदीपिकाव्याख्यायां दशमं प्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्माद्वैतप्रतिपादकानि, हरिहरयोरैक्यबोधकानि, जीवब्रह्माभेदबोधकानि, प्रपञ्चमिथ्यात्वबोधकानि, ब्रह्मणोऽविषयत्वावाच्यत्व-

प्रतिपादकानि, उपादानत्वप्रतिपादकानि, व्यावहारिक पारमार्थिक तत्त्व-प्रतिपादकानि च श्रुतिस्मृत्यादिवाक्यानि संगृह्य व्याख्यायन्ते ॥

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च दृश्यते ॥

## No. (615) C 301 मानदीपिकाप्रकरणम् (सव्याख्यम्)

| | |
|---|---|
| ग्रन्थकर्ता—बालब्रह्मानन्दः (व्याख्याता वासुदेवभट्टः) | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम्—$14 \times 5\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—1874 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-52 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

A 85 कोशवत् ।

उपसंहारः—

तस्माद्वृतिसामान्यादित्युक्तरीत्या सर्वप्रमाणाविसंवाद्युपादानकारण-ब्रह्मानन्यत्वात्सर्वस्य कचिन्नित्यलोकाङ्गीकारस्य तद्विरुद्धत्वान्निरूप-चरित नित्यं ब्रह्मैवाद्वितीयमिति सिद्धम् ॥

ब्रह्माद्वैते प्रमाणानि यथा संदर्शितानि मे ।
सद्वितीयं परं ब्रह्मेत्यस्ति चैतत्प्रदर्श्यताम् ॥

इति श्रीमानदीपिकायां प्रथमप्रकरणव्याख्यानं संपूर्णम्

प्रतिपाद्यविषयः—

A 85-86 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमप्रकरणमात्रं विद्यते ॥

## No. (616) C 507 मानदीपिकाप्रकरणम् (सव्याख्यम्)

ग्रन्थकर्ता—बालब्रह्मानन्दः
(व्याख्याता वासुदेवभट्टः)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 5\frac{1}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-43

प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

A 85 कोशवत्।

उपसंहारः—

C 301 कोशवत्।

प्रतिपाद्यविषयः—

A 85-86 कोशवत्।

वक्तव्यविशेषः—

C 301 कोशवत्।

## No. (617) 720/1 मानसोल्लासः (दक्षिणामूर्तिस्तोत्रवार्तिकम्)

ग्रन्थकर्ता—सुरेश्वराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-17

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मङ्गळं दिशतु मे महेश्वरो मङ्गळं दिशतु मे विनायकः।
मङ्गळं दिशतु मे सरस्वती मङ्गळं दिशतु मे महेश्वरी॥
आत्मलाभात्परो लाभो नास्तीति मुनयो विदुः।
तल्लाभार्थं कविः स्तौति स्वात्मानं परमेश्वरम्॥

स्वेच्छया सृष्टमाविश्य विश्वं यो मनसि स्थितः ।
स्तोत्रेण स्तूयतेऽनेन स एव परमेश्वरः ॥
अस्ति प्रकाशत इति व्यवहारः प्रवर्तते ।
तच्चास्तित्वं प्रकाशत्वं कस्मिन्नर्थे प्रतिष्ठितम् ॥
किं तेष्व तेष्व भावेष्व किं वा सर्वात्मनीश्वरे ।
ईश्वरत्वं च जीवत्वं सर्वात्मत्वं च कीदृशम् ॥
जानीयात्तत्कथं जीवः किं तज्ज्ञानस्य साधनम् ।
ज्ञानात्तस्य फलं किं स्यादेकत्वं च कथं भवेत् ॥
सर्वज्ञः सर्वकर्ता च कथमात्मा भविष्यति ।
शिष्यं प्रतीत्थं पृच्छन्तं वक्तुं प्रारभते गुरुः ॥

उपसंहार:—

सर्वात्मभावनावन्तं सेवन्ते सर्वसिद्धयः ।
तस्मादात्मनि साम्राज्यं कुर्यान्नियतमानसः ॥
यस्य देवे यथा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥
प्रकाशात्मिकया शक्त्या स्वप्रकाशो दिवाकरः ।
प्रकाशयति यो विश्वं प्रकाशोऽयं प्रकाश्यताम् ॥
अन्तर्लक्ष्यविलीनचित्तपवनो योगी सदा वर्तते
यावन्निश्चलतां गमिष्यति तदा स्वात्मन्यकम्पोच्यते ॥
मुद्रा सैव च खेचरीति कथिता यस्य प्रसादाद्गुरोः
भावाभावविवर्जितं स्फुरति तत्तत्त्वं भजे शंकरम् ॥

इति श्रीमच्छंकरभगवत्पादाचार्यकृतदक्षिणामूर्तिस्तोत्रभावार्थवार्तिकं
मानसोल्लासाख्यं सुरेश्वराचार्यकृतं समाप्तम्

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे श्रीमच्छंकराचार्यकृत दक्षिणामूर्तिस्तोत्रस्य सम्यगभिप्रायो वर्ण्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च दृश्यते ।

## No. (618) 720/3 मानसोल्लासः (दक्षिणामूर्तिस्तोत्रवार्तिकम्)

ग्रन्थकर्ता—सुरेश्वराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—15½×1½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-11
प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

720/1 कोशवत्।

उपसंहारः—

720/1 कोशवत्।

प्रतिपाद्यविषयः—

720/1 कोशवत्।

वक्तव्यविशेषः—

720/1 कोशवत्।

## No. (619) 720/2 मानसोल्लासव्याख्या

ग्रन्थकर्ता—रामतीर्थः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—15½×1½
लिपिः—ग्रन्थलिपिः
पत्राणि—18-75
प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

प्रोद्यच्छाखमहावटद्रुमतले योगासनस्थं प्रभुं।
प्रत्यक्तत्त्वबुभुत्सुभिः प्रतिदिशं प्रोद्वीक्ष्यमाणाननम्॥
मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं।
हृद्यन्तः कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्तिकम्॥
नत्वाद्यान् शंकराचार्यमुख्यान्सर्वान् गरीयसः।
मानसोल्लासवृत्तान्तं वर्णयामि यथामति॥

इह हि भगवान् भाष्यकारः श्रीमच्छंकराचार्यनामा मन्दमतीन् तत्त्वजिज्ञासूननुगृहीतुं दक्षिणामूर्तिस्तोत्रव्याजेन समस्तवेदान्तरहस्यमाविश्चकार दशभिः पद्यबन्धैः तच्छिष्यैर्विश्वरूपाचार्यैः सुरेश्वरापरनामभिः तत्पद्यबन्धार्थ तत्त्वं तात्पर्यतो मानसोल्लासनाम्ना वार्तिकात्मना ग्रन्थसन्दर्भेणाविष्कृतम्। तमिमं ग्रन्थं यथाशक्ति विवृणोमि। तत्र विशिष्टाचारसंरक्षणाय कृतमङ्गळाचरणद्योत्योऽयमाद्यः श्लोकः—मङ्गळं दिशात्वित्यादि॥

उपसंहार:—

देवे दक्षिणामूर्त्याख्ये गुरौ च स्वे भक्तिमतोऽस्मिस्तोत्रे अधिकारो नान्यस्येति दर्शयति—यस्य देव इति। तदेवमशेषं स्तोत्रं तात्पर्यतो व्याख्याय ग्रन्थप्रचयविघ्नोपशान्तये शिष्टाचारलक्षणं मङ्गळं वस्तुनिर्देशात्मकमाचरति—प्रकाशात्मिकयेति। आदित्यादिप्रकाशानामपि प्रभाकर इत्यर्थः। स्वयमेव प्रकाश्यतासित्यर्थः। दशमश्लोकव्याख्यामुपसंहरति—इतीत्यादि।

इति श्रीमानसोल्लासप्रबन्धोऽयं यथामति।
व्याख्यातो रामतीर्थेन गुरुदेवप्रसादतः॥
अनेन भगवाञ्छ्रीमद्दक्षिणाशामुखः शिवः।
प्रीयतां भजतां नित्यं तत्त्वज्ञानप्रदः सताम्॥

इति श्रीदक्षिणामूर्तिस्तोत्रव्याख्याप्रबन्धः मानसोल्लासः समाप्तः

प्रतिपाद्यविषयः—

सुरेश्वराचार्यकृतमानसोल्लास व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च दृश्यते॥

## No. (620) 4641 मानसोल्लासव्याख्या (मूलसहिता)

ग्रन्थकर्ता—रामतीर्थः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15 \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-70

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः —

720/2 कोशवत्।

उपसंहारः—

720/2 कोशवत्।

प्रतिपाद्यविषयः—

720/2 कोशवत्।

वक्तव्यविशेषः—

720/2 कोशवत्।

## No. (621) C 1255 मिथ्यात्वनिरुक्तिः

| | |
|---|---|
| ग्रन्थकर्ता—गोकुलनाथः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—70 |
| प्रमाणम्—15½ × 5 अङ्गुलानि | कालः (कोशस्य)—100 वत्सराः स्युः |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–7 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

रज्जुसर्पवदनाद्यविद्यया यत्र कल्पितमतात्त्विकं जगत्।
तत्परं किमपि वस्तु गोकुले नन्दवेश्मनि निलीय तिष्ठति॥

वियद्वायुवह्निवारिवसुधादिरचेतनप्रपञ्चो मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वात्, यत्र यस्य वस्तुनो यत्र यत्र धर्मिणि तत्कालदेशावच्छिन्ने येन संसर्गेण वैशिष्ट्यं प्रतीयते तत्र तत्र तदवच्छिन्नेन वर्तमानस्य तत्संसर्गावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य प्रतियोगित्वमेव तस्य वस्तुनो मिथ्यात्वम्। भवति च शुक्त्यादावारोप्यमाणं प्रातिभासिकं रजतं यत्र यत्र कालदेशादौ गृहीतसंसर्गं तत्र तत्र तैस्तैस्संसर्गैरारोपकालेऽपि नास्तीति तत्रैव मिथ्यात्वसिद्धिः। न ह्येवंविधविषयेऽन्यथाख्यातिमद्वैतवादिनोऽभ्युपयन्ति, येन वणिग्विपणिवर्तमानमेव रजतं शुक्तावारोप्येत।

उपसंहारः—

प्रवक्तृपुरुषप्रयत्नस्य यादृशवाक्यार्थज्ञानोद्देश्यता निरूपितसाध्यत्वाख्यविषयता प्रतीयते तथाविधवाक्यार्थज्ञानमेव तद्वाक्यं जनयतीति व्युत्पत्तिः। वस्तुतस्तु जन्यत्वं स्वाधिकरणक्षणावृत्ति ध्वंसप्रतियोगिवाक्यवृत्त्यानुपूर्वीकत्वम्। वाक्यार्थज्ञानोद्देश्यतानिरूपित साध्यत्वाख्यविषयता चेति संसर्गत्रयेण प्रयत्नवत्त्वं तात्पर्यमिति निष्कर्षः॥

(वैशाख शुक्ल ११ भृगुवासरे संवत् १९४२ हेविलंबीनाम संवत्सरे)

इति श्रीमहामहोपाध्याय गोकुलनाथविरचितं मिथ्यात्वे निरुक्तिरहस्यं समाप्तम

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे 'वियदादिर्मिथ्या, दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वा'दिति मिथ्यात्वानुमानलब्धार्थस्य निष्कर्षः क्रियते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च।

## No. (622) 21/4 मुण्डकोपनिषद्दीपिका

| | |
|---|---|
| ग्रन्थकर्ता—शंकरानन्दः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—86 |
| प्रमाणम्—$17 \times 1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—36-47 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मुण्डकं मुण्डमार्गस्थ ब्रह्मात्मैक्यावबोधकम्।
वक्ष्येऽहं शंकराचार्यमार्गेणैव पदे पदे॥

ब्रह्मविद्याया अतिदुर्लभत्वं दर्शयितुमितिहासरूपेण श्रुतिः प्रथमतो गुरुपरम्परामाह—ब्रह्मा ब्रह्माण्डजो विधाता चतुराननः देवानामग्न्यादीनां मध्ये प्रथमः पूर्वः संबभूव सम्यगभूत् ममाभिमानपुरःसरं देहग्रहणमकरोत्। ब्रह्मणो विशेषणमाह—विश्वस्य कर्ता, विश्वोत्पादकः। किं कर्तैवेत्याशंक्य नेत्याह—भुवनस्य गोप्ता, निखिलस्य लोकस्य रक्षकः। सृष्टिस्थितिसंहारेषु समर्थ इत्यर्थः।

उपसंहारः—

उक्तमेव प्रत्यक्षं सत्यं सत्यशब्दाभिधेयं परापरयोरविद्ययोर्विषयभूतं ऋषिरतीन्द्रियस्य द्रष्टा अङ्गिरा उक्तशौनकगुरुः पुरा पूर्वं शौनकेन पृष्ट उवाच उक्तवान्। नन्वङ्गिरा अथर्वणशिरोव्रते पक्षपातमकरोत। ततः सर्वमस्य वचनमादेयं शिरोव्रतचरणमन्तरेणेत्यत आह—नैतन्मुण्डकग्रन्थरूपं .... ............. त शिरोव्रतो विद्यापि कश्चिदधीते .... ध्ययनं कुरुते। तस्मान्नाङ्गिरसः पक्षपात इत्यर्थः। इदानीं ब्रह्मविद्यासम्प्रदायकर्तॄणां नमस्कारमस्त्वद्धितार्थमाह—नमः नमस्कारः परमऋषिभ्यः उत्कृष्टऋषिभ्यो ब्रह्मादिभ्यो नमः परमऋषिभ्यः व्याख्यातम्। वाक्याभ्यास उपनिषत्समाप्त्यर्थः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य शंकरानन्दभगवत्पादस्य कृतिस्तृतीयमुण्डकोपनिषद्दीपिका समाप्ता

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मुण्डकोपनिषदर्थविवरणं क्रियते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च दृश्यते॥

## No. (623) B 482 मुण्डकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः – कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$7\frac{1}{2}$×6 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-33 | समग्रोऽसमग्रो वा – समग्रः |

उपक्रमः—

मू-भद्रं कर्णेभिश्शृणुयाम देवाः। भद्रतु दधापशान्तिः। ब्रह्म देवानां प्रथमस्संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह। अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां

पुरोवाचाङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम्। शौनको वै महाशालोऽङ्गिरसं विधिव दुपसन्नः पप्रच्छ, कस्मिन्नु भगवोऽपि ज्ञाते सर्वमिदं विज्ञातं भवतीति॥

भा.—नत्वा श्रीसुन्दराचार्यं प्रसन्नमुखपङ्कजम्।
मुण्डकोपनिषद्भाष्यं सङ्ग्रहाद्रचयाम्यहम्॥

भद्रंकर्णेभिरित्यादि शान्तिः।

उपसंहारः—

भा—तदेतदक्षरं सत्यं अङ्गिरानामर्षिः पुरा शौनकायोवाच। नैतत् ग्रन्थरूपं शब्दब्रह्माचीर्णव्रतोऽधीते नाध्ययनं कर्तुमधिकारी स्यात्। नमः परमऋषिभ्यः ब्रह्मादिभ्य इति नमः परमऋषिभ्य इति द्विवचनं विद्यापारंपर्यक्रमद्योतनार्थं भूयो नमस्कारात् अर्थं च भवतीत्यवगन्तव्यम्।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ मुण्डकोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

मुण्डकोपनिषद्व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (624) C 662 मुण्डकोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः 15 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—$10\frac{1}{4} \times 4$ अङ्गुलानि | कालः (कोशस्य)—1833 |
| लिपिः—देवनागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-14 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ओं ब्रह्मा देवानामित्याद्यथर्वणोपनिषदस्याश्च विद्यासम्प्रदायकर्तृ (त्व) पारंपर्यलक्षणसंबन्धमादावेवाह स्वयमेव स्तुत्यर्थम्। एवं

हि महद्भिः परमपुरुषार्थसाधनत्वेन गुरुणाऽऽयासेन लब्धा विद्येति श्रोतृबुद्धिप्ररोचनाय विद्यां महीकरोति। स्तुत्या प्ररोचितायां हि विद्यायां सादराः प्रवर्तेयुरिति। प्रयोजनेन तु विद्यायाः साध्यसाधनलक्षणं संबन्धमुत्तरत्र वक्ष्यति—भिद्यते हृदयग्रन्थिरित्यादिना।

उपसंहारः—

नैतद्ग्रन्थरूपमचीर्णव्रतोऽचरितव्रतः नाधीते न पठति। चीर्णव्रतस्य हि विद्या फलाय संस्कृता भवतीति। समाप्ता ब्रह्मविद्या येभ्यो ब्रह्मादिभ्यः पारंपर्येण सम्प्राप्ता तेभ्यो नमः परमर्षिभ्यः परमं ब्रह्म साक्षात् दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च ते परमर्षयस्तेभ्यो भूयोऽपि नमः। द्विर्वचनमत्यन्तादरार्थं मुण्डकसमाप्त्यर्थं च।

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादकृतौ आथर्वणोपनिषन्मुण्डकभाष्यं समाप्तम्

प्रतिपाद्यविषयः—

मुण्डकोपनिषद्विवरणरूपोऽयं ग्रन्थः॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च ज्ञायते॥

## No. (625) 1000/1 मुण्डकोपनिषद्भाष्यटीका

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दज्ञानः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—44 |
| प्रमाणम्—13 × 1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–20 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यदक्षरं परं ब्रह्म विद्यागम्यमितीरितम्।
यस्मिन् ज्ञाते भवेज्ज्ञातं सर्वं तत्स्यादसंशयम्॥

ब्रह्मोपनिषद्ब्रह्मोपनिषदाद्या अथर्वणवेदस्य बह्वय उपनिषदः सन्ति। तासां शारीरके अनुपयोगित्वेनाव्याचिख्यासितत्वाददृश्यत्वादिगुणको धर्मोक्तेरित्याद्यधिकरणोपयोगितया मुण्डकस्य व्याचिख्यासितस्य प्रतीकमादत्ते—ब्रह्मा देवानामित्याद्याथर्वणोपनिषदिति। व्याचिख्यासितेति शेषः। नन्वियमुपनिषन्मन्त्ररूपा मन्त्राणां चेषेत्यादीनां कर्मसंबन्धेनैव प्रयोजनवत्त्वमेतेषां च मन्त्राणां कर्मसु विनियोजकप्रमाणानुपलम्भेन तत्संबन्धासंभवान्निष्प्रयोजनत्वाद्व्याचिख्यासितत्वं न संभवतीति शङ्कमानस्योत्तरम्। सत्यं कर्मसंबन्धाभावेऽपि ब्रह्मविद्याप्रकाशनसामर्थ्याद्विद्यया संबन्धो भविष्यतीति॥

उपसंहारः—

एतद्ग्रन्थद्वारकविद्याप्रदानेऽयं विधिराथर्वणिकानामिति प्रकृतपरामर्शकादेतच्छब्दादवगम्यते। ग्रन्थद्वारेण विद्यायाः प्रकृतत्वसंभवान्न सर्वत्र ब्रह्मविद्याप्रदानमिति सूचयन्नाह—एतां ब्रह्मविद्यां वदेतेति।

इति मुण्डकभाष्यटिप्पणं समाप्तम्

प्रतिपाद्यविषयः—

शंकराचार्यकृतमुण्डकोपनिषद्भाष्यविवरणरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च॥

## No. (626) B 242/2 मुक्तिकामधेनुः

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$8\frac{1}{4} \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-16 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सर्वेषामपवादतो विभुपरं ब्रह्मैकमेवाद्वयं
व्योमेवाहमिति स्थिरा मतिरभूद्यस्येह मुक्तो गुरो ।
प्राप्तः प्राथमिकं समाधिमनया दृश्यानुविद्धाभिधं
मत्या सन्मननान्तजं स तु भवेत् सौख्यार्चिरादिक्रमात् ॥

शब्दास्ते विषयीकृता हि विदुषा तस्मिन्परब्रह्मणः
को न्वस्मादितरस्समाधिरुदितो जीवद्विमुक्त्यर्थकः ।
दृश्यत्यागपुरस्सरो न फलवांच्छब्दानुवेधः पृथक्
तत्त्यागाद्यनपेक्ष एव फलदस्साक्षित्वधीवर्जनात् ॥

का साक्षित्वमतेः परास्ति विदुषः प्राप्या हि काष्ठा श्रुता
दृश्यातीततया न काचन ततो दृग्रूपतावस्थितेः ।
चित्तप्राणलयादिहेतुरमला याऽखण्डवृत्तिश्श्रुता
सा काष्ठा परमा गतिस्तदितरा नो दृश्यसंबन्धतः ॥

उपसंहारः—

निष्कामाग्रहभक्तिमन्त इह तां ब्रह्मात्मतां प्राप्नुयुः
किं सर्वेश्वरसद्गुरूपसरणात् स्वीयप्रयत्नाच्च वा ।
यस्यास्ति प्रबला ग्रहेषु नवसु स्वान्तस्य भक्तिर्ध्रुवा
नैष्काम्यस्य कदापि तत्र मलिने गन्धोऽपि नैतद्भवेत् ।

काम्यान्येव कृतानि यानि बहुधा यैर्ब्रह्मलोकेच्छया
तैस्तैस्तत्र विमुक्तिमन्त इह नावर्तन्त एव ध्रुवम् ।
ते मन्दा उपदेशमेव न विधेस्संप्राप्नुयुस्त्वानना-
दावर्तन्त इहेतरो व्रजति तान्मुक्तिं विकामो महान् ॥

इति निगदितमेतं कर्मपादं तुरीयं
स्थिरमतिरवलोकय ज्ञातकर्मप्रकारः ।
परशिवभजनेन ब्रह्मविद्वान्महात्मा
परतरनिजयोगी भाति सद्यो विमुक्तः ॥

इत्यप्पय्यदीक्षितस्य कृतिषु मुक्तिकामधेनुः समाप्ता

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे निर्गुणब्रह्मयोगः, तज्ज्ञानं, तत्राशक्तस्य सगुणाराधनक्रमः, चित्तशुध्यर्थंक कर्मानुष्ठानप्रकारश्च सम्यक्प्रतिपाद्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (627) B 1020 मुक्तिकामधेनुः

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः – 8 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$8\frac{1}{4} \times 6\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—1934 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-25 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 242/2 कोशवत् ।

उपसंहारः—

B 242/2 कोशवत् ।

प्रतिपाद्यविषयः—

B 242/2 कोशवत् ।

वक्तव्यविशेषः—

B 242/2 कोशवत् ।

## No. (628) B 481 मुक्तिकोपनिषद्भाष्यम् (मुक्तिचन्द्रिका)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{2}$ अङ्गुलानि | कालः—(कोशस्य) ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-104 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—अयोध्यानगरे रम्ये रत्नमण्डपमध्यमे ।
सीताभरतसौमित्रिशत्रुघ्नाद्यैस्समन्वितम् ॥
सनकाद्यैर्मुनिगणैर्वसिष्ठाद्यैश्शुकादिभिः ॥
अन्यैर्भागवतैश्चापि स्तूयमानमहर्निशम् ।
धीविक्रियासहस्राणां साक्षिणं निर्विकारिणम् ॥
स्वरूपध्याननिरतं समाधिविरमे हरिम् ॥
भक्त्या शुश्रूषया रामं स्तुवन्पप्रच्छ मारुतिः ।
राम त्वं परमात्मासि सच्चिदानन्दविग्रहः ।
इदानीं त्वां रघुश्रेष्ठ प्रणमामि मुहुर्मुहुः ॥
त्वद्रूपं ज्ञातुमिच्छामि तत्त्वतो राम मुक्तये ॥

उपसंहारः—

ब्रह्मणोऽपि विदेहमुक्तिविषयत्वस्यानया मुक्तिकोपनिषदाऽभिधीयमानत्वाद्विदेहमुक्तिरेव गरीयसीति वक्तव्यमिति ।

अस्या ऋत्वोऽर्थोऽन्यत्र वर्णित एवेत्यत्र इह न प्रपञ्च्यते ॥
श्रीमत्सुन्दरतातपादचरणाम्भोजद्वयासक्तधी
जातिश्चाप्पयदीक्षितोत्तमकुले भूमौ महापावने ।
सोऽहं त्वाप्पयनामकः श्रुतिशिरस्सारांशिभूतामिमां
व्याख्यायैव हि मुक्तिकोपनिषदं शान्तः कृतार्थोऽभवम् ॥
सकलनिगमसारं सर्वमोक्षैकसारं
निखिलविबुधसारं नित्यपीयूषसारम् ।
श्रवणमननसारं ध्यानसारं समाधि
प्रकटितबहुसारं साधु पश्यन्तुसन्तः ॥
इमां गुरुमुखाच्छ्रुत्वा लोकेऽस्मिन्मुक्तिचन्द्रिकाम् ।
को न मुच्येत संसारात् बहुदुःखाकरादपि ॥
दुर्लभो मानुषो देहस्तत्रापि श्रुतिदर्शनम् ।
तत्राप्यष्टोत्तरशतं तत्रेयं मुक्तिचन्द्रिका ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृताष्टोत्तरशतोपनिषद्भाष्ये
मुक्तिचन्द्रिका समाप्ता

**प्रतिपाद्यविषयः**—

अस्मिन्ग्रन्थे अष्टोत्तरशतोपनिषदां नामानि तासां शान्तिक्रमः जीवन्मुक्तिविदेहमुक्तयोः स्वरूपं तत्र प्रमाणं च सम्यङ्निरूप्यते ॥

**वक्तव्यविशेषः**—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (629) 4659/10 मुक्तिप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—आदिशेषार्यः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—15 |
| प्रमाणम्—12½ × 1 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—148 | समग्रोऽसमग्रो वा—असमग्रः |

**उपक्रमः**—

सायुज्यभेदात् । तत्रोपासनामहिम्ना कैलासं वैकुण्ठं वा गत्वा शिवविष्णवादिसंमुखमप्राप्यैकस्मिन्प्रदेशे स्थित्वा सकलभोगाननुभूय स्थितिरेव सालोक्यम् । शिवविष्णवादिसमीपं गत्वा सकलभोगाननुभूय स्थितिरेव सामीप्यम्—

**उपसंहारः**—

एतच्च कैवल्यं विचारजन्यज्ञानेनैव भवति न कर्मोपासनादिभिः । तस्मात्सगुणोपासनया ब्रह्मलोकं गत्वा ब्रह्मणा सह विचारेण ज्ञानं सम्पाद्य सगुणोपासका अपि ब्रह्मणा सह मुक्तिं प्राप्नुवन्ति । तस्मात्समस्तप्राणिनां ज्ञानेनैव मुक्तिर्नान्यथेति सिद्धम् ॥

इति श्रीमदादिशेषार्यगुरुविरचितं मुक्तिप्रकरणं समाप्तम्

**प्रतिपाद्यविषयः**—

अस्मिन्ग्रन्थे सालोक्यादिभेदेन मुक्तेश्चातुर्विध्यं प्रतिपाद्य ज्ञानादेव कैवल्यमित्येतत्प्रतिपाद्यते ।

**वक्तव्यविशेषः**—

अमुद्रितः ।

## No. (630) 2035/21 मुक्तिप्रकरणम्

ग्रन्थकर्ता—आदिशेषार्यः ?
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—13+1½ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—193-194

प्रतिपुटं पङ्क्तयः—4
प्रतिपङ्क्त्यक्षराणि—80
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मुक्तिस्वरूपविज्ञानसिद्ध्यै विदुषां मुदे ।
सर्वशास्त्रानुसारेण मुक्तिरेषा निरूप्यते ॥

मुक्तिः पञ्चविधा—सालोक्य सामीप्य सारूप्य सादृश्य सायुज्य-भेदात् । तत्रोपासनामहिम्ना- शेषं 4659/10 कोशवत् ॥

उपसंहारः—

4659/10 कोशवत् ।

प्रतिपाद्यविषयः—

4659/10 कोशवत् ।

## No. (631) B 242/3 मुक्तिरत्नम् (द्राविडभाषा)

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्य
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8¼+6½ अङ्गुलानि
लिपिः—तमिलु
पत्राणि—1-176

प्रतिपुटं पङ्क्तयः—5
प्रतिपङ्क्त्यक्षराणि—26
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ஸர்வவேதாந்த பிரஸித்தமும் நித்திய சுத்த புத்தமுக்தஸ்வரூபமும் ஸச்சிதானந்தாதி லக்ஷணங்களுள்ளதுமான நிர்க்குண பரப்பிரம்மமொன் றுண்டென்று யாவருக்குந் தெரிந்ததே ஆயினும் அதினனுபவம் வாராததினால் வித்வான்களும் ஸம்ஸாரதுன்பங்களை

யனுபவிக்கின்றனர். இவ்வனுபவம் நீங்கி பரமானந்தத்தை யடையக்காரணமான பரப்ரம்மானுபவமெவ்விதநிரூபணத்தால் அதி சீக்கிறத்திலுண்டாகுமோ அவ்வித நிரூபணமுடைய இப்பிர கரணத்தை முமுக்ஷுவானவராதரவுடன் பார்க்கவேண்டியது.

उपसंहार:—

ஆயினுமிப்பிரபந்தத்தையனேகம் பிரதிகளாக்கியுலகத்தா ருக்குபகாரப்படுத்துவராகிலப்பொழுது கூடி பொழி பொரு ளற்றதாகி கிருதார்தர்களாவோம்.

இங்ஙனம் அப்பயதீக்ஷிதரால் செய்யப்பட்ட மூக்திரத்தின த்தில் மேவது சுலபானுபவப்பிரகரணம் முற்றிற்று.

முக்திரத்தினம் முற்றிற்று

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जीवन्मुक्तिविदेहमुक्तिनिरूपणं जीवेश्वरब्रह्मणां स्वरूप- निरूपणं, श्रवणमननिदिध्यासननिरूपणं चतुर्विधमहावाक्यार्थविचारः, पञ्चदशाङ्गयोगनिरूपणं प्रपञ्चोत्पत्तिरित्येते विषयाः प्रतिपाद्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ॥

## No. (632) B 483 मुद्गलोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$8 \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–8 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—वाङ्मे मनसीति शान्तिः । पुरुषसूक्तार्थनिर्णयं व्याख्यास्यामः पुरुषसंहितायां पुरुषसूक्तार्थः सङ्ग्रहेण प्रोच्यते ।

सहस्रशीर्षेत्यत्र स शब्दोऽनन्तवाचकः ।
अनन्तयोजनं प्राह दशाङ्गुळवचस्तथा ॥

तस्य प्रथमया विष्णोर्देशतो व्याप्तिरीरिता ।
द्वितीयया चास्य विष्णोः कालतो व्याप्तिरुच्यते ॥

विष्णोर्मोक्षप्रदत्वं च कथितं तु तृतीयया ।
एतावानिति मन्त्रेण वैभवं कथितं हरेः ॥

एतेनैव च मन्त्रेण चतुर्व्यूहो विभाषितः ।
त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम् ॥

तस्माद्विराडित्यनया पादनारायणाद्धरेः ।
प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता ॥

भा—यस्यां पुरुषसूक्तार्थप्रपंचोत्पत्तिनिर्णयौ ।
स्तो मुद्गलोपनिषदं व्याख्यास्ये तामिमां शुभाम् ॥

ननु विष्णोः प्रथमया सहितया देशतोव्याप्ति द्वितीया कालतो-व्याप्तिरित्येतद्वाक्यद्वयमनुपपन्नः........... ...

उपसंहारः—

भा—ब्रह्मोपासनं च तादात्म्यसिध्यर्थकं सजातीयप्रत्ययप्रवाहात्मकं मुमुक्षूणां सर्वत्र वेदान्तेषु विधीयते। अतोऽनवद्यम्। नन्वस्या उपनिषद उपसंहारे विद्वान् बहुशो वेदेत्युक्तम्। कथमेतत्समीचीनं स्यात् बहुवार-पारायणस्य विहितत्वाच्छिष्टैरनुष्ठीयमानत्वाच्च । नैष दोषः ; शिष्या यद्दक्षिणे कर्णे इत्युक्तया एकस्मै शिष्यायासकृदुपदेशमात्रस्य प्रतिषिद्ध-त्वात् ॥

इति श्रीमत्सुन्दरेश्वरतोनपादशिष्यारायदीक्षिताचार्यकृतिषु मुद्गलोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः –

अस्मिन्ग्रन्थे पुरुषसूक्तार्थः प्रपञ्च्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (633) 2035/27 मुमुक्षुबुद्धिभ्रंशप्रकरणम्

ग्रन्थकर्ता—?
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—13 × 1¼ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—209-214

प्रतिपुटं पङ्क्तयः—5
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य) ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

इदानीं काव्यनाटकालङ्कारतार्किकालङ्कारिकबोधनजन्यमुमुक्षुबुद्धिभ्रंशप्रकारं दृष्टान्तपूर्वकं निरूप्यते। तथा हि लोके मण्डलेश्वरः कश्चित्स्वपुरोहितं यज्ञार्थं नियोजयामास। स तद्यज्ञकरणाय सकलपदार्थप्रदानानन्तरं पशोरलाभे पशुपरीक्षकं ब्राह्मणमाहूय तस्मै पशुक्रयार्थं किञ्चिद्द्रव्यं दत्वा पशुमानयेति प्रेषितवान्। यजमानस्तदनन्तरं स च ब्राह्मणो ग्रामान्तरं गत्वा पशुसमृद्धिस्थलं प्राप्य पशुं लक्षणयुक्तं विचार्य पशुपोषकाय पृष्टद्रव्यं दत्वा पशुं गृहीत्वा मध्याह्नकाले घट्टकुट्टं गतस्तेन घट्टाधिकारिणा पशौ रुद्धे। इत्यादिः।

उपसंहारः—

तस्मान्मुमुक्षुः सम्यग्विचार्य वञ्चकजनसङ्गतिं हित्वा सत्सङ्गतिं कृत्वा वेदान्तशास्त्रमेव स्वस्य तारकं अन्यशास्त्रं तारकं न भवति आत्मस्वरूपवक्तैव गुरुर्नान्य इति निश्चित्य वेदान्ते आत्मस्वरूपे तद्बोधकगुरौ च विश्वासं कृत्वा गुरुशुश्रूषापूर्वकं श्रवणादिकं कृत्वा ज्ञानं सम्पादितं चेत् स कृतकृत्यो भवति न सन्देह इति सिद्धम्। एतस्मिन्नर्थे प्रमाणवचनम्—

बहवो गुरवः सन्ति शिष्यवित्तापहारकाः।
दुर्लभोऽयं गुरुर्देवि शिष्यहृत्तापहारकः इति।

इति मुमुक्षुबुद्धिभ्रंशप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मुमुक्षुणा काव्यनाटकन्यायादिशास्त्रविचारो न कर्तव्यः, अपि तु सद्गुरुं प्राप्य तस्मिन् शुश्रूषापूर्वकं वेदान्तशास्त्राभ्यासश्रवणमननादिकमेव कार्यम्। अन्यथा बुद्धिभ्रंशो भवेदिति प्रतिपाद्यते॥

वक्तव्यविशेषः—

अमुद्रितः॥

## No. (634) B 485 मैत्रेय्युपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—15 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—329-346 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू —आप्यायन्त्विति शान्तिः ॥

बृहद्रथो वै नाम राजा राज्ये ज्येष्ठं स्वपुत्रं निधापयित्वेदमशाश्वतं-मन्यः शरीरं वैराग्यमुपेतोऽरण्यं निर्जगाम। स तत्र परमं तप आस्थाया-दित्यमीक्षमाण ऊर्ध्वबाहुस्तिष्ठत्यन्ते सहस्रस्य मुनेरन्तिकमाजगामाग्निरिवा-धूमकस्तेजसा निर्दहन्निवात्मवित् भगवांछाकायन्य उत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति राजनमब्रवीत्। स तस्मै नमस्कृत्योवाच। भगवन्नाहमात्म-वित् त्वं तत्त्वविच्छृणुमो वयं स त्वं नो ब्रूहीत्येतद्वृत्तं पुरस्तादशक्यं मा पृच्छ प्रश्नमैक्ष्वाकान्याकामान्वृणीष्वेति ॥

भा—यत्र वैराग्य सिध्यर्थं शरीरोत्पत्तिरुच्यते।
वैराग्यसाध्यसन्यास तत्साध्यं चात्मवेदनं ॥
बाह्यार्चनस्य निंदा च हृदयार्चन संस्तुतिः।
मुख्यं मैत्रेय्युपनिषद्भाष्यमारभ्यतेऽधुना ॥
बृहद्रथ इति नामतः..........

उपसंहारः—

भा —नारदपरिव्राजकोपनिषदि केवलमष्टोत्तरशतोपनिषदन्तर्गताया-मकारादिमन्त्राणामभिहितत्वात्। न हि सूचनयाभिहितोऽर्थः कस्य-चिदप्यनुभवपथमुपेयात्। अतोऽनुभूतिमीमांसाद्येषु प्रबन्धेषु प्रति-पादितपूर्वाणामर्थानां न कोऽपि विरोधो मन्तव्यः।

"यश्शृणोति सकृद्वापि ब्रह्मैव भवति स्वयमि"तीयं फलश्रुतिरर्थ-वादः। यद्वा भवतीत्यस्य क्रियापदस्य भविष्यदर्थोऽवगन्तव्यः।

तृतीयोऽध्यायः।

इति श्रीमत्सुन्दरेश्वरतातपाददिव्याप्पय्यदीक्षिताचार्यकृतौ मैत्रेय्युपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे वैराग्यस्वरूपं तस्मादात्मसंवेदनं बाह्यार्थनिन्दापूर्वकमन्तिरं ध्यानं ज्ञानिनो वर्तनं जीवन्मुक्तानुभवश्च सम्यङ्निरूप्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ॥

## No. (635) B 484 मैत्रायणीयोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—15 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—183–205 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 485 कोशवत् ।

उपसंहारः—

भा–ननु प्रजापतेर्बहुधोद्भूतत्वाभिधानेन परिणामवादः उपस्थितः । तथा सति कथं भूतेषु चरतीति भेदवादः उपपद्यन्ते । अत्रोच्यते–तदात्मानं स्वयमकुरुतेति, अनेन जीवेनात्मनानुप्रविश्येति चैवमादिश्रुतिभ्यस्तस्यैव आधाराधेयत्वयोरुभयोरप्यवगम्यमानत्वाददोष इति । तथा चात्रोपसंहारेऽवगम्यते । असावात्मान्तर्बहिश्चेति द्विरुक्तिरुपनिषत्समाप्तिद्योतनार्थः ।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ मैत्रायणीयोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे वैराग्यात्मबोधौ सम्यङ्निरूप्येते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (6`6) A 781 मोक्षधर्मदीपिका

| | |
|---|---|
| ग्रन्थकर्ता—नन्दः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—13¼×8½ अङ्गुलानि | कालः (कोशस्य)—1936 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि 1–455 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

ऐश्वर्यमद्भुतं यस्य धर्मस्थित्यर्थमेधते ।
अजन्मने नमस्तस्मै वसुदेवात्मजन्मने ॥ १ ॥
वेदान्तसाङ्ख्ययोगाद्याः सरितो यत्र सङ्गताः ।
मोक्षधर्मोदधेस्तस्य व्याख्यानं नावमारभे ॥ २ ॥

श्रीमता भगवता वेदव्यासेन महाभारतमष्टादशपर्वात्मकं प्रणयता द्वादशकं शान्तिपर्व श्लोकानां चतुर्दशभिः सहस्रैः पञ्चभिश्च शतैः पञ्चविंशत्या च प्रणीतम् । तत्र पूर्वभागे भगवतः सहस्रांशोरुदगावृत्तिं प्रतिपाल्य शरमये शयने शयानेन शान्तनवेन स्वधर्मं पृच्छते युधिष्ठिराय राजधर्माः प्रथममभिहिताः । राजधर्मश्रवणानन्तरं राजा विदुरपञ्चमैः भ्रातृभिः सह पुरुषार्थेषु मोक्ष एव श्रेष्ठ इति निर्णीय स्वनिर्णयेन भीष्ममतं संगच्छते न वेति ज्ञातुमिच्छन् प्रवक्तुं प्रतिवचनप्रोत्साहनार्थं पृष्टप्रत्युक्तान् धर्मान् अनुभाषमाणो युधिष्ठिर उवाच—

धर्माः पितामहेनोक्ताः राजधर्माश्रिताः शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि भारत ॥

उपसंहारः—

(त्रिषष्टितमाध्यायारम्भे)
प्रज्ञया निर्मितैर्धीरास्तारयन्त्यबुधान्प्लवैः ।
नाबुधास्तारयन्त्यन्यानात्मानं वा कदाचन ॥

प्रज्ञया निर्मितैः प्लवैर्ज्ञानप्लवैः धीराः साङ्ख्ययोगविदः अबुधान् साङ्ख्ययोगज्ञानरहितान् तारयन्ति नाबुधाः । तस्मात्त सेवितव्या इत्यभिप्रायः । तत्र योगं तावदाह—

हीनदोषो मुनिर्योगान्युक्तो युञ्जीत द्वादश ।
दश कर्म सुखानर्थानुपायापायनिष्क्रियः ॥

हीनदोषः हीनयोगदोषः योगदोषाश्च कामक्रोधादय । तथा च वक्ष्यति—

योगदोषान्समुच्छिन्द्यात् सञ्चयान्कवयो विदुः ।
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ॥ इति ॥

मुनिर्मननशीलः युक्तः अवहितः द्वादश योगान्युञ्जीत । शरीरस्य नवद्वारेषु ........॥

प्रतिपाद्यविषयः—

श्रीमहाभारतशान्तिपर्वान्तर्गतमोक्षधर्मव्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ७२ अध्यायाः समग्रा विद्यन्ते । अमुद्रितश्च ज्ञायते ॥

## No. (637) 338/1 यज्ञशास्त्रार्थनिर्णयः

| | |
|---|---|
| ग्रन्थकर्ता—वीणयज्ञसुधीः | प्रतिपुटं पङ्क्तयः—9 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—34 |
| प्रमाणम्—16¾×1¾ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-11 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

श्रीकृष्णं वेंकटेशाख्यदेशिकेन्द्रं प्रणम्य च ।
वीणयज्ञसुधीः कुर्वे यज्ञशास्त्रार्थनिर्णयम ॥

अथ यज्ञफलकाम्यधिकारिनिरूपणं विना यज्ञप्रतिप...... ........... ... .......भावात् । सकलयज्ञप्रतिपादकश्रुतिस्मृतीतिहासपुराणतात्पर्यपर्यालोचनया यज्ञाधिकारिणां विरक्ताविरक्तभेदेन यज्ञाधिकारिणां विरक्ताविरक्तभेदेन द्वैविध्यं प्रतीयते तथाहि—यजदेव .... ... ...........

............ ...नेष्वित्यनुशासनाद्देवपूजा यज्ञः । सा च देवप्रीतिहेतुर्व्यापार-विशेषः स च यज्ञो द्विविधः स्थूलसूक्ष्मभेदेन स्थूलः कर्मयज्ञः सूक्ष्मो-ज्ञानयज्ञश्चेति । तत्र कर्मय ........ ....... मानसिकभेदेन त्रिप्रकारः ।

उपसंहारः—

यस्तु पूर्वोक्तरीत्या त्रिपुटिमात्रात्मकध्याननिष्ठस्तस्य स्वेष्टदेवत-सामीप्यमुक्तिप्राप्तिः फलम् । यस्तु पूर्वोक्तरीत्या ध्येयमात्रात्मकसमाधि-निष्ठस्तस्य स्वेष्टदेवतासारूप्यमुक्तिप्राप्तिः फलम् । यस्तु पूर्वोक्तरीत्या मुख्याधिकारिनिष्ठाष्टाङ्गयोगनिरतस्तस्य मूलाज्ञान निवृत्तिद्वारा सायुज्य मुक्तिप्राप्तिः फलम् । तस्माद्योगशास्त्रस्तस्य वेदान्तशास्त्रवत् स्वातिरिक्ता-शेषविशेषशून्याखण्डैकरसप्रत्यगभिन्नब्रह्मप्रतिपादनेनतात्पर्यं सिद्धमिति सर्वं समञ्जसम् ।

इति यज्ञशास्त्रार्थनिर्णयः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मन्दमध्यमोत्तमभेदेनाधिकारित्रैविध्यं, नित्यादिभेदेन कर्मभेदः, समाधिस्वरूपं, अधिकारिभेदेन सामीप्यसारूप्यसायुज्यरूपफल-भेदश्च सम्यङ्निरूप्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च दृश्यते ॥

## No. (638) B 1022 यज्ञशास्त्रार्थनिर्णयः

| | |
|---|---|
| ग्रन्थकर्ता —वीणयज्ञसुधीः | प्रतिपुटं पङ्क्तयः—15 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—$8\frac{1}{4} \times 6\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—1934 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–25 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

338/1 कोशवत् ।

उपसंहारः—

338/1 कोशवत्।

प्रतिपाद्यविषयः—

338/1 कोशवत्।

वक्तव्यविशेषः—

338/1 कोशवत्।

## No. (639) B 486 याज्ञवल्क्योपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-10
प्रतिपुटं पङ्क्तयः—13
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—ओं पूर्णमद इति शान्तिः ॥

अथ जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच। भगवन् सन्नयासमनुब्रूहीति। कथं सन्नयासलक्षणम्। स होवाच याज्ञवल्क्यः। ब्रह्मचर्यं समाप्य गृही भवेत् गृहीद्वनीभूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा। अथ पुनरव्रती वा व्रती वा स्नातको वा अस्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरज्येत्तदहरेव प्रव्रजेत्तदेके प्राजापत्यामेवेष्टिं कुर्वन्त्यथवा न कुर्यादाग्नेय्यामेव कुर्यादग्निर्हि प्राणः प्राणमेवैतया करोति।

भा—सन्यासोचितवैराग्यबोधद्वारात्मदर्शनम्।
यत्रोच्यते याज्ञवल्क्यश्रुतिर्व्याख्यास्यतेऽधुना ॥

नन्विहादौ भगवन् सन्यासमनुब्रूहीति... ...

उपसंहारः—

भा—तर्हि संयमिनस्स्थितिः कीदृशी इत्यत आह—यत्रेति। यत्र ब्रह्मविद्यायां जना अविद्यापाशबद्धास्सर्वेऽपि नित्यं अविच्छिन्नं सुप्ताः

सुप्तयवस्थायामिवाज्ञानान्धकारावृताः । तत्र संयमी ब्रह्मनिष्ठाविशेषेण संयतेन्द्रियस्स्वात्मयोगीत्यर्थः प्रबुद्धः जाग्रन्नेव भवति । हे ब्रह्मन् ब्रह्मविसम यत्राविद्यावस्थायां ते जनाः प्रबुद्धाः जाग्रन्तो भवन्ति तत्र योगिराट् सहजब्रह्मानुभूतिमान् स संयमी सुषुप्तिं याति सर्वथाऽविद्यक-विषयज्ञानशून्यो भवतीत्यर्थः । अयमेवार्थो "या निशा सर्वभूताना"-मित्यादि स्मृत्युक्तः । प्रत्यक्परैक्यं पारहंस्यं तदेव परं पदं यतीनामुपादेयं नान्यदिति ।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु याज्ञवल्क्योपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सन्न्यासिनः परमवैराग्यानुभवः सम्यङ्निरूप्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (640) 1/1 याज्ञिक्युपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—सायणाचार्यः | प्रतिपुटं पङ्क्तयः —10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—100 |
| प्रमाणम्—$17\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1–29 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
वारुण्युपनिषद्युक्ता ब्रह्मविद्या सनातना ।
याज्ञिक्यां खिलरूपायां सर्वशेषोऽभिधीयते ॥

यथा बृहदारण्यके सप्तमाष्टमाध्याययोः खिलकाण्डत्वेनाचार्यैरुदाहृता तथेयं नारायणाख्या याज्ञिक्युपनिषदपि खिलकाण्डरूपा, तल्लक्षणोपेतत्वात् । कर्मोपासनाब्रह्मकाण्डेषु त्रिष्वपि यद्वक्तव्यमवशिष्टं तस्य सर्वस्याभिधानेन प्रकीर्णकरूपत्वं खिलत्वम् । बृहदारण्यके सप्तमाध्याये "पूर्णमदः पूर्णमिदं" मित्यादिना ब्रह्मतत्त्वमभिहितम् । ओं खं ब्रह्मेत्यादिभिः अष्टमा-

ध्यायगतैश्च, "यो ह वै ज्येष्ठं श्रेष्ठं च वेद" त्यादिभिर्वाक्यैर्नानाविधान्युपासनान्युक्तानि। "स यः कामयेत महान् प्राप्नुया" मित्यादिना मन्थाख्यं कर्माभिहितम्। तथा पुत्रविशेषादिकामनायुक्तानां तत्कर्माण्यभिहितानि। एवमत्राप्यम्भस्य पार इत्यादिना ब्रह्मतत्त्वमभिहितम्॥

उपसंहारः—

ताण्डिनां तु पुरुषयज्ञयोः सामानाधिकरण्यं श्रुतमित्येको रूपभेदः। आत्मयजमानादिकं च सर्वत्र श्रुतं ताण्डिशाखायां नोपलभ्यते। त्रेधाविभक्तस्यायुषः सवनत्रयात्मकत्वं ताण्डिशाखायां श्रुतम् तैत्तिरीयके सायमादिकालत्रयस्येति महान् रूपभेदः। अतो मरणावभृथत्वाद्यल्पसाम्येऽपि बहूनां भेदाद्भिद एव विद्यायाः। अपि च न तैत्तिरीयाणामुपासनमिदम्, किं तर्हि ब्रह्मविद्या प्रशंसा, तस्यैवं विदुष इति ब्रह्मविद उपक्रमात्। तस्मान्न विद्यैक्यशङ्काया अप्यवकाशोऽस्ति। एतस्मिन्ननुवाके तत्त्वज्ञानिसेवापि सनिमित्ताऽभिहितेत्यशेषमितिमङ्गलम्।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥
इति नारायणीये चतुष्षष्टितमोऽनुवाकः॥

इति श्रीराजाधिराजराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवरबुक्कभूपालसाम्राज्यधुरंधरेण विरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यकं सम्पूर्णम्

प्रतिपाद्यविषयः—

याज्ञिक्युपनिषद्विवरणं क्रियते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च दृश्यते।

## No. (641) B 437 योगकुण्डल्युपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–8

प्रतिपुटं पङ्क्तयः—13
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—अतिशिथिला
समग्रोऽसमग्रो वा—समग्रः

40*

उपक्रमः—

मू-ओं सह नाववत्विति शान्तिः ।

पद्मज उवाच—अमावास्या च प्रतिपत्पौर्णमासी च शंकर ॥
अस्याः का वर्ण्यते संज्ञा एतदाख्याहि तत्वतः ।
प्रतिपद्दिनतोऽकाले अमावास्या तथैव च ॥
पौर्णमास्यां स्थिरीकुर्यात्स च पन्था हि नान्यथा ।
कामेन विषयाकाङ्क्षी विषयात्काममोहितः ॥
द्वावेव संत्यजेन्नित्यं निरञ्जनमुपाश्रयेत् ।
अपरं संत्यजेत्सर्वं यदीच्छेदात्मनो हितम् ॥
शक्तिमध्ये मनः कृत्वा मनश्शक्तेश्च मध्यगम् ।
मनसा मन आलोक्य न त्यजेत्परमं पदम् ॥
मन एव हि बन्धुश्च उत्पत्तिस्थितिकारणम् ।

भा-अखण्डब्रह्मसंयोग आत्मनो यत्र कथ्यते ।
सैषा व्याख्यास्यते योगकुण्डल्युपनिषत्परा ।
संज्ञा अर्थः ।

उपसंहारः—

भा—य एवं पूर्वोक्तरीत्या विततो व्याप्य सोऽहमिति ध्यायन्नास्ते स एव जीवन्मुक्तः कृतकृत्यवान् स्वदेहे कालसात्कृते सति अदेहमुक्तत्वं विशतीति स्पष्टमन्यत् । नन्वस्या उपनिषदोऽयं तृतीयोऽध्यायः । प्रथमद्वितीयौ कुतो न व्याख्यातौ, अत्रोच्यते—तयोर्ह्यध्याययोरुक्तार्था हि योगशिखायां योगचूडामण्यां योगतत्त्वेऽन्यासु चोपनिषत्सु बहुश उक्ताः । केवलहठयोगविषया मन्दाधिकार्युपयुक्ता स्पष्टार्थाश्च । अतः पिष्टपेषणादिवच्च तद्व्याख्यायामुपरतास्स्मः ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिपु योगकुण्डल्युपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः —

अस्मिन्ग्रन्थे मूलाधारादिषट्चक्राणि सम्यग्ज्ञात्वा मनश्च शक्तिमध्येऽचञ्चलं कृत्वा अखण्डब्रह्मणा सहात्मानं संयोज्य जीवन्मुक्तो भवतीति प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (642) B 483 योगचूडामण्युपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—7¾×6¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–23 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं आप्यायन्त्विति शान्तिः ।
योगचूडामणिं वक्ष्ये योगिनां हितकाम्यया ।
कैवल्यसिद्धिदं गूढं सेवितं योगवित्तमैः ॥
आसनं प्राणसंरोधः प्रत्याहारश्च धारणा ।
ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥
एकं सिद्धासनं प्रोक्तं द्वितीऽयं कमलासनम् ।
षट्चक्रं षोडशाधारं त्रिलक्ष्यं व्योमपञ्चकम् ॥
स्वदेहे यो न जानाति तस्य सिद्धिः कथं भवेत् ।
चतुर्दळं स्यादाधारं स्वाधिष्ठानं च षड्दळम् ॥
नाभौ दशदळं पद्मं हृत्पद्मं द्वादशारकम् ॥
विशुद्धौ षोडशदळं भ्रूमध्ये द्विदळं तथा ॥

भा—आसनादिषडङ्गानि प्रोच्यन्ते यत्र योगिनां ।
हिताय क्रियते व्याख्या योगचूडामणिश्रुतेः ॥
नन्वयं षडङ्गयोगश्च........

उपसंहारः—

भा—तर्ह्यासनात्तृतीयेन प्रत्याहारेणोपसंहृतस्य मनसो धारणायोगात् कुण्ठिताशेषवृत्तिमत्त्वात्तदुपरितनध्यानक्रियानुपपत्तिप्रसङ्ग इति चेत्सत्यमेवैतत्, अत एव खलु तत्तदङ्गमनुष्ठाय तत्तदनुष्ठानफलभूतामात्मविशुद्धिं उत्तरोत्तरातिशयेन प्राप्य पूर्वपूर्वाङ्गपरित्यागपूर्वकमेवोत्तरोत्तराङ्गमाश्रयेदित्यवोचाम । तस्मात्प्रत्याहारोपरितनामपि धारणां सम्यक्तदनुष्ठानपूर्वकं परित्यज्य ध्यानमथ तद्वत्समाधिं चाचरेदित्यवगन्तव्यम् ।

इत्यप्पय्यदीक्षिताचार्यकृतिषु योगचूडामण्युपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे आसनादि योगाङ्गषट्कं सम्यङ्निरूप्यते ।

वक्तव्यविशेषः—

अस्मिन् कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (643) B 489 योगतत्त्वोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता— अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—52-76 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं सह नाववत्विति शान्तिः ।

योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया ।
यच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते ॥
विष्णुर्नाम महायोगी महाभूतो महातपाः ।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः ॥
तमाराध्य जगन्नाथं प्रणिपत्य पितामहः ।
पप्रच्छ योगतत्त्वं मे ब्रूहि चाष्टाङ्गसंयुतम् ॥
तमुवाच हृषीकेशो वक्ष्यामि श्रुणु तत्त्वतः ।
सर्वे जीवास्सुखैर्दुःखैर्मायाजालेन वेष्टिताः ॥
तेषां मुक्तिकरं मार्गं मायाजालनिकृन्तनम् ।
जन्ममृत्युजराव्याधिनाशनं मृत्युतारकम् ॥

भा—परस्परविरुद्धे ते प्रोच्येते सिद्धिमुक्त्यपि ।
योगतत्त्वोपनिषदं व्याख्यास्ये तामिमां शुभां ॥

अत्र योगशिखोपनिषत्प्रोक्ताश्श्लोका बहवो भवन्ति ।

उपसंहारः—

भा-आत्ममात्रेण निर्विशेषपरमात्ममात्रेण यदवशिष्टं तत्कैवल्यमेव फलं निश्चितम् । निर्विकल्पसमाधिनिष्ठेनापि प्राणसंयमनस्य कर्तव्यतायाः

पूर्वमभिहितत्वान्नास्य केवलहठयोगित्वं शंक्यम् । यद्यात्ममात्रेणावशिष्ट-सित्यनुक्तं तदा हठयोग्येव प्रकृत इति वक्तुं युक्तम् । तथोक्तत्वात्तु ज्ञान-योगी जीवन्मुक्त एव प्रकृत इति स्थितम् ॥

इत्यप्पयदीक्षिताचार्यकृतिषु योगतत्त्वोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे षडङ्गयोगः, तत्सहितं ज्ञानं तेन मोक्षश्च भवतीति प्रतिपाद्यते ॥

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (644) B 242/3 योगदर्पणम् ( द्राविडटीकासहितम् )

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—15 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्— $8\frac{1}{4} \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थ-तमिळुलिपी | स्थितिः—समीचीना |
| पत्राणि—1–36 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

இவ்வுலகத்தில் ஸம்ஸாரத்துக்கடலில் முழ்கிக்கொண்டிருக்கின்ற பிராணிகளில் சிலரதிலிருந்து கரையேறவேணுமென்றிச்சையுடன் வெகுநூல்களைப்பார்வையிட்டு வருவதில் கருமங்களால் முக்திகிடைக்குமென்று நம்பியிருக்கிறவர் சிலரும், பக்தியால் தானது கிடைக்குமென்று நம்பியிருக்கிறவர் சிலரும், ஞானத்தால் தானது கிடைக்குமென்று நம்பியிருக்கிறவர் சிலரும், யோகத்தால் தானது கிடைக்குமென்று நம்பியிருக்கிறவர் சிலரும், சிலருமாக காணுகிறபடியால் அத்தீர்மானம் வருகிறதற்காக ஸம்ஸ்கிருத பாஷையில் வெகுபிறபந்தங்களை நாம் செய்திருந்த போதிலும் அவைகளின் பொருள்களை யறியவல்லமையற்ற முமுக்ஷுக்களுக்

குவேண்டி நூற்றெட்டுபநிஷத்துகளின் ஸாராம்சங்களான யோக தத்வோபநிஷத், யோகசிகையுபநிஷத், யோக சூடாமணியுபநிஷத், யோககுண்டலியுபநிஷத், தரிசனோபநிஷத், மண்டலப்ராம்ஹ ணோபநிஷத் தாரஸாரோபநிஷத் முதலிய உபநிஷத்துகளின் முக்கிய கருத்துகளை யெடுத்துச் சுருக்கமாக யோகதர்பணமென் றொரு பிறகரணம் நம்மால் செய்யப்பட்டிருப்பதை யுலக வுபகா ரார்த்தமாக தமிழில் வியாக்யானிக்கிறோம்.

अखण्डसच्चिदानन्दलक्षणं तमसः परम् ।
निष्कळं निष्क्रियं शान्तं मङ्गळं तत्स्मराम्यहम् ॥

उपसंहारः—

निदिध्यासनयोगेन जीवन्मुक्तिपदं व्रजन् ।
पश्चात्समाधियोगेन वैदेहीमुक्तिमाप्नुयात् ॥

ஞானயோகமென்றும் தியானயோகமென்றும் சொல்லப்படுகிற நிதித்யாஸனயோகத்தால் ஜீவன்முக்திபதத்தையடைந்தவன் பின் ஸமாதியோகத்தால் விதேகமுக்தியடைவான்.

இப்படியப்பயதீக்ஷிதரால் செய்யப்பட்ட யோகக்கன்றுடிப் பிரகரணம் முற்றிற்று.

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जीवस्वरूपं विश्वादिभेदाः पञ्चकोशाः ससाधने जीवन्मुक्तिविदेहमुक्ती च प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (645) B 1021 योगदर्पणम् ( द्राविडटीकासहितम् )

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—9 |
| पत्रविशेषः —कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—$8\frac{1}{2}\times6\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—1934 |
| लिपिः —देवनागरीलिपिः | स्थितिः —समीचीना |
| पत्राणि—1-40 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 242/3 कोशवत्।

उपसंहारः—

B 242/3 कोशवत्।

प्रतिपाद्यविषयः—

B 242/3 कोशवत्।

वक्तव्यविशेषः—

B 242/3 कोशवत्।

## No. (646) B 490 योगशिखोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—$8 \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–56 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं सह नाववत्विति शान्तिः।
सर्वे जीवास्सुखैर्दुःखैर्मायाजालेन वेष्टिताः।
तेषां मुक्तिः कथं देव कृपया वद शंकर॥
सर्वसिद्धिकरं मार्गं मायाजालनिकृन्तनम्।
जन्ममृत्युजराव्याधिनाशनं सुखदं वद॥
इति हिरण्यगर्भः पप्रच्छ स होवाच महेश्वरः।
नानामार्गैस्तु दुष्प्रापं कैवल्यं परमं पदम्॥
सिद्धिमार्गेण लभते नान्यथा पद्मसंभव।
पतिताश्शास्त्रजालेषु प्रज्ञया तेन मोहिताः॥
स्वात्मप्रकाशरूपं तत्किं शास्त्रेण प्रकाश्यते।
निष्कलं निर्मलं शान्तं सर्वातीतं निरामयम्॥

भा—सिद्धिमुक्तिप्रदौ मार्गौ प्रदर्श्येते यथा स्फुटौ।
व्याख्यास्ये तामिमां योगशिखोपनिषदं परम् ॥
इहादौ सर्वेषां देवानां कथं मुक्तिरिति..........

उपसंहारः—

भा—एवं कामनाशमात्रेणाखण्डचिदानन्दनिष्ठाया इहैव साध्यत्वाज्जीवन्मुक्त्यविरोधः। केचिद्धि घटस्थानीयं स्थूलदेहं मत्वा तन्नाश एव मोक्षसंभवाज्जीवन्मुक्तिरौपचारिकीति मन्यन्ते, तेषां सद्योमुक्त्यर्थकोऽयमुपदेशः। एवं सर्वार्थसारोपदेशैस्संसारार्णवतारकं कर्णधारवदवस्थितं गुरुं प्राप्य तद्वाक्यं प्लववद्दृढं विश्वस्याभ्यासवासनाशक्त्याऽहं ब्रह्मास्मीत्यनुस्यूतशब्दानुविद्धसमाधियोगाभ्यासवासनाबलेन संसारसागरं तरन्तीति सर्वं समञ्जसतरमवगन्तव्यम्। षष्ठोऽध्यायः।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु योगशिखोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे योगाङ्गानि नानायोगसिद्धयः मोक्षसाधनं तत्त्वज्ञानं च सम्यङ्निरूप्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (647) 284 रत्नत्रयपरीक्षा

| | |
|---|---|
| ग्रन्थकर्ता— अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—5 |
| पत्रविशेषः— ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—68 |
| प्रमाणम्—14×1½ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-35 | समग्रोऽसमग्रो वा— समग्रः |

उपक्रमः—

नित्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्मचैतन्यमेकं
धर्मा धर्मीति भेदद्वयमयति पृथग्भूय मायावशेन।

धर्मस्तत्रानुभूतिः सकलविषयिणी सर्वकार्यानुकूला
शक्तिश्चेच्छादिरूपा भवति गुणगणाश्चाश्रयस्यैक एव ॥

नित्यं दोषगन्धेनापि रहितं निरतिशयसुखात्मकं अद्वितीय्यं ब्रह्मचैतन्यं मायया कल्पितभेदं सत् धर्मिधर्मविभागं प्राप्नोति जीवब्रह्मविभागवदयं धर्मिधर्मविभागोऽपि। तत्र धर्मस्वरूपमात्रप्रकाशरूपस्य धर्मिणः सकलप्रपञ्चविषयानुभूतिर्भवति। तदुक्तं कूर्मपुराणे शिवेनैव—

तया सह गतो देव्या केवलो निष्कलः परः।
पश्याम्यशेषमेवेदं यस्तद्वेद स मुच्यते ॥ इति ॥

स एव धर्मस्तस्य सकलकार्यानुकूला शक्तिः सर्वोऽपि गुणगणश्च भवति।

उपसंहारः—

अत्र विष्णुलोको गोलोकान्तर्गत एव विवक्षितः न तु परशिवलोकान्तर्गतः। परशिवलोकं प्राप्तानां पुनः संसाराभावस्त्वनावृत्त्यधिकरणे—

दिनकृत्कोटिसंकाशं स्थानमाद्यमुमापतेः।
सर्वकामसमायुक्तं विशुद्धं नित्यमक्षयम् ॥

संप्राप्य तत्पदं दिव्यं समस्तक्लेशवर्जिताः।
सर्वज्ञाः सर्वदा शुद्धाः परिपूर्णा भवन्ति च ॥

विशुद्धकार्यकरणाः परमैश्वर्यसंयुताः।
सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः ॥

ये संप्राप्ताः परं स्थानं ज्ञानयोगरता जनाः।
न तेषां पुनरावृत्तिर्घोरसंसारमण्डले ॥

इत्यादिवचनैर्व्यवस्थापित इति सर्वं समञ्जसमिति ॥

आमथ्य भाष्यदुग्धाब्धिं आप्तं रत्नत्रयं ततः।
शंभुर्गौरी हरिश्चेति तच्च सम्यक्परीक्षितम् ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजेयाजिश्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ रत्नत्रयपरीक्षा

समाप्तेयं रत्नत्रयपरीक्षा

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे नित्यशुद्धं ब्रह्मैव मायावशेन धर्मधर्मिभावं प्राप्य (धर्मी शिवः विष्णुमाये धर्मौ) धर्मद्वारा जगदुपादानत्वं तत्प्रकाशकत्वेन सर्वज्ञत्वादिकं च भजत इति शिवशक्तिविष्णुरूपरत्नत्रयं सम्यक्परीक्ष्यते।

वक्तव्यविशेष:—

अस्मिन् कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च दृश्यते॥

## No. (648) C 659 रत्नप्रभा

ग्रन्थकर्ता—गोविन्दानन्दः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—10×4½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-94, 1-59, 1-19, 1-102, 1-77, 1-24

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—44
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यमिह कारुणिकं शरणं गतोऽप्यरिसहोदर आप महत्पदम्।
तमहमाशु हरिं परमाश्रये जनकजाङ्कमनन्तसुखाकृतिम्॥

इह खलु स्वाध्यायोऽध्येतव्य इति नित्याध्ययनविधिना अधीतसाङ्गस्वाध्याये तद्विजिज्ञासस्व सोऽन्वेष्टव्यः स विजिज्ञासितव्यः श्रोतव्य इति श्रवणविधिरुपलभ्यते। तस्यार्थः—अमृतत्वकामेनाद्वैतात्मविचार एव वेदान्तवाक्यैः कर्तव्य इति। तेन काम्येन नियमविधिना अर्थाद्भिन्नात्मशास्त्रप्रवृत्तिः वैदिकानां पुराणादिप्राधान्यं वा निरस्यत इति वस्तुगतिः।

उपसंहारः—

साधनसम्पत्तिश्च दर्शिता। तस्माद्विवेकादिसाधनसम्पन्नस्य श्रवणाद्यावृत्तिनिरस्तसमस्तप्रतिबन्धस्याखण्डात्मसंबोधात् समूलबन्धध्वंसे सत्याविर्भूतनिष्कलङ्कानन्तस्वप्रकाशचिदानन्दात्मनाऽवस्थानमिति सिद्धम्।

नानाविधग्रन्थजातं वीक्ष्य सम्यग्यथामति ।
शारीरकस्य भाष्यस्य कृता व्याख्या सतां मुदे ॥
अन्तर्यामी जगत्साक्षी सर्वकर्ता रघूद्वहः ।
अतोऽत्र दोषोऽशङ्क्यः स्यादेष ह्येवेति शासनात् ॥
वक्षस्यक्ष्णोश्च पार्श्वे करतलयुगले कौस्तुभाभां दयां च
सीतां कोदण्डदीक्षामभयवरयुतां वीक्ष्य रामाङ्गसङ्गः ।
स्वस्याः क स्यादितीयं हृदि कृतमनना भाष्यरत्नप्रभाख्या
स्वात्मानन्दैकलुब्धा रघुवरचरणाम्भोजयुग्मं प्रपन्ना ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवतः कृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः

प्रतिपाद्यविषयः—

श्रीमच्छंकराचार्यकृतशारीरकभाष्यविवरणरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च ।

## No. (649) 991 रत्नप्रभा

| | |
|---|---|
| ग्रन्थकर्ता—गोविन्दानन्दः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—74 |
| प्रमाणम्—18×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—41-170 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

पञ्चमं निरस्यति—अत इति । केमचिद्वादिना प्रमाणेन वेत्यर्थः । अगम्यत्वान्न मानान्तरविरोध इति भावः । साक्षी कर्माङ्गं चेतनत्वात्, कर्तृवदित्यत्राह—विधीति । अज्ञातसाक्षिणोऽनुपयोगाज्ज्ञातस्य व्याघातकत्वान्न कर्मशेषत्वमित्यर्थः । साक्षिणस्सर्वशेषित्वादहेयानुपादेयत्वाच्च न शेषत्वमित्याह—आत्मत्वादिति । अनित्यत्वेनात्मनो

हेयत्वमित्याशंक्याह—सर्वं हीति। परिणामित्वेन हेयतां निराचष्टे—विक्रियेति। उपादेयत्वं निराचष्टे—अत एवेति। निर्विकारत्वादित्यर्थः। उपादेयत्वं हि साध्यस्य न त्वात्मन इत्यर्थः॥

उपसंहारः—

रूपस्योत्पत्तिशिष्टत्वं विशेषः पञ्चाग्नीन्वेदेत्याद्युपासनोत्पत्तिविधिस्थपञ्चाग्न्यादिरूपभेदादुपासनाभेदः स्यादामिक्षावाजिनरूपभेदात्कर्मभेदवदित्यधिकाशङ्कानिरासार्थत्वान्न पौनरुक्त्यमस्याधिकरणस्येति मत्वा शङ्कां व्याचष्टे—स्यादित्यादिना। अस्य पृथक्शास्त्रत्वात् कार्त्स्न्यायानां मानसविद्यासु विना सूत्रं दुर्योगत्वाच्च पुनरुक्तिगन्धोऽपि नास्तीति मन्तव्यम्। ननु तस्य मृतस्य दाहार्थमग्निरन्त्येष्टिगतः षष्ठो यः प्रसिद्धवद्वाजिभिरुक्तः स छान्दोग्ये उपसंहार्य इति न रूपभेदस्तत्राह—न चात्रेति। अस्तु प्रजननगुणवतो रेतसो वाजिनामावापश्छन्दोगानां च.......।

प्रतिपाद्यविषयः—

C 659 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे समन्वयाधिकरणे "अतः स न केनचित् प्रत्याख्यातुं शक्य" इत्यादिभाष्यव्याख्यामारभ्य 3-3-2 भाष्यव्याख्यापर्यन्तः ग्रन्थभागोऽस्ति।

## No. (650) 1729 रत्नप्रभा

| | |
|---|---|
| ग्रन्थकर्ता—गोविन्दानन्दः | प्रतिपुटं पङ्क्तयः—19 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—76 |
| प्रमाणम्—18×1¾ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—अतिशिथिला |
| पत्राणि—1-172 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 659. कोशवत्।

उपसंहारः—

पूर्वापरविरोधादसाङ्गत्यमिति सूत्रार्थमुक्त्वार्थान्तरमाह - वेदेति । एकस्यापि तन्त्राक्षरस्याध्येता चतुर्वेदिभ्योऽधिक इति निन्दादिपदार्थः । तस्मान्मिथो विरुद्धाभिः पौरुषेयकल्पनाभिर्नापौरुषेयवेदान्तसमन्वयविरोध इति सिद्धम् ।

इति द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः

प्रतिपाद्यविषय:—

C 659 कोशवत् ।

वक्तव्यविशेष:—

अस्मिन्कोशे आदितो द्वितीयाध्याये द्वितीयपादसमाप्तिपर्यन्तो ग्रन्थभागो विद्यते ॥

## No. (651) 2215 रत्नप्रभा (भाष्यटीका)

| | |
|---|---|
| ग्रन्थकर्ता—गोविन्दानन्दः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः —तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—80 |
| प्रमाणम्—17×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-121 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 659 कोशवत् ।

उपसंहारः—

ननु परमाण्वपेक्षया योऽयं प्राची दक्षिणेत्यादिदिग्भेदव्यवहारः तदवधित्वेन ये अवयवास्त्वयोच्यन्ते त एव मम परमाणवः । तेऽपि सावयवाश्चेत्तदवयवा एवेति । एवं यतः परं न विभागः स एव निरवयवः परमाणुरिति शङ्कते—यांस्त्वमिति । परिहरति—न स्थूलेति । अयमर्थः—यत्सर्वात्मना विभागायोग्यं वस्तु........।

प्रतिपाद्यविषयः—

C 659 कोशवत् ।

वक्तव्यविशेष:—

अस्मिन्कोशे आदितो 2-2-17 पर्यन्तो भागो विद्यते।

## No. (652) 2000 रत्नप्रभा

ग्रन्थकर्ता - गोविन्दानन्दः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$17\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-126

प्रतिपुटं पङ्क्तयः—0
प्रतिपङ्क्त्यक्षराणि—62
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 659 कोशवत्।

उपसंहारः—

अस्यातिदेशत्वान्न पृथक्सङ्गत्याद्यपेक्षा। न किंचनासच्छब्दयोः प्रत्यक्षायोग्यवस्तुपरत्वादनुपदस्य सूक्ष्मा......दशब्दत्वं तेषां वादानां प्रधानवादश्रौतत्वं ब्रह्मकारणश्रुतिबाधितत्वं च, तस्माद्ब्रह्मैव परमकारणम्, तस्मिन्नेव सर्वेषां वेदान्तानां समन्वय इति सिद्धम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविंदभगवत्पूज्यपादशिष्यश्रीमद्भगवत्पादकृतौ शारीरकमीमांसाव्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्यायस्य चतुर्थः पादः अध्यायश्च समाप्तः

प्रतिपाद्यविषयः—

C 659 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायमात्रं विद्यते।

## No. (653) C 653 रत्नप्रभा

ग्रन्थकर्ता—गोविन्दानन्दः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12 \times 4\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-92

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—44
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 659 कोशवत्।

उपसंहारः—

अभिमुख्येनाहं ब्रह्मेति विमीयते इत्यभिविमानः प्रत्यगात्मा। अभिगतश्चासौ विमानश्च सर्वस्वरूपत्वे सत्यानन्त्यात् मानमत्र परिमाणम्। अभिविमीते निर्मिमीते। तस्माद्वैश्वानरवाक्यं उपास्ये ब्रह्मणि समन्वितमिति सिद्धम्।

इति श्रीमच्छारीरकव्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्यायस्य द्वितीयः पादः

प्रतिपाद्यविषयः—

C 659 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः पादद्वयं विद्यते।

## No. (654) C 650 रत्नप्रभा (समूला)

ग्रन्थकर्ता—गोविन्दानन्दः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—11¼×4 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–75

प्रतिपुटं पङ्क्तयः—26
प्रतिपङ्क्त्यक्षराणि—58
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 659 कोशवत्।

उपसंहारः—

सर्वश्रुतेश्चाकाशातिरिक्तविषयत्वेन संकोचः स्यादित्याह—सत्यं दर्शितमिति। ब्रह्मणस्तु सर्वात्मकत्वात्तस्मादेव सर्वमिति श्रुतिर्युक्तेति भावः। तथा सर्वलयाधारत्वं निरतिशयमहत्त्वं स्थितावपि परमाश्रयत्वमित्येतानि स्पष्टानि ब्रह्मलिङ्गानीत्याह—तथाकाशमित्यादिना। रातेर्धनस्य दा दातुः रातिरिति पाठे बन्धुरित्यर्थः॥

प्रतिपाद्यविषयः—

C 659 कोशवत् ।

वक्तव्यविशेषः —

अस्मिन्कोशे आकाशाधिकरणभाष्ये पूर्वपक्षव्याख्यानपर्यन्तो भागो विद्यते। 71–73 पत्राणां लोपः ।

## No. (655) 990/2 रत्नप्रभा

| | |
|---|---|
| ग्रन्थकर्ता– गोविन्दानन्दः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—96 |
| प्रमाणम्—$17\frac{3}{4}\times1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः— आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-77 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

C 659 कोशवत् ।

उपसंहारः—

अत्रोच्यत इति। एतत्कार्यं ब्रह्मसूत्रात्मकं नामरूपं स्थूलरूपं ततोऽन्नं व्रीह्यादीत्यर्थः। यदुक्तं पञ्चम्यन्ताक्षरश्रुत्या भूतयोनेः प्रत्यभिज्ञानादचेतनत्वमिति तत्राह—अक्षरात्परत इति। नायमक्षरशब्दो भूतयोनिं परामृशति परविद्याधिगम्यत्वेनोक्तस्याक्षरस्य भूतयोनेरक्षरं पुरुषं वेदेति अक्षरश्रुत्या वेद्यत्वलिङ्गवत्या पूर्व... ...।

प्रतिपाद्यविषयः—

C 659 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायद्वितीयपादे अदृश्यत्वाधिकरणपूर्वपक्षपर्यन्तो ग्रन्थो विद्यते ॥

## No. (656) C 1498 रत्नप्रभाव्याख्या

ग्रन्थकर्ता—पूर्णप्रकाशानन्दः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—14½×8 अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-32

प्रतिपुटं पङ्क्तयः—30
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ओं यमिहेति। इह व्यवहारभूमावित्यर्थः। अपिशब्दस्य व्युत्क्रमेणान्वयः। अरिसहोदरो विभीषणः। मोक्षलङ्कासाम्राज्यादिरूपं महत्पदमाप प्राप्तोऽभूदिति क्रियाकारकयोजना। अनन्तसुखाकृतिमित्यनेन स्वरूपलक्षणम्। इतरेण तु तटस्थलक्षणं चोक्तमिति भावः ॥ १ ॥ श्रीगौर्येत्यादितृतीयात्रयं करणार्थकम्। करणं नामासाधारणकारणम्। तथा च करणार्थे तृतीयेत्युक्त्वा अर्थप्रदानादिकं प्रति श्री गौर्यादिः कारणमीश्वरस्तु साधारणकारणमिति ज्ञापितम्। न चेतरापेक्षायां सत्यामीश्वरस्य स्वातन्त्र्यहानिः स्यादिति वाच्यम्; पाकादेः काष्ठाद्यपेक्षासत्त्वे देवदत्तस्य तत्कर्तृत्वेन कारकाप्रेर्यत्वरूपस्वातन्त्र्यदर्शनात्। अतः स्वेष्टदेवतायाः न स्वातन्त्र्यहानिरिति भावः ॥ २ ॥

उपसंहारः—

अद्वितीयनिरतिशयानन्दचैतन्यैकताज्ञाने सर्वज्ञसर्वैश्वरसर्वशक्तिनिरवयवस्वप्रकाशप्रत्यग्भूतब्रह्मात्मन्यपरोक्षानुभवात् प्राक् भेदात्मप्रत्ययवत् सर्वो व्यवहारो यथादर्शनमुपपद्यते। अस्मिंश्चापरोक्षेऽवभासमाने प्रमात्रादिबाधात् सर्वो व्यवहारो निवर्तत इति श्लोकार्थः। स्वाभिमतेष्टदेवतानामोच्चारणपूर्वकं फलितं समन्वयार्थमाह—रामनाम्नेति ॥

नमस्तेभ्यो गुरुभ्यो यैरयमर्थः प्रबोधितः।
परनिष्ठैः परात्मज्ञैः परसंतुष्टमानसैः ॥
अभिव्यक्ता हि या भृङ्गसेवाद्वारा विशेषतः।
प्राप्ताभूत्कृष्णपादाब्जे प्रसिद्धानन्दवाञ्छया ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतानन्दपूज्यपादशिष्यपूर्णप्रकाशानन्दसरस्वतीविरचिता चतुस्सूत्रीभाष्यरत्नप्रभाव्याख्या अभिव्यक्ताख्या समाप्ता

नवमवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

भाष्यरत्नप्रभाव्याख्यानरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च दृश्यते ॥

## No. (657) 3599 रत्नप्रभाव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—अखण्डानन्दः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—78 |
| प्रमाणम्—$18\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—100 (विलम्बिवत्सरे) |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-59 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ब्रह्मविष्णुमहेशाख्यमूर्तिभिर्यो गणाधिपः ।
जगत्सर्गादि तनुते तं वन्दे विघ्नशान्तये ॥ १ ॥
यं प्रपन्ना जगन्नाथं लेभे वस्त्रपरंपराम् ।
कृष्णा पार्थस्य महिषी तं प्रपद्ये हरिं सदा ॥ २ ॥
स्वरूपानन्दसाम्राज्ये विहरन्तं कृपानिधिम् ।
प्रणवस्य प्रवक्तारं सर्वेश्वरमहं भजे ॥ ३ ॥
यो मे गुरुर्गुरुः साक्षात् जगतामप्यशेषतः ।
माधवस्यापरा मूर्तिस्तं भजे स्वप्रभं सदा ॥ ४ ॥
गुरोरपि गरीयान्मे यः कलाभिरलङ्कृतः ।
अद्वैतानन्दपूर्णाख्यस्तं वन्दे शमवारिधिम् ॥ ५ ॥
ओतं प्रोतमिदं सर्वं यस्मिन्सच्चित्सुखात्मके ।
पर्यवस्यन्ति वेदान्ता यत्र चाहं तदक्षरम् ॥ ६ ॥
जिज्ञासासूत्रमारभ्य प्रागानन्दमयोक्तितः ।
भाष्यरत्नप्रभानाम्नीं व्याकुर्वे भक्तितः कृतिम् ॥ ७ ॥
श्रीमत्स्वयंप्रकाशाख्यगुरोर्लब्धात्मवेदनं ।
सुबोधयितुमारब्धा व्याख्येयं नान्यहेतुतः ॥ ८ ॥

प्रारीप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यादिसिध्यर्थं मङ्गळमाचरति—यमिह कारुणिकमिति। शास्त्रप्रतिपाद्यं विषयं शास्त्रप्रयोजनं च मुखतो निर्दिशन् अधिकार्यादिकमप्यर्थात्सूचयति—यद्ज्ञानेति।

उपसंहारः—

केषुचिद्वेदान्तेषु अपवादं दर्शयितुं उपास्यब्रह्मविचारेऽस्मिन्नध्याये प्रवर्तते। तथा च अपवादवाक्यासङ्गत्या अन्तस्तद्धर्माद्यधिकरणप्रवृत्तिरिति नासङ्गतिः। सगुणवाक्यविचारापवादसङ्गत्या च आनन्दमयाद्यधिकरणेषु निर्गुणविचारप्रवृत्तिरिति निर्गुणविचारस्यापि करिष्यमाणस्यास्मिन्नध्याये नासङ्गतिरिति सर्वमनवद्यम्॥

भाष्यरत्नप्रभाभागो व्याख्यातो यो विवक्षितः।
श्रीकृष्णचरणद्वन्द्वे भूषणायास्त्वियं कृतिः॥

प्रपन्नाभयदातृत्वं व्रतं यस्य हि तं वयम्।
प्रपन्ना राममनिशं साम्बद्धत्पद्मभूषणम्॥

येनानन्तेन पौलस्त्यो रक्षितो ब्रह्मशक्तितः।
द्वितीयमन्तरात्मानं रामचन्द्रस्य तं भजे॥

राक्षसानां वधे यत्नं (त्तं) रामं रघुकुलोत्तमम्।
रक्षणे दीक्षितं साधोरादरेण भजे सदा॥

अहं ब्रह्मेति बुद्धिर्मे यत्प्रसादैकसंभवः।
तस्याचार्यवरिष्ठस्य चरणाभ्यां नमो नमः॥

यं प्रपन्ना जगन्नाथं लेभे वस्त्रपरंपराम्।
कृष्णा पार्थस्य महिषी तं प्रपद्ये हरिं सदा॥

प्रतिपाद्यविषयः—

भाष्यरत्नप्रभाया व्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अयं ग्रन्थः अमुद्रितः, अस्मिन्कोशे पञ्चाधिकरणानि विद्यन्ते (तावतैव ग्रन्थः समाप्तः)।

## No. (658) B 491 रहस्योपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—33–56

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू–सह नाववत्विति शान्तिः ।

अथातो रहस्योपनिषदं व्याख्यास्यामः । देवर्षयो ब्रह्माणं संपूज्य प्रणिपत्य पप्रच्छुः । भगवन्नस्माकं रहस्योपनिषदं ब्रूहीति । सोऽब्रवीत् ।

पुरा व्यासो महातेजाः सर्ववेदतपोनिधिः ।
प्रणिपत्य शिवं साम्बं कृताञ्जलिरुवाच ह ॥
श्री वेदव्यास उवाच ।
देवदेव महाप्राज्यपाशच्छेददृढव्रत ।
शुकस्य मम पुत्रस्य वेदसंस्कारकर्मणि ॥
ब्रह्मोपदेशकालोऽयमिदानीं समुपस्थितः ।
ब्रह्मोपदेशः कर्तव्यो भवताद्य जगद्गुरो ॥
ईश्वर उवाच ।
मयोपदिष्टे कैवल्ये साक्षाद्ब्रह्मणि शाश्वते ।
विहाय पुत्रो निर्वेदात् प्रकाशं यास्यति स्वयम् ॥

भा–सर्ववेदान्तसारांशमहावाक्यार्थरूपकम् ।
रहस्योपनिषद्भाष्यमधीत्येहैवमुच्यते ॥

अथातो रहस्योपनिषदं व्याख्यास्यामः ..... ........

उपसंहारः—

भा—पुत्रविश्लेषकातरस्यापि व्यासस्य पुत्रविषयकब्रह्मनिष्ठातिशयनिमित्तश्रवणेन पुत्रसाहित्येन च परानन्दावाप्तिमाह—तदिति । सकलाकारं तत्प्रतिवचः श्रुत्वा पुत्रेण सहितोऽपि व्यासः तदेषणां विहाय परब्रह्म-

नन्दमुपेयिवान् प्राप्तवानिति। इदानीमेतद्रहस्योपनिषदध्येतुः कैवल्यं फलमभिधायोपनिषदमुपसंहरति—य इति। गुरूपदेशद्वारेण य इमां रहस्योपनिषदमधीते स साक्षादपरोक्षतः कैवल्यमश्नुते प्राप्नोति। पुनरुक्तिरुपनिषत्परिसमाप्तिद्योतनार्था।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ रहस्योपनिषद्भाष्यं समाप्तम्।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ऋष्यादिषडङ्गन्यासोपदेशपूर्वकं चतुर्णां महावाक्यानां अर्थः सम्यङ्निरूप्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (659) B 895/3 राजयोगभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8 \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-51

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—आनन्दवत्सरे
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

एवं हठयोगलक्षणं विस्तरेण निशम्य प्राकृतः सद्गुरुमेवमवादीत् राजराजयोगं वद कृपयेति। स तु विनयसद्वचनं गुरुभक्ताग्रगण्यं शिष्यं शृणु सावधानेनेत्यादरेणेदमाह—राजयोगः। राजोपयुक्तो योगस्तथोच्यते, योगानां राजेति वा राजयोगः। पूर्वोक्तयोगाः देहप्रयासकराः अयं तु निरायासेन मोक्षरूपपुरुषार्थप्रदः। हठवदस्याष्टाङ्गानि सन्ति किं तु तदङ्गत्वविस्मृतं हठे भवन्ति सूक्ष्माङ्गत्वं संक्षेपादस्य वक्ष्यते। शीतोष्णाहारनिद्राविजयः सर्वदा शान्तिर्निश्चलत्वम्। विषयेन्द्रियनिग्रहाश्चैते नियमाः कथिताः।

उपसंहारः —

तस्मात्संसारान्निर्विण्णः परमयोगं ब्रह्ममार्गमवलम्ब्य मूलाधारस्थ-कुण्डलिनीसमुत्थितवायुमिडापिङ्गलासंचारकेवलमुत्क्रमेण सुषुम्नाबिलं प्रापय्य तद्द्वयघटितत्रैगुल्यतन्मार्गे ब्रह्मविष्णुरुद्रग्रन्थिभेदपुरःसरमाज्ञा-विजृम्भमाणमग्निसूर्यतेजःकूटरूपपापास्फोटनदळदशायमानतेजो भूत्वा तत्समीपविश्वव्योमव्याप्तपरिपूर्णचन्द्रमण्डलनिष्ठसान्द्रामृतनिष्यन्दबिन्दु-सन्दोहपानपरितृप्तः सदानन्दरूपनिश्चयः प्राप्य निःसंशयतत्त्वाकाशो भूत्वा सदानन्दावधूतकृपालेशान्मुक्तोऽस्मीति भावितव्यः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यसद्गुरुविरचितं
विजृम्भितयोगसूत्रभाष्यं संपूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे यमनियमाद्यष्टाङ्गानि निरूप्य, योगशब्दार्थनिर्वचनपुरःसरं तारकामनस्कभेदभिन्नो राजयोगः सम्यङ्निरूप्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च दृश्यते ॥

## No. (660) A 335 रामकाशिका (श्रीरामपूर्वतापिनीव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता– आनन्दवनः | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः – कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—28 |
| प्रमाणम्—$12\frac{3}{4} \times 7\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–37 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सत्यं सत्यतया हि यस्य निखिलं रज्जौ यथा कुण्डली
यस्यानन्दतया प्रपञ्चरचना सानन्दमुद्भ्राजते ।
यच्चिद्रूपतया चिदात्मकमिवाभाति प्रपञ्चातिगं
सत्यानन्दचिदात्मकं स्तुतिवचोगीतं भजे राघवम् ॥

एकेनैव करेण शिष्यशिरसि व्यापारितेन क्षणा-
द्विच्छेदमतुच्छमस्यति तमःसङ्घातमाभ्यन्तरम् ।
यस्यैवास्य गुरोरपूर्वदिवसाधीशस्य पादाम्बुज-
द्वन्द्वाधिश्रयणीः परागकणिका भक्त्या नमामस्त्विमाः ॥

आसीद्वासिष्ठवंश्यो नृहरिरिति पुरा केशवाख्यस्य सूनु-
स्तस्मात्कृष्णाह्वयोऽभूत् धरणिसुरवरः पत्तने कुण्डिनाख्ये ।
तस्मात्सूनुर्गुणाब्धिः समजनि कुशलो वेङ्कमाम्बाप्रसूनु-
रानन्दाद्यः स रामोपनिषदि विदधे साधु टीकां नवाख्याम् ॥

श्रीरामोपनिषद्वृत्तिं विधास्ये रामकाशिकाम् ।
रामभक्त्या प्रयुक्तोऽहं रामावाप्त्यैकदर्शनाम् ॥

इह खलु सुखदुःखलाभलोभयोरन्यतरस्य पुरुषार्थत्वावगमात् केवल-दुःखजालमयापारसंसारपारावारपर्यटनपरिश्रान्तमनसां सुमनसामुभय-विधस्यापि पुरुषार्थत्वानुपलम्भात्—

उपसंहारः —

अन्तर्दधे । अनवच्छिन्नानन्दस्वप्रकाशज्ञानात्मके स्वरूपेऽवस्थितः तथा ये तद्भक्तास्तेऽपि । लब्धज्ञानाश्च । परमेश्वरोपासनप्रभाव-प्राप्तान्कामानभीष्टान्भुक्त्वा परमं परं यान्ति । श्रीरामोपासनप्रतिपादकानां चिन्मय इत्यादीनामेतदन्तानामृचां पाठफलमाह—इमा इति । वीप्सा पञ्चमोपनिषत्समाप्तिद्योतनार्था । इतिशब्दो ग्रन्थसमाप्तिद्योतनार्थः ॥

विश्वनाथनगरीव काशिका पावनी नयति रामकाशिका ।
वेदशीर्षवचनोपपादितं वस्तु हस्तफलवद्विवृण्वती ॥

श्रीरामकाशिकाकल्पलतिकान्वेषितोऽन्वहम् ।
वर्धिता फलदा सम्यक्कृणमानन्दकाननम् ॥

वृष्ट्या मुक्तहरान् हरो रनमितान्मुह्यन्नहं कोचिकां
कुर्वन्नण्डमिवाङ्कगां वहति यो यस्मिंस्थितोऽहर्निशम् ।
तस्मिन्काशिपुरे पुरारिनिलयस्वर्गङ्गयालङ्कृते
टीकानन्दवनैर्वरा विरचिता रामाटिका काशिका ॥

इति श्रीरामचन्द्रचरणानुगृहीतपरमहंसपरिव्राजकाचार्य आनन्दवनविरचितायां श्रीरामपूर्वतापनीय-टीकायां श्रीरामकाशिकाख्यायां पञ्चमोपनिषत्समाप्ता

प्रतिपाद्यविषयः—

श्रीरामपूर्वतापिन्युपनिषद्व्याख्यारूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च दृश्यते।

## No. (661) 1961/2 रामकाशिका (श्रीरामपूर्वतापिनीव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दवनः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—82 |
| प्रमाणम्—$20\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–38 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

A 335 कोशवत्।

उपसंहारः—

A 335 कोशवत्।

पतिपाद्यविषयः—

A 335 कोशवत्।

वक्तव्यविशेषः—

A 335 कोशवत्।

## No. (662) 395/3 रामकाशिका (श्रीरामपूर्वतापिनीव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—आनन्दवनः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—84 |
| प्रमाणम्—$17 \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—1–37 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

A 335 कोशवत् ।

उपसंहारः—

A 335 कोशवत् ।

प्रतिपाद्यविषयः—

A 335 कोशवत् ।

वक्तव्यविशेषः—

A 335 कोशवत् ।

## No. (663) 2942 रामतापिन्युपनिषद्व्याख्या

ग्रन्थकर्ता—रामयतिः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$14\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-13+17

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—54
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रीरामतापनीयेऽस्मिन्नज्ञातार्थपदाश्रया ।
व्याख्योपक्रम्यतेऽत्यल्पकल्पनातीतसिद्धये ॥

चिन्मय इत्याद्या देवं स्तौति । स देवं पश्यति । सोऽमृतत्वं चागच्छति । इत्यन्ता आथर्वणे शौनकाख्यायां रामोपनिषत् । तस्या इयमल्पग्रन्था पदप्रवृत्तिरारभ्यते । चिन्मय इत्यादिभिः षड्भिः श्लोकमन्त्रैः श्रीरामनाम निर्वक्ति—चिन्मये चित्स्वरूपे अत एवास्मिन् प्रत्यक्षे महाविष्णौ आकाशादेर्व्यापके । यद्वा जीवः द्वा सुपर्णेति श्रुतेः मह्यं मे प्रसन्नस्य जीवस्य (सनं) सुतं कर्मणामृतं येन सः । श्रीमहाविष्णुः । अनेन नृसिंहमन्त्रराजार्थं स्मरन् देवैक्यं सूचयति ।

उपसंहारः—

चकारः सगुणैश्वर्यसमुच्चयार्थः । इतिशब्दः उपनिषत्समाप्त्यर्थः ॥
वनारण्यप्रभृतिभिः पूर्वाचार्यैर्यदीरितम् ।
तस्यायं सङ्ग्रहः सद्भिरादृतो विस्तृतो भवेत् ॥

वाक्यार्थमतये सद्यः पदयोजनिका कृता ।
तया संतुष्ट-मनसां तावतैव कृतार्थता ॥

भक्त्या कृतं वा यत्किंचित् श्रीरामप्रीतये ध्रुवम् ।
इति निश्चित्य वेदान्तपदार्थकथनं कृतम् ॥

प्रीतो ददाति भगवान् प्रत्यक्षं परमं पदम् ।
तस्मात्सर्वात्मना रामं भजेऽहं करुणाकरम् ।
सदा रामोऽहमस्मीति दृढबोधप्रसिद्धये ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दानन्दभगवत्पूज्यपादशिष्यश्रीरामयतिप्रकाशितायां रामोपनिषत्पदयोजिन्यां उत्तरतापनी समाप्ता

प्रतिपाद्यविषयः—

A 335 कोशवत् ।

वक्तव्यविशेषः—

A 335 कोशवत् ।

## No. (664) C 502 रामतापिन्युपनिषद्व्याख्या

ग्रन्थकर्ता — रामयतिः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$9 \times 4\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्र नागरीलिपी
पत्राणि—1-23

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—34
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

2942 कोशवत् ।

उपसंहारः—

2942 कोशवत् ।

प्रतिपाद्यविषयः—

A 335 कोशवत्।

वक्तव्यविशेषः—

A 335 कोशवत्।

## No. (665) B 492 रामपूर्वतापिन्युपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—57-66 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं भद्रं कर्णेभिरिति शान्तिः।

चिन्मयेऽस्मिन्महाविष्णौ जाते दशरथे हरौ।
रघोः कुलेऽखिलं राति राजते यो महि स्थितः॥
स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः।
राक्षसा येन मरणं यान्ति स्वोद्रेकतोऽथवा॥
रामनाम भुवि ख्यातमभिरामेण वा पुनः।
राक्षसान्मर्त्यरूपेण राहुर्मनसिजं यथा॥
प्रभाहीनांस्तथा कृत्वा राज्यार्हाणां महीभृताम्।
धर्ममार्गं चरित्रेण ज्ञानमार्गं च नामतः॥
तथा ध्यानेन वैराग्यमैश्वर्यं स्वस्य पूजनात्।
तथा रात्यस्य रामाख्या भुवि स्यादथ तत्त्वतः॥

भा—ध्यानानन्दानुभवात्मकमुक्तसाकारब्रह्म च क्रमेणार्चयेत्.... ...।

उपसंहारः—

भा—यदि सद्योमुक्त्यपेक्षया ततोऽप्युपर्यभ्यासचिकीर्षुः शब्दानुविद्धसमाधिगोचरसच्चिदानन्दरूपं तं ध्यायेत् तत इहैव रामोऽस्मीत्यभेदं

प्राप्य जीवन्मुक्तो भवति । जगदपवादावशिष्टे सर्वगते निष्कळे वस्तुनि सच्चिदानन्दत्वादिस्वरूपधर्मभावनया ह्यविच्छिन्नधाराकृतया वस्तुसाक्षात्कारो भवति । तस्माद्विजातीयप्रत्ययतिरस्कारपूर्वकदृश्यानुविद्धसमाध्यारूढः सद्योमुमुक्षुः सजातीयप्रत्ययप्रवाहात्मकशब्दानुविद्धसमाधिमेव श्रीरामस्वरूपभजनं कुर्यादिति ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु
श्रीरामपूर्वतापनीयोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

श्रीरामतापनीयोपनिषद्व्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (666) B 493 रामरहस्योपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—41-56 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं भद्रं कर्णेभिरिति शान्तिः ।

रहस्यं रामतपनं वासुदेवं च मुद्गलम् ।
शाण्डिलं पैङ्गलं भिक्षुमहश्शारीरकं शिखा ॥ १ ॥
सनकाद्या योगिवर्या अन्ये च ऋषयस्तथा ।
प्रह्लादाद्या विष्णुभक्ता हनूमन्तमथाब्रुवन् ॥ २ ॥
वायुपुत्र महाबाहो किं तत्त्वं ब्रह्मवादिनाम् ।
पुराणेष्वष्टादशसु स्मृतिष्वष्टादशस्वपि ॥ ३ ॥
चतुर्वेदेषु शास्त्रेषु विद्यास्वाध्यात्मिकेऽपि च ।
सर्वेषु विद्यादानेषु विघ्नसूर्येशशक्तिषु ॥ ४ ॥

एतेषु मध्ये किं तत्त्वं कथय त्वं महाबल ।
हनूमान् होवाच—
भो योगीन्द्राश्च ऋषयो विष्णुभक्तास्तथैव च ।
शृणुध्वं मामकीं वाचं भवबन्धविनाशिनीम् ॥
भा—श्रीराममन्त्रा सर्वे च यस्यामेव समुद्धृताः ।
व्याख्यास्ये तामिमां रामरहस्योपनिषद्गिरः ॥
नत्विह........

उपसंहार:—

भा—न च द्विभुजं स्वर्णवर्णाभमित्यादिविशेषणैर्देव एवेह ध्येयोऽभिहित इति शङ्क्यम् । रामसेवापरायणमित्युक्तत्वेन परब्रह्मरूपरामसेवाया स्थूलदेहकार्यत्वानुपपत्तेः । द्विभुजत्वादिविशेषणवद्देहोपलक्षितं मामिति वक्तुमौचित्याच्च । यद्वा देहबुध्द्यैवास्मच्छब्दं हनूमानाहेति वक्तुं युक्तम् । कुतः ? यथा स्थितस्य स्वदेहादिमाहात्म्यस्य सच्छिष्येभ्योऽवश्यवक्तव्यत्वात् । याथार्थ्यस्यानुक्तौ महत्तरमिथ्यावादित्वकपटत्वादिदोषप्रसङ्गाच्च । तस्मात्सर्वज्ञे हनूमत्यात्मप्रशंसाकर्तृत्वादिदोषो न गन्धमात्रोऽपि शंक्यः ।

इति रामरहस्योपनिषदि द्वितीयोऽध्यायः । रामरहस्योपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे श्रीरामविषयाः श्रीरामतारकादिसर्वे मन्त्राः सप्रपञ्चं निरूप्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (667) B 494 रुद्रहृदयोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6½ अङ्गुलानि
लिपि:—आन्ध्रलिपिः
पत्राणि—1-12
प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—ओं सह नाववत्विति शान्तिः ।
प्रणम्य शिरसा पादौ शुको व्यासमुवाच ह ।
को देवस्सर्वदेवेषु कस्मिन्देवाश्च सर्वशः ॥
कस्य शुश्रूषणान्नित्यं प्रीता देवा भवन्ति मे ।
तस्य तद्वचनं श्रुत्वा प्रत्युवाच पिता शुकम् ॥
सर्वदेवात्मको रुद्रस्सर्वे देवाः शिवात्मकाः ।
रुद्रस्य दक्षिणे पार्श्वे रविर्ब्रह्मा त्रयोऽग्नयः ॥
वामपार्श्वे उमा देवी विष्णुस्सोमोऽपि ते त्रयः ।
या उमा सा स्वयं विष्णुः यो विष्णुस्स हि चन्द्रमाः ॥
ये नमस्यन्ति गोविन्दं ते नमस्यन्ति शंकरम् ।
येऽर्चयन्ति हरिं भक्त्या तेऽर्चयन्ति वृषध्वजम् ॥

भा—रुद्रोमात्मकता सर्वजगतों यत्र कथ्यते ।
व्याख्यास्ये तामिमामद्य श्रीरुद्रहृदयश्रुतिम् ॥

नन्विह सर्वाधिष्ठानमद्वन्द्वंपरंब्रह्म .......

उपसंहारः—

भा—न चास्य ब्रह्मज्ञानिनो जीवन्मुक्तस्य प्रारब्धभोगकालेषु ब्रह्मणः सकाशात् पृथग्भूतत्वमेव वक्तव्यमन्यथा भोगासंभवादिति शंक्यम्, मुक्तसाकारस्य ब्रह्मण एव भोक्तृत्वात् । नित्यसाकारं हि अभोक्तृसाक्षीति प्रसिद्धम् । तस्य सर्वाशनत्वेऽपि कर्मफलानशनात् प्रारब्धमात्रभोक्तृत्वाच्च जीवन्मुक्ताख्यस्य मुक्तसाकारब्रह्मणः सञ्चितागामिभोक्तृजीववैलक्षण्यं सिद्धम् । प्रेतसादृश्यं तु सर्वाशनविनिर्मुक्तस्य निष्प्रतियोगिकस्य निराकारब्रह्मण इति तन्नेह विवक्षितम् । तस्माच्छ्रुत्युक्तं सर्वमनवद्यमवगन्तव्यम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु रुद्रहृदयोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जगतः रुद्रोमास्वरूपत्वं, तत्रापि व्यक्तमुमारूपमव्यक्तं शिवरूपम्, एकस्यैव रुद्रस्य कार्यं क्रिया कारणं चेति कल्पितभेदेन विष्णुब्रह्ममहेश्वरभेदः, वस्तुतः शिवविष्ण्वादीनामैक्यं च प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (668) B 495 रुद्राक्षजाबालोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-12 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं आप्यायन्त्विति शान्तिः ॥

अथ हैनं कालाग्निरुद्रं भासुण्ठः पप्रच्छ । कथं रुद्राक्षोत्पत्तिः तद्धारणात् किं फलमिति । तं होवाच भगवान् कालाग्निरुद्रः । त्रिपुरवधार्थमहं निमीलिताक्षोऽभवम् । तेभ्यो जलबिन्दवो भूमौ पतितास्ते रुद्राक्षा जाताः सर्वानुग्रहार्थाय तेषां नामोच्चारणमात्रेण दशगोप्रदानफलं दर्शनस्पर्शनाभ्यां द्विगुणफलम् । अत ऊर्ध्वं वक्तुं न शक्नोमि । तत्रैते श्लोका भवन्ति ।

कस्मिन्स्थितं तु किं नाम कथं वा धार्यते नरैः ।
कति भेदमुखान्यत्र कैर्मन्त्रैर्धार्यते कथम् ॥

दिव्यवर्षसहस्राणि चक्षुरुन्मीलितं मया ।
भूमावक्षिपुटाभ्यां तु पतिता जलबिन्दवः ॥

भा—रुद्राक्षोत्पत्तिमाहात्म्ये प्रोच्येते यत्र शम्भुना ।
सैषा व्याख्यास्यते मुक्त्यै रुद्राक्षोपनिषन्मया ।
अथ ऊर्ध्वं धारणे फलमित्यर्थः ।

उपसंहारः—

भा—तथापि सगुणसालोकाद्या निर्गुणसालोकाद्या इति द्वैविध्यप्रसिद्धेः प्रकृता सायुज्यमुक्तिः सगुणा निर्गुणा वेति संशीयते । रुद्राक्ष-

धारणस्य सगुणब्रह्मोपासनाङ्गत्वात् सगुणैवेति प्राप्ते इदमुच्यते - न च पुनरावर्तत इति द्विरुक्त्या रुद्राक्षधारिणामपुनरावृत्तेर्निश्चितत्वान्निर्गुण-सायुज्यमुक्तिरेव प्रकृतेति युक्तमवगन्तुम् ।

आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥

इति स्मृतेर्ब्रह्मभवनं गतस्याप्यवगम्यमाना पुनरावृत्तिः सगुणमुक्तस्येत्यतो रुद्राक्षधारणं निर्गुणब्रह्मोपासनाङ्गमिति स्थितम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु रुद्राक्षजाबालोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे रुद्राक्षोत्पत्तिः, तद्भेदाः, धारणाक्रमः, रुद्राक्षमाहात्म्यादिकं च निरूप्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (669) C 1781 लघुचन्द्रिका (अद्वैतसिद्धिव्याख्या)

### चत्वारो भागाः

| | |
|---|---|
| ग्रन्थकर्ता - ब्रह्मानन्दसरस्वती | प्रतिपुटं पङ्क्तयः— 9 |
| पत्रविशेषः— कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि —40 |
| प्रमाणम्— $9\frac{3}{4} \times 4\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य) —? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि —1–759 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

नमो नवघनश्यामकामकामितदेहिने ।
कमलाकामसौदामकणकामुकगेहिने ॥
श्रीनारायणतीर्थानां गुरूणां चरणस्मृतिः ।
भूयान्मे साधिकेष्टानामनिष्टानां च बाधिका ॥

अद्वैतसिद्धिव्याख्यानं ब्रह्मानन्देन भिक्षुणा ।
संक्षिप्तचन्द्रिकार्थेन क्रियते लघुचन्द्रिका ॥

विष्णुर्व्यापकं जीवस्वरूपम् । मोक्षं प्राप्त इव स्वयं विजयते । कीदृशो विष्णुर्मोक्षं प्राप्त इवेत्यत्राह —अखण्डधीगोचर इति । संसर्गाविषयकमनोवृत्तिविशेषविषयीभूत इत्यर्थः । ननु तादृशधीविषयत्वे मोक्षप्राप्तिं प्रति न उद्देश्यतावच्छेदकत्वसंभवः । उद्देश्यतावच्छेदककालावच्छिन्नत्वस्य विधेयगतत्वेन व्युत्पत्तिसिद्धस्य प्रकृते बाधात् । यदाहि तादृशधीविषयीभूत आत्मा तदा तस्य न मोक्षः, तस्याविद्यारूपबन्धशून्यात्मकत्वात् ॥

उपसंहारः—

इष्टनैष्कर्म्यब्रह्मगानां इष्टादिपदाव्यवहितोत्तराणाम् । सिद्धीनां सिद्धीति पदानाम् नामनामिनोरभेदोपचारादिष्टसिध्यादिग्रन्थलाभः । “हिरण्यपूर्वं कशिपुं प्रचक्षत” इतिवत् (इत्यादिवत्) ब्रह्मगानामित्यन्ते लक्षणया वा तल्लाभः ॥

महानुभावधौरेयशिवरामाख्यवर्णिनः ।
एतद्ग्रन्थस्य कर्तारो लेखकाः केवलं वयम् ॥

श्रीनारायणतीर्थानां षट्शास्त्रीपारमीयुषाम् ।
चरणौ शरणीकृत्य तीर्णः सारस्वतार्णवः ॥

भजे श्रीपरमानन्दसरस्वत्यङ्घ्रिपङ्कजम् ।
यत्कृपादृष्टिलेशेन तीर्णः संसारसागरः ॥

यद्यत्संभवदुक्तिकं परवचस्संभूष्य तद्दूषितं
व्याख्यातश्च निगूढभावगहनो वाणीसुधासागरः ।
सर्वं तत् शरदिन्दुसुन्दरमुखश्रीकृष्णलीलातनौ
मालाभावमवाप्य सज्जनमनोमालां समाकर्षतु ॥

एषा यद्यपि चन्द्रिका खलमनोराजीवराजेररि-
ध्वान्तच्छेदकरी सरीसृपमुखव्याघातमुद्राकरी ।

साधूनां सरलस्वभावकरुणाकूपारसारात्मनां।
चेतश्चन्द्रमणी मणीषु रमणी जात्या तथापि स्फुटाम् ॥

इति श्रीपरमानन्दसरस्वतीपूज्यपादशिष्यश्रीब्रह्मानन्दसरस्वतीविरचितायामद्वैतसिद्धिटीकायामद्वैत-लघुचन्द्रिकायां चतुर्थः परिच्छेदः

प्रतिपाद्यविषयः—

अद्वैतसिद्धिवाक्यार्थविवरणविचारः।

वक्तव्यविशेषः—

मध्ये मध्ये पत्रलोपो विद्यते। मुद्रितोऽयं ग्रन्थः।

## No. (670) C 1766 लघुचन्द्रिका (अद्वैतसिद्धिव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—$12 \times 5\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—101-303 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

(प्रत्यक्षे-सत्त्वनिरूपणम्) मान् घट इत्यादिप्रत्यक्षेऽनवच्छिन्नघट-त्वादिप्रकारतायामनवच्छिन्नघटत्वादिविषयताकधीरवश्यं नियामिका वाच्या। अन्यथा जातिमानित्याकारकप्रत्यक्षे घटत्वादौ नियमेनानवच्छिन्ना प्रकारता स्यात्। इन्द्रियसन्निकर्षादेर्नियामकस्य सत्त्वादनवच्छिन्नत्वं च प्रकारत्वानिरूपितत्वमिति वाच्यम्।

उपसंहारः—

अविद्या प्रयुक्तत्वं चाविद्यातत्प्रयुक्तान्यतरत्वम्। पक्षान्तरे मूला-विद्यामनस्तत्परिणामान्यत्वे सप्रतीतिकत्वं विद्याविषयतानवच्छेदकत्वम्। उक्तलक्षणशून्यत्वे सति दृश्यत्वं व्यावहारिकत्वमिति ध्येयम्।

य: पूर्णानन्दमग्नोऽप्यनुगतमनसां वल्लवीनां विधेयो
यश्चेन्द्रादेर्नियन्ता विजयहयतनूमार्जने सावधानः ।
यश्च श्रीशः सुदाम्नः पृथुककणगणात्यादरस्वादयुक्तः
तस्य श्रीपादुकाया भवतु कृतिरियं मालिका मल्लिकायाः ॥

प्रतिपाद्यविषयः—

C 1781 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रत्यक्षे सत्त्वनिरूपणप्रकरणमारभ्य प्रथमपरिच्छेदान्तभागो वर्तते ॥

## No. (671) C 1767 लघुचन्द्रिका (अद्वैतसिद्धिव्याख्या)

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेष:—कागद्पत्रात्मक:
प्रमाणम्—$12 \times 5\frac{3}{4}$ अङ्गुलानि
लिपि:—देवनागरीलिपिः
पत्राणि—1–176

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

मा भैष्टेत्यमृतस्यन्दिमुखचन्द्रमनोहरम् ।
गोवर्धनधरं धाराधरधौरेयमाश्रये ॥

श्रीनारायणतीर्थानां पदपङ्केरुहस्मृतिः ।
स्मृतिमव्याहतां कुर्यात् सदा पदपदार्थयोः ॥

पदार्थनिष्ठं पदार्थयोर्भेदबुध्यविरोधित्वे सत्यखण्डविषयकम् । वाक्यार्थनिष्ठमुक्तबुद्धिविरोधित्वे सत्यखण्डविषयकम् ।

उपसंहारः—

किं त्वात्मस्वरूप इत्याशयेन गुणपदान्तरमुक्तम् । अन्यथा बुद्धेरात्मनश्च गुणेनेति ब्रूयात् । तथा च क्रमान्वयसंभवे व्युत्क्रमो न युक्त इति भावः ।

तर्कैः सारस्वतै रत्नैश्चन्द्रिकां चन्द्रभूषणैः ।
दुरन्तध्वान्तभङ्गाय आत्माणुत्वस्य भञ्जनम् ॥

द्रौपदीशाकमास्वाद्य त्रिलोकी येन तर्पिता ।
तज्जीवब्रह्मणोरैक्ये ब्रह्मैवसाक्षि नो हरिः ॥

प्रतिपाद्यविषयः—

C 1781 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयपरिच्छेदमात्रं विद्यते ॥

## No. (672) C 1356 लघुचन्द्रिका (अद्वैतसिद्धिव्याख्या)

ग्रन्थकर्ता— ब्रह्मानन्दसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—12½×5 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–198
प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—44
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 1767 कोशवत् ।

उपसंहारः—

C 1767 कोशवत् ।

प्रतिपाद्यविषयः—

C 1767 कोशवत् ।

वक्तव्यविशेषः—

C 1767 कोशवत् ।

## No. (673) C 1768 लघुचन्द्रिका (अद्वैतसिद्धिव्याख्या)

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—12×5¾ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–36
पतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

द्रौपदीशाकमास्वाद्य त्रिलोकी येन तर्पिता ।
तज्जीवब्रह्मणोरैक्ये ब्रह्मैव साक्षि नो हरिः ॥
श्रीनारायणतीर्थानां गुरूणां चरणस्मृतिः ।
अहं तयैव व्याकुर्वे सारस्वतसरस्वतीः ॥

मुमुक्षुणा तदङ्गतयाऽनुष्ठेये—तदिच्छाप्रयुक्तेच्छाधीनमुमुक्षुप्रवृत्तिविषये । अङ्गस्याङ्गिरूपफलेच्छाधीनचिकीर्षाजन्यकृतिसाध्यत्वात् ।

उपसंहारः—

C 1781 कोशवत् ।

प्रतिपाद्यविषयः—

C 1781 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे तृतीयतुरीयपरिच्छेदौ विद्येते ।

## No. (674) C 1357 लघुचन्द्रिका (अद्वैतसिद्धिव्याख्या)

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 4\frac{3}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-29
प्रतिपुटं पङ्क्तयः—24
प्रतिपङ्क्त्यक्षराणि—44
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 1768 कोशवत् ।

उपसंहारः—

C 1781 कोशवत् ।

प्रतिपाद्यविषयः—

C 1781 कोशवत् ।

वक्तव्यविशेषः—

C 1781 कोशवत् ।

## No. (675) C 1769 लघुचन्द्रिका (अद्वैतसिद्धिव्याख्या)

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{1}{2}\times5\frac{1}{8}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—40
प्रतिपुटं पङ्क्तयः— 11
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 1768 कोशवत्।

उपसंहारः—

C 1781 कोशवत्।

प्रतिपाद्यविषयः—

C 1781 कोशवत्।

वक्तव्यविशेषः—

C 1768 कोशवत्।

## No. (676) 2183 लघुचन्द्रिका (अद्वैतसिद्धिव्याख्या)

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\times1\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-289
प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—70
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 1781 कोशवत्।

उपसंहारः—

दण्डीति। दण्डज्ञानयोर्विशिष्टधीपक्षत्वे ज्ञानं संयोगेन दण्डविशिष्टमि(इ)ति भ्रमो दृष्टान्तः। यदि तु यत्त्वं तत्त्वं वानुगतमिति प्राचां मतमालम्ब्यते यदा तदुभयविशेष्यविशेषणकं यत् तत्तदुभयविषय-

तानिरूपितायाः किंचिन्निष्ठसांसर्गिकविषयताया विशिष्टमिति सामान्यतो व्याप्तौ दण्डी पुरुष इति प्रमापि दृष्टान्तः संभवति। विशेषणविशेष्य-संबन्धनिमित्तकेति। स्वीययोर्विशेष्यताविशेषणतयोराश्रयौ (यौ) तयोः संबन्धेन जन्येत्यर्थः। तेन संयोगज्ञानयोर्विशिष्टबुद्धौ संयो .....।

प्रतिपाद्यविषय:—

C 1781 कोशवत्।

वक्तव्यविशेष:—

अस्मिन्कोशे अनुकूलतर्कनिरूपणान्तो भागो विद्यते।

## No. (677) 84 लघुचन्द्रिका (अद्वैतसिद्धिव्याख्या)

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेष:—ताळपत्रात्मकः
प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-66

प्रतिपुटं पङ्क्तय:—8
प्रतिपङ्क्त्यक्षराणि—68
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रम:—

C 1781 कोशवत्।

उपसंहारः—

मिथ्यात्वानुमितेः पूर्वं शुक्तिरूप्यस्येव घटत्वादेरपि मिथ्यात्वस्य प्रसाध्यत्वेन तयोर्दृष्टा ........ थ्यात्वादिभिः शुक्तिरूप्यादेर्मिथ्यात्वं साधनीयमेवेत्याशयेनाह—अधिकमित्यादि॥

आद्यं स्या ... .......।
... चतुर्थं स्यादन्त्यमानन्दबोधजम्॥
इति पञ्चविधं प्रोक्तं मिथ्यात्वं ध्वान्तनाशकम्॥

इति मिथ्यात्वनिर्वचनं समाप्तम्

प्रतिपाद्यविषयः—

C 1781 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे पञ्चममिथ्यात्वनिरूपणान्तो भागो विद्यते।

No. (678) C 1123 लघुचन्द्रिका (अद्वैतसिद्धिव्याख्या)

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—11×4½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-243

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 1767 कोशवत्।

उपसंहारः—

C 1781 कोशवत्।

प्रतिपाद्यविषयः—

C 1781 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे द्वितीयतृतीयचतुर्थपरिच्छेदा वर्तन्ते।

No. (679) A 416 लिङ्गभङ्गमुक्तिशतकम् (सव्याख्यम्)

ग्रन्थकर्ता—रामचन्द्रेन्द्रः (व्याख्याता उपनिषद्ब्रह्मेन्द्रः)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13×8½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-158

प्रतिपुटं पङ्क्तयः—50
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यत्र देहत्रयारूढोऽहंभावो विलयं गतः ।
यद्वस्तुतो निराधारं तन्नैपदं सुखं भजे ॥

नत्वा गुरुं लिङ्गभङ्गमुक्तिसाम्राज्यमिच्छताम् ।
विदेहमुक्तिशतकव्याख्येयं संप्रणीऽयते ॥

इह खलु स्वाविद्यापादालंकारानन्तकोटिब्रह्माण्डसदनप्राणिकदम्ब-हृदयसरोवरालंकारचरणकमलेयं भगवती लीलाविभूतिः आपण्डितपामरं ब्रह्ममात्रमसन्नहीति श्रुत्यनुरोधेन निर्विशेषब्रह्ममात्रं भावरूपं तदतिरिक्तम-त्यन्ता भावरूपं तस्य निष्प्रतियोगिकाभावरूपत्वेन न तयोराधाराधेयते। निर्विशेषब्रह्मज्ञानसमकालं ब्रह्ममात्रावस्थानलक्षणविकळेबरकैवल्यभाजनं कर्तुं पण्डितानां सकृत्प्रकरणार्थपर्यालोचनया सद्योमुक्तिप्रापकं ............ ।

उपसंहारः—

निष्प्रतियोगिकब्रह्ममात्रातिरेकेण निष्प्रतियोगिकाभावालङ्कारमायिक-पदमात्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन शून्यत्वेनापि यद्यस्तीति भ्रान्तिस्तदा तन्मायिकपदस्य भङ्गोऽपह्नवो मन्तव्यः। मायिकपदापह्नवसंसिद्धेयं विकळेबरमुक्तिस्तत्प्रापकपरमाद्वैतप्रकरणशतकं जातमाविर्भूतं संपन्नं सम्पूर्णमित्यर्थः ।

परमाद्वैतप्रकरणशतकार्थविशारदः ।
सर्वापह्नवसंसिद्धब्रह्ममात्रोऽवशिष्यते ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मेन्द्रयोगिना ।
शतप्रकरणव्याख्या लिखिता विदुषां मुदे ॥

परमाद्वैतप्रकरणशताख्यो ग्रन्थविस्तरः ।
पञ्चत्रिंशत्षट्शताधिचतुस्साहस्रमङ्कतः ॥

इति लिङ्गभङ्गमुक्तिशतकं सव्याख्यानं समासम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सत्यज्ञानानन्दादिरूपब्रह्मस्वरूपो रामः विदेहमुक्तिं ददा-त्वित्यादिरूपेण विदेहमुक्तिप्रार्थनारूपस्य रामचन्द्रेन्द्रविरचितस्य लिङ्ग-भङ्गमुक्तिशतकाख्यस्य ग्रन्थस्य अनुभवाद्वैतमतानुसारेण विवरणं क्रियते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च दृश्यते।

## No. (680) 252 लौकिकन्यायरत्नाकरः

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—70 |
| प्रमाणम्—$13\frac{3}{4} \times 1\frac{5}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—1–59 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

प्रसङ्गः स्यात्, वह्न्यादेः कदाचिद्धूमादिकारणत्वाभावापत्त्या तदर्थिनो वह्न्याद्युपादाने तत्कारणत्वाभावशङ्कया निष्कम्पप्रवृत्तिश्च न स्यात्। अतस्तयोः कादाचित्कत्वस्यायुक्तत्वात्स्वाभाविकत्वनिर्वाहाय पश्चाद्भावि-विरुद्धायभेदाभाववतः क्रतोः पूर्वाभेदनैमित्तिकमङ्गम्। तत्रैव तदननुष्ठानं क्रतुवैकल्यप्रयोजकमिति विशेषणीयतया........श्चा .......भेद-वतिक्रतौ पूर्वापभेदनैमित्तिके क्रत्वङ्गत्वं तदननुष्ठाने क्रतुवैकल्यप्रयोजकत्वं वा .... श्चात्यापभेदोपजननात्पूर्वं न संभवति।

उपसंहारः—

पराच्छिवपुरादूर्ध्वं श्रीकण्ठेन निरीक्षिताः।
नाधो यान्ति पुनर्देवि संसारे दुःखसम्प्लवः॥

इति वायुपुराणाच्च पूर्वोक्तपरमशिवलोकं गतानां तत्र सारूप्यादि-भाजां च विश्वगुरोर्नारायणीसहचराच्छ्रीहरात्तत्त्वावबोधलाभे कैवल्यं भवतीति। अन्यस्त्वाह। यद्यपि पुराणेषु सारूप्याद्यविशेषेण मोक्षो मरणफलतयाऽवगम्यते तथाप्यधिकारितारतम्येन निष्पापानां शुचीना-मीशार्पितकर्मणां मरणादेव परममुक्तिस्ततो निकृष्टानामग्निप्रवेशादिकृतां सदाशिवसामीप्यम्। न च काश्यां निषिद्धस्य स्वेच्छया मरणस्याद्दष्टा ......कथमीश्वरसामीप्यलाभ इति शङ्क्यम्।

अग्निप्रवेशनं ये कुर्युरविमुक्ते विधानतः ।
प्रविशन्ति मुखं ते मे निःसन्दिग्धं वरानने ॥
कुर्वन्त्यनशनं ये तु मद्भक्ताः कृतनिश्च...... ॥

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे अपच्छेदन्यायादिना प्रत्यक्षस्य प्राबल्यं विचारः। विधि-विचारः, सन्नयासविधिविचारः, मुक्तिविचाराश्च सप्रमाणं स्पष्टं क्रियते।

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः असमग्रो विद्यते, अमुद्रितश्च दृश्यते। ग्रन्थ-कर्तृनाम्नी न ज्ञायेते। परं तु सिद्धान्तलेशसङ्ग्रहतद्व्याख्यानसूत्रभाष्यादिभ्यो वाक्यान्युद्धृत्य प्रकरणानुसारेण संयोज्य अद्वैतप्रकरणग्रन्थरूपेण कृत इति ज्ञायते।

## No. (681) A 91 लौकिकन्यायरत्नाकरः

| | |
|---|---|
| ग्रन्थकर्ता रघुनाथः | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेष: —कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$12\frac{3}{4}\times 8$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थिति:—समीचीना |
| पत्राणि—1-128 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

....द्यात्मकश्चित्तवृत्तिप्रवाहस्ततोऽन्यत्र नयने महान् यत्न इत्यर्थः.—62, 109. शते पञ्चाशदितिन्या.—63, 110. यादृशो यक्षस्तादृशो बलिरिति-न्या.—64, 111. मारणीयगृहीतो गच्छन्तं स्वीकरोतीतिन्या.—65, 112. मरणाद्वरं व्याधिरिति न्यायोऽपीह बोध्यः। वेदमिति सामान्ये नपुंसकम् ॥—66, 113. यादृशं मुखं तादृशी चपेटेति ॥—67, 114. एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेदितिन्या.—68, 115. न हि प्रतिज्ञामात्रेणार्थसिद्धिरिति न्यायोऽपीदृशः ॥

उपसंहारः—

मां हि पार्थेत्युदाहृतायां स्मृतौ च तत्र सर्वत्रापि वृद्धकुमारीवर-न्यायेन पूर्वोक्तः क्रमः सर्वोऽपि कल्पनीयः। श्रुतौ मुनिरिति पदमन्योप-लक्षणम्। सन्न्यासिनापि पूर्वमननुष्ठितसगुणोपासनेन चित्तस्थैर्यार्थं तावत्सगुणोपासनं कर्तव्यमिति द्योतनार्थं च। एवं गङ्गास्नानमात्रेण मुच्यते नात्र नात्र संशय इत्यादावपि बोध्यमिति दिक्। भगवता भाष्य-कारेण त्वियं स्मृतिरेवं व्याख्याता। मां हि पार्थ व्यपाश्रित्य मामा-श्रयत्वेन गृहीत्वा येऽपि स्युर्भवेयुः पापयोनयः पापं योनिर्येषां...।

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे शते पञ्चाशत्, यादृशो यक्षस्तादृशो बलिः, मरणाद्वरं व्याधिः, यादृशं मुखं तादृशी चपेटा इत्यादि लौकिकवैदिक-न्यायानामर्थमुपवर्ण्य न्यायमीमांसादिशास्त्रेषु तत्र तत्र ससन्दर्भं संयोजनं क्रियते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः असमग्रो विद्यते। मुद्रितश्च दृश्यते। अयं ग्रन्थः सर्वेषामत्यन्तमुपकाराय कल्पत इति च।

•

## No. (682) B 496 वज्रसूच्युपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—$7\frac{1}{2}\times6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—57–64 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू—ओं आप्यायन्त्विति शान्तिः॥

वज्रसूचिं प्रवक्ष्यामि शास्त्रमज्ञानभेदनम्।

दूषणं ज्ञानहीनानां भूषणं ज्ञानचक्षुषाम्॥

ब्राह्मण क्षत्रिय वैश्य शूद्रा इति चत्वारो वर्णास्तेषां वर्णानां ब्राह्मण एव प्रधान इति वेदवचनानुरूपस्मृतिभिरप्युक्तम्। तत्र चोद्यमस्ति को वा ब्राह्मणो नाम, किं जीवः, किं देहः, किं जातिः। किं ज्ञानं, किं कर्म, किं धार्मिकं, किं वर्णः, किं पाण्डित्यमित्यष्टौ प्रश्नाः। प्रथमो जीवो ब्राह्मण इति चेत्तन्नातीतानागतवर्तमानानेकदेहानां जीवस्यैकरूपत्वात्। एकस्यापि कर्मवशादनेकदेहसंभवात् सर्वशरीराणां जीवस्यैकरूपत्वाच्च॥

भा—यत्र प्रश्नाष्टकद्वारा ब्राह्मणत्वविनिर्णयः।
वज्रसूच्यभिधामेकां व्याख्यास्ये श्रुतिमादरात्॥

वज्रसूचिमिति।

उपसंहारः—

भा—यस्तु कृतार्थस्तस्यैव सर्वाधिकत्वेन सर्ववन्द्यतया सुतरां ब्राह्मणत्वोपपत्तेश्च। न चोक्तब्रह्मापरोक्षज्ञानादन्यत्र कस्यचिदपि पुरुषस्य कृतार्थतास्ति। अजातशत्रोर्गार्ग्या वन्दितत्वं त्वनात्मविद्विषयकवर्णाश्रमोत्कर्षापकर्षादिसाङ्कर्यानुत्पत्तिहेतोरित्यनवद्यम्। तर्ह्युक्तब्रह्मापरोक्षानुभवः कथं स्यादित्यतस्साधनमाह—सच्चिदानन्दांशभूतं प्रत्यगात्मानं सच्चिदानन्दांशीभूताद्वितीयब्रह्म भावयेत्। अहं ब्रह्मास्मीत्यविच्छिन्नतैलधारान्यायेनानवरतनिदिध्यासनं कुर्यादित्यर्थः। आत्मानं सच्चिदानन्दं ब्रह्म भावयेदित्यभ्यास उपनिषत्परिसमाप्तिद्योतनार्थः॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ वज्रसूच्युपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जीवदेहादीनां ब्राह्मणत्वं निराकृत्य साधनचतुष्टयसम्पन्नः अपरोक्षात्मज्ञानी ब्राह्मण इति निर्णीयते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (683) B 497 वराहोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—14 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-161 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ओमादौ सह नाववत्विति परां शान्तिं पठित्वा ततः
श्रीमत्सुन्दरसद्गुरोः पदयुगं स्मृत्वा च नत्वाङ्गकैः ।
वाराहोपनिषद्वचांसि मधुराण्यात्मैक्यबोधीनि च
व्याख्यास्ये भगवान्प्रसीदतु शिवो वाराहमूर्तिर्हरिः ॥

सारात्सारतरानुभूतिमदतिश्लाघ्या श्रुतिर्दुर्लभा
सर्वासूपनिषत्सु केवलचिदानन्दानुभूतिप्रदा ।
जीवन्मुक्तिविदेहमुक्तिविषया भेदा यथैव स्वयं
साध्व्या संविशदीकृताश्च सरळाप्युक्तथा दुरूहार्थतः ॥

इह खलु निष्प्रतियोगिकशुद्धचैतन्यविवर्तचिच्छक्तिविलासपरिणतसच्चिदानन्दघनीभूतदिव्यमङ्गळविग्रहायमानो भगवान् शङ्खचक्रगदाधरसर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वसर्वान्तर्यामित्वाद्यनन्तकल्याणगुणगणाभिरामः परमकारुणिको भक्तवत्सलो महाविष्णुः—

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥

इति स्वप्रतिज्ञानुरोधेन साधुरक्षणादिहेतुकेषु—

मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः ।
रामो रामश्च रामश्च कृष्णः कल्की जनार्दनः ॥

इत्याद्यवतारेषु वराहस्वरूपेणावतीर्णः स्वदंष्ट्राग्रोद्धृतां वसुंधरां यथापूर्वं प्रतिष्ठाप्य....

उपसंहारः—

ब्रह्मविद्याभूषणायमानविदेहकैवल्यसिध्यै दृश्यानुविद्धशब्दानुविद्धनिर्विकल्पनिस्सङ्कल्पनिर्वृत्तिकनिर्वासनाख्यैः षड्भिः समाधिभिः कालं नयेदिति स्थितम् । श्लोकः—

वराहव्याख्यानं यदि भुवि सकृद्वा गुरुमुखात्
शृणोतीदं सद्यस्स खलु भवमुक्तोऽत्र भवति ।
किमन्यैर्वेदान्तान्तरपरिचयैः कालहरणै-
र्यदत्रैव प्रोक्ता प्रणवविवृतिर्भूमिस्वरणैः ॥

निष्पत्तिरस्तु मम निष्प्रतियोगिके द्राग्वैदेहमुक्तिसरणौ परमात्मनीति ।
संप्रार्थ्य गुरुमसत्प्रतियोगदृष्ट्या प्रारब्धभोगशमनाय विमुक्तजीवः ॥

यद्वक्त्रामृतभानुनिस्सृतमहावाक्यामृतं प्रत्यहं
कर्णाभ्यामहमादरेण सुतरां पीत्वा कृतार्थोऽभवम् ।
एवं यत्कृपयैव साधु रचिता लोकोपकाराय च
व्याख्येयं गुरवे नमोऽस्तु सततं श्रीसुन्दरेशाय नः ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयशिवाचार्यकृतौ वराहमञ्जूषायां पञ्चमोऽध्यायः
वराहोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मतभेदेन तत्त्वानि, परब्रह्मविद्या, अणिमादिसिद्धिनिन्दा, मौननिष्ठा, सप्तभूमयः, जीवन्मुक्तलक्षणानि, गौणमुख्ययोगाभ्यासाश्च सम्यक्प्रतिपाद्यन्ते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (684) 1125/2 वाक्यवृत्तिः

| | |
|---|---|
| ग्रन्थकर्ता शंकराचार्यः | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—42 |
| प्रमाणम्—$8\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—10-14 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं
विश्वेश्वरं विदितविश्वमनन्तशक्तिम् ।
निर्मुक्तबन्धनमपारसुखाम्बुराशिं
श्रीवल्लभं विमलबोधमघं नमामि ॥

यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च ।
इत्थं विजानामि सदात्मरूपं तम(तस्या)ङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥

तापत्रयार्कसंतप्तः कश्चिदुद्विग्नमानसः ।
शमादिसाधनैर्युक्तः सद्गुरुं परिपृच्छति ॥

अनायासेन येनास्मान्मुच्येयं भवबन्धनात् ।
तन्मे संक्षिप्य भगवन् केवलं कृपया वद ॥

उपसंहारः—

श्रुत्याचार्यप्रसादेन दृढो बोधो यदा भवेत् ।
निरस्ताशेषसंसारनिदानः पुरुषस्तदा ॥

विशीर्णकार्यकरणो भूतसूक्ष्मैरनावृतः ।
विमुक्तकर्मनिगलः सद्य एव विमुच्यते ॥

किंचित्कालमनारब्धकर्मबन्धस्य संक्षये ।
प्रारब्धकर्मवेगेन जीवन्मुक्तो यथा (यदा) भवेत् ॥

निरस्तातिशयानन्दं वैष्णवं परमं पदम् ।
पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते (पदमश्नुते) ॥

इति वाक्यवृत्तिः समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे तत्त्वमसिपदार्थप्रतिपादनपूर्वकं वाक्यार्थः सम्यङ्निरूप्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च दृश्यते ॥

## No. (685) 955/7 वाक्यवृत्तिः

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$16\frac{3}{4}\times1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—66-68

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—44
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः —

1125/2 कोशवत् ।

उपसंहारः—

1125/2 कोशवत् ।

प्रतिपाद्यविषयः—

1125/2 कोशवत् ।

वक्तव्यविशेषः—

1125/2 कोशवत् ।

## No. (686) B 278/1 वाक्यवृत्तिः (मलयाळतात्पर्यसहिता)

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः— कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—14 |
| प्रमाणम्—$7\frac{1}{2} \times 4\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—मलयाळलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-33 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

1125/2 कोशवत् ।

उपसंहारः—

1125/2 कोशवत् ।

प्रतिपाद्यविषयः—

1125/2 कोशवत् ।

वक्तव्यविशेषः—

1125/2 कोशवत् ।

## No. (687) 4516/2 वाक्यवृत्तिः

| | |
|---|---|
| ग्रन्थकर्ता – शंकराचार्यः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—$9\frac{3}{4} \times 1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—नागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—10-12 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

1125/2 कोशवत् ।

उपसंहारः—

1125/2 कोशवत् ।

प्रतिपाद्यविषयः—

1125/2 कोशवत् ।

वक्तव्यविशेषः—

1125/2 कोशवत् ।

No. (688) 955/4 वाक्यवृत्तिव्याख्या (मूलसहिता)

ग्रन्थकर्ता—विश्वेश्वरः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्— $16\frac{3}{4}\times1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—36-60
प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—44
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रुतिस्मृतिपुराणानामालयं करुणाकरम् ।
नमामि भगवत्पादशंकरं लोकशंकरम् ॥

ब्रह्माहमेतन्मयि भाति विश्वं श्रीमाधवप्राज्ञगुरोः प्रसादात् ।
अन्वर्थविश्वेश्वरपण्डिताख्यस्तस्याङ्घ्रिपद्मप्रणतौ रतोऽस्मि ॥

परमकृपानिधिः श्रीमच्छंकराचार्यभगवत्पादाः तापत्रयार्कसंतप्तानामपरिमितजननादिसंसाराध्वश्रमपरिपीडितानामात्मज्ञानशिशिरमधुर-जलाकाङ्क्षाणां त्रिदूरशारीरकमीमांसाजलाधारगमनासमर्थानां वाक्यवृत्त्यभिधानोपदेशप्रकरणप्रपापरिकल्पनेनान्तः शीतलतां विगतक्लेशतां चापादयन्ति ।

उपसंहारः—

अत्र तु 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति भगवद्वचनात् जीवस्य परमेश्वरांशत्वेन वस्तुतोऽन्यरूपत्वाभावात् विप्रयोगो नास्तीत्यर्थः ।

तथा चोक्तं भगवता—यद्गत्वा न निवर्तन्ते तद्धाम परमं ममेति। तद्धाम गतस्याकाशवत्सर्वगतत्वेन जीवस्यान्यस्य तत्प्राप्तेरयुक्तत्वात्प्राप्तिरिति तद्भावापत्तिं ज्ञापयन्नाह—कैवल्यमिति। अतः सर्वदेशकालवस्तुव्यापकत्वादेव परममुत्कृष्टं प्रतिपद्यत इति पद्यं स्वरूपमित्यर्थः।

इति श्रीमहायोगिमाधवप्राज्ञगुरुप्रसादात्संप्राप्तापरिमितानन्दरूपविश्वेश्वरविदुषा विरचिता महावाक्यवृत्तिप्रकाशिका परिसमाप्ता

प्रतिपाद्यविषयः—

श्रीशंकराचार्यकृतवाक्यवृत्तिव्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च दृश्यते॥

## No. (689) 999/2 वाक्यवृत्तिव्याख्या (मूलसहिता)

ग्रन्थकर्ता—विश्वेश्वरः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—14×1¼ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—20–47

प्रतिपुटं पङ्क्तयः—5
प्रतिपङ्क्त्यक्षराणि—54
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

955/4 कोशवत्।

उपसंहारः—

955/4 कोशवत्।

प्रतिपाद्यविषयः—

955/4 कोशवत्।

वक्तव्यविशेषः—

955/4 कोशवत्।

## No. (690) 1220/3 वाक्यवृत्तिव्याख्या

ग्रन्थकर्ता—विश्वेश्वरः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$14\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—22–33
प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—10
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

955/4 कोशवत्।

उपसंहारः—

955/4 कोशवत्।

प्रतिपाद्यविषयः—

955/4 कोशवत्।

वक्तव्यविशेषः—

955/4 कोशवत्।

## No. (691) 2283/3 वाक्यवृत्तिव्याख्या (मूलसहिता)

ग्रन्थकर्ता—विश्वेश्वरः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$16 \times 1\frac{3}{4}$
लिपिः—ग्रन्थलिपिः
पत्राणि—28–43
प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

955/4 कोशवत्।

उपसंहारः—

955/4 कोशवत्।

प्रतिपाद्यविषयः—

955/4 कोशवत्।

वक्तव्यविशेषः—

955/4 कोशवत्।

## No. (692) 2359/1 वाक्यवृत्तिव्याख्या (मूलसहिता)

ग्रन्थकर्ता – विश्वेश्वरः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15 \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-34

प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—
955/4 कोशवत्।

उपसंहारः—
955/4 कोशवत्।

प्रतिपाद्यविषयः—
955/4 कोशवत्।

वक्तव्यविशेषः—
955/4 कोशवत्।

## No. (693) C 1505 वाक्यवृत्तिव्याख्या (मूलसहिता)

ग्रन्थकर्ता—विश्वेश्वरः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$11 \times 4\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-41

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—
955/4 कोशवत्।

उपसंहारः—
955/4 कोशवत्।

प्रतिपाद्यविषयः—
955/4 कोशवत्।

वक्तव्यविशेषः—
955/4 कोशवत्।

## No. (694) B 152 वाक्यसुधा (सटीका)

ग्रन्थकर्ता—शंकराचार्यः (व्याख्याता?)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्— $7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः —आन्ध्रलिपिः
पत्राणि —1–28

प्रतिपुटं पङ्क्तयः— 12
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

दृश्यं सर्वमनात्मास्याद्दृगेवात्माविकारिणी।
आत्मानात्मविवेकोऽयं कथितो ग्रन्थकोटिभिः॥

व्या —ज्योतिः शान्तमनन्तमेकमजरं मायानिगं शाश्वतं।
नित्यं निर्विषयं निरन्तरसुखं यत्तत्पदं धीमहि॥
यन्मायागुणसंवृतं त्रिविधतामासाद्य जीवत्रयं।
लोके भाति विचारतस्तु सकलं रामान्न किंचित्परम्॥

इह खलु लोके सांसारिकतापत्रयोपतापितान्तःकरणः कश्चिदा-ब्रह्मलोकात्सर्वं कर्मनिर्मितमिति अनित्यं ज्ञात्वा तेभ्योऽत्यन्तोद्विग्नमनाः निर्दुःखमुत्तमसुखं ब्रह्मज्ञानं विज्ञातुमिच्छया परमकारुणिकं श्रोत्रियं ब्रह्मनिष्ठं त्यक्ताशेषक्रियं सद्गुरुं प्राप्य उपहारपाणिः प्रपन्नः पृच्छति—

स्वामिन् सांसारिकबहुविधदुःखैः सुखाभासैरात्मसुखसंरोधकैस्त-न्मूलभूतात्मानात्मविवेकमन्तरा नितरां दुःखितोऽस्मि। अतो मम आत्मविषयं विवेकं सम्यगुपदिशेति विज्ञापितः......।

उपसंहारः—

प्रातिभासिकेति। तथा प्रातिभासिकजीवस्य लये; लयो नाम निद्राक्षये प्रबोधे स एव व्यावहारिको भवति। तस्मिन्नेव सच्चिदानन्दा-दयो धर्मास्तिष्ठन्ति। तल्लये तस्यापि लये ब्रह्मज्ञानेन मूलस्य नाशे सति तत्कार्याहंकारादयोऽपि नश्यन्ति। तदा सच्चिदानन्दादयो धर्माः साक्षिणि प्रत्यगात्मन्येव तिष्ठन्ति। तदा द्वितीयाभावात्केवलं ब्रह्मैव भवति। अयमेव सर्ववेदान्तसिद्धान्तः। एतत्प्रकरणं यः सम्यगालो-चयति मुमुक्षुः स जीवन्मुक्तो भवति कृतकृत्यो भवति॥

मू—साक्षिमात्रं स्वमात्मानं सच्चिदानन्दविग्रहम् ।
परब्रह्मतया ज्ञात्वा जीवन्मुक्तश्चरेन्मुनिः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकराचार्यकृतौ दृग्दृश्यवाक्यसुधा समाप्ता

प्रतिपाद्यविषयः—

शंकराचार्यकृतदृग्दृश्यविवेकस्य संक्षेपेण विवृतिरूपोऽयं ग्रन्थः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । मुद्रितश्च दृश्यते । व्याख्यातृनाम कोशेषु न दृश्यते ।

## No. (695) 955/2 वाक्यसुधा (सटीका)

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम्—$16\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य) —? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—16–29 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 152 कोशवत् ।

उपसंहारः—

B 152 कोशवत् ।

प्रतिपाद्यविषयः—

B 152 कोशवत् ।

वक्तव्यविशेषः—

B 152 कोशवत् ।

## No. (696) 492/1 वाक्यसुधा (सटीका)

ग्रन्थकर्ता – शंकराचार्यः(व्याख्याता?)
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$14\frac{3}{4} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-10

प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—68
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

स्वामिन् सांसारिकबहुविधदुःखैरित्यादिः B 152 कोशवत् ।

उपसंहारः—

B 152 कोशवत् ।

प्रतिपाद्यविषयः—

B 152 कोशवत् ।

वक्तव्यविशेषः—

B 152 कोशवत् ।

## No. (697) A 206 वाक्यसुधा (सटीका)

ग्रन्थकर्ता—शंकराचार्यः
(व्याख्याता ब्रह्मानन्दभारती)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{3}{4} \times 7\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-19

प्रतिपुटं पङ्क्तयः—25
प्रतिपङ्क्त्यक्षराणि—30
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

कारणं (खादि)सर्वजगतां तारणार्थमनागसम् ।
वारणाननमात्मानमद्वयं समुपास्महे ॥
परापश्यन्त्यादिदेहां प्रणताभीष्टदायिनीम् ।
सत्यज्ञानानन्दरूपां ध्यायेऽनन्यां सरस्वतीम् ॥

अभिषिच्य कृपावर्षैरात्मस्थं यः करोति माम् ।
तं सर्वसाक्षिणं वन्दे रामानन्दमुनीश्वरम् ॥

यत्कटाक्षसुधासिन्धौ मज्जता पुण्यपाकतः ।
मया ज्ञानमणिर्लब्धा तमानन्दगुरुं भजे ॥

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
मया वाक्यसुधाटीका यथामति विरच्यते ॥

न ख्यातिलाभपूजेच्छा टीकाकरणकारणम् ।
न विद्वत्ताबलं वात्र मुक्तिरेव हि कारणम् ॥

प्रारीप्सितस्य ग्रन्थस्य अविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय च केवलकूटस्थप्रत्यग्बोधरूपपरमानन्दस्वरूपानुस्मरणलक्षणमङ्गळमाचरन् सच्चिदानन्दाखण्डरसस्वरूपावस्थानलक्षणस्य मोक्षस्य तत्त्वमस्यादिमहावाक्यार्थापरोक्षज्ञानफलत्वात् वाक्यार्थज्ञानस्य च अन्वयव्यतिरेकाभ्यां पदार्थशोधनपूर्वकत्वात् पदार्थशोधनस्य च प्रसिद्धानुवादेन अप्रसिद्धं निरूपणीयमिति न्यायेन ... ....

उपसंहारः—

इत्यादि श्रुतिप्रामाण्यात् परमार्थदृष्ट्यनुसारेण ममाश्रयत्वादिविदेहमुक्तत्वान्तं समस्तव्यवहारातीतत्वं च प्रत्यगभिन्नसच्चिदानन्दलक्षणस्य अद्वितीयस्य अवाङ्मनसगोचरस्य ब्रह्मण एवोपपद्यते। अत एव मोक्षशास्त्रस्यापि साफल्य स्यादित्ययमेवास्य प्रकरणस्य समस्तवेदान्तशास्त्रस्य च महातात्पर्यविषयत्वेन पिण्डितोऽर्थः। तस्मात्सर्वमनवद्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामानन्दीयभारतीमुनिवर्यशिष्यब्रह्मानन्दभारतीमुनिप्रक्लृप्ता वाक्यसुधाटीका समाप्ता

प्रतिपाद्यविषयः—

दृग्दृश्यविवेकविवरणरूपोऽयं ग्रन्थः (विस्तृतः)।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च दृश्यते।

No. (698) 4687/2 वाक्यसुधाविवरणम् (दृग्दृश्यप्रकरणम्)

ग्रन्थकर्ता — विद्यारण्यभारतीतीर्थः
पत्रविशेषः— तालपत्रात्मकः
प्रमाणम्—$15\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–28

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—70
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ज्योतिः शान्तमनन्तमेकमजरं मायातिगं शाश्वतं
नित्यं निर्विषयं निरन्तरसुखं यत्तत्पदं धीमहि ।
यन्मायागुणसंवृतं त्रिविधतामासाद्य जीवत्रयं
लोके भाति विचारतस्तु सकलं रामान्न किंचित्परम् ॥

प्रारीप्सितस्य ग्रन्थस्य इत्यादिः A 206 कोशवत् ।

उपसंहारः—

सच्चिदानन्दाः सर्वदा सर्वाधिष्ठानभूते साक्षिण्येव पर्यवस्यन्ति । तस्याप्यधिष्ठानभूतस्य कस्यचिद्वस्तुनोऽभावात्साक्षिणः कालत्रयेऽपि सद्रूपत्वात् व्यावहारिकजीवजगदादिसृष्टेः पूर्वं प्रळयानन्तरं चाविद्यमानत्वात्तज्जत्वात्तत्स्थित्वात्तल्लत्वाच्च तत्पदलक्ष्यार्थभूतब्रह्माभिन्नसाक्षिव्यतिरेकेण व्यावहारिकजीवजगदादि वस्तुतो नास्तीत्ययमेव सर्ववेदान्तेषु निर्णीतोऽर्थः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्विद्यारण्यभारतीतीर्थगुरुविरचित-
दृग्दृश्यविवेकप्रकरणं सविवरणं समाप्तम्

प्रतिपाद्यविषयः—

शंकराचार्यकृतवाक्यसुधाविवरणरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अमुद्रितः ।

## No. (699) 3590 वादनक्षत्रमाला

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षित: | प्रतिपुटं पङ्क्तय:—11 |
| पत्रविशेष:—ताळपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—102 |
| प्रमाणम्—$19\frac{1}{2}\times\frac{3}{4}$ अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—ग्रन्थलिपि: | स्थिति:—समीचीना |
| पत्राणि—1–76 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रम:—

तन्त्रान्तरेष्वनुपपादितमर्थजातं
यत्सिद्धवद्व्यवहृतं ध्वनितं च भाष्ये ।
तस्य प्रसाधनमिह क्रियते नयोक्त्या
बालप्रियेण मृदुवादकथापथेन ॥
शेषीभवदपि भाष्ये सुमहति सत्रेऽग्निहोत्रमिव ।
स्वातन्त्र्येण प्रकरणमर्थप्रतिपादने समर्थमिदम् ॥

कुण्डपायिनामयनाख्ये सत्रे श्रूयते—उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोतीति । तन्मासाग्निहोत्रं नैयमिकाग्निहोत्राद्भिद्यते न वेति जरन्मीमांसकमतानुसारिणः पूर्वपक्षिणः श्रीकण्ठाचार्यमतानुसारिणः सिद्धान्तिनश्च विप्रतिपत्त्या संशये सति, सिद्धान्तमतानुसारिणो वादिनः प्रथमा कक्ष्या । मासाग्निहोत्रं नैयमिकाग्निहोत्रान्न भिद्यते, विधिवाक्यश्रुताग्निहोत्रनामत्वात्, यद्विधिवाक्यश्रुताग्निहोत्रनामकं न तन्नैयमिकाग्निहोत्राद्भिद्यते, यथा यवाग्वाग्निहोत्रं जुहोति इति श्रुतं यवागूगुणकमग्निहोत्रम् ।

उपसंहार:—

दृष्टं हि आकाशवत्सर्वगतश्च नित्य इति वचनमन्यूनतापरम् । इहापि मनुष्यगन्धर्वादिपर्यायस्थानानि अकामहतश्रोत्रियवाक्यानि मुक्तानुभाव्यस्य ब्रह्मानन्दस्य मनुष्यगन्धर्वाद्यानन्दान्यूनतापराणि दृष्टानि । न खलु ब्रह्मानन्दमनुभवन्मुक्तः कश्चित् मनुष्यगन्धर्वानन्दमात्रमनुभवन्नास्ते । सर्वेषां मुक्तानां निरतिशयब्रह्मानन्दानुभवसत्त्वात् । तस्मात्त्वदनुमानं बाधितविषयम्, न तु मदनुमानमिति सर्वे वैषयिकानन्दा लेशाः परब्रह्मानन्दस्येति सिद्धम् ॥

समूलश्रवणाश्लेषचित्रा भाद्रपदोत्तरा ।
नव्या नक्षत्रमालेयं प्रीत्यै सोमस्य निर्मिता ॥

इति श्रीभारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवर-सूनोरप्पयदीक्षितस्य कृतिर्वादनक्षत्रमालिका संपूर्णा

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे पूर्वोत्तरमीमांसाशास्त्रस्थाः सप्तविंशति विषयाः 'मासाग्निहोत्रवादः, हिंसिधात्वर्थवादः' इत्यादयः वाक्यार्थरूपेण स्पष्टं विचार्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे समग्रो ग्रन्थो विद्यते । मुद्रितश्च दृश्यते ॥

## No. (700) 1387 वादनक्षत्रमाला

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षितः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम्—$15\frac{1}{2}\times1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-177 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

3590 कोशवत् ।

उपसंहारः—

3590 कोशवत् ।

प्रतिपाद्यविषयः—

3590 कोशवत् ।

वक्तव्यविशेषः—

3590 कोशवत् ।

## No. (701) 169 वादनक्षत्रमाला

ग्रन्थकर्ता—अप्पय्यदीक्षित:
पत्रविशेष:—ताळपत्रात्मक:
प्रमाणम्—17×1¼ अङ्गुलानि
लिपि:—आन्ध्रलिपि:
पत्राणि—1-175

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—68
कालः (कोशस्य)—?
स्थिति:—समीचीना
समग्रोऽसमग्रो वा—असमग्र:

उपक्रमः—

3590 कोशवत् ।

उपसंहारः—

यथा घटगन्धेनैव घटो गन्धवानित्यादिव्यवहारनिर्वाहः कार्यः, न तु सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरस इति श्रुतिप्रतिपन्नब्रह्मगन्धेनेति नाप्रयोजकं मदनुमानम्, त्वदनुमानमानमेवाप्रयोजकमिति ॥

प्रतिपाद्यविषयः—

3590 कोशवत् ।

वक्तव्यविशेष:—

अस्मिन्कोशे प्रपञ्चसत्तानिराकरणवादे (26) सप्तमकक्ष्यापर्यन्तो ग्रन्थभागो विद्यते ॥

## No. (702) C 755 वादावलीखण्डनम्

ग्रन्थकर्ता—?
पत्रविशेष:—कागदपत्रात्मक:
प्रमाणम्—13¼×4 अङ्गुलानि
लिपि:—आन्ध्रलिपि:
पत्राणि—1-23

प्रतिपुटं पङ्क्तय:—10
प्रतिपङ्क्त्यक्षराणि—56
काल: (कोशस्य)—?
स्थिति:—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

सत्यज्ञानानन्दलक्ष्यं परिच्छेदविवर्जितम् ।
अस्पृष्टानर्थमनिशमाश्रये नृहरेः पदम् ॥

ननु कथमात्मन तस्यप्रत्यक्षादिसिद्धपरिच्छेदशून्यत्वं, पारमार्थिकताकवियदाद्यकत्वेन वस्तुतः परिच्छिन्नत्वादिति चेन्न; विमतं मिथ्या दृश्यत्वात् जडत्वात् परिच्छिन्नत्वात् शुक्तिरजतवदित्यादिजीवब्रह्माभेदपरश्रुत्यनुगृहीतबलवदनुमानबाधितविपर्येण प्रत्यक्षादिना वियदादेः पारमार्थिकत्वासिद्धेः । ननु किमिदं मिथ्यात्वं अनिर्वचनीय्यत्वं वा, असत्त्वं वा, सद्विविक्तत्वं वा प्रमाणाविषयत्वं वा, अप्रमाणविषयत्वं वा, अविद्यातत्कार्यान्यतरत्वं वा स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वं वा । नाद्यः, अनिर्वचनीय्यत्वस्य निर्वचनविरहरूपत्वे स्वाभ्युपगतव्यवहारविरोधात् ।

उपसंहारः—

न द्वितीय्यः; भिन्ने भेदस्थितिरिति पक्षक्षतेः, भेदसंबन्धं विना भिन्नत्ववाचोयुक्तिरयुक्तत्वात् । तत्संबन्धैरेव भिन्नत्वे केन भेदेन विशिष्टे तस्य भेदस्य स्थितिरिति नियामकाभावात् । तेषां कलहेनैकोऽपि भेदो न विशेत् । तथापि चेच्छूद्राजडोऽनन्तभेदानभ्युपेति तदाभ्युपेतु, यदि भेदपरंपरासं ... .... दमधिरोहेत् न द्वितीयो विरोधात् सर्वत्राप्यतिप्रसङ्गाच्च धर्मिणं परिरभ्य भेदो जायते अतो नोक्तदोष इति चेन्मैवम् । धर्मिणा सहैव धर्मोत्पत्तेरनभ्युपगमात्, अभ्युपगमे च उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति कल्पनावैयर्थ्यात् । गुणानां.... ।

प्रतिपाद्यविषयः—

जयतीर्थकृतवादावलीखण्डनपरेऽस्मिन्ग्रन्थे विमतं मिथ्येत्याद्यस्मदीयमिथ्यात्वानुमानोपरि कृतानि दूषणानि सप्रमाणं निरस्य द्वैतप्रपञ्चमिथ्यात्वसमर्थनपूर्वकं जीवब्रह्मणोरभेदः समर्थ्यते ॥

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः असमग्रो वर्तते । अमुद्रितश्च ज्ञायते ॥

## No. (703) 2035/16 वासनात्रयप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—5 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13×1¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—176-180 | समग्रोऽसमग्रो वा—समग्रः |

**उपक्रमः—**

इदानीं ज्ञानप्रतिबन्धकीभूतं वासनात्रयं निरूप्यते । तथा हि वासना त्रिविधा, लोकवासना देहवासना शास्त्रवासनाभेदात् । लोके समस्तजनाः मां न निन्देयुः सर्वदा स्तोत्रमेव कुर्युरिति अभिनिवेशो लोकवासनेत्युच्यते । एतल्लोकवासनाप्रतिबन्धनिवृत्तिः कदेत्याकाङ्क्षायामाह—सकलनिन्दापात्रं मा भूवमिति दृढनिश्चयस्येश्वरेणापि सम्पादयितुमशक्यतया अज्ञा मां निन्देयुस्स्तोत्रं वा कुर्युस्तन्निन्दया का हानिः स्तोत्रेण वा को लाभः । इत्यादिः ।

**उपसंहारः—**

तस्मादेवं विचार्य यः पुरुषः एतत्प्रतिबन्धत्रयं परित्यज्य आत्मप्रतिपादकशास्त्रार्थविचारेण ज्ञानं सम्पादयति स एव जीवन्मुक्त इति सकलवेदान्तसिद्धान्त इति सर्वमनवद्यम् ।

इति वासनात्रयप्रकरणं समाप्तम्

**प्रतिपाद्यविषयः—**

अस्मिन्ग्रन्थे लोकदेहशास्त्रवासनाभेदेन वासनात्रयस्वरूपं तन्निराकरणप्रकारश्च निरूपितः ।

**वक्तव्यविशेषः—**

अमुद्रितः ।

## No. (704) B 528/4 वासनाप्रतीकारदशकम्

ग्रन्थकर्ता—अमरेश्वरशास्त्री
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम् $7\frac{3}{4} \times 6\frac{1}{2}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—213–216

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ब्रह्माण्डदेवालयमध्यसंस्थपिण्डाण्डगर्भालयचित्तपीठे ।
विभासमानं विततं स्वकीयचैतन्यलिङ्गं शिवमाश्रयामः ॥

ये वेदमणिसंछन्नप्रणवोन्नतपीठगे ।
ताभ्यां श्रीदक्षिणामूर्तिपादुकाभ्यां नमो नमः ॥

ब्रह्मविद्यासंप्रदायश्रीगुरुभ्यो निरन्तरम् ।
नमो नमस्सूत्रकृद्भ्यो भाष्यकृद्भ्यो नमो नमः ॥

नमो वार्तिककारेभ्यष्टीकाकृद्भ्यो नमो नमः ।
नमः श्रीभामतीकृद्भ्यो ब्रह्मविद्भ्यो नमो नमः ॥

सर्वदुर्वासनात्यागप्रकारो मनसोऽधुना ।
ब्रह्मविश्रान्तिसिध्यर्थं दशश्लोक्या विचार्यते ॥

प्रातर्वैदिककर्मतस्तदनु सद्वेदान्तसच्चिन्तया
पश्चाद्भारतमोक्षधर्मकथया वासिष्ठरामायणात् ।
सायं भागवतार्थतत्त्वकथया रात्रौ निदिध्यासनात्
कालो गच्छतु नश्शरीरभरणं प्रारब्धकण्ठार्पितम् ॥

उपसंहारः—

आयुर्गच्छति पेटिकामिव जलं त्यक्त्वैव देहं जवात्
गच्छन्तीन्द्रियशक्तयोऽपि कुलटा यद्वन्नरं निर्धनम् ।
प्रज्ञा गच्छति दावदाहसमये नीडं मृगीव क्व वा
ज्ञात्वा सत्वरमाश्रयात्मपदवीं देहं वृथा मा कृथाः ॥

धैर्यैरावतशान्तिधेनुदमसन्मन्दारबृन्दं मुदा
मैत्र्याद्यप्सरसं विवेकतुरगं सन्तोषचिन्तामणिम् ।

आत्मज्ञानमहामृतं समरसं नैराश्यचन्द्रोदयम्
वेदान्तार्णवमादरादनुदिनं सेवस्व मुक्तिश्रियम् ॥
प्रसादाद्दाक्षिणामूर्तोच्छुल्याचार्यप्रसादतः ।
दुर्वासनाप्रतीकारदशकं रचितं मया ॥

वासनाप्रतीकारदशकं संपूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे कर्मानुष्ठानादिना रागद्वेषादिकं त्यक्तव्यमित्यनेन आत्मज्ञानप्रतिबन्धिनिरासपूर्वकं तत्साधनानुष्ठानं कर्तव्यमिति श्लोकदशकेन वर्ण्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च दृश्यते ॥

## No. (705) 999/4 वासुदेवमननम्

| | |
|---|---|
| ग्रन्थकर्ता—वासुदेवेन्द्रः | प्रतिपुटं पङ्क्तयः—5 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—14×1¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—74-130 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

योऽवतीर्ण इहाचार्यरूपेण यतिनां मुदे ।
श्रीमन्नारायणं वन्दे तं हरिं करुणानिधिम् ॥
मननाख्यं प्रकरणं वासुदेवयतीश्वरैः ।
रचितं विस्तरेणाद्य सङ्ग्रहेण प्रकाश्यते ॥
बालानामुपकाराय ममापि ज्ञानसिद्धये ।
तत्र श्रीबालगोपालकृष्णः सन्निहितो भवेत् ॥

इह खलु धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानां मध्ये मोक्ष एव परमपुरुषार्थः नित्यत्वात् न च पुनरावर्तत इति श्रुतेः। इतरेषां त्रयाणां न तथात्वम्। अनित्यत्वात्। तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति श्रुतेः॥

उपसंहारः—

अहं ब्रह्मास्मीति यत्परोक्षज्ञानं तदनुभवेन साक्षात्काररूपं यदपरोक्षज्ञानं एतच्च यः प्राप्नोति स एव "चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम" इति भगवत्पादाचार्यवचनात् कुटीचकबहूदकहंससन्न्यासिभ्योऽधिकतया पूजनीयः। स एव परमहंस इति निश्चित्य त्वमपि मदुक्तप्रकारेणात्मानं सम्यक् श्रुत्वा मत्वा ध्यात्वा साक्षात्कृत्य नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयब्रह्मरूपेण तिष्ठ। एतावदेव आचार्यैर्वक्तव्यम्। शिष्येण श्रोतव्यम्। इतः परं वक्तव्यं श्रोतव्यं च नास्तीति सिद्धम्॥

इति परमहंसपरिव्राजकाचार्यश्रीवासुदेवेन्द्रविरचिते मननाख्यप्रकरणे द्वादशवर्णकं

समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे स्थूलसूक्ष्मप्रपञ्चसृष्टिः, अनुबन्धचतुष्टयं, जीवस्वरूपं, आत्मानात्मविवेकः, तत्फलं, परमात्मस्वरूपं, अखण्डार्थश्च विचार्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च दृश्यते॥

## No. (706) C 424 वासुदेवमननम्

ग्रन्थकर्ता—वासुदेवेन्द्रः
पत्रविशेषः— कागदपत्रात्मकः
प्रमाणम्— $7 \times 4\frac{3}{4}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-73

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—24
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रम:—

999/4 कोशवत् ।

उपसंहार:—

999/4 कोशवत् ।

प्रतिपाद्यविषय:—

999/4 कोशवत् ।

वक्तव्यविशेष:—

999/4 कोशवत् ।

## No. (707) B 498 वासुदेवोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेष:—कागदपत्रात्मक: | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपि:—आन्ध्रलिपि: | स्थिति:—समीचीना |
| पत्राणि—1–7 | समग्रोऽसमग्रो वा—समग्र: |

उपक्रम:—

मू—ओं आप्यायन्त्विति शान्तिः ।

ओं नमस्कृत्य भगवान्नारदस्सर्वेश्वरं वासुदेवं पप्रच्छ । अधीहि भगवन्नूर्ध्वपुण्ड्रविधिम् । द्रव्यमन्त्रस्थानादिविधिं मे ब्रूहीति । तं होवाच भगवान् वासुदेवः । वैकुण्ठस्थानादुत्पन्नं मम प्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारितं विष्णुचन्दनं ममाङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनात गोपीचन्दनमाख्यातं । मदङ्गलेपनं पुण्यं चक्रतीर्थान्तःस्थितं चक्रसमायुक्तं पीतं वर्णं मुक्तिसाधनं भवति । अथ गोपीचन्दनं नमस्कृत्योद्धृत्य—

गोपीचन्दन पावन विष्णुदेहसमुद्भव ।
चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव ॥

भा—ऊर्ध्वपुण्ड्रविधिर्यस्यां प्राधान्येन प्रदर्श्यते ।
वासुदेवोपनिषदं व्याख्यास्ये तामिमां स्फुटम् ।

इह ब्राह्मणेषु.... ॥

उपसंहारः—

भा—बाहुमूलादिस्थानेषु तु न परमात्मावस्थानं योगशास्त्रेष्वप्युच्यते। अतस्तत्र गोपीचन्दनालेपनमनावश्यकमिति चेन्न; निर्गुणपरमात्माभिव्यक्तेरपि सगुणदेवताप्रसादसापेक्षत्वात्। बाह्वादिष्ववयवेषु सगुणदेवतानां विद्यमानत्वप्रसिद्धेश्च तत्तद्देवताप्रसादसिध्यर्थकतत्तध्यानकर्मणस्तत्तत्स्थानगोपीचन्दनधारणपूर्वकत्वमावश्यकमित्यवगन्तव्यम्।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ वासुदेवोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे गोपीचन्दनविधानं, ऊर्ध्वपुण्ड्रविधिश्च प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (708) B 375 विज्ञानतारावलिः

| | |
|---|---|
| ग्रन्थकर्ता—दक्षिणामूर्तिबुधः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—11 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–6 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

वन्देऽहमाचार्यपदारविन्दे
वन्दारुमन्दारलतायमाने।
ययोः प्रणामेन विधूतपापो
विमुच्यते दारुणकालपाशैः ॥

अन्तः परित्यक्तसमस्तधर्मो
बहिः सदानुष्ठितसर्वकर्मा।
सदा विरक्तस्सुजनानुरक्तो
विराजते ज्ञानकुटुम्बयोगी ॥

अज्ञानखिन्नानि मतानि लोके
बहूनि दृष्ट्वा कृततद्विवेकः ।
वेदान्तवाक्यार्थविचारधन्यो
जागर्ति चित्ते निजबोधरूपः ॥
प्रत्यक्परामर्शरसानुभूत्या
तृणीकृतान्यत्र रुचिप्रवाहः ।
आत्मानमानन्दयति क्रमेण
कालोचितं कर्म करोति विद्वान् ॥

उपसंहारः —

अनेकजन्मन्यधिगम्य शास्त्र-
मावर्तयन्नात्मनि सार्वकालम् ।
जिज्ञासमानः परमं रहस्यं
कश्चिन्नृणां कोटिषु सिद्धिमेति ॥
ज्ञानाद्विरक्तोऽपि कुटुम्बयोगी
दारांश्च पुत्राननुरञ्जयित्वा ।
यथा निजस्त्री परपुंप्रियापि
भर्तारमेवानुसरत्यवश्यम् ॥
....................................
....................................
दूर्वाङ्कुराणामिव नारिकेळ-
फलप्रसूतिर्बहुचित्रमेतत् ॥

श्रीदक्षिणामूर्तिबुधेन्द्रवक्त्रादुदीरिता ब्रह्मविदामभीष्टा ।
आचार्यराजेश्वरकण्ठदेशे विज्ञानतारावळिरर्पितासीत् ॥

सम्पूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मविदां आहारादिचेष्टावर्णनरूपेण परमात्मानुभवरूपं ज्ञानं स्तूयते ।

वक्तव्य विशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च दृश्यते ॥

## No. (709) 2582 विट्ठलेशीया लघुचन्द्रिकाव्याख्या

ग्रन्थकर्ता—विट्ठलेशोपाध्यायाः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-130

प्रतिपुटं पङ्क्तयः—5
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा— असमग्रः

उपक्रमः—

श्रीविट्ठलं गणेशानं शिवं वाग्देवतां गुरून् ।
प्रणम्य चन्द्रिकाव्याख्यां विदधामि यथामति ॥

इष्टदेवतानमस्कृतिरूपं मङ्गलं विघ्नविघातायाचरन् शिष्यशिक्षायै निबध्नाति—नम इति। नवघनश्यामः। अत एव कामेनापि कामितो यो देहस्तद्वत इत्यर्थः। न चैवं "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इति व्युत्पत्तिविरोध इति वाच्यम्; प्रकृते मत्वर्थीयस्यावयवसौन्दर्यरूपप्राशस्त्यार्थकतया बहुव्रीहेस्तदर्थाप्रतिपादकत्वेन तद्विरोधविरहात्। न केवलमिष्टलाभार्थमेव तं नमस्कुर्मः अपि तु तदीयसौन्दर्यादिगुणश्रवणजनितभक्त्यापीति भावः ॥

उपसंहारः—

अत्र परमतेऽपि शुक्तिरूप्यमेकं प्रातिभासिकं पक्षीकृत्यापरेण तेन रज्जुसर्पादिदृष्टान्तेनोक्तलक्षणरूपहेतुना सदसद्रूपेतरभेदः साधनीयः न त्वितरसामान्यभेदः। रज्जुसर्पादौ व्यभिचारात्। नापि प्रातिभासिकसामान्यं पक्षीकृत्य तदितरभेदः साध्यः, अन्वयदृष्टान्ताभावेनान्वयव्याप्तेरभावात्। घटत्वादेस्सत्त्वे विवादेन दृष्टान्तत्वासंभवात्। व्यतिरेकव्याप्तेश्चानुमानाङ्गत्वानुपगमादिति बोध्यम्। एतत्सूचनायैवेतरेत्यनुक्त्वा विजातीयेत्युक्तमिति शिवम् ॥

इति प्रथममिथ्यात्वनिरुक्तिटिप्पणी

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे लघुचन्द्रिकाविवरणविचारः।

वक्तव्यविशेषः—

प्रथममिथ्यात्वान्तो भागः। मुद्रितश्च।

## No. (710) C 1146 विट्ठलेशीया ("लघुचन्द्रिकाव्याख्या।")

| | |
|---|---|
| ग्रन्थकर्ता—विट्ठलेशोपाध्यायाः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13×4 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि 462 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

श्रीविट्ठलं गणेशानं शिवौ वाग्देवतां गुरुन्।
प्रणम्य चन्द्रिकाव्याख्यां विदधामि यथामति॥

श्रीः परब्रह्मरूपविषयप्रयोजनं परममङ्गळरूपमाह मूले—मायेति। श्रुतिशिखोत्थाखण्डधीगोचरः—श्रुतीनां कर्मोपासनाकाण्डरूपाणां उपकार्यत्वात् शिखेव मुख्यं यन्महावाक्यं तज्जन्यसंसर्गाविषयकमनोवृत्तिगोचरो विष्णुर्व्यापकं जीवस्वरूपं मोक्षं प्राप्त इव स्वयं विजयते प्रकाशसंबन्धं विनैव प्रकाशते प्रकाशाभिन्न इत्यर्थः॥

उपसंहारः—

विषयीक्रियते—इदं रजतं जानामीत्यनुभवबलादिति शेषः। उक्तभ्रमविषयताश्रयत्वेन भ्रमप्रत्यक्षेण गृह्यते इति समुदायार्थः। तादृशम्—पुरोवर्तिशुक्तितादात्म्यापन्नमेव। ननु अबाधितः प्रमानुभव एव विषयसाधकः, न तु बाधितो भ्रम इत्यत आह—ज्ञानस्येति॥

प्रतिपाद्यविषयः—

2582 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितो जडत्वनिरुक्त्यन्तभागः (यावन्मुद्रितः) वर्तते।

## No. (711) B 841 विरोधवरूधिनी

| | |
|---|---|
| ग्रन्थकर्ता—उमामहेश्वरः | प्रतिपुटं पङ्क्तयः—22 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-48 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

परभाष्यबलं च्छेत्तुं विरोधानां वरूथिनीम् ।
उमामहेश्वराख्योऽहं कुर्वे वेल्लालवंशजः ॥

भगवता हि ब्रह्ममीमांसाशास्त्रकारेण व्यासेन "विप्रतिषेधाच्चासमंजसम्" इत्यस्मिन्सूत्रे विप्रतिषेद्धार्थकथनं सांख्य(दर्शना)सामञ्जस्ये कारणमित्यभाणि ।

अतः शतं विरोधानां भाष्ये रामानुजेरिते ।
दुरुद्धरं हरेणापि हरिणापि निरूप्यते ॥

"शास्त्रयोनित्वा" दित्यत्र हि रामानुजीयमेतदधिकरणशरीरम् ।

तदिदं कारणं ब्रह्म सिध्यत्येवानुमानतः ।
अतो विचार्या वेदान्ता नैतत्सिध्यानुवादिनः ॥
नैतत्साध्यानुमानाद्धि कर्त्रैक्यादि न सिध्यति ।
अतस्तत्कारणं ब्रह्म वेदान्तैकप्रमाणकम् ॥

....

उपसंहारः—

किं चाखण्डलार्जुनादीनां भेदस्य चाभेदस्य तेजस्तिमिरयोरिव विरोधो नियतः । पौर्वापर्यं च नियतम् । इत्थं नियतपौर्वापर्यस्थलेऽपि अपच्छेदन्यायमङ्गीकुर्वन् अपच्छेदन्यायस्त्वनियतविरोधपौर्वापर्यविषय एवेति प्रतिजानानः कथं न लज्जस इति च ।

इत्युमामहेश्वरपण्डितविरचितायां रामानुजभाष्यभञ्जिन्यां विरोधवरूथिन्यां सप्तविंशो विरोधः ।

सप्तविंशतिरेवात्र विरोधाः प्रकटीकृताः ।
अवशिष्टा विभाव्यन्तां चन्द्रिकाख्ये निबन्धने ॥
विप्रकीर्णा सुविद्याय यद्यप्येते निबन्धने ।
तथापि तत उद्धृत्य प्रत्ययार्थं प्रदर्शिताः ॥
विरोधास्त्वेत एवालं परभाष्यविनष्टये ।
किमनेकैः कशाघातैर्मुमुक्षोः स्वर्णहारिणः ॥
विरोधानां वरूथिन्या परभाष्यबलं हतम् ।
निःशङ्कातङ्कमद्वैतसाम्राज्यमनुभूयताम् ॥

इति निर्गुणब्रह्ममीमांसा-तत्त्वचन्द्रिका-भागवतचम्वाद्यनेकमहा-निबन्धनकर्त्रा अभिनवकाळिदासापरनाम्ना वेल्लाल उमामहेश्वरपण्डित विरचितायां विरोधवरूथिन्यां सप्तविंशो विरोधः ॥

विरोधवरूथिनीग्रन्थः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे श्रीरामानुजाचार्यकृत श्रीभाष्योपरि पूर्वापरविरोधान् प्रदर्श्य, तदीयं भाष्यमनादेयमित्यंशः स्पष्टीक्रियते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। (प्रयागक्षेत्रे) मुद्रितः अत्यन्त-दुर्लभ्य इति ज्ञायते।

## No. (712) 2236 विरोधवरूथिनी

ग्रन्थकर्ता—उमामहेश्वरः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\frac{1}{4} \times 1\frac{1}{3}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-46

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

B 841 कोशवत्।

उपसंहारः—

B 841 कोशवत्।

प्रतिपाद्यविषयः—

B 841 कोशवत्।

वक्तव्यविशेषः—

B 841 कोशवत्।

## No. (713) B 75/2 विवरणम् (पञ्चपादिका)

| | |
|---|---|
| ग्रन्थकर्ता—प्रकाशात्मा | प्रतिपुटं पङ्क्तयः—21 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$7\frac{3}{4}\times6$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–395 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

पालने विमलसत्त्ववृत्तये जन्मकर्मणि रजोजुषे लये।
तामसाय जगतः पराकृतद्वैतजालवपुषे नमस्स्तते॥ (1–7)

विदितसकलवेद्यैर्न प्रशंसन्ति लोके ग्रथितमपि महद्भिः किं पुनर्मादृशेन।
इति विफलसमेऽस्मिन् वाङ्मयेऽहं प्रवृत्तः स्वमतिविमलतायै क्षन्तु-
मर्हन्ति सन्तः॥ (8)

प्रारीप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचार-परिपालनाय चाभिलषितदेवतापूजानमस्कारः कर्तव्यः शास्त्रार्थश्च तत्त्वं-पदार्थविवेकोपायलभ्यः प्रत्यग्ब्रह्मणोरेकत्वलक्षणः संक्षेपतो दर्शनीयः कृत्स्नस्य भाष्यस्य तत्र तात्पर्यकथनायेति तदुभयं श्रुत्यर्थाभ्यां संक्षेपतो दर्शयति—अनाद्यानन्देति। कृत्स्नस्य भाष्यस्य ब्रह्मात्मैकत्वे तात्पर्यमत्र-प्रदर्शितम् उत्तरत्र विभज्य तात्पर्यप्रदर्शनात्। अत्र देवतागुरुविषयपूजा-नमस्काराद्युपबृंहिता भक्तिर्वक्तुरुक्तप्रयोजनसम्पादिन्यपि श्रोतॄणामपि विद्याङ्गभावं प्रतिपद्यत इति वाङ्मनःकायप्रणिधानैर्गुरूनभिपूजयति—नमः श्रुतिशिरःपद्मेत्यादिभिस्त्रिभिः श्लोकैः॥

उपसंहारः—

तृतीयश्लोकं व्याचष्टे। अद्वितीयनिरतिशयानन्दचैतन्यैकतानसर्वज्ञ-सर्वेश्वरसर्वशक्तिनिरवयवस्वच्छासङ्गप्रत्यग्भूतब्रह्मात्मन्यपरोक्षानुभवा-त्प्राग्देहात्मप्रत्ययवत्सर्वो व्यवहारो यथादर्शनमुपपद्यते। तस्मिंश्चापरो-क्षेऽवभासमाने प्रमात्रादिबाधात्सर्वो व्यवहारो निवर्तत इति श्लोकार्थः॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्यानुभवपूज्यपादशिष्यस्य प्रकाशात्मभगवतः कृतौ पञ्चपादिकाविवरणे समन्वयसूत्रं समाप्तम्। समाप्तं च विवरणम्

प्रतिपाद्यविषयः—

पद्मपादाचार्यकृतपञ्चपादिकाविवरणविचारः ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च दृश्यते ।

## No. (714) 2197 विवरणम् (पञ्चपादिका)

| | |
|---|---|
| ग्रन्थकर्ता—प्रकाशात्मा | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—66 |
| प्रमाणम्—$17\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–235 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 75/2 कोशवत् ।

उपसंहारः—

B 75/2 कोशवत् ।

प्रतिपाद्यविषयः—

B 75/2 कोशवत् ।

वक्तव्यविशेषः—

B 75/2 कोशवत् ।

## No. (715) 3605 विवरणम् (पञ्चपादिका)

| | |
|---|---|
| ग्रन्थकर्ता - प्रकाशात्मा | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—84 |
| प्रमाणम्—$17\frac{3}{4} \times 1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–123 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

B 75/2 कोशवत्।

उपसंहारः—

B 75/2 कोशवत्।

प्रतिपाद्यविषयः—

B 75/2 कोशवत्।

वक्तव्यविशेषः—

B 75/2 कोशवत्।

## No. (716) 3579 विवरणपदयोजना

| | |
|---|---|
| ग्रन्थकर्ता—धर्मराजाध्वरी | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—72 |
| प्रमाणम्—$18\frac{1}{2} \times 1\frac{5}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—अत्यन्तशिथिला |
| पत्राणि—1–88 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

यदध्यासेन निखिलं विश्वं सद्व्यवहारभाक्।
तदस्म्यहं परं ब्रह्म सच्चिदानन्दविग्रहम्॥ (1)
योगिनां गति ....... ....................... ...
.........................................................

प्रेक्षावत्प्रवृत्त्यङ्गविषयप्रयोजने दर्शयन्निर्विघ्न ...... तदर्थं मङ्गळमाचरितं शिष्यशिक्षायै ग्रन्थतो निबध्नाति—अनादीति। ....... .................... ........ दः शास्त्रविषय इति सूचयितुमाह—आत्मन इति। नन्वहमस्मीत्यनुभवेन जीवस्य सत्यत्वं ब्रह्मणोऽतथात्वात्कथं तयोरभेद इत्यत आह—सदिति। असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति। .......त्या ब्रह्मणोऽपि सत्यत्वमिति भावः॥

उपसंहारः—

मन्त्रार्थवादादिष्विति। अनेनैव सूत्रेण वेदार्थस्यार्थवादादिलक्षणात्वाभावे सिद्ध तत्कोटिकविप्रतिपत्तिर्न स्यादित्यर्थः। इष्टापत्तिमाशङ्कयाह— सा चेति। उत्तरत्रेति। अर्थवादाधिकरणादावित्यर्थः। उपसंहरति— अत इति। पूर्वोक्तेति। किम .... ............ ....... धर्मः उत चैत्यवन्दनादीति भट्टोक्तप्रकारेणेत्यर्थः।

........................ शेन्द्रविरचितायां टीकापदयोजनायां द्वितीयवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

पञ्चपादिकाव्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः वर्णकद्वयं विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (717) 3526 विवरणप्रमेयसङ्ग्रहः

| | |
|---|---|
| ग्रन्थकर्ता—विद्यारण्यः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—40 |
| प्रमाणम्—$10\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-54, 1-101 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
स्वप्नात्रयानन्दयदत्र जन्तून्
सर्वात्मभावेन तथापरत्र।
यच्छंकरानन्दपदं हृदब्जे
विभ्राजते तद्यतयो विशन्ति॥
भाष्यटीकाविवरणतन्निबन्धनसङ्ग्रहः।
व्याख्यानव्याख्येयभावक्लेशहानाय रच्यते॥
नित्यस्वाध्यायविधितोऽधीत्य वेदान्तमस्य ये।
संशेरतेऽर्थे ते सूत्रभाष्यादिष्वधिकारिणः॥

नित्यो हि स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिः। ब्राह्मणेन निष्कारणो धर्मः सषडङ्गो वेदोऽध्येयो ज्ञेयश्चेति वचनात्। काम्यत्वे वेदाध्ययनस्यान्योन्याश्रयता।

उपसंहारः—

तस्माद्धर्मब्रह्मभेदादेवानयोर्मीमांसयोर्भेदः। तदेवं विधिशङ्काया अप्यभावान्निर्विघ्नो ब्रह्मणि वेदान्तसमन्वय इत्यशेषमतिमङ्गलम्।

संगृहीतं विवरणं सहानेकैर्निबन्धनैः।
टीकायास्तं विना लोकाः क्रीडन्त्वत्र यथासुखम्॥

महतां हृदयं बोद्धुमशक्तोऽप्यतिभक्तितः।
अकार्षं ग्रन्थमेतेन प्रकाशात्मा प्रसीदतु॥

यद्विद्यातीर्थगुरवे शुश्रूषान्या न रोचते।
तदस्त्वेषा भक्तियुक्ता श्रीविद्यातीर्थपादयोः सेवा॥

इति विवरणप्रमेयसंग्रहे चतुर्थसूत्रे द्वितीयवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

प्रकाशात्मयतिकृतपञ्चपादिकाविवरणगताः विषयाः सुखबोधार्थमस्मिन्ग्रन्थे संक्षिप्यन्ते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते, मुद्रितश्च (वाराणस्यां) दृश्यते।

## No. (718) C 1126 विवरणप्रमेयसङ्ग्रहः

ग्रन्थकर्ता—विद्यारण्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{3}{4} \times 4\frac{1}{2}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-86, 1-21, 1-34

प्रतिपुटं पङ्क्तयः—13
प्रतिपङ्क्त्यक्षराणि—38
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

3526 कोशवत् ।

उपसंहारः—

तदुपायमन्तर्णीतविचारमुपलक्ष्य ब्रह्मज्ञानं प्रत्यदृष्टस्यापि साधनत्वाद्विधिमुपपद्यैतत्साधनताविधिपक्षं स्वीकृत्य मुमुक्षुणा ब्रह्मानुभवाय विचारः कर्तव्य इति श्रौतो वाक्यार्थः कथनीयः। कथिते च तस्मिन् संबन्धविषयप्रयोजनान्यर्थादवगम्यन्त इति स्थितिः ॥

इत्याचार्यवर्यविद्यारण्यमुनिकृते विवरणप्रमेयसङ्ग्रहे तृतीयवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

3526 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितो वर्णकत्रयं विद्यते ॥

## No. (719) C 345 विवरणप्रमेयसङ्ग्रहः

ग्रन्थकर्ता—विद्यारण्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—12 × 4 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–25

प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—48
कालः (कोशस्य)—?
स्थितिः - समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

आत्मा श्रोतव्य इत्यस्य विधेर्वेदान्तवाक्यगः ।
विचारो विषयः साक्षात् स निरूप्योऽत्र वर्णके ॥
वेदान्तव्यवधानेन ब्रह्मैक्यं विषयो विधेः ।
निरूपितः स पूर्वस्मिन् वर्णके सप्रयोजनः ॥
वेदान्ता यदि शून्यास्स्युः विषयेन फलेन वा ।
तदा दूरे तद्विचारोऽतस्तयोः पूर्वमीरणम् ॥
संभाविते विचारेऽथ पूर्वमीमांसया स किम् ।
गतो न वेति सन्देहे निर्णयोऽत्राभिधीयते ॥

ननु वेदान्तानामर्थनिर्णयाय न्यायकलापोऽपेक्षितः स चाथातो धर्मजिज्ञासेत्यादिसूत्रैः सूचितः ।

उपसंहारः—

तदेवं प्रथमद्वितीयसूत्रपर्यालोचनया कार्यनिष्ठो वेदभागो विचार्यतया प्रक्रान्तो विचारितश्च न वस्तुतत्त्वनिष्ठः । तस्मादगतार्थत्वाद्वस्तुतत्त्वनिष्ठं वेदभागं विचारयितुमुत्तरमीमांसारब्धव्येति सिद्धम् ॥

इति विवरणप्रमेयसङ्ग्रहे विद्यारण्यमुनिकृते प्रथमसूत्रे द्वितीयवर्णकं समाप्तम्

प्रतिपाद्यविषयः—

3526 कोशवत् ।

वक्तव्यविशेषः —

अस्मिन्कोशे प्रथमसूत्रे द्वितीयवर्णकमात्रं विद्यते ॥

## No. (720) 3721/2 विवरणप्रमेयसङ्ग्रहः

ग्रन्थकर्ता—विद्यारण्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$19\frac{1}{2} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—133-173

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—26
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा— असमग्रः

उपक्रमः—

अपरे पुनः शरीरेन्द्रियमनोविज्ञानशून्यव्यतिरिक्तं स्थापितं संसारिणं कर्तारं भोक्तारमात्मानमाहुः । न च शून्येऽहंप्रत्यय उपपद्यते । वन्ध्यापुत्रादावपि तत्प्रसङ्गात् ॥

उपसंहारः—

3526 कोशवत् ।

प्रतिपाद्यविषयः—

3526 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितश्चतुर्थवर्णके आत्मस्वरूपनिरूपणप्रभृति समग्रो ग्रन्थभागो विद्यते ॥

## No. (721) 231 विवरणभावप्रकाशिका

ग्रन्थकर्ता—नृसिंहाश्रमी
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—15 × 1¼ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–108

प्रतिपुटं पङ्क्तयः—5
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

यत्सत्त्वचैतन्यसुखानुलिप्तं विश्वं हितं सत्स्फुरतीव भाति ।
स मां निरस्ताखिलभेद आत्मा पायादबोधाद्द्विपदो नृसिंहः ॥
श्रीमद्गुरुपदद्वन्द्वं अद्वैतात्मप्रसिद्धये ।
हृदये सदयं भू(भा)या निगूढात्मा . . . . परम् ॥
श्रीमद्गुरुकृपालेशाद्द्वैतब्रह्मगोचरे ।
क्वचित्क्वचिद्विवरणे गूढो भावः प्रकाश्यते ॥

निर्विशेषब्रह्मप्रतिपादकग्रन्थकरणस्य तत्प्रतिपत्तिं विनायोगात् तस्याश्च "यमेवैष वृणुते तेन लभ्य" इत्यादि शास्त्रात्परमात्मप्रसादाधीनत्वप्रतीतेर्विषयप्रयोजने दर्शयन् परमात्मानं नमस्करोति—पालन इति । सते परमात्मने । तस्यैव कदाचिदपि केनापि बाधाभावेन तदयोग्यतया सत्पदार्थत्वात् । नमः स्वापकर्षबोधानुकूलो व्यापारविशेषोऽस्त्विति शेषः ॥

उपसंहारः—

न च परम्परासंबन्धेन प्रमात्वं तत्रास्तीति वाच्यम् ; तदाश्रयप्रमाया घटाद्यवृत्तित्वेन प्रमात्वे तदयोगात् प्रमात्वं घटादिर्वा प्रमेति ज्ञानाभावे तस्य तद्वृत्तित्वायोगाच्च प्रमात्वस्य विषयघटकस्यैकस्यासंभवात् अत एव वाच्यत्वादिकमपि नै.... ।

अथैवं केवलान्वयी—न स्यात्, ओमिति ब्रूमः; नन्वत्यन्ताभावप्रतियोगित्वं कुतश्चिद्व्यावृत्तं, न वा, आद्ये यतो व्यावृत्तं तस्यैवात्यन्ताभावप्रतियोगित्वात्केवलान्वयित्वं न चेदत्यन्ताभावप्रतियोगित्वं सर्वत्रास्तीति तदेव केवलान्वयीति चेन्न; स्वस्मादेव व्यावृत्तत्वात् ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे पञ्चपादिका विवरणवाक्यानि अत्यन्तनिगूढार्थानि कानिचित् स्पष्टं विव्रियन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे अध्यासलक्षणव्याख्यानपर्यन्तः ग्रन्थभागः विद्यते ॥ अमुद्रितश्च दृश्यते ॥

## No. (722) A 547 विवरणभावप्रकाशिका

| | |
|---|---|
| ग्रन्थकर्ता—नृसिंहाश्रमी | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—18 |
| प्रमाणम्—13×8 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–101 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

231 कोशवत् ।

उपसंहारः—

231 कोशवत् ।

प्रतिपाद्यविषयः—

231 कोशवत् ।

वक्तव्यविशेषः—

231 कोशवत् ।

## No. (723) C 2009 विवेकचूडामणिः

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम् —$7\frac{1}{4} \times 3$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि — 1-45

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—?
स्थितिः —शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

सर्ववेदान्तसिद्धान्तगोचरं तमगोचरम् ।
गोविन्दं परमानन्दं सद्गुरुं प्रणतोऽस्म्यहम् ॥

जन्तूनां नरजन्म दुर्लभमतः पुंस्त्वं ततो विप्रता
तस्माद्वैदिकधर्ममार्गपरता विद्वत्त्वमस्मात्परम् ।
आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना संस्थिति-
र्मुक्तिर्नो शतजन्मकोटिसुकृतैः पुण्यैर्विना लभ्यते ॥

दुर्लभं त्रयमेवैतद्देवानुग्रहहेतुकम् ।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥

लब्ध्वा कथंचिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतपारदर्शनम् ।
यस्त्वात्ममुक्त्यै न यतेत मूढधीः स आत्महा स्वं विनिहन्त्यसद्ग्रहात् ॥

उपसंहारः—

इत्याचार्यस्य शिष्यस्य संवादेनात्मलक्षणम् ।
निरूपितं मुमुक्षूणां सुखबोधोपपत्तये ॥

हितमिममुपदेशमाद्रियन्तां विहितनितान्तऽनिरस्तसमस्तदोषाः ।
भवसुखविरताः प्रशान्तचित्ताः श्रुतिरसिका यतयो मुमुक्षवो ये ॥

संसाराध्वनिदाघभानुकिरणप्रोद्भूतदाहव्यथा-
खिन्नानां जलकाङ्क्षया मरुभुवि भ्रान्त्या परिभ्राम्यताम् ।
अत्यासन्नसुधाम्बुधिं सुखकरं ब्रह्माद्वयं दर्शय-
त्येषा शंकरभारती विजयते निर्वाणसन्दायिनी ॥

ओंतत्सदिति श्रीमत्परमहंसेत्यादिश्रीमच्छंकरभगवत्पादपूज्यकृतौ विवेकचूडामणिप्रकरणम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे साधनचतुष्टयं, मोक्षहेतवः, स्थूलसूक्ष्मकारणशरीराणि, बन्धस्वरूपं, मोक्षोपायः, पञ्चकोशस्वरूपं, साक्षिस्वरूपं, ब्रह्मस्वरूपं, समाधिः, जीवन्मुक्तिलक्षणं, ब्रह्मणोऽद्वितीयत्वं, ब्रह्मभावापत्तिरूपो मोक्षश्च विचार्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च (मैसूर्) ज्ञायते ॥

## No. (724) 696/1 विवेकसारः

| | |
|---|---|
| ग्रन्थकर्ता—शंकरानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—120 |
| प्रमाणम्—$17\frac{3}{4} \times 1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-64 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सत्यं ज्ञानमनन्तं यत्केवलानन्दमद्वयम् ।
निष्कलं निष्क्रियं शान्तं ब्रह्म तत्समुपास्महे ॥
प्रणिपत्य शिवं साम्बं गणनाथं सरस्वतीम् ।
विवेकसारं वक्ष्यामि हितवु ....................... ॥
साधूनां शान्तचित्तानां मुमुक्षूणां द्विजन्मनाम् ॥
अनेकजन्मार्जितपुण्यपुञ्जैरेवात्र जन्तोर्नरजन्मसिद्धिः ।
तत्रापि विप्रत्वमतीव दुर्लभं न लभ्यते कोटिभवैरपीह ॥
कोट्यन्तजन्मार्जितपुण्ययोगात् प्राप्तं द्विजत्वं किल सत्कुलत्वम् ।
तयोः फलं सद्गुरुसन्निधाने वेदाद्यधीतिर्नियमेन पुंसाम् ॥

उपसंहारः—

निरुक्तज्ञानसंपत्त्या विमुक्तो ब्रह्मवित्तमः ।
ब्रह्मीभूय स्वयं ब्रह्मरूपेणैवावतिष्ठते ॥

विप्रत्वस्य फलं सशास्त्रनिगमाधीतिस्त्वधीतेः फलं
नित्यानित्यविवेचनस्फुटतरं श्रुत्या च युक्त्या सताम् ।
नित्यानित्यविवेचनस्य तु फलं वैराग्यमेवोत्तमं
वैराग्यस्य फलं क्रियासमुदयन्यासोऽस्य बोधः फलम् ॥

ब्रह्मज्ञानफलं सतां ह्युपरतिस्तस्याः सौख्यं फलं ।
पूर्वार्धस्तु निरर्थको भवति न स्यादुत्तरार्धो यदि ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वती-
विरचितो विवेकसारः संपूर्णः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे—नित्यानित्यवस्तुविवेकः, अविरक्तनिन्दा, साधनविवेकः, न्यासत्रैविध्यं, अहमर्थविचारः, शून्यतानिरासः, स्वरूपसुख विचारः, मुक्तिविचारः, दुःखोदयप्रकारः, अर्थप्रकाशकविचारः, देहत्रयनिरूपणं, प्रतिमादौ देवताबुद्धिनिरासः, ऐकात्म्यविचारः, द्वैताद्वैतवादः, अद्वैतसिद्धान्त इत्यादयो विषयाः सम्यक्प्रतिपाद्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च ।

## No. (725) B 364 विवेकसारः

| | |
|---|---|
| ग्रन्थकर्ता— शंकरानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेष —कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–235 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

696/1 कोशवत् ।

उपसंहारः—

696/1 कोशवत् ।

प्रतिपाद्यविषय:—

696/1 कोशवत् ।

वक्तव्यविशेष:—

696/1 कोशवत् ।

## No. (726) 4659/1 विवेकसारः

| | |
|---|---|
| ग्रन्थकर्ता—आदिशेषार्यः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—12½×1 अङ्गुलानि | काल: (कोशस्य)—? |
| लिपि:—ग्रन्थलिपि: | स्थिति:—समीचीना |
| पत्राणि—30-94 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

वन्दे वन्दारुमन्दारमिन्दुचूडात्मजं सदा ।
वृन्दारकादिसन्दोहवन्दितं सिन्धुराननम् ॥
परापश्यन्त्यादिदेहां प्रणताभीष्टदायिनीम् ।
सत्यज्ञानानन्दमयीं ध्यायेदाद्यां सरस्वतीम् ॥
यन्मायया जगत्सर्वं भासते भूतभौतिकम् ।
तन्नौमि परमात्मानं सत्यज्ञानादिरूपिणम् ॥
मूढान्विवेकिनः कृत्वा लोके सर्वोपदेशतः ।
य आस्ते यतिराजस्तं कैवल्येन्द्रं गुरुं भजे ॥
अनुग्रहार्थं मर्त्यानां भाष्याद्यनधिकारिणाम् ।
विवेकसारः श्रोतॄणां रच्यते विदुषां मुदे ॥

इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधेष्वपि पुरुषार्थेषु मोक्ष एव परमपुरुषार्थः। तस्य निरतिशयत्वेन नित्यत्वेन च धर्माद्यपेक्षया अभ्यर्हितत्वात्। धर्मादीनां सातिशयत्वस्य प्रत्यक्षसिद्धत्वात् इत्यादि—

उपसंहारः—

अखण्डात्मानमेवाहमित्येवं यो विजज्ञिवान् ।
स सर्वसंसृतेर्मुक्तो ब्रह्मानन्दं समश्नुते ।
किमनेन बहूक्तेन निर्णीतौ द्वौ महात्मभिः ।
अविचाराद्धि संसारो विचारान्मोक्ष इत्यमू ॥

प्रमादादप्रमादाद्वा यदज्ञानान्मयेरितम् ।
तत्क्षम्यन्तु समालोक्य पण्डिताः समदर्शिनः ॥

इति श्रीमद्रायपल्लीवंशतिलककोनेरिसूरिसूनुना नारणाम्बागर्भशुक्तिमुक्तामणिना आदिशेषशास्त्रिणा वेदान्तशास्त्रादुद्धृते विवेकसारे द्वादशवर्णकम् । समाप्तश्चायं विवेकसारः ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे द्वादशवर्णकानि विद्यन्ते । तत्र प्रथमे अध्यारोपापवादौ उत्पत्तिलक्षणं विचार्यते, द्वितीये अधिकारिलक्षणम्, तृतीये प्रपञ्चस्वरूपम्, चतुर्थे दुःखस्वरूपम्, पञ्चमे कर्मस्वरूपम्, षष्ठे रागादिस्वरूपम्, सप्तमे आत्मानात्मविवेकः, अष्टमे आत्मनश्शरीरत्रयवैलक्षण्यम्, नवमे अवस्थात्रयसाक्षिस्वरूपम्, दशमे आत्मनः पञ्चकोशव्यतिरिक्तत्वम्, एकादशे सच्चिदानन्दस्वरूपम, द्वादशे अखण्डस्वरूपं च विचार्यते ॥

वक्तव्यविशेषः—

अमुद्रितोऽयं ग्रन्थः ।

## No. (727) 2035/1 विवेकसारः

| | |
|---|---|
| ग्रन्थकर्ता—आदिशेषशास्त्री | प्रतिपुटं पङ्क्तयः—5 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–97 | समग्रोऽसमग्रो वा —समग्रः |

उपक्रमः—

बोधानन्दघनं निरस्तसकलं कारुण्यपूर्णेक्षणं
मूढानामुपदेशकं च सततं पापात्मनां पापहम् ।
वैराग्यं च विरागिणां सुखकरं सम्पादकं सर्वदा
श्रीमद्देशिकवासुदेवयतिनं मूढात्मकोऽहं भजे ॥

यस्यात्मभूतस्य गुरोः प्रसादादहं विमुक्तोऽस्मि शरीरबन्धात्।
सर्वोपदेष्टुः पुरुषोत्तमस्य तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥
मूढानविवेकिनः कृत्वा लोके सर्वोपदेशकः।
यस्तिष्ठति च तं श्रीमद्वासुदेवगुरुं भजे ॥
अनुग्रहार्थं मर्त्यानां भाष्याद्यनधिकारिणाम् ।
विवेकसारः श्रोतॄणां रच्यते कृपया मया ॥
शेषं 4659/1 कोशवत्—

उपसंहारः—

4659/1 कोशवत् ।

प्रतिपाद्यविषयः—

4659/1 कोशवत्।

वक्तव्यविशेषः—

4659/1 कोशवत् ।

## No. (728) 2662 विवेकसारः

ग्रन्थकर्ता—आदिशेषशास्त्री
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$17\frac{1}{2} \times 1\frac{1}{3}$ अङ्गुलानि
लिपिः – आन्ध्रलिपिः
पत्राणि—1–64

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—74
कालः (कोशस्य) —?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

2035/1 कोशवत् ।

उपसंहारः —

तच्च विचार्यमाणे नास्ति, आत्मनः अद्वितीयत्वेन अन्यस्य भोग्यवस्तुनः अभावात् अभोक्तृत्वमेव। एवं विचार्य अद्वितीयः, असङ्गी, अपरिच्छिन्नः अकर्ता अभोक्ता यस्स एवाहमिति यो जानाति स एव मुक्त इति सर्ववेदान्तसिद्धान्तमिति सर्वं रमणीयम् ॥

प्रतिपाद्यविषयः—

4659/1 कोशवत्।

वक्तव्यविशेषः—

4659/1 कोशवत्। अस्मिन्कोशे अज्ञानप्रकरणं, ज्ञानाज्ञानप्रकरणं चाधिकं विद्यते। तस्मिन्नपि कोशे इदं प्रकरणद्वयं विद्यते परन्तु तत्र पृथग्लिखितम्॥

## No. (729) A 729 विवेकसारः

ग्रन्थकर्ता—आदिशेषशास्त्री
पत्रविशेष:—कागदपत्रात्मकः
प्रमाणम्—$13\frac{1}{2}\times8\frac{1}{4}$ अङ्गुलानि
लिपि:—कन्नडलिपि:
पत्राणि—101
प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः – समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

बोधानन्दघनं निरस्तसकलं कारुण्यपूर्णेक्षणं
मूढानामुपदेशकं च सततं पापात्मनां पापहं।
वैराग्यं च विरागिणां सुखकरं सम्पादकं सर्वदा
श्रीमद्देशिकवासुदेवयतिनं मूढात्मकोऽहं भजे॥

यस्यात्मभूतस्य गुरोः प्रसादादहं विमुक्तोऽस्मि शरीरबन्धात्।
सर्वोपदेष्टुः पुरुषोत्तमस्य तस्यांघ्रिपद्मप्रणतोऽस्मि नित्यम्॥

मूढान्विवेकिनः कृत्वा लोके सर्वोपदेशकः।
यस्तिष्ठति च तं श्रीमद्वासुदेवगुरुं भजे॥
अनुग्रहार्थं मर्त्यानां भाष्येऽनधिकारिणाम्।
विवेकसारः श्रोतॄणां रच्यते कृपया मया॥

उपसंहारः—

ज्ञानेन्द्रियकर्मेन्द्रियं अन्तःकरणचतुष्टयाधिदेवताः पृथिव्यप्तेजोवाय्वाकाशाः पञ्चभूतानि उद्भिजस्वेदजाण्डजजरायुजाः चतुर्विधो

भूतग्रामः । अण्डः अतळवितळसुतळतळातळरसातळमहातळपाताळाख्याः सप्तअधोलोकाः ।

प्रतिपाद्यविषयः—

अस्मिन् ग्रन्थे अध्यारोप, अपवाद, साधनचतुष्टय, श्रवणमनननिदिध्यासन इत्यादि विषयाः वेदान्तशास्त्रादुद्धृत्य सुलभरीत्या विरचिताः ।

वक्तव्यविशेषः—

अस्मिन् कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (730) C 801 विवेकसिन्धुः

| | |
|---|---|
| ग्रन्थकर्ता—मुकुन्दमुनिः | प्रतिपुटं पङ्क्तयः— 14 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि — 32 |
| प्रमाणम्—$6\frac{1}{2} \times 3\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः — देवनागरीलिपिः | स्थितिः —समीचीना |
| पत्राणि—1-36 | समग्रोऽसमग्रो वा— समग्रः |

उपक्रमः—

अगुणाय गुणाढ्याय स्वच्छायानन्तरूपिणे ।
शुद्धाय स्वप्रकाशाय श्रीवाममुनये नमः ॥
अगुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गाय कर्तृत्वं ब्रह्मणो मुपगम्यते ॥

सत्वगुणरजस्तमोगुणरहितस्य सर्वप्रमाणातीतस्य विद्याविद्यारहितस्य केवलब्रह्मणः सृष्टिकर्तृत्वं कथं घटते । एतादृशं ब्रह्म जगतः कारणमिति न वदन्ति सूक्ष्मतत्त्वज्ञाः निरालम्बसिद्धाः ब्रह्मवादिनः । तर्हि किं पुनः कारणं मायाशबलं ब्रह्म कारणमिति वदन्ति । मायाशबलं ब्रह्म किमिति चेत् मायासहितं मायाशबलमुच्यते ।

उपसंहारः—

आत्माज्ञानैकमूले भवसलिलनिधौ क्लिश्यमाणान्मनुष्यान्
द .. ....ज्ञानोपदेशान् सकरुणहृदयाक्रान्ततस्तारणेच्छः ।

विष्णुर्भूमौ युगेऽस्मिन् हरिरिति गदितः प्राप्त......दिनीयः
स्वप्रोक्त....... ........सर्वस्ववितरणजनितख्यातिरग्रेऽवतीर्णः ॥
शिष्येष्वन्येषु सत्स्वप्यहमधिककृपापात्रतास्यास्मि जातो
ग्रन्थं मद्बोधसिध्यै कुरु शिशुसुगमं ज्ञानसर्वस्वभावम् ।
एवं विज्ञापितः सन्नवनतशिरसा ज्ञानदेवेन धीमान्
सद्यः कृत्वा दितास्मै सकरुणहृदयः श्रीमुकुन्दो मुनीन्द्रः ॥

इति विवेकसिन्धुः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मायाशबलाद्ब्रह्मणो पञ्चभूतसृष्ट्यादिक्रमेण भूतसृष्टिः, पञ्चीकरणं, स्थूलादिशरीरसृष्टिः, तस्मिन् जीवभावेन प्रवेशः, त्रिपुटीत्रयाणां वर्णनं, एतादृशसंसाराद्विरक्तस्य ज्ञानिनः अवस्थात्रयातीतेन सत्यज्ञानानन्दादिरूपेण ब्रह्मणा एकीभावरूपा मुक्तिः इत्यादयो विषयाः प्रतिपाद्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (731) C 466/1 विवेकसिन्धुः

| | |
|---|---|
| ग्रन्थकर्ता—गोपालः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—$8\frac{1}{4}\times4$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-142 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

श्रीहरं जगदाधारं संविदाक्षरमव्ययम् ।
अभिवन्द्यात्मविज्ञानोपदेशविधिरुच्यते ॥
तं नित्यमव्यक्तमनन्तमक्षरं सच्चिद्वपुस्सर्वसुखैकविग्रहम् ।
श्रीता देवं वचनार्थमीश्वरं भजामि सिध्यर्थमहर्निशं गुरुम् ॥

श्रीमुद्गलसमाख्यस्य पितुः पादाम्बुजद्वयम् ।
नत्वा तनोति गोपालो विवेकामृतमादरात् ॥

जय जय जगदीश चन्द्रमौळे स्नपय कृपया मम स्वदृष्ट्या ।
तदनु निजसुखैकतानसिन्धुं सममवगाह्य भवामि वीतमोहः ॥

निर्गुणस्त्वं निराकारो निस्सङ्गो निर्विकारकः ।
ब्रह्मादयोऽपि न विदुस्त्वत्स्वरूपं निरामयम् ॥

उपसंहारः—

ग्रन्थोत्तरार्धं सम्पूर्णं शुद्धबोधप्रदं तु यत् ।
श्रीमुद्गलतनूजेन गोपालेन विनिर्मितम् ॥

कल्पनाग्निपरिप्लुष्टजीवसन्तापशान्तिकृत् ।
विवेकामृतसत्प्तपानं कर्तव्यं विबुधोत्तमैः ॥

विवेकसिन्धुं मुनिवर्यनिर्मितं धीमन्दरेणाशु विमथ्य यत्नात् ।
लब्धं विवेकामृतमिष्टसिद्धि निपीयतां कर्णपुटैश्चिरं बुधाः ॥

तापत्रयातप्ततनुर्विवेकसिन्धुं विगाह्यैव जहाति पापम् ।
इदं विवेकामृतमाशु पीतं विमुक्तसोपानपरम्परापदम् ॥

इति श्रीमद्विवेकसिन्धौ संहारक्रमे गुरुशिष्यसंवादे श्रीगुरुमाहात्म्यकथनं नामोत्तरार्धे एकादशप्रकरणं सम्पूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे (सृष्टिक्रमे प्रथमभागे) स्वरूपनिरूपणं, स्वानुभवदृढीकरणं, तत्त्वसृष्टिः, स्थूलादिदेहविवरणं, सर्वस्यापि ब्रह्मस्वरूपत्वकथनं (संहारक्रमे द्वितीयभागे) स्थूलादिदेहनिरासनम, मायास्वरूपादिविवरणं, मुक्तिनिरूपणं, भेदनिरासपूर्वकमद्वैतसमर्थनमित्यादयो विषया निरूप्यन्ते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (732) 4616/1 विशिष्टाद्वैतभञ्जनी

| | |
|---|---|
| ग्रन्थकर्ता— रघुनाथेन्द्रः | प्रतिपुटं पङ्क्तयः —7 |
| पत्रविशेषः —ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—80 |
| प्रमाणम्—16 × 1⅜ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः —नागरीलिपिः | स्थितिः— समीचीना |
| पत्राणि—1-47 | समग्रोऽसमग्रो वा— असमग्रः |

उपक्रमः—

मच्चेतसि स्फुरतु मन्मथसर्वतारिदुर्धर्षचापशकलीकरणप्रवीणम् ।
इक्ष्वाकुवंशभवमम्बुदनीलमुग्र... विदारणमुदग्रमुदारमोहम् ॥
परमं गुरुमिन्द्रादिवन्दनीयपदाम्बुजम् ।
श्रीदेवेन्द्रमहं वन्दे परमानन्ददायिनम् ॥
श्रीधरेन्द्रगुरून्नत्वा विशिष्टाद्वैतभञ्जनम् ।
क्रियते रघुनाथेन्द्रचरणैरमलात्मभिः ॥

अत्र यद्यपि :—

अक्षपादः कणादश्च कपिलो जैमिनिस्तथा ।
व्यासः पतञ्जलिश्चैव षडेते वैदिकाः स्मृताः ॥

इति वचनोक्तैर्व्यासेतरमतकर्तृभिर्वेदान्तमतनिराकरणावसरे वेदान्तिमतत्वेन निर्विशेषात्मैक्यप्रतिपादनेन प्रपञ्चमिथ्यात्वप्रतिपादनेन च किमात्मतत्त्वं सगुणं निर्गुणं वेति शङ्का निरस्ता । ननु तेष्वेव मतेषु बौद्धमतनिराकरणावसरे बौद्धमतस्यापि प्रतिपादनात्तदपि संग्राह्यमेव स्यादिति चेन्न ;

उपसंहारः—

तस्माद्विशिष्टाद्वैत...स्यानुपपन्नत्वादैक्यपक्ष एव युक्त इत्यवगन्तव्यम् । नन्वैक्ये ब्रह्मणोऽपि संसारापत्तिरिति चेन्न ; उपाधेः प्रतिबिम्बपक्षपातित्वेन जीवस्यैव बन्धकत्वात् । ज्ञानानन्तस्वरूपब्रह्मणि बिम्बप्रतिबिम्बभावानुपपत्तिः । ज्ञाने आनन्दे च तस्य क्वाप्यदर्शनात् । किं च रूपवत एव बिम्बप्रतिबिम्बस्य दर्शनात् नीरूपे ब्रह्मणि कथं बिम्बप्रतिबिम्बभाव इति चेन्न ; ज्योतिषि कचिद्बिम्बप्रतिबिम्बभावदर्शनेन ......

प्रतिपाद्यविषयः –

अस्मिन्ग्रन्थे अद्वैतस्यैव वेदान्तिमतत्वप्रतिपादनं, जाग्रत्प्रपञ्चस्यापि स्वप्नतुल्यत्वप्रतिपादनं, श्रवणविधिः, शाब्दापरोक्षवादः, भावरूपाज्ञानवादः, सगुण निर्गुणब्रह्मविचार इत्यादिकं प्रतिपाद्यते ।

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः असमग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (733) 118 विष्णुसहस्रनामभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—72 |
| प्रमाणम्—$16\frac{3}{4} \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—शिथिला |
| पत्राणि—158-218 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सहस्रनामव्याख्येयं ब्रह्मानन्दस्य (प्रकाशिका) दीपिका ।
शंकरेणैव (णाद्य) भगवत्पादाचार्येण निर्मिता ॥

ईश्वर उवाच—

आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान् ।
त्वत्तः सर्वमभूद्विश्वं त्वयि सर्वं प्रलीयते ॥

अहं त्वं सर्वगो देवः (अहं त्वं हि महादेवः) त्वमेवाहं जनार्दन ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥

नामानि तव गोविन्द यानि लोके महान्ति च (वै) ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥

त्वदुपासा जगन्नाथ सैवास्तु मम गोपते ।
यश्च त्वां द्वेष्टि भो देव स मां द्वेष्टि न संशयः

त्वद्विस्तारो यतो देव ह्यहं भूतपतिस्ततः ।
न तदस्त्येव हे देव (मनाग्देव) यत्त्व विरहितं क्वचित् ॥

उपसंहारः—

अहेयमक्षरं शुद्धमनुभूतिरञ्जनम् ।
विष्ण्वाख्यं परमं ब्रह्म यद्वै पश्यन्ति सूरयः ॥

इति विष्णुधर्माध्यायैकदेशः । एवमेव नारायणाख्यं परं ब्रह्म ध्येयम् ॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥

तज्ज्ञानान्मोक्ष इत्येतत्सर्वं ज्ञानार्थमेवेति सिद्धम ।
श्लोकं वाप्यनुगृह्णाति तथार्धश्लोकमेव वा ।
अपि पादं पठेन्नित्यं न च निर्भारतो भवेत् ॥

यस्मादेवमुक्तं भगवतैव—

अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् ।
भारताध्ययनात्पुण्यादपि पादमधीयतः ।
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ।
समाधिसम्पत्संयुक्तैः (शमादिसम्पत्सुयुतैः) ध्येयो यः पुरुषोत्तमः ।
तस्मै नमोऽस्तु कृष्णाय संसारक्लेशहारिणे ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्यपादशिष्येण श्रीशंकरभगवत्पादाचार्येण विरचितं श्रीविष्णुदिव्यसहस्रनामभाष्यं सम्पूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे श्रुत्यादिप्रमाणनिर्देशपूर्वकं श्रीविष्णुसहस्रनामस्तोत्रं व्याख्यायते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते मुद्रितश्च दृश्यते ॥

No. (734) 2666 विष्णुसहस्रनामभाष्यम् (मूलसहितम्)

ग्रन्थकर्ता शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—19¾×1¾ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-56
प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—70
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रीवैशम्पायन उवाच—

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥

युधिष्ठिरः—

किमेकं दैवतं लोके किं वाप्येकं परायणम्।
स्तुवन्तः तं तमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥

आदौ श्रीकृष्णं प्रणमति—सच्चिदानन्देत्यादि....निलयं मुनिम् ॥ धर्मानभ्युदयनिःश्रेयसोत्पत्तिहेतुभूतान्वेदलक्षणान् अशेषेण कार्त्स्न्येन पावनानि पापक्षयकराणि सर्वशः सर्वप्रकारैः श्रुत्वा युधिष्ठिरो धर्मपुत्रः शान्तनवं शान्तनुसूनुं भीष्मं....।

उपसंहारः—

118 कोशवत्।

प्रतिपाद्यविषयः—

118 कोशवत्।

वक्तव्यविशेषः—

118 कोशवत्।

No. (735) 1796/1 विष्णुसहस्रनामभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—19×2 अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-58
प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—88
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

118 कोशवत् ।

उपसंहारः—

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥

प्रतिपाद्यविषयः—

118 कोशवत् ।

वक्तव्यविशेषः—

118 कोशवत् ।

## No. (736) 3781 विष्णुसहस्रनामभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—42 |
| प्रमाणम्—$14 \times 1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-69 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

118 कोशवत् ।

उपसंहारः—

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

नामस्तवनस्य विशेषफलसाधनत्वं सर्वफलसाधनत्वं च प्रतिपादयन् विष्णुधर्माध्याये एकादशे विसहस्रनामव्याख्याने पठ्यते । सहस्रनामसंकीर्तने अशक्तस्य कति, यसंकीर्तनेनापि समस्तपुरुषार्थः सिद्ध्यतीति दर्शयितुम् ...... ।

प्रतिपाद्यविषयः—

118 कोशवत् ।

वक्तव्यविशेषः—

118 कोशवत् ।

## No. (737) 332 विष्णुसहस्रनामभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—84 |
| प्रमाणम्—17½×1⅓ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—अत्यन्तशिथिला |
| पत्राणि—1-45 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

118 कोशवत् ।

उपसंहारः—

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः ...... ।

प्रतिपाद्यविषयः—

118 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे वेदान्तगो ब्राह्मणः स्यादितिश्लोकव्याख्यानपर्यन्तो ग्रन्थभागो विद्यते ।

## No. (738) 1968/1 विष्णुसहस्रनामभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—58 |
| प्रमाणम्—14×1⅜ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—9-93 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

....कयानि। एष त आत्मा सर्वान्तरः, एष त आत्मान्तर्याम्यमृतः। यन्मनसा न मनुते येन चाहुर्मनो गतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥ तत्सत्यं स आत्मा तत्त्वमसीत्येवमादीनि नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता इति काण्वोपनिषदि च....।

उपसंहारः—

118 कोशवत्।

प्रतिपाद्यविषयः—

118 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे (मुद्रितपुस्तके) 14 तमपुटप्रभृति ग्रन्थभागो विद्यते॥

## No. (739) 1632/1 विष्णुसहस्रनामभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—12¾ × 1½ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-86
प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

118 कोशवत्।

उपसंहारः—

118 कोशवत्।

प्रतिपाद्यविषयः—

118 कोशवत्।

वक्तव्यविशेषः—

118 कोशवत्।

## No. (740) 1652 विष्णुसहस्रनामभाष्यम

ग्रन्थकर्ता —शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$20\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-464

प्रतिपुटं पङ्क्तयः - 6
प्रतिपङ्क्त्यक्षराणि - 84
कालः (कोशस्य) —?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

118 कोशवत् ।

उपसंहारः—

118 कोशवत् ।

प्रतिपाद्यविषयः—

118 कोशवत् ।

वक्तव्यविशेषः—

118 कोशवत् ।

## No. (741) 1336 विष्णुसहस्रनामभाष्यम

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$11\frac{1}{2} \times 2\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-46

प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—50
कालः (कोशस्य) —?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

118 कोशवत् ।

उपसंहारः—

118 कोशवत् ।

प्रतिपाद्यविषयः—

118 कोशवत् ।

वक्तव्यविशेषः—

118 कोशवत् ।

## No. (742) 988/2 विष्णुसहस्रनामभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—22×2¼ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—124-152

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—100
कालः (कोशस्य)—?
स्थितिः—अत्यन्तशिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

118 कोशवत्।

उपसंहारः—

118 कोशवत्।

प्रतिपाद्यविषयः—

118 कोशवत्।

वक्तव्यविशेषः—

118 कोशवत्।

## No. (743) C 436 विष्णुसहस्रनामभाष्यम्

ग्रन्थकर्ता – शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—13×5½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-93

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

118 कोशवत्।

उपसंहारः—

118 कोशवत्।

प्रतिपाद्यविषयः—

118 कोशवत्।

वक्तव्यविशेषः—

118 कोशवत्।

## No. (744) A 148 विष्णुसहस्रनामभाष्यव्याख्या

ग्रन्थकर्ता—तारकब्रह्मानन्दः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$12\frac{1}{2} \times 8$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-154

प्रतिपुटं पङ्क्तयः—20
प्रतिपङ्क्त्यक्षराणि—30
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रीमाधवोमाधवविघ्नराजाम्बाग्देवतां व्यासमुनिं महान्तम् ।
श्रीशङ्करं भाष्यकृतं च भक्त्या नमास्यहं लोकहितावतारम् ॥

श्रीगोपालानन्दयतीन् गुरून् विद्यागुरूनपि
प्रणम्य श्रीमदद्वैतानन्दान् शमदमालयान् ।
भाष्यं तैरुपदिष्टार्थं भगवत्पादनिर्मितम्
विष्णोर्नामसहस्रस्य यथामति विविच्यते ॥

क्व सर्वविद्भाषितभाष्यमेतत् व्याख्याप्रयत्नः क्व च मेऽल्पबुद्धेः ।
तथापि वैगुण्यमिह क्षमन्तां सन्तो यतेर्धर्ममननं स्वधर्मः ॥

इह खलु युधिष्ठिरः परमकारुणिकः शान्तनवाद्भीष्माद्धर्मप्रवक्तुः श्रुतिस्मृत्याचारप्रमाणकान् सर्वान् धर्मानायाससाध्यानल्पफलांछ्रुत्वा सकलपुरुषार्थसाधनभूतः सुखसम्पादनो धर्मोऽनुक्त इति मत्वा तादृशं धर्मं धर्मप्रवक्तारं सर्वज्ञं भीष्मं पप्रच्छ । स च भीष्मो युधिष्ठिरं प्रति विष्णुनामसहस्रस्तवजपरूपमुक्तस्वरूपं धर्ममुवाच ॥

उपसंहारः—

श्रुतीति । परस्मात्पुरुषान्न भिन्नमिदं विश्वं परमार्थतः । तेन विश्वमित्यभिधीयते ब्रह्मेति । व्याख्या ब्रह्मैवेदं विश्वमित्यादिश्रुतिमूला सकलमिदमहं च वासुदेव इत्यादिस्मृतिमूला तदनन्यत्वमारम्भणशब्दादिभ्य इति न्यायमूला चेत्यर्थः । एवं व्याख्यानान्तरेष्वपि यथासंभवं श्रुत्यादिमूलत्वं बोध्यम ।

प्रक्षेपकालुष्यनिरासहेतोर्व्याख्या हरेर्नामसहस्रभाष्ये ।
या तारकब्रह्मयतिप्रणीता समर्पिता सा हरिपादयुग्मे ॥

श्रीगोपालसरस्वतीयतिवरान्तेवासिना तारक-
ब्रह्मानन्दसरस्वतीसुयतिना शक्त्यानुरूपा कृता ।
विष्णोर्नामसहस्रभाष्यविवृतिर्या तत्र विद्वज्जनैः
क्षन्तव्यं क्षतमुत्तमैर्भगवतो नामैकनिष्ठो यतः ॥

प्रतिपाद्यविषयः—

118 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते । अमुद्रितश्च ज्ञायते ॥

## No. (745) 2889 विष्णुसहस्रनामविवृतिः

| | |
|---|---|
| ग्रन्थकर्ता - गम्भीरभारती | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—76 |
| प्रमाणम्—$17\frac{1}{2} \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि —141–183 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सहस्रबाहुरव्यक्तः स जायाज्जगदीश्वरः ॥

सहस्रमूर्तिमनघं सहस्राक्षसमार्चितम् ।
सहस्रभानुबिम्बस्थं वन्दे कृष्णं सहस्रशः ॥

सहस्रद्वयजिह्वाभिः सहस्रास्येन संस्तुतम् ।
वन्दे सहस्रधोपास्यं सहस्रश्रुतिगोचरम् ॥

हेरम्बमम्बिकाडिम्भं शंभुसंभवमीश्वरम् ।
लम्बोदरमहं वन्दे देवं स्तम्बेरमाननम् ॥

विचारविधिशारदा विहितकर्मसंचारदा
विबोधमपि आरदा विनयबुद्धिविस्तारदा।
भवाब्धिपरिहारदा भवतु भव्यसंभावदा
सुखाय मम सर्वदा सकलशारदा शारदा ॥

उपसंहारः—

एतावन्त्येवायुधानीत्येवं नैव नियम्यते ।
किं तु सर्वायुधान्येव सर्वप्रहरणायुधः ॥

आयुधत्वेनाप्रसिद्धान्यायुधान्यस्य सन्ति यत् ।
करजादीन्यतश्चान्ते सर्वप्रहरणायुधः ॥ 1000 ॥

शास्त्रस्याद्यन्तमध्येष्वभिहितमिति वै मङ्गलं शास्त्रकृद्भिः
व्यासोऽहंकाररूपं तदनु हरिनमस्काररूपं विधातुम् ।
ओंकारश्चाथशब्दश्रुतिपरिचयतो मङ्गळं चावसाने
भूयिष्ठान्ते नमो नैगमवचनबलात् ओं नमश्चेत्यवोचत् ॥

श्रीमद्विठ्ठलपादपद्मभजनानन्दैकसंभाविना
गम्भीरेण विमुक्तये विरचिता श्रीभारतीसूरिणा ।
विष्णोर्दिव्यसहस्रनामविवृतिर्विद्योतपद्यात्मिका
तत्रैतद्दशमं शतं समभवत्पूर्णं सहस्रं यतः ॥

गम्भीरभारतीनाम्ना श्रीगोपालपदाम्बुजे ।
समर्पिता सुफलदा शुद्धा स्वस्तिदमञ्जरी ॥

इति श्रीगम्भीरभारतीविरचिते सहस्रनामविवृत्यपरपर्याये
पद्यप्रसूनाञ्जलौ स्वस्तिदमञ्जरी समाप्ता

प्रतिपाद्यविषयः—

118 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (746) 1632/4 विष्णुसहस्रनामविवृतिः

ग्रन्थकर्ता—गम्भीरभारती
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—13×1½ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—115-130

प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

2889 कोशवत्।

उपसंहारः—

श्रीशब्दपूर्वं जयशब्दमध्यं जगद्द्वयेनापि पुनः प्रयुक्तम्।
त्रिःसप्तकृत्वो रघुनाथनाम जप्तुर्निहन्याद्द्विजकोटिहत्याम्॥

श्रुतिस्मृतिपुराणेतिहासागमशतानि च।
नार्हन्ति श्रीरामनामकीर्तनस्य कलामपि॥

शृण्वन्सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके।
गीतानि नामानि तदर्थकानि गायन्ति लोके विचरेति सङ्गः॥

एवं व्रतं स्वप्रियनामकीर्त्या जातानुरागोऽद्भुतचित्त उच्चैः।

वक्तव्यविशेषः—

118 कोशवत्।

## No. (747) C 538 विष्णुसहस्रनामविवृतिः

ग्रन्थकर्ता—गम्भीरभारती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—7⅞×6 अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-56

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—26
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः॥

पूतात्मा परमात्मा च मुक्तानां परमा गतिः॥

विश्वस्य कारणत्वाच्च तत्स्रष्ट्वा तत्प्रवेशनात्।
विशन्त्यस्मिंश्च भूतानि तेन विश्वाभिधो हरिः॥

विष्णोर्व्याप्त्यभिधायित्वाद्वेष्टि व्याप्नोति वा जगत्।
प्रवेशनाद्विशेर्धातोर्विष्णुरित्युच्यते बुधैः॥

उपसंहारः—

2889 कोशवत्।

प्रतिपाद्यविषयः—

118 कोशवत्।

वक्तव्यविशेषः—

2889 कोशवत्।

## No. (748) 526 विष्णुसहस्रनामविवृतिः

| | |
|---|---|
| ग्रन्थकर्ता—गम्भीरभारती | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम्—18×1¾ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–56 | समग्रोऽसमग्रो वा— |

उपक्रमः—

कपीन्द्राय नमः।
सुग्रीवहनुमन्मुख्यकपीनां परिपालनात्।
इन्द्रः स्वामी भवेद्रामः कपीन्द्रो रघुनन्दनः॥
भूरिदक्षिणाय नमः।

दक्षिणा भूरि येषां ते यज्ञाः स्युर्भूरिदक्षिणाः।
अश्वमेधादयो यस्मिन्नित्यसौ भूरिदक्षिणः॥

उपसंहारः—

2889 कोशवत् ।

प्रतिपाद्यविषयः—

118 कोशवत् (54 तमे पुटे) ।

वक्तव्यविशेषः—

अस्मिन्कोशे, "शरीरभूतकृद्धोक्ता कपीन्द्रो भूरिदक्षिणः।" (एकोनपञ्चशतान्तिमनाम) इत्यादि समाप्तिपर्यन्तो ग्रन्थो विद्यते ॥

## No. (749) 3170 वृत्तिदीपिका

| | |
|---|---|
| ग्रन्थकर्ता—कृष्णभट्टः | प्रतिपुटं पङ्क्तयः—18 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—56 |
| प्रमाणम्—$14\frac{3}{4} \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—युवसं. |
| लिपिः—ग्रन्थलिपिः | स्थितिः—अतिशिथिला |
| पत्राणि—1–24 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सजलजलदकाळं सर्वलोकैकपालं
व्रजयुवतिरसालं चन्दनाभ्यक्तफालम् ।
निहतदुरितजालं फुल्लराजीवनाळं
विलसितवनमालं नौमि गोपालबालम् ॥
ध्यात्वा व्यासं गुरुं नत्वा माधवेन्द्रसरस्वतीम् ।
मौनिश्रीकृष्णभट्टेन तन्यते वृत्तिदीपिका ॥

इह सकलजनाभिलषितमोक्षमुख्योपायात्मतत्त्वज्ञानस्य तत्त्वमस्यादिमहावाक्यार्थबोधजन्यत्वाच्छाब्दबोधे च वृत्तिग्रहजन्योपस्थितेर्हेतुत्वाद्वृत्तिर्निरूप्यते ॥ सा च त्रिधा । शक्तिर्लक्षणा व्यञ्जना च । वृत्तित्वं च

शाब्दबोधहेतुशब्दार्थोपस्थित्यनुकूलशब्दतदर्थसंबन्धत्वम्। संकेतविशेष-संबन्धेन वृत्तिपदवत्वं वा। तत्र शक्तिः कः पदार्थ इति चेत्....।

उपसंहारः—

तदेवेदं घटपदं तदेवेदं वाक्यं एकं पदमेकं वाक्यमित्यबाधित-प्रतीत्या तत्सिद्धिः। अन्यथा घटपटादीनामप्यवयव..........क्तावय-व्यसिद्धिप्रसङ्गः। न चेष्टापत्तिः, भवत्सिद्धान्तभङ्गापत्तेः। इत्थं निरूपिताः पञ्च व्यक्तिजातिस्फोटाः। वोप्पदेवेन तु शक्ततावच्छेदक..................रेवप ........... रचाविद्यको धर्मविशेषः। तथा च वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोट इति तन्मते स्फोटत्रयं सिद्धम्।

इति वृत्तिदीपिका समाप्ता

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे मीमांसकनैयायिकवैयाकरणमतभेदेन शब्दशक्तिः, समासशक्तिः, लक्षणा, व्यञ्जना, स्फोटश्च सम्यग्विचार्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च दृश्यते।

## No. (750) 3195/2 वृत्तिदीपिका

ग्रन्थकर्ता—कृष्णभट्टः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$15\frac{1}{4} \times 1\frac{5}{8}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-17
प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—64
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

3170 कोशवत्

उपसंहारः—

यदपि निर्विभक्तिकप्रातिपदिकानेकत्वसंभवे द्वन्द्वसमासो निर्विभक्ति-कैकशेषे शिष्यमाणैकवचनश्रवणप्रसङ्ग इत्यादिदूषणानि ग्रन्थभूयस्त्व भिया

नेह तन्यते। अत्र वैयाकरणाः—एकशेषस्य द्वन्द्वापवादत्वात्साहित्यप्रकारकबोधस्यानुभवाच्च साहित्यविशिष्टे शक्तिः। अत एव साहित्यप्रकारकबोधे एकशेषस्तदभावे तन्त्रं पुनः पुनरनुसन्धाने आवृत्तिः...।

प्रतिपाद्यविषयः—

3170 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे असमग्रो ग्रन्थो विद्यते।

## No. (751) 4617/1 संक्षेपशारीरकम्

| | |
|---|---|
| ग्रन्थकर्ता—सर्वज्ञमुनिः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—$10\times1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—3-90 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

.............. निर्बन्धमात्राश्रयादन्योन्याध्यसने निरास्पदमिदं शून्यं जगत्स्यादिति॥ (31)

अधिष्ठानमाधारमात्रं यदि स्यात्प्रसज्येत सत्यं तदा चोद्यमेतत्। न चैतत्सकार्यस्य मोहस्य वस्तुन्यधिष्ठानगीर्गोचरे लोकसिद्धा।

किं चानृतद्वयमिहाध्यसितव्यमिष्टं
स्याच्चेत्तदा भवति चोद्यमिदं त्वदीयम्।
सत्यानृतात्मकमिदं मिथुनं मिथश्चे
दध्यस्यते किमिति शून्यकथाप्रसङ्गः॥

इदमर्थवस्त्वपि भवेद्रजते परिकल्पितं रजतवस्त्विदमि..........। रजतभ्रमेऽस्य च परिस्फुरणात् न यदि स्फुरेन्न खलु शुक्तिरिव॥

उपसंहारः—

संक्षेपशारीरकमेवमेतत्कृतं परिव्राजकमुक्तिहेतुः।
गुरुप्रसादात्परिलभ्य तत्त्वं त्रयीशिरस्तत्त्वनिवेदनाय॥

अविरळपदपङ्क्तिः पद्मनाभस्य पुण्या
चरणकमलधूलिग्राहिणी भारतीयम् ।
घनतरमुपघातं श्रेयसः श्रोतृसङ्घा-
त्सुरसरिदिवसद्यो मार्ष्टु माङ्गल्यहेतुः ॥

श्रीदेवेश्वरपादपङ्कजरजःसम्पर्कपूताशयः
सर्वज्ञात्मगिराङ्कितो मुनिवरः संक्षेपशारीरकम् ।
चक्रे सज्जनबुद्धिमण्डनमिदं राजन्यवंश्ये नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासति ॥

भुजङ्गमाङ्कशायिने विहङ्गमाङ्कगामिने ।
तुरङ्गमाङ्कमेदिने नमो रथाङ्गधारिणे ॥

इति श्रीवेदेश्वरपूज्यभट्टारकशिष्यश्रीसर्वज्ञात्ममहामुनिविरचिते संक्षेपशारीरके
फललक्षणश्चतुर्थोऽध्यायः

**प्रतिपाद्यविषयः—**

शारीरकमीमांसातात्पर्यसङ्ग्राहकेऽस्मिन्ग्रन्थे तद्वदेव प्रथमाध्याये सर्वेषां वेदान्तानां ब्रह्मणि समन्वयः, द्वितीये स्मृत्यन्तरे विरोधपरिहारः, तृतीये साधनानि, तुरीये मोक्षरूपं फलं च प्रतिपाद्यते ।

**वक्तव्यविशेषः—**

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते मुद्रितश्च (वाराणस्या) दृश्यते ॥

## No. (752) C 488 संक्षेपशारीरकम्

| | |
|---|---|
| ग्रन्थकर्ता— सर्वज्ञमुनिः | प्रतिपुटं पङ्क्तयः— 11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि— 68 |
| प्रमाणम्— 11½×6½ अङ्गुलानि | कालः (कोशस्य)—2... |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–45, 1–26 | समग्रोऽसमग्रो वा— असमग्रः |

उपक्रमः—

अजनजडविरोधिरूपमन्तस्त्रयमलबन्धनदुःखताविरुद्धम् ।
अतिनिकटमविक्रियं मुरारेः परमपदं प्रणयादभिष्टवीम ॥

स्वाज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूमभावा ।
स्वाभाविकस्वमहिमस्थितिरस्तमोहा प्रत्यक्चितिर्विजयते भुवनैकयोनिः ॥

प्रत्यक्प्रमाणकमसत्यपराक्प्रभेदं प्रक्षीणकारणविकारविभागमेकम् ।
चैतन्यमात्रपरमार्थनिजस्वभावं प्रत्यञ्चमच्युतमहं प्रणतोऽस्मि नित्यम् ॥

आरम्भाः फलिनः प्रसन्नहृदयो यश्चेत्तरश्चामपि
नो चेद्विश्वसृजोऽप्यलं विफलतामायान्त्युपायोद्यमाः ।
विश्वैश्वर्यसिनो निरङ्कुशमभूद्यस्यैव विश्वप्रभोः
सोऽयं विश्वहिते रतो विजयते विश्वेश्वरो विश्वकृत् ॥

उपसंहारः—

यदि भाव्यभावविलये न भवेत्फलभावना कथमिहोत्सहते ।
करणादिभागविलयं भवितुं विधिरन्तरेण घटते न च ताम् ॥

अधिकारिणं च विषयं च विना न नियोगबुद्धिरुपपत्तिमती ।
न विना तमस्तदुभयं घटते विदितात्मनश्च न तमो घटते ॥

व्यवहारगोचरमतः सकलं विधिवाक्यमित्यवगतिं मनसि ।
उपनीय वेदशिरसां विधिभिर्न विरोध इत्यपि समालय ॥

एवं वेदान्तवाक्यैरवगतिपदवीमद्वये नीयमाने
प्रत्यक्तत्त्वे समस्तद्वयकृति तमसि क्षीयमाणे च सद्यः ।
स्वाराज्यं त्वव्ययवाप्ते परमसुखभुजि स्वच्छचैतन्यमात्रे
शेषां मानान्तराणामपि दुरवगमस्तत्र दूरे विरोधः ॥

इति श्रीसर्वज्ञात्ममहामुनिविरचिते संक्षेपशारीरके अविरोधलक्षणो द्वितीयोऽध्यायः समाप्तः

प्रतिपाद्यविषयः—

4617/1 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितोऽध्यायद्वयं विद्यते ॥

## No. (753) C 1720 संक्षेपशारीरकम्

ग्रन्थकर्ता—सर्वज्ञमुनिः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—1×5 अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-22
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—26
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

C 488 कोशवत्।

उपसंहारः—

अज्ञानकल्पितमनिर्वचनीयमस्मिन्
आबालवृद्धमविवादपरं प्रसिद्धम्।
स्वप्ने तथा च भगवानपि वक्ष्यतीदं
सन्ध्येऽस्ति सृष्टिरिति पक्षनिरासलिप्सुः ॥
मिथ्यासुरपः सवितृमण्डलमध्यवर्ती
प्रत्यक्षदृष्टिपथमा प्रतिनोऽचिरेण।
(द्रष्टुः) दृष्टः शरीरकरणप्रविभागरूपं
मृत्युं निवेदयति सत्यमिदं प्रसिद्धम् ॥

प्रतिपाद्यविषयः—

4617/1 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायादितः 337 तमश्लोकपर्यन्तो ग्रन्थभागो विद्यते ॥

## No. (754) C 489 संक्षेपशारीरकव्याख्या (सारसङ्ग्रहाख्या)

ग्रन्थकर्ता—मधुसूदनसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—11½×6½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-248, 1-115
प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—32
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

सत्यं ज्ञानमनन्तमद्वयसुखं यद्ब्रह्म गत्वा गुरुं
मत्वा लब्धसमाधिभिर्मुनिवरैर्मोक्षाय सक्षात्कृतम् ।
जातं नन्दतपोबलात्तदखिलानन्दाय वृन्दावने
वेणुं वादयदिन्दुसुन्दरमुखं वन्देऽरविन्देक्षणम् ॥
विशेपाद्विश्ववेदस्य प्रत्यग्विष्णोश्च वृद्धयोः ।
व्याख्यानं श्रद्धयालेखि गुरूणां तौ हि नो गुरु ॥

तत्र श्रीमच्छारीरकशास्त्रस्य तात्पर्यविषयीभूते मुमुक्षुजिज्ञास्ये निर्विशेषब्रह्मणि बोधनीये प्रासङ्गिकमुमुक्षुजिज्ञास्यसविशेषब्रह्मणोपासनावाक्यनेकविधविचारविक्षिप्ततया दुरवबोधतामाकलय्य तद्विक्षेपपरित्यागेन मुमुक्षुजिज्ञास्यं निर्विशेषं ब्रह्म शास्त्रतात्पर्यविषयीभूतमनायासेन मुमुक्षुबोधाय संक्षेपशारीरकाख्येन श्लोकग्रन्थेनाविश्चकार करुणया श्रीसर्वज्ञात्माचार्यः ॥

उपसंहारः—

क्षीयमाणे चेत्यादिना ज्ञानमात्रात्परित्यक्ततामुपपादितामनुवदति, विचारदशायामपि वेदान्तानां न मानान्तरविरोधः संभावितस्तदा किमु वक्तव्यमवगते तत्त्व इत्याशयेनाह—लेश इति । लेशोऽपीत्यर्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्यश्रीमधुसूदनसरस्वती
श्रीपादकृतसंक्षेपशारीरकव्याख्यानरूपसारसङ्ग्रहाख्यटीकायां
द्वितीयोऽध्यायः समाप्तः

प्रतिपाद्यविषयः—

संक्षेपशारीरकव्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे आदितः अध्यायद्वयं वर्तते । मुद्रितश्च (काश्यां) दृश्यते ॥

## No. (755) 4617/2 संक्षेपशारीरकव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता—विश्वदेवः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—54 |
| प्रमाणम्—10 × 1$\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-124 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

यस्मादर्थचतुष्टयं त्रिजगतामव्याहतं वर्तते
पित्रोरव्यकुदुम्बिनोः सुदयिताल्लोक्या च या सन्ततिः ।
युद्धे त्रैपुर एव .. ....विदितं स्वातन्त्र्यमव्याहतं
श्रीमद्दुण्ढिविनायकः स दिशतादिष्टान्यभीष्टानि नः ॥ 1–4

श्रीमच्छारीरकार्थाविष्करणाय ग्रन्थमारिप्सुराचार्यः इष्टदेवतातत्त्वानुस्मरणं मङ्गलमाचरंस्तद्विषयं ग्रन्थारम्भं प्रतिजानीते—अनूनेति। तत्र मुरारिर्विष्णुः जगदुपकारिमुराख्यसुरसंहरणेन जगत्पतिराराधयता सत्त्वप्रधानमायायां प्रतिबिम्बितं परं ब्रह्म अन्तर्याम्याख्यम् ।

उपसंहारः —

मानान्तरनैरपेक्ष्येण सिद्धे प्रामाण्यविषयथौं न्याय उक्त इति प्रथमपदार्थः । अन्तु स्फुटमेव । समन्वयसूत्रे ...व्याख्या एवैव चतुर्थवन्तर्भूता इत्यभिप्रायः । एवं सूत्रत्रयार्थं विस्तरेण प्रतिपाद्य ईक्षत्यधिकरणं भाष्येणैव सिद्धवत्कृत्य समन्वयाध्यायमुपसंहरति । एतत्समन्वयनिरूपणफलमाह —एवमस्मिन्निति। अधीतवेदस्य हि श्रुत्यक्षरस्यानेकानि विज्ञानानि जातानि विरुद्धार्थविषयकाणि । तत्राद्वितीयप्रत्यग्विषयविज्ञानं वाक्यस्य रस्योत्थमन्यानि तु सामान्यतो दृष्टनिबन्धनानीति निर्णयः समन्वयनिरूपणफलमित्यर्थः ॥

इत्यानन्दवेदशिष्यविश्वेदविरचिते संक्षेपशारीरकव्याख्याने........दीपे प्रथमोऽध्यायः

प्रतिपाद्यविषयः—

C 489 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमाध्यायमात्रं विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (756) 2035/19 सञ्चितादिप्रकरणम्

ग्रन्थकर्ता - ?
पत्रविशेषः — तालपत्रात्मकः
प्रमाणम् — 13 × 1½ अङ्गुलानि
लिपिः — नागरीलिपिः
पत्राणि — 190–192

प्रतिपुटं पङ्क्तयः — 5
प्रतिपङ्क्त्यक्षराणि — 54
कालः (कोशस्य) — ?
स्थितिः — समीचीना
समग्रोऽसमग्रो वा — समग्रः

उपक्रमः—

इदानीं सञ्चितागामिप्रारब्धानां तन्निरासश्च दृष्टान्तपूर्वकं निरूप्यते। तथा हि-एकस्य ब्राह्मणस्य दश क्षेत्राणि सन्ति, तादृश क्षेत्राणां व्यवसायः स्वेनैव कृतश्चेत्प्रतिसंवत्सरं एकैकस्य सहस्रशालिधान्यसंख्यया दश-सहस्रशालिधान्यं समागमिष्यति। तत्र सहस्रशालिधान्यं गृहग्रासार्थं निक्षिप्य पञ्च शतशालिधान्यं बीजार्थं निक्षिप्य पुनः पञ्चशतशालिधान्यं धर्मव्ययं कृत्वा पुनः सहस्रशालिधान्यं व्यवसायादिव्ययार्थं संस्थाप्य राजभागार्थं सहस्रशालिधान्यं दत्वा—

उपसंहारः—

प्रारब्धं तु भोगेनैव नाश्यमेव। एतस्मिन्नर्थे संमतिवचनानि—प्रारब्धं भोगतो नश्येत्तत्त्वज्ञानेन सञ्चितम्। आगामि द्वितयं कर्म तद्द्वेषिप्रिय-वादिनोः। एवं सञ्चितादिकं विचार्यैतत्सर्वमहंकारस्यैव न तु तत्साक्षिणो म इति यो जानाति स एव जीवन्मुक्त इति सर्ववेदान्तसिद्धान्त इति सर्वं ॥

इति सञ्चितादिप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे प्रारब्धसञ्चितभेदेन कर्मस्वरूपं तन्निरासप्रकारश्च सम्यङ्निरूपितः॥

वक्तव्यविशेषः —

अमुद्रितः॥

## No. (757) C 772 सदाचारप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—31 |
| प्रमाणम्—9½×4 अङ्गुलानि | कालः (कैस्तव)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-5 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सच्चिदानन्दकन्दाय जगदङ्कुरहेतवे ।
सदोदिताय पूर्णाय नमोऽनन्ताय विष्णवे ॥

सर्ववेदान्तसिद्धान्तैर्ग्रथितं निर्मलं शिवम् ।
सदाचारं प्रवक्ष्यामि योगिनां ज्ञानसिद्धये ॥

प्रातः स्मरामि देवस्य सवितुर्भर्ग आत्मनः ।
वरेण्यं तद्धियो यो नः चिदानन्दः प्रचोदयात् ॥

अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु ।
यदेकं केवलं ज्ञानं तदेवाहं परं बृहत् ॥

ज्ञानाज्ञानविलासोऽयं ज्ञानाज्ञाने च शाम्यति ।
ज्ञानाज्ञाने परित्यज्य ज्ञानमेवावशिष्यते ॥

उपसंहारः—

गृहस्थो गुणमध्यस्थः शरीरं गुण उच्यते ।
गुणाः कुर्वन्ति कर्माणि नाहं कर्तेति बुद्धवान् ॥

किमुग्रैश्च तपोभिश्च यस्य ज्ञानमयं तपः ।
हर्षामर्षविमुक्तो वा वानप्रस्थः स उच्यते ॥

सन्न्यासी यो गृहातीतः शरीरं गृहमुच्यते ।
गुणाः कुर्वन्ति कर्माणि नाहं कर्तेति बुद्धवान् ॥

सदाचारमिमं नित्यं येऽनुसन्दधते बुधाः ।
संसारसागराच्छीघ्रं मुच्यन्ते नात्र संशयः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भगवत्पादपूज्यश्रीमच्छंकराचार्यविरचितं
सदाचारप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सर्ववेदान्तसिद्धान्तैर्ग्रथितं योगिनां प्रातःस्मरणादि-सदाचारः प्रतिपाद्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च दृश्यते ।

## No. (758) 25/2 सनत्सुजातीयभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—92 |
| प्रमाणम्—18½×1¾ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-18 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

नमः पुंसे पुराणाय पूर्णानन्दाय विष्णवे ।
निरस्तनिखिलध्वान्ततेजसे विश्वहेतवे ॥

सनत्सुजातविवरणं संक्षेपतो ब्रह्मजिज्ञासूनां सुखावबोधायारभ्यते स्वतश्चित्सदानन्दाद्वितीयब्रह्मात्मस्वरूपाव्यतिरिक्तः यया स्वविषया-विद्यया स्वानुभवगम्यया साभासया स्वाभाविकचित्सदानन्दाद्वितीयः ब्रह्मात्मभावात्प्रच्युतोऽनात्मनि देहादावात्मभावमापन्नोऽप्राप्ताशेषपुरुषार्थ-प्राप्ताशेषानर्थोऽविद्यापरिकल्पितैरेव साधनैः इष्टप्राप्तिमनिष्टपरिहृतिं चाकाङ्क्षन् लौकिकवैदिकसाधनैरनुष्ठितैरपि परमपुरुषार्थं मोक्षाख्यमलभमानः मकरादिभिरिव रागादिभिरितस्ततः समाकृष्यमाणो मोमुह्यमानः ॥

उपसंहारः—

अर्थात् द्विपदादीनां जरायुजादीनां च सर्वभूतेषु सर्वदेहेषु पुष्करे हृदयपुण्डरीके निहितं स्थितं विदुः ब्राह्मणा जानन्ति । एवं गुणविशिष्टं प्रत्यगात्मानं हृदये विचिन्तनेन साक्षात्कृत्य कृतकृत्यो भवतीत्यर्थः ॥

इति श्रीमन्महाभारते सनत्सुजातीयविवरणे श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकर-भगवत्पादकृतो चतुर्थोऽध्यायः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे संक्षेपतः अद्वैतप्रक्रियां प्रतिपाद्य ज्ञानाज्ञानयोः साक्षान्मोक्षबन्धहेतुत्वं, कर्मानुष्ठाने योगानुष्ठाने चाधिकारिनिरूपणं, ब्रह्मोपासकस्यापुनरावृत्तिः, आक्षेपसमाधानाभ्यां जीवपरैक्यनिरूपणं, मुमुक्षोः सर्वकर्मसन्यासाधिकार इत्येवमादयो विषयाः प्रतिपाद्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च दृश्यते ॥

## No. (759) C 636 सनत्सुजातीयभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{1}{4}\times5\frac{3}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-34

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—40
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ततः सनत्सुजातं प्रति विदुरेणाविद्याकल्पितसंसारनिवृत्त्यर्थं तस्मै धृतराष्ट्राय ब्रह्मोपदेशं कर्तुं शक्नोतीति ततः विदुरोक्तिसमनन्तरम्। सनत्सुजातं सनदिति ब्रह्मा हिरण्यगर्भोऽयः तस्माद्वैराग्यादिगुणान्वितो जातः सनत्सुजातः स एव सनत्कुमारः रहिते प्राकृतजनविवर्जिते परमां बुद्धिं पूर्णानन्दाद्वितीयब्रह्मविषयां बुभूषन् अविद्ययापहृतमात्मानं लब्धुमिच्छन्॥

उपसंहारः—

25/2 कोशवत्।

प्रतिपाद्यविषयः—

25/2 कोशवत्।

वक्तव्यविशेषः—

25/2 कोशवत्।

## No. (760) 2318 सनत्सुजातीयभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$10\frac{1}{4}\times1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-48

प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—48
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

25/2 कोशवत्।

उपसंहारः—

1567 कोशवत्।

प्रतिपाद्यविषयः—

25/2 कोशवत्।

वक्तव्यविशेषः—

25/2 कोशवत्।

## No. (761) 1567 सनत्सुजातीयभाष्यम्

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—$8\frac{1}{2}\times 2$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-69

प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—42
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

25/2 कोशवत्।

उपसंहारः—

तथा छान्दोग्येऽपि। तलवकारे च—अहमन्नमित्यादिना विदुषः स्वानुभवो दर्शितः। तत्रैते श्लोका भवन्ति—नित्यशुद्धबुद्धमुक्ताभावमीशमात्मना। भावयन् षडिन्द्रियाणि सन्नियम्य निश्चलः॥ अस्ति वस्तु निद्धनं जगत्प्रसूतिकारणम्। नश्वरं च तं ततस्तमोनुदं च यत्॥ इति ........।

प्रतिपाद्यविषयः—

25/2 कोशवत्।

वक्तव्यविशेषः—

25/2 कोशवत्।

## No. (762) 1163 सनत्सुजातीयभाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—38 |
| प्रमाणम्—$7\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–98 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

25/2 कोशवत् ।

उपसंहारः—

1567 कोशवत् ।

प्रतिपाद्यविषयः—

25/2 कोशवत् ।

वक्तव्यविशेषः—

25/2 कोशवत् ।

## No. (763) C 1136 सन्ध्यापञ्चीकरणं महावाक्यार्थश्च

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—26 |
| प्रमाणम्—$5\frac{1}{2} \times 3$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–15 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

आचमनं प्राणायामः ।

शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥

ओं मं मण्डूकाय नमः। ओं कं कालाग्निरुद्राय नमः। ओं कुं कूर्माय नमः। ओं आं आधारशक्त्यै नमः। ओं अं अनन्ताय नमः। ओं पं पृथिव्यै नमः। ओं पृथिव्या मेरोः पृष्ठ ऋषिः। कूर्मो देवता, सुतलं छन्दः। आसने विनियोगः।

उपसंहारः—

अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमव्ययम्।
अत्र प्रमाणं वेदान्ता गुरवोऽनुभवस्तथा॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्।
मयि सर्वं लयं याति तद्ब्रह्मास्म्यहमव्ययम्॥
ब्रह्मैवाहं न संसारी न चाहं ब्रह्मणः पृथक्।
नाहं देहो न मे देहः केवलोऽयं सनातनः॥
एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचनेतिश्रुतेः॥

इति श्रीमच्छंकराचार्यविरचितं सन्ध्याप्रञ्चीकरणं महावाक्यार्थश्च सम्पूर्णमभूत्

यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च।
इत्थं विजानामि सदात्मरूपं तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम्॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अङ्गन्यासादिनिर्देशपूर्वकं प्रणवोपासनं, अहंकारादिस्थूलशरीरान्तसृष्टिः, तत्त्वमसीति महावाक्यार्थश्च संक्षेपेण प्रतिपाद्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (764) B 504 सन्न्यासोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—13 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः – आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-24 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

मू–ओं आप्यायन्त्विति शान्तिः।

ओं अथातः सन्यासोपनिषदं व्याख्यास्यामः। योऽनुक्रमेण सन्न्यस्यति स सन्न्यस्तो भवति। को यं सन्यास उच्यते। कथं सन्यस्ते भवति। य आत्मानं क्रियाभिर्गुप्तं करोति। मातरं पितरं पुत्रान् बन्धूननुमोदयित्वा ये चास्य तु ऋत्विजस्तान् सर्वांश्च पूर्ववत् वृणीत्वा वैश्वानरेष्टिं निर्वपेत्। सर्वस्वं दद्याद्यजमानस्य गा ऋत्विजः सर्वैः पात्रैः समारोप्य यदाहवनीये गार्हपत्येऽन्वाहार्यपचने सभ्यावसथ्ययोश्च प्राणापानव्यानोदानसमानान् सर्वान् सर्वेषु समारोपयेत्। सन्यासधर्माः प्रोच्यन्ते विस्तरेणैव पञ्चस्य इयं व्याख्यास्यते साक्षात्सन्यासोपनिषत्सती॥ अत्रादौ।

उपसंहारः—

भा–यदृच्छयोपलब्धं ह्यशनाच्छादनं न कस्यापि निन्द्यं स्यात्। मार्जारी प्रवृत्तिः। स्वाशेन प्रथमवैराग्यवता हठात्कारेणाश्रयणीया। पादपात्पादपान्तरं धावन्त्या अपि मातुरुदरमविमुञ्चन्वानरशिशुरिव तीव्रतरवैराग्यसम्पन्नत्वात्। पश्चात्तु ज्ञानाभ्यासवतो मोक्तुर्जीवन्मुक्तस्येत्यर्थः। वानरी प्रवृत्तिः भाक्तमेव न मुख्या। मार्जारस्य कुड्योपरि स्थितिरिव वैराग्यानुष्ठानस्य दुर्बलत्वसंभवात्। कृतकृत्यत्वात्तस्य तदनवद्यम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु सन्न्यासोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सन्न्यासाधिकारः, सन्न्यासस्वीकारक्रमः, तेषां षड्भेदाश्च सम्यङ्निरूपिताः।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (765) 4823 सप्तदशप्रकरणम्

ग्रन्थकर्ता—महेश्वरानन्दः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम् —$15\frac{1}{4} \times 1\frac{3}{8}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-199

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—90
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

सप्तदशप्रकरणस्य सम्प्रदायार्थमाह—आत्मनः बन्धो मोक्षो वा नास्ति। अनामकनिरालम्बं स्वीयचिच्छक्तया स्वस्मिन्नीश्वरत्वमारोप्य अनिर्वचनीयमायया जगत्पाञ्चभौतिकं सृष्ट्वा रज्जुसर्पवत् ततः स्वात्मनि 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति श्रुत्या चित्तसादात्म्यात् जीवभावहावनारोप्य दुष्कृतं चेन्नरकप्राप्तिः सुकृतं चेत्स्वर्गमोक्षौ कल्पयित्वा लीलार्थं करोति। एवमेव ब्रह्मादिमनुष्यपर्यन्तं गुरुशिष्यभावमारोप्य विवेकी चेद्गुरुः अविवेकी चेच्छिष्यः, ईश्वरो गुरुः, शिष्यो जीव इति नामभेदं च कल्पयित्वा अतः परं पुराकृतपुण्यवशात् शुभाशुभं त्यक्त्वा सद्गुरुनमस्कारं करोति—

उपसंहारः—

सद्यो गृह्णाति बुद्धिमानिति। जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्। पुनः पुनरालोचनम्। राजविद्या राजगुह्यम्, गुह्याद्गुह्यतमं परमिति भगवद्वचनात्। आयुः क्षणभङ्गुरमिति ज्ञात्वा जननमरणध्वंसकारणमिदमिति सद्यो गृह्णाति बुद्धिमानिति। अनन्तशास्त्रव्याख्यानेष्वितो नास्त्यधिकं परमित्येतावत्पर्यन्तश्लोकद्वयेनास्य ग्रन्थस्य तात्पर्यं सङ्ग्रहेणोक्तमित्यर्थः॥

श्रीशृङ्गेरिपुरेवासी कृष्णशास्त्रीति विश्रुतः।
पूर्वार्धमस्य ग्रन्थस्य व्याख्यानं च चकार सः॥
विद्वज्जनानां निकटे गत्वा श्रुत्वा कृतं मया।
व्याख्यानमस्य ग्रन्थस्याप्यक्षमोऽपीश्वरेच्छया॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामभद्रतीर्थपादशिष्यश्रीमत्सदाशिवानन्दपादशिष्यमहेश्वरानन्दविरचितं सकलवेदशास्त्रपुराण........परमार्थनिरूपणं नाम सप्तदशं प्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अविद्वन्निन्दानिरूपणं, विद्वन्निरूपणं, ज्ञानसौलभ्यनिरूपणं, आत्मानात्मनिरूपणं, मुख्यवैराग्यनिरूपणं, उत्पत्तिस्थितिलयनिरूपणं, अभेदोपासनानिरूपणं, स्वरूपतटस्थलक्षणनिरूपणं, भ्रान्तिनिवारणनिरूपणं, सङ्कल्पोपशमनिरूपणं, शोकनाशनिरूपणं, स्वात्मपूजानिरूपणं, नित्यसमाधिनिरूपणं, साक्षिवदनुभवनिरूपणं, उपदेशक्रमनिरूपणं, सकलवेदशास्त्रपरमार्थनिरूपणमित्येते विषयाः प्रतिपाद्यन्ते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते । मध्ये पत्रस्फोटः ग्रन्थलोपश्च विद्यते ॥

## No. (766) A 803 सप्तदशप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—महेश्वरानन्दः | प्रतिपुटं पङ्क्तयः—21 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—12¼×8½ अङ्गुलानि | कालः (कोशस्य)—1940 |
| लिपिः—देवनागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-230 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

4828 कोशवत् ।

उपसंहारः—

4828 कोशवत् ।

प्रतिपाद्यविषयः—

4828 कोशवत् ।

वक्तव्यविशेषः—

4828 कोशवत् ।

## No. (767) A 533 सप्तप्रकरणी (सव्याख्या)

ग्रन्थकर्ता—रामचन्द्रेन्द्रसरस्वती
(व्याख्याता उपनिषद्ब्रह्मेन्द्रसरस्वती)
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—13¼×8 अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-145

प्रतिपुटं पङ्क्तयः—28
प्रतिपङ्क्त्यक्षराणि—18
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

स्वाविद्यापदतत्कार्यकलनोन्मुक्तवैभवम् ।
ब्रह्ममात्रतया शिष्टं रामाख्यं त्वपदं भजे ॥

नत्वा गुरुं निर्विशेषप्रबोधफलमिच्छताम् ।
तदुपायं त्रिपात्तत्त्वविवेकार्थो निगद्यते ॥

इह खलु स्वांशजप्राणिपटलस्वपदप्राप्त्युपायप्रदानपरमदयारूपेयं भगवती त्रिपाद्विभूतिलीलाभूतिमुखेन अनादिकालमारभ्य विवेकगन्धविकलं मोहभूतिवृन्द वीक्ष्य—

उपसंहारः—

रामचन्द्रेन्द्रगदितश्लोकार्थज्ञानवान्मुनिः ।
स्वातिरिक्तभ्रमं त्यक्त्वा स्वमात्रमवशिष्यते ॥ इति ।

लीलाभूतिमुखारविन्दोदितोक्तलक्षणलक्षिताविद्यकपदं द्वैतमद्वैतं तल्लयास्पदं अविद्यारोपापवादविरळं परमाद्वयमिति परमसिद्धान्तश्लोकप्रतिपाद्यार्थमननान्मुनिः परमाद्वैती, स्वशब्देन निर्विशेषब्रह्ममात्रमुच्यते । तदतिरिक्तव्यष्टिसमष्ट्यात्मकाविद्यापदतदविभक्तस्थूलसूक्ष्मबीजतुर्यांशारोपापवादमहाभ्रमं दूरतस्त्यक्त्वा निर्विशेषस्वमात्रायमानतुर्यतुर्यत्रिपाद्रूपावस्थानलक्षणविकळेबरकैवल्यरूपेणावशिष्यते । स्वातिरिक्ताखिलापह्नवसिद्धब्रह्ममात्रं भवतीति फलितोऽर्थः ॥

इति श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मेन्द्रयोगिना ।
एकश्लोकप्रकरणव्याख्येयं लिखिता मुदे ॥

इति श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिकृतमेकश्लोकप्रकरणविवरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सप्त प्रकरणानि विद्यन्ते। तत्र प्रथमे त्रिपात्तत्त्वविवेकाख्ये—एकस्यैव नारायणस्य मायोपाधिवशेन नित्य-लीला मोह-जडरूपाश्चतस्रो विभूतयः साक्षी-जीव-विश्वरूपाः इति, प्रतिपाद्यते। द्वितीये परमाद्वैतदर्शनप्रकरणे जगज्जीवेशादिसकलभेदं त्यक्त्वा केवलं निरुपाधिब्रह्मैवाहमिति ज्ञानं मोक्षसाधनमुच्यते।

तृतीये परमाक्षरविवेकप्रकरणे, क्षरादविद्यातत्कार्यादतिरिक्तस्याक्षरस्य ब्रह्मणो विवेकः क्रियते।

चतुर्थे सत्तासामान्यविवेकप्रकरणे स्वातिरिक्तसर्वविनिर्मुक्तं ब्रह्मैव सत्तासामान्यमिति विविच्यते।

पञ्चमे—भक्तेः स्वरूपं विचारितम्।

षष्ठे—रामनामार्थविवेकः क्रियते।

सप्तमे—अविद्यकपदं द्वैतमद्वैतं तल्लयास्पदम्।
अविद्यारोपापवादविरळं परमाद्वयम्॥

इति सर्ववेदान्तार्थसंग्राहकं एकश्लोकप्रकरणमिति।

वक्तव्यविशेषः—

अस्मिन्कोशे संपूर्णानि सप्त प्रकरणानि विद्यन्ते। अमुद्रितश्च दृश्यते। अयं ग्रन्थः शुद्धाद्वैतमतीय इति ज्ञायते॥

## No. (768) 2212 सप्तप्रकरणी (सव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता रामचन्द्रेन्द्रसरस्वती (व्याख्याता उपनिषद्ब्रह्मेन्द्रसरस्वती) | प्रतिपुटं पङ्क्तयः—7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—100 |
| प्रमाणम्—$15\frac{3}{4} \times 1\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—125 वत्सराः स्युः। |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-81 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

A 633 कोशवत्।

उपसंहार:—

स परमाद्वैती परमाद्वैतमहासाम्राज्यमेति तद्रूपेणावशिष्यत इत्यर्थः। ग्रन्थसङ्ख्यां विशदयति—सप्ताशीतिग्रन्थयुता श्रीरामार्थविवेकचिदिति। (व्या) चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च चित्त्वं चिदहमेतेन लोकाश्चिदिति भावयेदित्यादिश्रुतित एतत्प्रकरणस्यापि चित्त्वमुपपद्यत इत्यर्थः।

इति श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मेन्द्रयोगिना।
उपेयनामविवेकव्याख्येयं लिखिता मुदा॥

प्रतिपाद्यविषय:—

A 633 कोशवत्।

वक्तव्यविशेष:—

अस्मिन्कोशे अन्तिममेकश्लोकप्रकरणं विना षट् प्रकरणानि विद्यन्ते॥

## No. (769) B 505 सरस्वतीरहस्योपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{4}\times6\frac{1}{2}$ अङ्गुलानि
लिपि:—आन्ध्रलिपि:
पत्राणि—217-238

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—22
काल: (कोशस्य)—?
स्थिति: – समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रम:—

मू-ओं सहनाववत्विति शान्तिः।
ऋषयो ह वै भगवन्तस्तमाश्वलायनं सम्पूज्य पप्रच्छुः।
केनोपायेन तज्ज्ञानं तत्पदार्थावभासकम्।
यदुपासनया तत्त्वं जानासि भगवन्वद।

सरस्वतीदशश्लोक्या सऋचा बीजमिश्रया ।
स्तुत्वा जप्त्वा परां सिद्धिमलभन्मुनिपुङ्गवाः ॥

ऋषय ऊचुः—

कथं सारस्वतप्राप्तिः केन ध्यानेन सुव्रत ।
महासरस्वती येन तुष्टा भगवती वद ॥

भाः—यामाचार्यमुखादधीत्य पुरुषस्सद्योविमुक्तोभवे ।
यस्यां सर्वरहस्यमस्ति सकलाम्नायान्तसिद्धंमहत् ॥

यस्यां पञ्च समाधयो निगदितास्तत्वानि मन्त्राः परे ।
व्याख्यास्ये कुतुकेन तामिह सरस्वत्या रहस्यं श्रुतिं ॥

शब्दब्रह्ममयी वाणी परब्रह्मस्वरूपिणी ।
सर्वलोकोपकाराय सरळा मद्विजृंभतां ॥

ऋषय इति ।

उपसंहारः—

भा—प्राक्प्रबोधादुभयसद्भावेऽपि पश्चादसद्भावादिति भावः । इत्येवं यस्तु वाक्यार्थश्रवणादिभिर्विजानाति स विद्वान् सद्यो मुक्तो भवति । नात्र कश्चिदपि संशयोऽस्ति । अस्यां सरस्वतीरहस्योपनिषदि परमरहस्यार्थानामभिहितत्वात् बुद्धिमानत्रैव पुनः पुनः परिचयं कुर्यादिति ।

इति श्रीमत्सुन्दरेश्वरगुरुपादशिष्याप्पयदीक्षिताचार्यकृतौ सरस्वतीरहस्योपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सारस्वतमन्त्राः सर्षिच्छन्दोदेवताः स्पष्टं निर्दिश्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मध्ये क्वचित्क्वचिद्ग्रन्थलोपश्च विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (770) B 278/2 सर्ववेदान्तसिद्धान्तसारसङ्ग्रहः

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—मलयाळलिपिः
पत्राणि—83–166

प्रतिपुटं पङ्क्तयः—9
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

अखण्डानन्दसम्बोधो वन्दनाद्यस्य जायते ।
गोविन्दं तमहं वन्दे चिदानन्दतनुं गुरुम् ॥
अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥
यदालम्बो दरं हन्ति सतां प्रत्यूहसंभवम् ।
तदालम्बेति चा(म्बे दया)लम्बं लम्बोदरपदाम्बुजम् ॥
अर्थतोऽप्यद्वयानन्दमतीतद्वैतलक्षणम् ।
आत्मारामममहं वन्दे श्रीगुरुं शिवविग्रहम् ॥
वेदान्तशास्त्रसिद्धान्तसारसङ्ग्रह उच्यते ।
प्रेक्षावतां मुमुक्षूणां सुखबोधोपपत्तये ॥

उपसंहारः—

शान्ताशेषविशेषांशस्तिष्ठेदद्वैतमात्रके ।
अन्तर्मुखतया नित्यं षष्ठीं भूमिमुपाश्रितः ॥
परिशान्ततया गाढनिद्रालुरिव लक्ष्यते ।
कुर्वन्नभ्यासमेतस्यां भूम्यां सम्यग्विवासनः ॥
तुर्यावस्थां सप्तभूमिं क्रमात्प्राप्नोति योगिराट् ।
विदेहमुक्तिरेवात्र तुर्यातीतदशोच्यते ॥
यत्र नासन्न सच्चापि नासन्नाप्यनहंकृतिः ।
केवलं क्षीणमनन आस्तेऽद्वैतेऽतिनिर्भयः ॥

(अत्र ग्रन्थलोप:)

सर्ववेदान्तसिद्धान्तसारसङ्ग्रहनामकः ।
ग्रन्थोऽयं हृदयग्रन्थिविच्छित्त्यै रचितः सताम् ॥
श्रीमद्भिर्भगवत्पादैः....इत्यायं मुमुक्षुभिः ।
श्रोतव्यो दर्शनीयश्च पठनीयश्च सर्वदा ॥

सम्पूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे—अनुबन्धचतुष्टयम्, साधनचतुष्टयम्, कामादिदोषाः, प्रपञ्चमिथ्यात्वम्, अज्ञानविचारः, जीवेश्वरस्वरूपम्, विश्वादिजीवभेदाः, पञ्चभूतोत्पत्तिक्रमेण जगत्सृष्टिः, पञ्चकोशाः, पञ्चीकरणम्, अवस्थात्रयम्, अध्यासविचारः, अज्ञानवादः, आत्मानात्मविवेकः, पुत्रदेहेन्द्रियमनआदिष्वात्मत्वखण्डनम्, आत्मनो लक्षणस्वरूपनिर्वचनम्, वाच्यार्थलक्ष्यार्थप्रतिपादनपूर्वकं तत्त्वमसि वाक्यार्थनिर्वचनम्, अखण्डार्थविचारः, समाधिभेदनिरूपणमित्यादयो बहवो विषयाः प्रतिपाद्यन्ते ।

वक्तव्यविशेषः—

अयं ग्रन्थः श्रीरङ्गे मुद्रितो दृश्यते ॥

## No. (771) B 506 सर्वसारोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-16 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सर्वसारं निरालम्बं रहस्यं वज्रसूचिकम् ।
तेजोनादध्यानविद्यायोगतत्त्वात्मबोधकम् ॥

सह नाववत्विति शान्तिः । कथं बन्धः कथं मोक्षः का विद्या काऽविद्येति । जाग्रत्स्वप्नसुषुप्तितुर्यं च कथम् । अन्नमयप्राणमयमनोमयविज्ञान-

मयानन्दमयकोशाः कथम्। कर्ता जीवः पञ्चवर्गाः क्षेत्रज्ञः साक्षी कूटस्थः अन्तर्यामी कथम्। प्रत्यगात्मा परमात्मा माया चेति कथम्। अनात्मनो देहादीनामात्मत्वेन यदाभिमन्यते तदात्मनो बन्धः। अहं ब्रह्मास्मीत्यपरोक्षज्ञानेन देहाद्यभिमानं यदा मुञ्चति तदाऽऽत्मनो मोक्षः ॥

उपसंहारः—

भा—नन्वात्मनः कर्तृत्वाभावे बन्धस्य केवलमभावो युज्यते, न तु मोक्षस्य; अकर्तुरेव नित्यमुक्तत्वप्रसिद्धेरिति चेन्नैष दोषः—मोक्षस्य सप्रतियोगिकब्रह्मात्मकस्याकर्त्रात्मत्वेऽपि कर्त्रात्मविषयकबन्धनिवृत्तिसमकालं कतकरेणोरिव निवृत्तिसंभवान्मोक्षातीतावस्थागतनिष्प्रतियोगिकाऽरूपब्रह्मपर्यवसन्ना एव वेदान्ताः। अपि तु मुमुक्षुभिः सप्रतियोगिकमेव वेद्यमिति।

इत्यप्पयदीक्षिताचार्यकृतौ सर्वसारोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे बन्धमोक्षविद्याऽविद्याजाग्रत्स्वप्नसुषुप्तितुर्याऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयकोशजीवसाक्षीकूटस्थान्तर्यामिप्रत्यगात्मपरमात्मनां स्वरूपं विविच्य प्रतिपाद्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते ॥

## No. (772) B 624 सर्वोपनिषत्सारसञ्जीवनी (ब्रह्मविद्या)

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—14 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—32 |
| प्रमाणम्—9¼×6¼ अङ्गुलानि | कालः (कोशस्य)—63 |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-88 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

श्रीमन्महायोगपीठे संस्थितं तत्त्वदर्शितम्।
सदानन्दगुरुं वन्दे ज्ञानमार्गप्रबोधकम् ॥

सोमसूर्याग्निमध्यस्थं महातेजोविराजितम् ।
योगीश्वरैर्ध्यानगम्यं तत्त्वमूर्तिं भजाम्यहम् ॥
अव्यक्तव्यक्तरूपाय निर्गुणाय गुणात्मने ।
समस्तजगदाधारमूर्तये ब्रह्मणे नमः ॥
कदाचिन्नैमिशारण्ये शौनकाद्या महर्षयः ।
सूतं प्रति सदा सम्यङ्मृदुवाक्यैर्महात्मकाः ॥

ऋषयः---

सूत सूत महाभाग कर्मयज्ञान्यनेकशः ।
नानाधर्मपुराणेषु त्वया चोक्तान्मुनीश्वर ॥

उपसंहारः—

इत्येवं बोधयामास तं शृणु द्विजसत्तमम् ।
सोऽपि विप्रतपस्वीयं गुरुं नत्वा तदाज्ञया ॥
गृहं गत्वा सद्गुरूक्तमार्गेण ध्यानमास्थितः ।
ततो गुरुस्स त्वरया मुदान्वितो
महानुभावोत्तरतश्च तत्क्षणात् ।
तदादिमध्यान्तमिदं ह्युदीरितं
मयापि सर्वं शृणु दर्शितः खलु ॥

हरिः ओं तत्सदिति श्रीमत्सर्वोपनिषत्सारब्रह्मविद्यायां मोक्षशास्त्रे राजयोगप्रकरणे गुरुस्तुतिलक्षणं नाम चतुस्त्रिंशोऽध्यायः । समाप्तश्चायं ग्रन्थः

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते । अयं ग्रन्थः शब्दार्थाशुद्धिबहुलः पौराणिकीं शैलीमनुसृत्यापौरुषेयत्वभ्रान्तिमुत्पाद्य केनचिन्निर्मित इति प्रतिभाति ॥

## No. (773) B 507 सावित्र्युपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—13 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–4 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सावित्र्यात्मा पाशुपतं परं ब्रह्मावधूतकम् ।
त्रिपुरा तपनं देवीत्रिपुराकरभावना ॥
ओं आप्यायन्त्विति शान्तिः ।

ओं कस्सविता। का सावित्री। अग्निरेव सविता। पृथिवी सावित्री। स यत्राग्निस्तत्पृथिवी, ते द्वे योनिस्तदेकं मिथुनम्। कस्सविता। का सावित्री। वायुरेव सविता। आकाशः सावित्री। स यत्र वायुस्तदाकाशो यत्र वा आकाशस्तद्वायुस्ते द्वे योनिस्तदेकं मिथुनम्। कस्सविता। का सावित्री। यज्ञ एव सविता। छन्दांसि सावित्री। स यत्र यज्ञस्तच्छन्दांसि यत्र वा छन्दांसि स यज्ञस्ते द्वे योनिस्तदेकं मिथुनम्।

उपसंहारः—

लोकत्रयात्मकत्वावधारणे ब्रह्मात्मैक्यप्रतिपादकत्वं स्वयमेव सिध्यतीति। अथेह बलातिबलयोः क्षुदादिनिरसने विनियोग इत्युक्त्या काम्यप्रयोजनमात्रसिद्धिरित्याशंक्येत, चतुर्विधपुरुषार्थसिद्धिप्रद इत्युक्तत्वान्न तथा शंकोपपद्यते। चतुर्थो हि पुरुषार्थः मोक्षः। तस्माद्भोगमोक्षोभयार्थकौ बलातिबलौ मन्तव्यौ।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु सावित्र्युपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अग्निपृथिव्योः, वाय्वाकाशयोः, यज्ञच्छन्दसां च मिथुनत्वम्प्रतिपाद्य, बलातिबलविद्ये च सम्यङ्निरूपिते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (774) B 508 सीतोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—20 |
| प्रमाणम्—7½×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-12 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ओं भद्रं कर्णेभिरिति शान्तिः।

देवा ह वै प्रजापतिमब्रुवन्—का सीता, किं रूपमिति। स होवाच प्रजापतिः—सा सीता इति।

मूलप्रकृतिरूपत्वात्सा सीता प्रकृतिस्स्मृता।
प्रणवप्रकृतिरूपत्वात्सा सीता प्रकृतिरुच्यते॥

सीता इति त्रिवर्णात्मा साक्षान्मायामयी भवेत्।
विष्णुः प्रपञ्चबीजा च माया ईकार उच्यते॥

सकारस्सत्यममृतप्राप्तिस्सोमश्च कीर्त्यते।
तकारस्तारलक्ष्म्या च वैराजः प्रस्तरस्स्मृतः।
ईकाररूपिणी सोमाऽमृतावयवदिव्यालङ्कारस्रक्॥

उपसंहार :—

ननु वैखानसऋषेर्मतं तान्त्रिकमपि भगवत इच्छाशक्तेर्मायाद्यष्टाङ्गैरुपेतत्वाभिधानान्निर्गुणब्रह्मरूपत्वं वक्तुं शक्यम्। अतस्तद्वैदिकमिश्रं स्यादिति चेन्न; वैदिकमिश्रनाम्नास्सर्वेष्वपि तान्त्रिकेषु मतेषु विद्यमानत्वात्। शुद्धवैदिकं हि मतं साधु स्यात्। न चाष्टाङ्गोपेतत्वेन सा शक्तिर्निर्गुणब्रह्ममयीत्यवगन्तुं शक्यम्। अष्टमस्य समाध्याख्यस्याङ्गस्यापि मूर्तिविषयकत्वात्। वीरलक्ष्मीस्तु सकामाराध्येति विस्पष्टमवगम्यते। तस्माद्वैखानसऋषेर्मतमवैदिकमेव। तथापि वैखानसाख्यस्य पर्वतस्य सर्ववेदमयत्वाद्यवधारणादोङ्कारात्परतोऽभिधीयमानत्वाच्च तन्निर्विशेषं ब्रह्मेत्यवगन्तव्यम्।

इत्यप्पय्यदीक्षिताचार्यकृतिषु सीतोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सगुणनिर्गुणभेदेन सीतास्वरूपं सम्यङ्निरूप्यते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (775) 1830/1 सिद्धान्तकल्पवल्ली

| | |
|---|---|
| ग्रन्थकर्ता—सदाशिवेन्द्रसरस्वती | प्रतिपुटं पङ्क्तयः —7 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—48 |
| प्रमाणम्—16×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1–11 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

अङ्कुरितबोधमुद्रिकमपसव्योरूपरिन्यस्तसव्यपदम् ।
यस्त्वेकमनुसरामो वटभूरुहमूलवास्तव्यम् ॥

वदनतदधो विभागव्याश्रितमातङ्गमानवाभेदम् ।
मदनारिभागधेयं महिमानं वयमुपास्महे कमपि ॥

यदपाङ्गितः प्रबोधो भवदुःस्वप्नावसानकरः ।
तमहं परमशिवेन्द्रं वन्दे गुरुमखिलतन्त्रजीवातुम् ॥

उपसंहारः—

बिम्बेश्वरवादे त्वीश्वरताप्राप्तिर्विमुक्तस्य ।
आसर्वमुक्त्यमुष्मिन् बिम्बत्वापह्नवायोगात् ॥

परमार्थतस्तु मुक्तः सर्वेशत्वादिधर्मनिर्मुक्तम् ।
विगळितसकलविकल्पं विमलं ब्रह्मैव केवलं भवति ॥

इत्थं परमशिवेन्द्रानुग्रहभाजनसदाशिवेन्द्रकृतौ ।
सिद्धान्तकल्पवल्ल्यां तुर्यः स्तबकश्च सम्पूर्णः ॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे—विधिविचारः, जगत्कारणत्वविचारः, जीवेश्वरस्वरूपविचारः, जीवैकत्वनानात्वविचारः, जगत्कर्तृत्वविचारः, ईश्वरस्य सर्वज्ञत्वविचारः, परोक्षज्ञानस्याज्ञाननिवर्तकत्वविचारः, साक्षिविचारः, श्रुतिप्रत्यक्षयोः प्राबल्यदौर्बल्यविचारः, उपजीव्योपजीवकभावविरोधपरिहारः, प्रतिबिम्बमिथ्यात्वसत्यत्वविचारः, स्वप्नाधिष्ठानविचारः, दृष्टिसृष्टिकल्पकविचारः, कर्मणां वियोगप्रयोगप्रकारविचारः, निर्गुणस्याप्युपास्यत्वं, ब्रह्म-

साक्षात्कारं प्रतिकारणत्वविचारः, शाब्दोपरोक्षवादः, अविद्यानिवृत्तिस्वरूपविचारः, मुक्तिस्वरूपमित्यादयो विषया मतभेदेन निरूप्यन्ते।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रः विद्यते; अमुद्रितश्च ज्ञायते; कोशस्यास्य च कीटखण्डितत्वात् दुरवगाहश्च।

## No. (776) 989/4 सिद्धान्तकल्पवल्ली

| | |
|---|---|
| ग्रन्थकर्ता—सदाशिवेन्द्रसरस्वती | प्रतिपुटं पङ्क्तयः—15 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—17½×1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—2–17 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

......धः श्रवणं तदत्र मानफले।
का वा कथा विधीनामिति वाचस्पतिमतानुगाः प्राहुः॥ १३॥
जगदुत्पत्तिस्थितिलयहेतुत्वं ब्रह्मणः श्रुतावुक्तम्।
तल्लक्षणत्रयमिति साधयन्ति स्म कौमुदीकाराः॥ १४॥
केचिदभिन्ननिमित्तोपादानत्वस्य लाभाय।
इदमेकमेव लक्षणमस्येति प्राहुराचार्याः॥ १५॥

उपसंहारः—

1830/1 कोशवत्।

प्रतिपाद्यविषयः—

1830/1 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे त्रयोदशश्लोकमारभ्य आसमाप्तिपर्यन्तो ग्रन्थो विद्यते॥

## No. (777) 1830/2 सिद्धान्तकल्पवल्ली व्याख्या

ग्रन्थकर्ता—सदाशिवेन्द्रसरस्वती
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—16×1⅓ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—12×50
प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—48
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

स्वाज्ञानेन विवर्तते त्रिभुवनाकारेण यस्सर्वत-
स्स्वस्मै यस्स्वयमेव चोपदिशति स्वं शिष्यगुर्वात्मना ।
स्वज्ञानेन च योऽद्वितीयसुखसद्बोधात्मना शिष्यते
तस्मै विस्मयनीयशक्तिनिधये कस्मैचिदस्मै नमः ॥

सिद्धान्तलेशसंग्रहाख्यग्रन्थे वर्णितानाम्मतानां सुखेनावधारणार्थं चिकीर्षितस्य सिद्धान्तकल्पवल्ल्याख्यस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय कृतमिष्टदेवतोपासनालक्षणं मङ्गळं ग्रन्थतो निबध्नाति—अङ्कुरितेति ।

उपसंहारः—

संसारदशायामानन्दो नास्ति न भातीति व्यवहारादावरणप्रयुक्ता कान्चित्तस्याप्राप्ति ........ स्यते । विद्यया आवरणनिवृत्तौ तत्प्रयुक्ता-प्राप्तिर्निवर्तत इति आप्तिः प्राप्तिश्च सुखस्यैवेति मतमाह—आनन्द इति ॥

प्रतिपाद्यविषयः—

1830/1 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्ग्रन्थे चतुर्थस्तबके एकादशश्लोकव्याख्यानपर्यन्तो ग्रन्थो विद्यते । मुद्रितश्च श्रीरङ्गे दृश्यते ॥

## No. (778) 3611 सिद्धान्ततत्त्वम्

| | |
|---|---|
| ग्रन्थकर्ता—अनन्तदेवः | प्रतिपुटं पङ्क्तयः—9 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—44 |
| प्रमाणम्—11¼ × 1½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—समीचीना |
| पत्राणि—1–59 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सर्ववेदान्तसिद्धान्तसम्प्रदायानुसारतः ।
नमस्कृत्य गुरून्वक्ष्ये प्रक्रियां तत्त्वसंश्रयाम् ।
यच्छ्रीनिद्रामतीर्थेभ्यः सम्प्रदायसमागतम् ।
श्रुतं सत्तर्कसचिवं विविच्य कथयामि तत् ॥

इह खल्वखण्डाद्वितीयमानन्दैकरसं स्वप्रकाशं चैतन्यमेव जगतस्तत्त्वमनिर्वचनीयस्येव सर्पस्येव रज्जुः । कथं तर्हि जीवेश्वरविभागप्रतिपत्तिरिति चेत्, अज्ञानरूपादुपाधेरिति । यथा ह्येकस्यैव मुखस्य दर्पणोपाधिसंबन्धात्, बिम्बप्रतिबिम्बभावः एवं चिन्मात्रस्योपाधिसंबन्धाज्जीवेश्वरभावो न तत्त्वान्तरमस्ति ॥

उपसंहारः—

तस्मात् दृष्टिसृष्टिवादेऽपि नित्यनैमित्तिकाद्यनुष्ठानेन शुद्धान्तःकरणस्य शमादिसम्पन्नस्य गुरुमनुसृतस्य श्रवणादिपरिपाकसमुत्पन्नतत्त्वज्ञानस्याज्ञानतत्कार्यबाधे सति सत्यज्ञानानन्दाखण्डाद्वितीयं वस्तुमात्रमवशिष्यते नान्यदिति सर्वमवदातम् ॥

इत्थं परिव्राजकतीर्थपादश्रीरामतीर्थानुग्रहप्रसादात् ।
सिद्धान्ततत्त्वं गतवाग्विवादमनन्तदेवेन मुदा न्यरूपि ॥
इत्येषा वाङ्मयी पूजा श्रीगोपालपादयोः ।
अर्पिता तेन मे देवः प्रीयतां परमेश्वरः ॥

इति श्रीमत्सकलदेशमण्डलविश्रान्तयशोमण्डलनिखिलश्रुतिशिरस्तत्त्वपरिशीलनमर्यादाधुरंधरश्रीमदापदेवसूनुना अनन्तदेवेन कृतं सिद्धान्ततत्त्वं नाम प्रकरणम्

प्रतिपाद्यविषयः—

चैतन्यस्य जगत्तत्त्वत्वं, अज्ञानवादः, जीववादः, चिदात्मनोऽपरोक्षत्वविचारः, पञ्चभूतेभ्य इन्द्रियादीनामुत्पत्तिः, अध्ययनविधिविचारः, साधनचतुष्टयसम्पन्नस्य श्रवणाद्यधिकारः, श्रवणादिस्वरूपं, तेषामङ्गाङ्गिभावः, तत्त्वबोधहेतुत्वं च, जीवेश्वरविचारः, महावाक्यार्थनिरूपणं, प्रपञ्चमिथ्यात्वनिरूपणम्, कर्मणां चित्तशुद्धिद्वारा ज्ञानोपयोगित्वनिरूपणमित्यादयो विषयाः संग्रहेण प्रतिपाद्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च (वाराणस्यां) दृश्यते।

## No. (779) 326/1 सिद्धान्तबिन्दुः

ग्रन्थकर्ता—मधुसूदनसरस्वती
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—18 × 1$\frac{1}{8}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–17

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—96
कालः (कोशस्य)—200
(विभववत्सरे)
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

श्रीशंकराचार्यनवावतारं विश्वेश्वरं विश्वगुरुं प्रणम्य ।
वेदान्तशास्त्रश्रवणालसानां बोधाय कुर्वे कमपि प्रयत्नम् ॥

इह खलु साक्षात्परम्परया वा सर्वाञ्जीवान् समुद्दिधीर्षुर्भगवान् शंकरोऽनात्मभ्यो विवेकेनात्मानं नित्यशुद्धबुद्धमुक्तस्वभावं संक्षेपेण बोधयितुं दशश्लोकीं प्रणिनाय। नन्विदंकारास्पदेभ्योऽनात्मभ्यो विवेकेनाहंकारास्पदमात्मानं सर्वो लोकोऽहमस्मीति प्रत्येति दुःखं चानुभवति। तेन ज्ञातज्ञापकत्वान्निष्प्रयोजकत्वाच्चात्मतत्त्वप्रतिपादनं व्यर्थमिति चेन्न।

उपसंहारः—

तदेवं वेदान्तवाक्यजन्याखण्डाकारवृत्त्या अविद्यानिवृत्तौ तत्कल्पितसकलानर्थनिवृत्तौ परमानन्दरूपः सन् कृतकृत्यो भवतीति सिद्धम् ॥

न स्तौमि तं व्यासमशेषमर्थं सम्यङ् न सूत्रैरपि यो बबन्ध ।
विनापि तैः सङ्ग्रथिताखिलार्थं तं शंकरं नौमि सुरेश्वरं च ॥
लघुरपि बह्वर्थवहश्चिन्तामणिरिव निबन्धोऽयम् ।
मधुसूदनेन मुनिना विहितो गुणिनां विनोदाय ॥
यदत्रासौष्ठवं किंचित्तन्ममैव गुरोर्न हि ।
यदत्र सौष्ठवं किंचित्तद्गुरोरेव मे न हि ॥
बहुयाचनया मयायमल्पो बलभद्रस्य कृते कृतो निबन्धः ।
यद्दुष्टमिहास्ति यच्च दुष्टं तदुदाराः सुधियो विवेचयन्तु ॥
विभवेब्दे नभःकृष्ण अमायां रविवासरे ।
सिद्धान्तबिन्दुर्लिखिता सुब्बरायेण धीमता ॥
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपूज्यपादशिष्यश्रीमधुसूदनसरस्वतीविरचितः
सिद्धान्तबिन्दुः समाप्तः

**प्रतिपाद्यविषयः—**

अस्मिन्ग्रन्थे तत्त्वं, पदयोर्वाच्यार्थलक्ष्यार्थनिरूपणं, अखण्डार्थबोधनिरूपणं, जीवविषये मतभेदनिरूपणं, आत्मनो नित्यत्वादिप्रतिपादनम्, अज्ञानविचारः, अध्यासलक्षणं, मतभेदेन जीवस्य प्रतिबिम्बत्वावच्छिन्नत्वनिरूपणं, दृष्टिसृष्टिवादः, एकानेकजीववादः, सांख्यादिमतखण्डनं मतभेदेन साक्षिस्वरूपनिरूपणं, पञ्चीकरणं, त्रिवृत्करणं, जाग्रदाद्यवस्थात्रयनिरूपणमित्यादयः अनेके विषयाः प्रतिपाद्यन्ते ॥

**वक्तव्यविशेषः—**

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च दृश्यते ॥

## No. (780) B 112 सिद्धान्तबिन्दुटीका (न्यायरत्नावली)

| | |
|---|---|
| ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती | प्रतिपुटं पङ्क्तयः—10 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—8 × 6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-251 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

नमो नवघनश्यामकामकामितदेहिने ।
कमलाकामसौदामकणकामुकगेहिने ॥
अद्वैतसिद्धेष्टीकायास्तदीयायाश्च सङ्ग्रहात् ।
विचित्ररचना काचिद्ब्रह्मानन्देन रच्यते ॥
शंकरोक्तिसुधाम्बोधेर्गुरूणामुपदेशतः ।
उध्दृतां प्रकटीकुर्वे न्यायरत्नावलीमिह ।

तत्राद्वितीयस्वप्रकाशनिरतिशयानन्दस्वरूपयोर्जीवब्रह्मस्वरूपयोरैक्यमुक्तानन्दरूपं बोधयदहं ब्रह्मास्मीत्यादिवेदान्तमहावाक्यं द्वितीयविषयकप्रत्यक्षादिसर्वप्रमाणबाधकम् । अतो....

उपसंहारः—

सूत्रानुक्तार्थानामपि वक्तृत्वादित्यर्थः । लघुरतिस्वल्पः । अवहः प्रापकः निबन्धो ग्रन्थः । अत्र ग्रन्थे सौष्ठवं गुणवत्त्वम् । बलभद्रस्य इत्सेवकब्रह्मचारिणः.................

श्रीनारायणतीर्थानां गुरूणां चरणाम्बुजम् ।
नमामि वाङ्मनःकायैरनन्यशरणैस्सदा ॥
भजे श्रीपरमानन्दसरस्वत्याः पदाम्बुजम् ।
यदेवालम्ब्य संसारसागरो गोष्पदीकृतः ॥

इति श्रीब्रह्मानन्दसरस्वतीविरचिता सिद्धान्तबिन्दुटीका न्यायरत्नावली समाप्ता

प्रतिपाद्यविषयः—

सिद्धान्तबिन्दुव्याख्यानरूपोऽयं ग्रन्थः ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । मुद्रितश्च दृश्यते ।

No. (781) B 867 सिद्धान्तबिन्दुटीका (न्यायरत्नावली)

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$8\frac{1}{4} \times 5\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-945

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—16
कालः (कोशस्य)—?
स्थितिः—अत्यन्तशिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मतोनात्मभू ........ जी ..........................................................

.... विवेचनरोत्र ........ नं श्रीनद्बादरायणशंकरसुरेश्वराद्याचार्यकृतमर्यादं वेदान्तदर्शनं दर्शनेषु .. ........मं दर्शनीयं। तस्य च.... ......स्य विचार्य वेद...........मतात् पर्यमुकैक्ये ............जीवब्रह्मस्वरूप........ ...इत्यादि....

उपसंहारः—

B 112 कोशवत्।

प्रतिपाद्यविषयः—

B 112 कोशवत्।

वक्तव्यविशेषः—

ग्रन्थारम्भो नास्ति। शेषं B 112 कोशवत्।

No. (782) C 1565 सिद्धान्तबिन्दुटीका (न्यायरत्नावली)

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$10\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-106

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—1746
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

B 112 कोशवत्।

उपसंहारः—

B 112 कोशवत् ।

प्रतिपाद्यविषयः—

B 112 कोशवत् ।

वक्तव्यविशेषः—

B 112 कोशवत् ।

## No. (783) C 655 सिद्धान्तबिन्दुटीका (न्यायरत्नावली)

ग्रन्थकर्ता—ब्रह्मानन्दसरस्वती
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—12 × 4 अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1–17

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—56
कालः (कोशस्य)—?
स्थितिः - समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

B 112 कोशवत् ।

उपसंहारः—

न चैवमपि पदद्वयादेव तल्लक्षणावतारसिद्धेस्तृतीयादिपदवैयर्थ्यमिति वाच्यम् । वाच्यार्थानां मिथो भेदभ्रमस्यान्योन्यमभेदज्ञानद्वारकवाक्यार्थज्ञानं विना निवर्तयितुमशक्यत्वात् । यद्यपि हि शुद्धविषयकज्ञानं न विशेषणीभूताभेदविषयकम् ........

प्रतिपाद्यविषयः—

B 112 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे प्रथमश्लोकव्याख्याप्यसमग्रा वर्तते ॥

## No. (784) C 657 सिद्धान्तलेशसङ्ग्रहः

ग्रन्थकर्ता—अप्पयदीक्षितः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—12½×4½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—1-81 (74-75 पत्रलोपः)

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—52
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा ।
सरिदिव महीभेदान् संप्राप्य शौरिपदोद्गता ॥
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता ।
जननहरिणी सूक्तिर्ब्रह्माद्वैतपरायणा ॥
प्राचीनैर्व्यवहारसिद्धविषयेष्वात्मैक्यसिद्धौ परं ।
सन्नह्यद्भिरनादरात्सरणयो नानाविधा दर्शिताः ॥
तन्मूलानिह संग्रहेण कतिचित्सिद्धान्तलेशान्धियः ।
शुध्यै संकलयामि तातचरणव्याख्यावचःख्यापितान् ॥
तेषूपपादनापेक्षान्पक्षान्प्रायो यथामति ।
युक्त्योपपादयन्नेव लिखाम्यनतिविस्तरम् ॥

तत्र तावदात्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यधीतसाङ्गस्वाध्यायस्य वेदान्तैरापातप्रतिपन्ने ब्रह्मात्मनि समुदितजिज्ञासस्य तज्ज्ञानाय वेदान्तश्रवणे विधिः प्रतीयमानः किं विध इति चिन्त्यते ।

उपसंहारः—

तस्मादुदाहृतश्रुतिसूत्रानुसारिभिर्मुक्तजीवानां यावत्सर्वमुक्ति वस्तुसच्चैतन्यमात्रत्वाविरोधिवद्धपुरुषाविद्याकृतनिरवग्रहैश्वर्यतदनुगुणकलापविशिष्टनिरतिशयानन्दस्फुरणसमृद्धनिविबद्धपरमेश्वरभावापत्तिरादर्तव्या इति सिद्धम् ॥

इति शास्त्रसिद्धान्तलेशसङ्ग्रहे चतुर्थः परिच्छेदः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे (प्रथमपरिच्छेदे)—विधित्रयविचारः ब्रह्मलक्षणविचारः, कारणत्वविचारः, जीवेश्वरस्वरूपविचारः, तस्य एकत्वानेकत्वविचारः, ब्रह्मणः कर्तृत्वसर्वज्ञत्वविचारः, वृत्त्युपयोगकथनं, साक्षिस्वरूपविचारः, अध्यासतत्कारणनिरूपणं, (द्वितीये) प्रत्यक्षापेक्षया श्रुतेः प्राबल्यनिरूपणं, प्रतिबिम्बसत्यत्वनिराकरणं, स्वप्नपदार्थविचारः, मिथ्यार्थस्यार्थक्रियाकारित्वप्रतिपादनं, उपाधिभेदेन जीवानां सुखादिव्यवस्थोपपत्तिः, जीवाणुत्वनिराकरणं, (तृतीये) कर्मणां विविदिषासाधनत्वनिरूपणं, तेषामेव ब्रह्मज्ञानसाधनत्वनिरूपणं, शूद्रस्य विद्यायामधिकाराभावनिरूपणम्। सन्न्यासस्य विद्योपयोगित्वप्रतिपादनं, निर्गुणोपासनाप्रतिपादनं, शाब्दापरोक्षत्वप्रतिपादनं, (तुरीये) अविद्यालेशनिरूपणं, अविद्यानिवृत्तिस्वरूपनिरूपणं, ब्रह्मानन्दस्य प्राप्यत्वोपपादनं, मुक्तस्येश्वरभावापत्तिप्रतिपादनमित्यादयो विषयाः मतभेदेन निरूपिताः॥

वक्तव्यविशेषः —

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च (कुम्भकोणे) दृश्यते॥

## No. (785) 1002/2 सिद्धान्तलेशसङ्ग्रहः

| | |
|---|---|
| ग्रन्थकर्ता—अप्पयदीक्षितः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—16×1½ अङ्गुलानि | कालः (कोशस्य) —? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि —1–59 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

C 657 कोशवत्।

उपसंहारः—

C 657 कोशवत्।

प्रतिपाद्यविषय: —

C 657 कोशवत् ।

वक्तव्यविशेषः —

C 657 कोशवत् ।

## No. (786) 1219 सिद्धान्तलेशसङ्ग्रहः

ग्रन्थकर्ता — अप्पय्यदीक्षित:
पत्रविशेष: — ताळपत्रात्मक:
प्रमाणम् — 17½ × 1½ अङ्गुलानि
लिपि: — आन्ध्रलिपि:
पत्राणि — 1–90

प्रतिपुटं पङ्क्तय: — 8
प्रतिपङ्क्त्यक्षराणि — 68
काल: (कोशस्य) — ?
स्थिति: — शिथिला
समग्रोऽसमग्रो वा — समग्र:

उपक्रम: —

C 657 कोशवत् ।

उपसंहारः —

C 657 कोशवत् ।

प्रतिपाद्यविषय: —

C 657 कोशवत्

वक्तव्यविशेष: —

C 657 कोशवत् ।

## No. (787) C 2001 सिद्धान्तलेशसङ्ग्रहः

ग्रन्थकर्ता — अप्पय्यदीक्षित:
पत्रविशेष: — ताळपत्रात्मक:
प्रमाणम् — 17½ × 1⅜ अङ्गुलानि
लिपि: — ग्रन्थलिपि:
पत्राणि — 1–140

प्रतिपुटं पङ्क्तय: — 5
प्रतिपङ्क्त्यक्षराणि — 45
काल: (कोशस्य) — ?
स्थिति: — अत्यन्तशिथिला
समग्रोऽसमग्रो वा — समग्र:

उपक्रमः—

C 657 कोशवत् ।

उपसंहारः—

C 657 कोशवत् । ग्रन्थान्ते च एवं दृश्यते :—

विद्वद्गुरोर्विदितविश्वजिदध्वरस्य ।
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ॥

श्रीरंगराजमखिनश्श्रुतचन्द्रमौलि- ।
रस्त्यप्पैदीक्षित इति प्रथमस्तनूजः ॥

तन्त्राण्यधीत्य सकलानि स तातपाद- ।
व्याख्यानकौशलकलाविशदीकृतानि ॥

आम्नायमूलमनुरुध्य च संप्रदायं ।
सिद्धान्तभेदलवसंग्रहमित्यकार्षीत् ॥

सिद्धान्तरीतिषु मया . . . . . . . . . .
स्यादन्यथा विलिखितं यदिकिञ्चिदस्य ॥

संशोधने सह दयास्पदया भवंतु ।
सत्संप्रदायपरिशोभितनि . . . . शंकाः ॥

॥ समाप्तश्चायं सिद्धान्तलेश सङ्ग्रहः ॥

अन्तिमाः चतस्रः पङ्क्तयः २०९९ (नं.) कोशस्य सहायेन पूरिताः ॥

प्रतिपाद्यविषयः—

C 657 कोशवत् ।

वक्तव्यविशेषः—

C 657 कोशवत् ।

## No. (788) 2099/9 सिद्धान्तलेशसङ्ग्रहः

ग्रन्थकर्ता—अप्पय्यदीक्षितः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$12\frac{3}{4} \times 2$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—1-78

प्रतिपुटं पङ्क्तयः—10
प्रतिपङ्क्त्यक्षराणि—52
कालः (कोशस्थ)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—
C 657 कोशवत्।

उपसंहारः—
C 2001 कोशवत्। अन्ते श्लोकद्वयमात्रं नास्ति।

प्रतिपाद्यविषयः—
C 657 कोशवत्।

वक्तव्यविशेषः—
C 657 कोशवत्।

## No. (789) 2938 सिद्धान्तलेशसङ्ग्रहः

ग्रन्थकर्ता—अप्पय्यदीक्षितः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$16\frac{3}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-99

प्रतिपुटं पङ्क्तयः—8
प्रतिपङ्क्त्यक्षराणि—52
कालः (कोशस्थ)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—
C 657 कोशवत्।

उपसंहारः—
C 2001 कोशवत्। अन्ते च विद्यमानेषु पद्येषु प्रथमपद्यमात्रं दृश्यते।

प्रतिपाद्यविषयः—

C 657 कोशवत् ।

वक्तव्यविशेषः—

C 657 कोशवत् ।

## No. (790) A 36 सिद्धान्तलेशसङ्ग्रहः

ग्रन्थकर्ता—अप्पय्यदीक्षितः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—11½ × 9½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-45
प्रतिपुटं पङ्क्तयः—32
प्रतिपङ्क्त्यक्षराणि—26
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

C 657 कोशवत् ।

उपसंहारः—

C 657 कोशवत् ।

प्रतिपाद्यविषयः—

C 657 कोशवत् ।

वक्तव्यविशेषः—

C 657 कोशवत् ।

## No. (791) B 77, B 121 सिद्धान्तलेशसङ्ग्रहव्याख्या

ग्रन्थकर्ता—अच्युतकृष्णानन्दतीर्थः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—7¾×6½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-188, 1-270
प्रतिपुटं पङ्क्तयः—14
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ननु सौत्रानन्यत्वपदेन कार्यकारणयोरैक्यं प्रतीयते, तदनुपपन्नम्; कार्यकारणभावादिविरोधाच्चिज्जडयोर्ब्रह्मप्रपञ्चयोरैक्यायोगाच्चेति शङ्कां निराकर्तुं सौत्रानन्यत्वपदं व्याचष्टे भाष्यकारः—अनन्यत्वं व्यतिरेकेणाभाव इति। न च कारणव्यतिरेकेण कार्यस्याभावे कथं कार्यकारणभाव इति वाच्यम्; कारणसत्त्वव्यतिरेकेण कार्यसत्त्वाभावस्य विवक्षिततया कार्यस्वरूपापलापशङ्कानवकाशात्। सौत्रानन्यत्वपदतात्पर्यप्रदर्शकं भामतीनिबन्धनवाक्यमुदाहरति—न खल्विति॥

उपसंहारः—

मुक्तस्यैश्वर्यभावापत्तिमुदाहृतामुपसंहरति—तस्मादिति। उदाहृतश्रुतिसूत्रभाष्यादिस्वारस्यादित्यर्थः। अविरोधित्वमेवैश्वर्यविशेषणम्। तदनुगुणेति। ऐश्वर्यानुगुणेत्यर्थः। समृद्धत्वमीश्वरभावापत्तिविशेषणमिति।

श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमत्स्वयंप्रकाशानन्दसरस्वतीदिव्यश्रीचरणारविन्दसंसक्तरजोभूतस्याच्युतकृष्णानन्दतीर्थस्य कृतौ शास्त्रसिद्धान्तलेशसङ्ग्रहव्याख्यायां कृष्णालङ्काराख्यायां चतुर्थः परिच्छेदः समाप्तः

श्रीकृष्णचरणद्वन्द्वे स्मर्तॄणां मङ्गळप्रदे।
योगिध्येये कृतिरियमलङ्कारार्थमर्पिता॥

श्रीकृष्णं मनसा ध्यात्वा श्रीकृष्णं संप्रणम्य च।
व्याख्यातोऽयं परिच्छेदः श्रीकृष्णपरितुष्टये॥

प्रतिपाद्यविषयः—

शास्त्रसिद्धान्तलेशसङ्ग्रहव्याख्यारूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्कोशे (मुद्रितपुस्तके) ७२ पुटप्रभृतिसमग्रो ग्रन्थो विद्यते। मुद्रितश्च (कुम्भकोणे) दृश्यते॥

## No. (792) C 651 सिद्धान्तलेशसङ्ग्रहव्याख्या (मूलसहिता)

ग्रन्थकर्ता—अच्युतकृष्णानन्दतीर्थः
पत्रविशेषः—कागद्पत्रात्मकः
प्रमाणम्—12×4¾ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—5-51

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—72
कालः (कोशस्य)—?
स्थितिः—अत्यन्तशिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

अपरोक्षवस्तुविषयकं प्रमाणमपरोक्षज्ञानहेतुरिति स्थिते विचारो निर्णयहेतुरिति च स्थिते कार्यकारणभावद्वयमेलनेन प्रकृते विचारविशिष्टवेदान्तज्ञानरूपं श्रवणं सत्तानिश्चयरूपब्रह्मसाक्षात्कारहेतुरिति सिध्यतीत्याह-विचारमात्रस्येति। सहकारीति।

उपसंहारः—

अत्रांशत्वं.......टाकाशवदन्तःकरणावच्छिन्नत्वरूपं विवक्षितम्। न तु मुख्यमंशत्वम्। ........निरवयवस्य ब्रह्मणो मुख्यांशासंभवादिति तदधिकरणभाष्येस्फुटमिति भावः।

प्रतिपाद्यविषयः—

B 77, B 121 कोशवत्।

वक्तव्यविशेषः—

अस्मिन्कोशे (मुद्रितपुस्तके) एकादशपुटात् त्रिशततमपुटपर्यन्तो ग्रन्थभागो विद्यते।

## No. (793) 3440 सिद्धान्तसिद्धाञ्जनम्

ग्रन्थकर्ता—कृष्णानन्दसरस्वती
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—14½×2⅜ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1-144

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—96
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रम:—

जगज्जन्मस्थेमाव्ययनियमसीमादिमगुरु-
र्विचयो योगेनानिमुदयवाचामवधिषु ।
प्रकाशानन्दात्मा परिमुषितनिश्शेषकलुष-
स्त्रिभेदातीतो धी नटनचटुलाक्षी विजयते ॥ (1) (12)

इह खलु तावदतीतानेकभवपरम्परासमार्जितसुकृतसम्पदावर्जित-भगवदनुग्रहासादितसत्त्वप्रसादतया सम्पन्नविवेकवैराग्यादिसाधनो मात्र-यापि दुःखानुषङ्गदविष्ठां पुरुषार्थकाष्ठामभिलषंस्तदुपायं पर्येषमाणो यद्यधीतसाङ्गस्वाध्यायः स्यात् तत एव तदुपायमात्मतत्त्वज्ञानमधिगम्य जिज्ञासते ।

तथाच कार्यार्थत्वशङ्कावसानतद्भागोद्धम्भनमेव सिद्धशक्त्युपपादन-फलमिति तद्विषयं जिज्ञासासूत्रमतिफल्गुफलमापततीत्यलमशाके पाशु-पतास्त्रप्रयोगेण । तस्माद्यथावर्णितमेवाधिकरणशरीरं शुद्धमिति सिद्धम् ॥

उपसंहार:—

वाचालयति यस्सर्वं सर्वभूतगुहाशयः ।
वासुदेवो निबन्धं मे ...... क्षमात्मा समीक्षताम् ।
सन्तो ये गणयन्ति दोषमपि ते दूरे गिरां मादृशा-
मुञ्चयन्ते सुजनेषु तेऽपि स गुणं दोषं विविञ्चन्ति ये ।
ये केचिद्गुणदूषणव्यसनिनस्तेभ्यः स्पृहा नः परं
यैराघ्रातमशेषतो गुणतया मन्येत मन्दैरपि ॥
सन्तो ये गुणयन्ति दोषमपि ते तुष्यन्ति हन्त स्वयं
येऽप्यन्ये गुणदोषसंकुलधियो मन्थामहे तानपि ।
ये दोषं प्रथयन्ति साधुषु मुदा तानप्यसौ सज्जन-
द्रोही यद्द्रुहिणोऽप्यजीजनदिदं त्वेकं न मृष्यामहे ॥
प्रगल्भन्ते येषां प्रकृतिमुषिताशेषकलुषा-
धियः शास्त्राम्भोधौ जगतिकृतवस्ते कतिपये ।
ममामीषामुञ्चन्मतिमुकुरबिम्बेषु महतां
निबन्धः सन्धत्तामनिशमनुबिम्बव्यतिकरम् ॥

इति श्रीपरमहंसपरिव्राजकाचार्यवर्यश्रीभगवद्रामभद्रानन्दसरस्वतीश्रीगुरुचरणपरिचरणावाप्त-विद्येन श्रीवासुदेवानन्दसरस्वतीचरणप्रसादितपारिव्राज्येन श्रीकृष्णानन्दयतिवरेण विरचिते सिद्धान्तसिद्धाञ्जने जिज्ञासासूत्रविवरलिपिः प्रथमा ॥

प्रतिपाद्यविषय:—

शारीरकमीमांसाभाष्यार्थविचाररूपेण प्रवृत्तेऽस्मिन्ग्रन्थे भाष्यप्रतिपादितार्थाः परमताक्षेपनिरासपूर्वकं विस्तरेण सम्यक् विव्रियन्ते ॥

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो वर्तते (जिज्ञासाधिकरणम्) मुद्रितश्च (अनन्तशयने)।

## No. (794) 4055 सिद्धान्तसिद्धाञ्जनम्

ग्रन्थकर्ता—कृष्णानन्दसरस्वती
पत्रविशेष:—ताळपत्रात्मक:
प्रमाणम्—$14\frac{1}{2}\times1\frac{3}{8}$ अङ्गुलानि
लिपि:—ग्रन्थलिपि:
पत्राणि—1-200

प्रतिपुटं पङ्क्तय:—7
प्रतिपङ्क्त्यक्षराणि—64
काल: (कोशस्य)—?
स्थिति:—शिथिला
समग्रोऽसमग्रो वा—असमग्र:

उपक्रम:—

3440 कोशवत्।

उपसंहार:—

न चैवमारुण्यस्य स्वातन्त्र्याभावेन प्रकृत गो द्रव्यपरिच्छेदकतयैव क्रियान्वयेऽपि कुतश्चिदुद्धृतस्य पिङ्गस्याक्ष्णः स्वातन्त्र्यसंभवेन द्रव्यपरिच्छेदकता न स्यादिति वाच्यम्। बहुव्रीहितया गोशब्दसामानाधिकरण्येन तद्विशेषणस्यैव तस्योपादानात्। न चैवमरुणाधिकरणपूर्वपक्षासंभवः, अरुणशब्दस्यापि द्रव्यवृत्तितया पिङ्गाक्ष्यादेरविशेषादिति शङ्क्यम्; गुणमात्रशक्तिसमर्थनेन तत्संभवात्।........

प्रतिपाद्यविषय:—

3440 कोशवत्।

वक्तव्यविशेष:—

अस्मिन्कोशे मुद्रित द्वितीयभागे अष्टषष्ठितमपृष्ठपर्यन्तो ग्रन्थो विद्यते। (लाक्षणिकस्य विशेष्यनिघ्नत्वाभावनिरूपणपर्यन्त:)

## No. (795) A 358 सिद्धान्तसिद्धाञ्जनम्

ग्रन्थकर्ता — कृष्णानन्दसरस्वती
पत्रविशेष:—कागदपत्रात्मकः
प्रमाणम्—$12\frac{3}{4} \times 7\frac{3}{4}$ अङ्गुलानि
लिपि: — आन्ध्रलिपिः
पत्राणि — 1–116

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—30
काल: (कोशस्य)—?
स्थिति:—समीचीना
समग्रोऽसमग्रो वा — असमग्रः

उपक्रमः—

3440 कोशवत् । आरम्भे च अधस्तात् प्रदर्शितं पद्यद्वयं दृश्यते ।
ओंकाराय नमस्तस्मै यन्मूला मंत्रमातृका ।
सोहमात्मा यतस्सोपि तां च शक्तिं परां भजे ॥
श्रीपारिव्राज्यसाम्राज्यलक्ष्मीललितमूर्तये ।
वासुदेवयतीन्द्राय गुरवे करवै नमः ॥
जडीकृतजगत्यन्तस्तमस्संभेदवर्मणे ।
रामभद्रयतीन्द्राय महते महसे नमः ॥

उपसंहारः —

...अन्यन्योपास्यरूपकारणात्मन्येव वेदान्तोपदेशपर्यवसानेन न जायते म्रियते वा विपश्चित्, असङ्गोह्ययं पुरुषः, अथ यो वेदेदं जिघ्राणीति आत्मेत्यादौ प्रजापतिविद्यादौ च जीवात्मस्वरूप परिशोधनमक्षप्राणमनो-विज्ञानप्रणालिकया च तदैकात्म्योपदेशपर्यवसानं च सर्वत्र वेदान्ताना-मनर्थकं प्रसज्येत । ब्रह्मण एव थ.......

प्रतिपाद्यविषयः —

3440 कोशवत् ।

ग्रन्थविशेषः —

अस्मिन्कोशे मुद्रितद्वितीयभागे त्रिचत्वारिंशत्तमपुटपर्यन्तो ग्रन्थो विद्यते । (अध्यारोपापवादन्यायनिरूपणपर्यन्तः)

No. (796) 4791 सिद्धान्तसिद्धाञ्जनव्याख्या (रत्नतूलिका)

ग्रन्थकर्ता—भास्करदीक्षितः
पत्रविशेषः—तालपत्रात्मकः
प्रमाणम्—16×1½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1–340

प्रतिपुटं पङ्क्तयः—7
प्रतिपङ्क्त्यक्षराणि—84
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

यत्सद्बोधसुखैकरूपममलं विश्वात्मना भासते
सृष्टिस्थेमलयैर्विरिञ्चिमुरभिद्रुद्रादिसंज्ञान्वितम् ।
प्रत्यग्रूपतया च यद्व्यवसितं वेदान्तवाक्यैर्महत्-
ज्योतिस्तत्समुपास्महे गणपतिं देव्या समालिङ्गितम् ॥

यस्याः कटाक्षलेशेन मूकस्यापि प्रगल्भता ।
जायते सर्वशास्त्रेषु भारतीं तां नमाम्यहम् ॥

कर्पूरगौरवपुषं कलितेन्दुमौलिं कान्ताजनेन कवलीकृतवामभागम् ॥
कन्दर्पदर्पदमने कृतलीलमाद्यं कारुण्यवारिधिमहं कलयामि चित्ते ॥

यद्दीक्षाविषयं विनेयनिवहं प्रीत्या भजन्ते स्वयं
लक्ष्मीकीर्तिसरस्वतीधृतिदयाह्रीशान्तिदान्त्यादयः ।
कृष्णानन्दसरस्वतीसमरसश्चित्ते मदीये शुभे
नित्यं सन्निहितोऽस्त्वसौ मम गुरुर्ध्वान्तापनुत्त्यै विभुः ॥

यदुपदेशवशान्ममशेमुषी गहनमर्थमपि स्फुटयन्त्यसौ ।
विजयराघवशास्त्रिणमाश्रये गुरुमहं तमशेषगुणाकरम् ॥

ग्रामे फल्लकचेरिनाम्नि महिते विद्वज्जनालङ्कृते
यज्वा याजयिता च वेंकटपतिर्नाम्ना शिवे भक्तिमान् ।
अस्ति श्री हरितान्वये समुदितः श्रुत्यर्थनिर्णायकः
सूत्रेषु त्रिषु कल्पसंज्ञिषु पटुः स्मृत्यर्थविज्ञाग्रणीः ॥

तत्सूनुर्विवृणोत्येष सिद्धाञ्जनकृतिं गुरोः ।
सर्वतोमुखयागस्य कर्ता भास्करदीक्षितः ॥

इह खलु तापत्रयित्रयगतागतपरिखिन्नां भवाब्धिनिमग्नां जगतीमुद्दिधीर्षुर्भगवान् परमेश्वरः :—

"परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥"

इति प्रतिज्ञातार्थपरिपालनाय....

उपसंहारः—

ननु "ममैवांशो जीवलोके जीवभूतः सनातन" इत्यंशत्वव्यपदेशस्य का गतिरित्यत आह—अंशत्वेति। ननु परमात्मनोंऽशाभावे "पादोऽस्य विश्वा भूतानि" इति सर्वभूतानां ब्रह्मपादत्वव्यपदेशानुपपत्तिरित्यत आह—पादोऽस्येति। परिच्छिन्नधर्मणां स्वाधिकरणभेदस्वरूपादन्नैवात्मलाभादित्यर्थः। इतरेतरेति इतरेतराविशिष्टो यः पृथगर्थः तद्रूपेत्यर्थः।

सिद्धान्तसिद्धाञ्जनव्याख्यानं (रत्नतूलिकाग्रन्थः)

प्रथमसम्पुटम्।

प्रतिपाद्यविषयः—

सिद्धान्तसिद्धाञ्जनव्याख्यानरूपोऽयं ग्रन्थः।

वक्तव्यविशेषः—

अस्मिन्ग्रन्थे जीवांशत्वान्यथासिद्धिप्रतिपादकग्रन्थव्याख्यानपर्यन्तो ग्रन्थो विद्यते। अमुद्रितश्च ज्ञायते।

## No. (797) 3577 सिद्धान्तसिद्धाञ्जनव्याख्या (रत्नतूलिका)

| | |
|---|---|
| ग्रन्थकर्ता—भास्करदीक्षितः | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—72 |
| प्रमाणम्—$16\frac{1}{2} \times 1\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—अत्यन्तशिथिला |
| पत्राणि—1–154 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

अथातो ब्रह्मजिज्ञासेति सूत्रे अथ.. ..............................यादौ दर्शयति—इह खल्वित्यादिना। अत्र ग्रन्थादावव्ययप्रयोगो मङ्गळमितीह-त्यादिप्रयोगः प्रायेण........................सम्पादयितुं शक्यम्। ननु

देवादिदेहे, तस्य भोगप्रधानत्वात्। अत एव "इत्यपेक्षया तु मनुष्याधिकारित्वा" दिति सूत्रितमित्यभिप्रेत्य इहेत्युक्तम्। अत्रेत्यनुक्त्वा इहेत्युक्तिः "इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः" इति श्रुतिप्रत्यभिज्ञानाय। "यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके यथाप्सु परीवदद्दृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके" इति श्रुत्यन्तरे स्पष्टमेव। मनुष्यलोके वा ब्रह्मलोके वा तत्त्वज्ञानं सुसम्पादनीयं न तु लोकान्तर इत्युक्तम् ॥

उपसंहार:—

यथा अग्निहोत्रादीनां नानाशाखासु विधिबोध्यानां तत्तच्छाखाध्यायिनां भेदान्नैकत्र प्राप्तस्येतरत्रानुवादस ........... ... ... .. .... ... भेदेन विधिद्वयमुपपन्नम्। प्राप्तप्राप्तयोरेव विधित्वतदभावयोः प्रयोजकत्वेन शाखाभेदाभेदयोरप्रयोजकत्वात्। अत्रापि श्रोतव्यादि...... ................ पाण्डित्यादिवाक्ये तु कहोळ इति भेदसत्त्वादिति भावः। नन्वेवमपि त्रयाणां श्रवणादीनां विधाने वाक्यभेदप्रसङ्गः, अतो निदिध्यासनमेव विधीयत इति................

प्रतिपाद्यविषय:—

4791 कोशवत्.

वक्तव्यविशेष:—

अस्मिन्कोशे प्रथमतस्पुटे २० तमपुटस्थमूलग्रन्थव्याख्यामपर्यन्तो ग्रन्थो विद्यते। मध्ये पत्रलोपः पत्रविपर्यासश्च दृश्यते।

## No. (798) 3580 सिद्धान्तसिद्धाञ्जनव्याख्या (रत्नतूलिका)

ग्रन्थकर्ता—भास्करदीक्षितः
पत्रविशेष:—तालपत्रात्मक:
प्रमाणम्—$15\frac{1}{2}\times1\frac{1}{4}$ अङ्गुलानि
लिपि:—ग्रन्थलिपि:
पत्राणि—1–127.

प्रतिपुटं पङ्क्तय:—12
प्रतिपङ्क्त्यक्षराणि—64
काल: (कोशस्य)—?
स्थिति:—अत्यन्तशिथिला
सममोऽसममो वा—असमम:

उपक्रमः—

4791 कोशवत् ।

उपसंहारः—

बीजाङ्कुरवदनादित्वाददोष इत्यत आह—अन्धपरंपरेति । तयोरनादित्वेऽविद्यामात्रत्वमेवेति वास्तवं दूष............ ........पूर्वोक्तामन्धपरंपरामुद्धरति—अथवेति । मूलप्रमाणत्वादिति भावः । तदेवाह—तद्य इहेति । रमणीयचरणाः रमणीयाचाराः । अभ्याशोहयदिति निरर्थको निपातः । कपूयचरणाः—रा इत्यर्थः । देहसंबन्धस्य कर्मसंबन्धनिबन्धनत्वे श्रुतिस्मृती प्रमाणमुक्तम् । कर्मसंबन्धस्य देहसंबन्धनिबन्धनत्वे प्रत्यक्षं प्रमाणमाह—प्रत्यक्षेति । वास्तवदूषणमाह—तथापीति । क्लेशेति । ........ ..........गद्वेषाभिनिवेशाः पञ्चक्लेशा इति योगैरुक्ताः कर्माशयस्य मूलमिति भावः । ननु संयोगादिसंबन्धोऽस्तु किमविद्यारूपत्वा.....................

प्रतिपाद्यविषयः—

4791 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे मुद्रितप्रथमसम्पुटे 118 तमे पुटे "तथैव क्लेशमूलः कर्मसंबन्धोऽपि भवितुमर्हति" इति मूलव्याख्यानपर्यन्तो ग्रन्थभागो विद्यते ॥

## No. (799) B 738, B 796 सिद्धान्तसिद्धाञ्जनव्याख्या

| | |
|---|---|
| ग्रन्थकर्ता— ? | प्रतिपुटं पङ्क्तयः—16 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—26 |
| प्रमाणम्—$7\frac{3}{4} \times 6\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः— समीचीना |
| पत्राणि—1–392 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

सुषुप्त्यादौ विषयसंबन्धाभावे ज्ञातृत्वसंभवाभावाज्जागरादौ विषय-संबन्धे सति ज्ञातृत्वानुभवाच्च विषयसंबन्धौपाधिकमात्मनो ज्ञातृत्वं न स्वभाव इत्युक्तम् । एवमहङ्कारसंबन्धदशायामेवात्मनो ज्ञातृत्वाभावा-दर्शनादहङ्कारोपाधिकमेवात्मनो ज्ञातृत्वं न स्वभाव इत्याह—एवमिति । अहङ्कारोपाधौ सतीति शेषः । नन्वहंकारस्यैवात्मत्वात्तदुपाधिकमात्मनो ज्ञातृत्वमित्यनुपपन्नमित्याशङ्क्याहङ्कारस्यात्मत्वं निराकरोति—न चेति ॥

उपसंहारः—

किं च तव ब्रह्मविचारप्रवर्तकस्य रागस्य शब्दानां कार्यपरत्वशङ्कयाव-सादे सति तदुत्तम्भनाय सिद्धार्थे शक्त्युपपादनमित्युपपत्तेस्तद्विषय-जिज्ञासासूत्रमिति फल्गु फलं स्यादिति दूषयति—अपि च रागत एवेति । एवं परकृतमधिकरणवर्णनं दूषयित्वा स्वकृतमेवाधिकरणवर्णनं शुद्ध-मित्युपसंहरति—तस्माद्यथावर्णितमेवेति । सिद्धशब्दो ग्रन्थान्ते मङ्गळार्थः ।

सिद्धान्तसिद्धाञ्जनव्याख्यानं सम्पूर्णम्

प्रतिपाद्यविषयः—

4791 कोशवत् ।

वक्तव्यविशेषः—

अस्मिन्कोशे तृतीयसम्पुटे 173 तमपुटस्थ मूलग्रन्थव्याख्यानप्रभृति समग्रो ग्रन्थो विद्यते । कर्ता स्पष्टं नोपलभ्यते । प्रायः भास्करदीक्षितीय-मेवेदं स्यादिति मन्ये ॥

## No. (800) B 509 सुबालोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{3}{4}\times6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—347–368

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

ओं पूर्णमद इति शान्तिः। तदाहुः किं तदासीत्तस्मै स होवाच न सन्नासन्न सदसदिति तस्मात्तमस्सञ्जायते। तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी तदण्डं समभवत् तत्संवत्सरमात्रमुषित्वा द्विधाकरोदधस्ताद्भूमिमुपरिष्टादाकाशं मध्ये पुरुषो दिव्य सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्। सहस्रबाहुरिति। सोऽग्रे भूतानां मृत्युमसृजत्त्यक्षरं त्रिशिरस्कं त्रिपादखण्डपरशुं न तस्य ब्रह्मा बिभेति॥

उपसंहारः—

इह षोडशे ह्यपरिज्ञातकुलशीलायेत्युक्तं तदयुक्तम्; शिष्यशीलस्य केवलं ज्ञातव्यत्वात् कुलस्य तु यस्य कस्यापि शूद्रादिचण्डालान्तस्य सर्वस्य च दुष्टतमस्यापि साधनचतुष्टयसमुत्पत्तौ मोक्षाधिकारस्यावधारितत्वान्न प्रतिषेध उपपद्यते। देव नर तिर्यगात्मकेषु त्रिविधेषु प्राणिषु तिरश्चां केवलं षण्णवतितमेषु केषांचिदभावेन मोक्षानधिकारादिति चेन्नैष दोषः; सुबालोपनिषदः केवलं ह्यप्रशान्तादिभ्यो दातव्यत्वप्रतिषेधो भवति; न तूपनिषदर्थस्य भाषान्तरैर्दातव्यत्वप्रतिषेधः। सङ्कराश्च केचन लोके प्रच्छन्नाः स्वेषां ब्रह्मकुलप्रभवं वदन्त उपनिषत्पारायणादिचिकीर्षवो महत्तमानपि गुरून् ब्राह्मणान्वञ्चयन्ति। तस्मात्तेषां कुलान्यवश्यज्ञातव्यानीति सर्वमनवद्यम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ सुबालबीजब्रह्मोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सदसद्विलक्षणस्वरूपात्तम आदि क्रमेण निखिलप्रपञ्चसृष्टिमुक्त्वा तस्य श्रीमन्नारायणात्मकत्वं निरूप्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (801) B 510 सूर्योपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—16 |
| प्रमाणम्—8×6½ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-5 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

भद्रं कर्णेभिरिति शान्तिः।

अथ सूर्याथर्वाङ्गिरसं व्याख्यास्यामः। ब्रह्मा ऋषिः। गायत्री च्छन्दः। आदित्यो देवता। हंसस्सोऽहमग्निनारायणयुक्तं बीजम्। हृल्लेखा शक्तिः। वियदादिसर्गसंयुक्तं कीलकम्। चतुर्विधपुरुषार्थे विनियोगः। षट्स्वरारूढेन बीजेन षडङ्गं रक्ताम्बुज संस्थितं सप्ताश्वरथिनं हिरण्यवर्णं चतुर्भुजं पद्मद्वयाभय वरदहस्तं कालचक्रप्रणेतारं श्रीसूर्यनारायणं य एवं वेद स वै ब्राह्मणः।

उपसंहारः—

सूर्यादिति। भूतोत्पत्त्याद्यधिष्ठानभूतस्सूर्यो हि सोऽहमित्यभेदेनावधारितः। सूर्याख्याया देवतायास्सगुणत्वेन अभेदानुसन्धानानर्हत्वात्। चित्तशुध्द्यर्थक भेदोपासनाविषयत्वाच्च। तर्हि सूर्यदेवतोपासनप्रतीकभूता सूर्यगायत्री कीदृशीत्यत आह—आदित्याय विद्मह इत्यादावक्गन्तव्या। ओं घृणिः सूर्य आदित्य इत्ययं सूर्यस्याष्टाक्षरो मनुर्महाव्याधिमोचनादि काम्यार्थ इत्येवं सूर्योपासनस्य त्रैविध्यं मुमुक्षुनिष्कामसकामोपासकविषयकमवगन्तव्यम्।

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतिषु सूर्योपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे सूर्यशब्दार्थः परं ब्रह्मैव। तस्यैव जगदुत्पत्तिस्थित्यधिष्ठानत्वेन सर्वात्मकत्वं च। इत्ययमंशः प्रतिपाद्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (802) B 511 सौभाग्यलक्ष्म्युपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—203–216

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू–ओं वाङ्मे मनसीति शान्तिः।

अथ भगवन्तं देवा ऊचुः। हे भगवन्नः कथय सौभाग्यलक्ष्मीविद्याम्। तथेत्यब्रोचद्भगवानादिनारायणः सर्वे देवा यूयं सावधानमना भूत्वा शृणुत तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां पीठोपपीठदेवता-परिवृतां चतुर्भुजां श्रियं हिरण्यवर्णामिति पञ्चदशभिर्ध्यायेथ। अथ पञ्चदशऋगात्मकस्य श्रीसूक्तस्यानन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः। श्रीरित्याद्या ऋचः। चतुर्दशानामृचामानन्दा दृष्टयः। हिरण्यवर्णादि-ऋक्त्रयस्यानुष्टुप् छन्दः। कांसोऽस्मीत्यस्य बृहतीच्छन्दः।

उपसंहारः—

भा:-तस्या मध्ये ऊर्ध्वशक्तियुतान् परशूलायुधविशेषान् ध्यायेत्। तत्रैव कर्णिकायां पूर्णगिरिपीठं भवति। तदैहिकामुष्मिकसर्वेच्छासिध्यै साधनमिति। अत्र नवचक्रेषु ध्येयस्वरूपाणां करचरणाद्यवयवोपेत-सगुणमूर्तित्वाभावात् मोक्षैकहेतुत्वं भवितुमर्हति। तत्र तत्र सिद्धिवचनं त्वधिकारिविशेषाभिसन्धिभेदानुसारेणाभिहितमित्यूह्यम्। य एवंविधां सौभाग्यलक्ष्म्युपनिषदं नित्यमधीते सोऽग्निपूतो भवतीत्यादि स्पष्टार्थम्॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ सौभाग्यलक्ष्म्युपनिषद्भाष्यं

समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे श्रीविद्यायोगं सम्यक् प्रतिपाद्य नवचक्राणि च विविच्यते॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (803) B 512 स्कन्दोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8 × 6½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-5

प्रतिपुटं पङ्क्तयः—12
प्रतिपङ्क्त्यक्षराणि—22
कालः (कोशस्य)— ?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

मू—सह नाववत्विति शान्तिः ।
अच्युतोऽस्मि महादेव तव कारुण्यलेशतः ।
विज्ञान घन एवास्मि शिवोऽस्मि किमतः परम् ॥
न निजं निजवद्भात्यन्तःकरणजृम्भणात् ।
अन्तः करणनाशेन संविन्मात्रस्थितो हरिः ॥
संविन्मात्रः स्थितश्चाहमेकोऽस्मि किमतः परम् ।
व्यतिरिक्तं जडं सर्वं स्वप्नवच्च विनश्यति ॥
चिज्जडानां तु यो द्रष्टा सोऽच्युतो ज्ञानविग्रहः ।
स एव हि महादेवः स एव हि महाहरिः ॥
स एव ज्योतिषां ज्योतिः स एव परमेश्वरः ।
स एव हि परं ब्रह्म तद्ब्रह्माहं न संशयः ॥

उपसंहारः—

भा—विरिञ्चादि त्रिमूर्तीनामात्मनः परमात्मभूतस्य तव प्रसादतः प्रसन्नतया परोक्ष्येणाविर्भावतः अचिन्त्यादिविशेषणं ब्रह्म निजं स्वस्वरूपाभिन्नं विजानतो विजानातीत्यर्थः । ननु त्रिमूर्तीनां ब्रह्म यथाऽऽत्माऽभूत् तथा ब्रह्मणो वेद आत्मा भवति । कुतः वेदात्मकमित्युक्तत्वात् । वेदः आत्मा यस्य तदिति हि व्युत्पत्तिरुचिता । अत्रोच्यते–त्रिमूर्तीनां यदात्मोक्तं ब्रह्म न तस्य किंचिदपि परमार्थत आत्माऽस्ति । परमसिद्धान्तभूतत्वेन सर्वावशिष्टत्वात् । वेदस्तु तस्य व्यावहारिक आत्मा स्यात् । तदवगतिहेतुत्वात् । अतस्त्रिमूर्त्यात्मत्वं न दृष्टान्तः । निर्गुणशिवविष्णवोरभेदेऽपि सगुणविष्णोर्निर्गुणशिवस्य च भेदात् तद्विष्णोः परमं पदमिति युक्तम् ॥

इति श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षिताचार्यकृतौ स्कन्दोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे शिवविष्ण्वोः शिवजीवयोश्चैक्यं सपरिकरं निरूप्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (804) 1968 स्वात्मनिरूपणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—ताळपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—$14\frac{1}{2} \times 1\frac{3}{8}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—99-105 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यस्य प्रसादात्सहसा वीतरागतमोमलः ।
स्वरूपबोधं सम्प्राप्तस्तं गुरुं प्रणतोऽस्म्यहम् ॥
प्रसादाद्गुरुवर्यस्य यस्य स्वात्मतयाखिलम् ।
पश्याम्येतज्जगत्साक्षात्तं गुरुं प्रणतोऽस्म्यहम् ॥
यदज्ञानादिदं भाति यज्ज्ञानाद्रशनाहिवत् ।
तदेव लीयते यस्मिन् तस्मै ज्ञानात्मने नमः ॥
इहामुत्र च निर्विण्णो वीतसंसारविभ्रमः ।
मुमुक्षुः साधनैर्युक्तो मुनिं शान्तमभाषत ॥
संसारसर्पदष्टं मां त्राहि त्राहि दयानिधे ।
इत्याचार्यं प्रणम्याथ शिष्यः पृच्छति तं पुनः ॥

उपसंहारः—

मद्वचोभिरिदानीं ते नष्टो वा मोहसंशयः ।
उत नेत्याशु सकलं ममात्वमभयं वद ॥
भो भो ब्रह्मन्महाभाग कृतार्थोऽस्मि पुनः पुनः ।
त्वत्प्रसादान्ममेदानीं नष्टो मोहश्च संशयः ॥

भक्तिश्रद्धाविहीनाय वृथा पण्डितमानिने ।
रागद्वेषाग्नितप्ताय न देयं ज्ञानमात्मनः ।
रागद्वेषविहीनाय भक्तिश्रद्धानुषङ्गिने ।
मुमुक्षवे विरक्ताय प्रदेयं ज्ञानमात्मनः ॥
यः पठेच्छ्रद्धया चैतन्मह्यं स्वात्मनिरूपणम् ।
स संसारार्णवं तीर्वा सुखमक्षयमश्नुते ॥

इति स्वात्मनिरूपणं सम्पूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे गुरुशिष्यप्रश्नप्रतिवचनरूपेण तत्त्वं पदयोर्लक्ष्यस्वरूपं शरीरेन्द्रियादिभ्यः आकाशादिभ्यश्च व्यतिरिक्तं प्रतिपाद्य, सविकल्पनिर्विकल्पकध्यानस्वरूपं, निर्विकल्पकं ध्यायतो मुक्तिर्भवतीति च प्रतिपाद्यते ॥

No. (805) 1968/3 स्वात्मनिरूपणम्

| | |
|---|---|
| ग्रन्थकर्ता—शंकराचार्यः | प्रतिपुटं पङ्क्तयः—6 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—60 |
| प्रमाणम्—$14\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—99–105 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

यस्य प्रसादात्सहसा वीतरागतमोमलः ।
स्वरूपबोधं संप्राप्तः तं गुरुं प्रणतोऽस्म्यहम् ॥
प्रसादाद्गुरुवर्यस्य यस्य स्वात्मतयाखिलम् ।
पश्याम्येतज्जगत्साक्षात्तं गुरुं प्रणतोऽस्म्यहम् ॥
यदज्ञानादिदं भाति यज्ज्ञानाद्रशनाहिवत् ।
तदेवं लीयते यस्मिन् तस्मै ज्ञानात्मने नमः ॥
इहामुत्र च निर्विण्णो वीतसंसारविभ्रमः ।
मुमुक्षुः साधनैर्युक्तो मुनिं शान्तमभाषत ॥

संसारसर्पदष्टं मां त्राहि त्राहि दयानिधे ।
इत्याचार्यं प्रणम्याथ शिष्यः पृच्छति तं पुनः ॥
स्वस्वरूपमजानानः पृच्छामि त्वां क इत्यहम् ।
ब्रह्मरूपं तदेवाशु सर्वं मे वक्तुमर्हसि ॥

उपसंहारः—

भो भो ब्रह्मन्महाभाग कृतार्थोऽस्मि पुनः पुनः ।
त्वत्प्रसादान्ममेदानीं नष्टो मोहश्च संशयः ॥
भक्तिश्रद्धाविहीनाय वृथा पण्डितमानिने ।
रागद्वेषाग्नितप्ताय न देयं ज्ञानमात्मनः ॥
रागद्वेषविहीनाय भक्तिश्रद्धानुषङ्गिने ।
मुमुक्षवे विरक्ताय प्रदेयं ज्ञानमात्मनः ॥
यः पठेच्छ्रद्धया चैतद्गुह्यं स्वात्मनिरूपणम् ।
स संसारार्णवं तीर्त्वा सुखमक्षयमश्नुते ॥

इति स्वात्मनिरूपणं सम्पूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे तत्त्वंपदयोर्लक्ष्यार्थ वाच्यार्थ निरूपण पूर्वकं तयोरैक्यं निरूप्य, ध्यानं निर्विकल्पसमाधिश्च प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते । शंकराचार्यकृतात्स्वात्मनिरूपणग्रन्थाद्वैलक्षण्यं महदस्मिन्ग्रन्थे संदृश्यते । अतः इदं प्रकरणं किंकर्तृकमिति न ज्ञायते ॥

## No. (806) 1968/2 स्वात्मप्रकाशः

ग्रन्थकर्ता—शंकराचार्यः
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—$14\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि
लिपिः—नागरीलिपिः
पत्राणि—96–99

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—60
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः—

यस्यान्तःस्थमिदं विश्वं येन सर्वं प्रकाशते ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥
स्वरूपावारकाज्ञानग्रहो येन निराकृतः ।
तद्बोधदेशमन्त्रेण तस्मै श्रीगुरवे नमः ॥
एकानेकस्वरूपाय विश्वातीतचिदात्मने ।
सर्वभूतात्मभूताय साक्षिणे ब्रह्मणे नमः ॥
आपादमूर्ध्निपर्यन्तमन्तर्ब्रह्माण्डकोटरे ।
कोऽहं स्यामिति यत्नेन चिन्तयामि सदा धिया ॥
क्षरो दृश्यास्थिसंयुक्तस्त्वङ्मांसरुधिरावृतः ।
नवरन्ध्रान्वितः स्थूलो देहो नाहमचेतनः ॥
इन्द्रियाणि तथा नाहमेकैकग्राहकाणि च ।
परस्परमसङ्गीनि ह्याश्रितानि मनोधिपौ ॥

उपसंहारः—

आत्मन्येवात्मना चित्तं प्रविलाप्य पुनः पुनः ।
निश्चलोऽहमसङ्कल्पो निवाताम्भ इव स्थितः ॥
दृष्ट्वेवेदं जगत्सर्वं द्रष्टुरन्यन्न विद्यते ।
द्रष्टृत्वेन जगद्भाति द्रष्टैवाहमिति स्थितः ॥
अनन्तोऽहमचिन्त्योऽहमहमाकाशवद्विभुः ।
अव्ययोऽहमखण्डोऽहं चिन्मात्रोऽहमिति स्थितः ॥
दृश्यं नाहमयं देहो नाहमेभ्यो विलक्षणः ।
संविन्मात्रोऽहमित्येतत्स्वरूपं प्रोक्तवानहम् ॥
इतीमं श्रद्धया युक्तः पठेत्स्वात्मप्रकाशकम् ।
भवबन्धात्सनिर्मुक्तो महत्पदमवाप्नुयात् ॥

इति स्वात्मप्रकाशकः समाप्तः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे देहेन्द्रियप्राणमनोबुद्ध्यादिभ्यो विलक्षणं स्वप्रकाशसदानन्दैकरूपमात्मत्वेन ज्ञात्वा मुच्यते इत्ययमर्थः स्पष्टं निरूप्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। मुद्रितश्च दृश्यते कर्तुर्नाम स्पष्टं न ज्ञायते ॥

## No. (807) 4619 स्वानुभवामृतम्

| | |
|---|---|
| ग्रन्थकर्ता—बालकृष्णब्रह्मानन्दराजयोगी | प्रतिपुटं पङ्क्तयः—8 |
| पत्र विशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—38 |
| प्रमाणम्—$8\frac{1}{4} \times 1\frac{1}{2}$ अङ्गुलानि | कालः (कोशस्य)—185 वत्सराः स्युः |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—120 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ध्यात्वा श्रीगुरुपदाम्भोजं नत्वा गणपतिं यतिः।
नत्वाम्बां शारदाम्बां च लिखत्यनुभवामृतम् ॥ १ ॥
ब्रह्मैवासावेकवक्त्रो विष्णुर्द्विभुज एष कः।
अग्निनेत्रोऽपि रुद्रोऽयं वेदव्यासोऽस्तु धीप्रदः ॥ २ ॥
ग्रन्थोऽयं प्राकृत इति नोपेक्ष्यास्त्वार्यकोविदैः।
वस्तुदर्पणमेवेति पश्यतां पण्डितैर्द्विजैः ॥ ३ ॥
प्राचीनैः पण्डितैरुक्तं वेदान्तार्थं यतिः स्वयम्।
लिलेख माननायैव मुदे भक्तिमतां सताम् ॥ ४ ॥
निस्त्वग्रम्भाफलं यद्वन्निस्त्वगिक्षुर्यथा तथा।
अनुष्णक्षीरवत्सर्वैः सेव्यं ह्यनुभवामृतम् ॥ ५ ॥
ग्रन्थेन सुलभेनैव स्वयमात्मानमात्मनि।
ज्ञात्वा संस्कृतार्थैः स्यात्किमन्यैः शास्त्रविस्तरैः ॥ ६ ॥

उपसंहारः—

सार्धसहस्रैः श्लोकैर्वर्धितमिदमनुभवामृतम् पूर्णम्।
श्रद्धा निषेव्यं सिद्धैरनुभूयमानमिह पूर्णा ॥

श्रीमुखशरदुदगयने पुष्ये सितसप्तमी बुधे हस्ते।
मालासर्पशकेऽस्मिन्मूलानुभवामृतं त्वभूत्पूर्णम् ॥

दीक्षितेभ्यश्च शास्त्रिभ्यो वेदविद्भ्यः सद्भ्यः।
संसारपक्षपातिभ्योऽस्तु नारायणस्मृतिः ॥

वर्ततां वर्धतां लोके ग्रन्थोऽयं साधु सर्वत्र।
गुरुदेवद्विजातीनामाशिषः सन्तु सर्वदा ॥

इति श्रीमत्परमहंसबालकृष्णब्रह्मानन्दराजयोगिप्रतीते स्वानुभवामृतग्रन्थे निर्गुणाराधनकथनं नाम त्रयोदशोऽध्यायः। ग्रन्थोऽयं समासः

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे प्रथमाध्याये अधिकारिनिर्णयः, द्वितीये वैराग्यं, तृतीये त्वंपदार्थनिरूपणं, चतुर्थे तत्पदार्थनिरूपणं, पञ्चमे प्रतिपक्षार्थनिरूपणं, षष्ठे सप्तभूमयः, सप्तमे श्रवणमनननिदिध्यासननिरूपणं, अष्टमे परमात्मपदनिरूपणं, नवमे मायानिरसनं, दशमे जीवत्रयनिरूपणं, एकादशे मुक्तिः, द्वादशे योगिचरितवर्णनं, त्रयोदशे निर्गुणाराधनकथनं चेति प्रतिपादिताः ॥

वक्तव्यविशेषः—

अमुद्रितोऽयं ग्रन्थः।

## No. (808) B 270 स्वानुभूतिः (केरळ भाषा)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—12 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि —16 |
| प्रमाणम्—$7\frac{3}{8} \times 6\frac{3}{4}$ अङ्गुलानि | कालः (कोशस्य)— ? |
| लिपिः—मलयाळलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-72 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

ஓங்காமத், ஜீவன்முக்திப்ரகரணம்.

ஈசாவாஸ்யம் முதலிய ஸகல உபநிஷதர்த்தக்களெயும் நல்லவண்ணம் அறிஞ்ஞவரும் சாஸ்த்ரங்ஙளில் சொல்லிய குருலக்ஷணம் திகஞ்ஞவரும் மஹாதயாளுவாயும் இரிக்குந்ந ஸத்குருநருந்தரேச்வரதாதபாதரவர்களுடெ க்ருபயால் ப்ரம்ம மீமாம்ஸாபாஷ்யம், அனுபூதி மீமாம்ஸாபாஷ்யம் முதலாய க்ரந்தங்ஙளில் ஸகல வேதாந்தார்த்தங்ஙளெயும் முமுக்ஷுக்கள்க்கு உபகாரமாகும் விதம் ஹஸ்தாமலகம் போலே வ்யக்தமாய் காணிச்சிருந்நாலும் நித்யாநித்ய விவேகம் முதலாய ஸாதனசதுஷ்டயம் உள்ளவரும் கீர்வாண சாஸ்தரம் அறியாத்தவருமாய அதிகாரிகளுக்கு வேண்டி கேரள பாஷயில் மேப்படிபாஷ்யங்களில் சொல்லிய அர்த்தத்தே சுருக்கமாய் இதில் காணிக்குந்நு.

उपसंहारः—

மேல்பறஞ்ஞானுஸரித அதிவர்ணாச்ரமங்ஙளெ நிர்விகல்பாதி மாதிகளால் ப்ராபிச்சு க்ருதக்ருத்யன்மாராய ஸத்புருஷன்மார் ஈலோகத்தில் துர்லபமாகையால் காகதாளீயந்யாயம் போலே எப்போளெங்ஙிலும் அங்ஙிநெயுள்ள மஹாபுருஷனெ கண்டால் முமுக்ஷுக்கள் வளரெ பூஜிக்கேண்டதாகுந்நு.

6—மது விவேகமுக்திப்ரகணம் ஸமாப்தம். இப்ரகாரம் ஸத்குரு ஸுந்தரேச்வர தாதபாத சிஷ்யராய அப்பயதீக்ஷிதாசார்யரால் செய்யப்பட்ட ஸ்வானுபூதி ஸமாப்தம்.

[मलयाळलिप्यभावात् द्राविडलिप्या मुद्रिता]

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जीवन्मुक्तलक्षणादिकं, महावाक्यार्थः, सप्तभूमिकाषोडशावस्थानां विवेकः, जीवन्मुक्तिविदेहमुक्त्योः साधनानि च निरूप्यन्ते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (809) 2737 स्वाराज्यसिद्धिः (सव्याख्या)

ग्रन्थकर्ता—गङ्गाधरेन्द्रसरस्वती
पत्रविशेषः—ताळपत्रात्मकः
प्रमाणम्—17 × 1½ अङ्गुलानि
लिपिः—आन्ध्रलिपिः
पत्राणि—1-126

प्रतिपुटं पङ्क्तयः—6
प्रतिपङ्क्त्यक्षराणि—72
कालः (कोशस्य)—?
स्थितिः—शिथिला
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

तरुणतपनवर्णं कर्णलीलावधूत-
भ्रमरनिवहगुञ्जाकर्णनोद्भूतहर्षम् ॥
अमरवरकिरीटोद्धृष्टपादाब्जमन्तः ।
स्फुरतु दळितविघ्नं दन्तिवक्त्रं महो नः ॥

नः ॥ (1-12)

प्रारीप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्ति प्रचयगमनादिसिद्धये स्वेष्टदैवतं साम्बमीश्वरं सगुणनिर्गुणरूपाभ्यामनुसन्दधानः प्रकृतग्रन्थावान्तरप्रयोजनस्य ब्रह्मात्मैकत्वज्ञानस्य "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" "तपःप्रभावाद्देवप्रसादाच्च, ईश्वराज्ज्ञानमन्विच्छेत्," "तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥" मत्तः स्मृतिर्ज्ञानमपोहनं च" इत्यादिश्रुतिस्मृतिसहस्रेभ्यः परमेश्वरप्रसादायत्तत्वावगमात्तत्प्राप्त्यर्थं भक्तिश्रद्धाप्रणिपातपुरःसरं तमीश्वरं प्रार्थयमानो विशिष्टविषयप्रयोजनसंबन्धाधिकारिलक्षणमनुबन्धचतुष्टयमर्थाद्दर्शयति—गङ्गेत्यादिना ॥

उपसंहारः—

अत्र गन्धारप्रतिपत्तिदार्ष्टान्तिकत्वेनात्मवेदनं निर्दिशन्ती श्रुतिः "विस्मृतकण्ठचामीकर" न्यायेनात्मनो ज्ञानमेव लाभो नान्यादृश इति स्पष्टतरं दर्शयतीति ज्ञानलाभ एवात्मसाम्राज्यलाभ इति सिद्धम् ॥

विधूय विमतध्वान्तमान्तरे परिशोषिते ।
प्रतीचि जगदध्यासादध्यारोपोऽत्र दर्शितः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्रामचन्द्रसरस्वतीपूज्यपादशिष्येण गङ्गाधरसरस्वत्याख्यभिक्षुणा विरचितायां आत्मसाम्राज्यसिद्धिव्याख्यायां कैवल्यकल्पद्रुमाख्यायामध्यारोपप्रकरणाख्यं पूर्वार्धं सम्पूर्णम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे शास्त्रारम्भसमर्थनं, ज्ञानकर्मसमुच्चयनिरासः, तत्त्वंपदार्थयोर्वाच्यार्थलक्ष्यार्थप्रतिपादनपूर्वकं अद्वैते ब्रह्मणि वेदान्तानां समन्वयप्रतिपादनम्, कापालिकादीनां देहाद्यात्मवादिनां मतखण्डनम्, जीवस्वरूपप्रतिपादनम्, अध्यासस्यानर्थपर्यवसायित्वमित्यादयो विषयाः मूलव्याख्याभ्यां स्पष्टं प्रतिपाद्यन्ते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे पूर्वार्धमात्रं विद्यते। मुद्रितश्च (चेन्नपुर्याम्) दृश्यते।

## No. (810) A 722 स्वाराज्यसिद्धिः (सव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता - गङ्गाधरेन्द्रसरस्वती | प्रतिपुटं पङ्क्तयः—20 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—28 |
| प्रमाणम्—13×8 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—1-106 | समग्रोऽसमग्रो वा—असमग्रः |

उपक्रमः—

2737 कोशवत्।

उपसंहारः—

2737 कोशवत्।

प्रतिपाद्यविषयः—

2737 कोशवत्।

वक्तव्यविशेषः—

2737 कोशवत्।

## No. (811) 2035/7 षड्विधलिङ्गप्रकरणम्

| | |
|---|---|
| ग्रन्थकर्ता—? | प्रतिपुटं पङ्क्तयः—8 |
| पत्रविशेषः—तालपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—50 |
| प्रमाणम्—13½×6 अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—नागरीलिपिः | स्थितिः—समीचीना |
| पत्राणि—156-158 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

इदानीं श्रुतितात्पर्यनिर्णायकषड्विधलिङ्गस्वरूपं निरूप्यते। उपक्रमोपसंहाराभ्यासापूर्वफलार्थवादोपपत्तिभेदात् लिङ्गं षड्विधम्। तत्रोपक्रमोपसंहारयोरेकलिङ्गत्वेन न लिङ्गषट्कविरोधः। एतेषां लीनश्रुतितात्पर्यबोधकत्वं लिङ्गत्वम्। तत्र "सदेव सोम्येदमग्र आसीदि" त्यादिना सृष्टेः पूर्वं नामरूपरहितं सत्तामात्रं जगत्स्थितमिति प्रतिपादनमुपक्रमः॥ इत्यादिः॥

उपसंहारः—

तेषामुच्चारणमात्रं विषयत्वमेव कारणीभूतमृदाद्यतिरिक्तत्वं नास्तीति प्रतिपादनं प्रसिद्धतया भासमानस्य जगतः प्रत्यगात्मस्वरूप परब्रह्मविकारत्वेन ..... .... तत्प्रतिपादकयुक्तिः जगतः प्रत्यगात्मस्वरूपाद्भिन्नत्वप्रतिपादिका सती प्रत्यगात्मनोऽद्वितीयत्वं सूचयति। अतः षष्ठं लिङ्गम् तथा च एतत् षड्विधलिङ्गैः श्रुतितात्पर्यं यस्तु निश्चिनोति तस्याद्वितीयात्मतत्त्वज्ञानमव्याहतं भवतीति सर्वमुपपन्नम्। इति षड्विधलिङ्गप्रकरणम्॥

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गस्वरूपं निरूप्य सदेवेत्यादिछान्दोग्यश्रुतौ तेषां समन्वयश्च प्रतिपादितः॥

वक्तव्यविशेषः—

अमुद्रितः।

## No. (812) C 444 षोडशप्रकरणम्

ग्रन्थकर्ता—?
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—9×5½ अङ्गुलानि
लिपिः—देवनागरीलिपिः
पत्राणि—86-113

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—28
कालः (कोशस्य)—1623
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—असमग्रः

उपक्रमः—

परिपूर्णसच्चिदानन्दस्वरूप आत्माहमिति मां विना जगन्नास्त्येव; मिथ्याभूतत्वात्, जगता मम स्पर्श एव नास्तीति संशयसंभावना विपरीतभावना न सन्तीति जानाति स एव मुक्तः स एव विद्वान्, स एव सर्वशास्त्रप्रतिपाद्यः स एव सर्वेषां पूज्यः इति शास्त्रसिद्धान्तः। एतस्मिन्नर्थे संशयलेशोऽपि नास्तीति सिद्धम्। इति शरीरत्रयप्रकरणम्; पञ्चदशवर्णकं समाप्तम्॥

तापत्रयप्रकरणम्। अतः परं तापत्रयं निरूपयामः। आध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रिधा। आध्यात्मिकं नाम शरीरमधिकृत्य विद्यमानक्षयरोग शीतज्वरसन्निपातादिकम्॥

उपसंहारः—

अयमर्थः कुत्र निरूपित इत्युक्ते, सङ्क्षेपकाचार्यः सर्वाणि पुराणानि संशोध्य तमेव पुराणार्थं संक्षेपशारीरके निरूपयांचकुः। तद्वाक्यं कीदृशमित्युक्ते, वदामः—पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयापि यथा। न फलाय भर्जुविषया भवति श्रुतिसंभवापि तु तथात्मनि धीः॥ पुरुषापराधविगमे तु पुनः प्रतिबन्धकव्युदसनात्सफला। मणिमन्त्रयोरपगमे तु यथा सति पावकाद्भवति धूमलता॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यशिष्यविरचितं षोडशप्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

2035 कोशवत्।

वक्तव्यविशेषः—

अस्मिन् कोशे विंशति प्रकरणानि सन्ति। 3025 तमकोशात् प्रकरणानि न्यूनानि; ब्रह्मचर्यप्रकरणं, अध्यात्मनिरूपणम, ब्रह्मविदादिस्वरूपप्रकरणमित्येवं त्रीणि प्रकरणानि तस्मिन्नविद्यमानानि अस्मिन्नधिकानि दृश्यन्ते, शब्दविपर्यासादिकं च परस्परं संदृश्यते, वस्तुतस्तु, 4659, 2035, C 444, एतत्त्रयाणामपि, कर्ता एक एवेति गम्यते॥

## No. (813) 1310/2 षोडशमञ्जरी (सव्याख्या)

ग्रन्थकर्ता —अप्पय्यदीक्षिताचार्यः
पत्रविशेषः —ताळपत्रात्मकः
प्रमाणम् —$18\frac{1}{4} \times 1\frac{3}{4}$ अङ्गुलानि
लिपिः —ग्रन्थलिपिः
पत्राणि —1–18
प्रतिपुटं पङ्क्तयः —5
प्रतिपङ्क्त्यक्षराणि —92
कालः (कोशस्य) —?
स्थितिः —समीचीना
समग्रोऽसमग्रो वा —समग्रः

उपक्रमः—

अक्ष्याद्यायतनस्थमग्निकणवल्लक्ष्यात्मरूपं पुरा
पक्ष्यादिं क्रममुक्त्युपास्यमनिशं रक्ष्यात्मभिः सज्जनैः ।
कुक्ष्यापूर्तिरतैस्तु नैव कुमतैः कक्ष्यातिगं यत्परं
भक्ष्याभक्ष्यविभागशून्यविमुखं वक्ष्यामि तन्निष्कळम् ॥

वेदान्तप्रतिपाद्यमेकममलं नादान्ततेजोमयं
पादातीतमिह त्रिरूपमचलं पादामृतं जानतः ।
वादानर्हमचिन्त्यमूर्ध्वकथितं पादाच्च तुर्याच्छ्रुतेः
भेदाभेदसुखासुखादिसकलच्छेदात् स्वयं सिध्यति ॥

अत्र खल्वीशावास्यादिमुक्तिकान्ताष्टोत्तरशतोपनिषद्रहस्यार्थगर्भितान्तःकरणेन मया ब्रह्ममीमांसानुभूतिमीमांसादिषु ज्ञानानुभवार्थकेषु प्रबन्धविशेषेषु विरचितपूर्वेषु सत्स्वपि ग्रन्थविस्तरभयात्तदध्ययनादिविमुखानां नित्यानित्यविवेकादिसाधनचतुष्टयसंपन्नानां च सतामधिकारिणां करामलकवत्सर्ववेदान्तप्रसिद्धसच्चिदानन्दलक्षणपरमात्मैक्यापरोक्षानुभवोपायप्रदर्शनार्थमष्टोत्तरशतश्लोकगर्भितं सव्याख्यं षोडशप्रकरणोपेतं षोडशमञ्जर्याख्यं प्रकरणमारभ्यते ॥

उपसंहारः—

यतो ब्रह्मणश्चातुर्विध्यमतो ब्रह्मविदामतिवर्णाश्रमिणामपि चातुर्विध्यसिद्धिः । ब्रह्मवेद ब्रह्मैव भवतीति श्रुतेर्ब्रह्मब्रह्मविदोरभेदावगमात् । किं च चतुर्विधस्वरूपानुसन्धानेन देहत्यागं कुर्यादिति परिव्राजकश्रुत्या साक्षादेव स्वरूपस्य चातुर्विध्यमुक्तं भवति । तस्मादतिवर्णाश्रमिचातुर्विध्यस्य सप्रमाणत्वात् परिणामवादानुरोधेन भ्रमरकीटन्यायमाश्रित्य

ब्रह्मात्मैक्यानवरतानुसन्धानेन सप्तमभूमिकाविषयिणी विदेहमुक्तिः प्राप्णीयेति सिद्धम् ॥

इति भस्मान्तशरीर श्रीमत्सुन्दरेश्वरतातपादशिष्याप्पयदीक्षितस्य अप्पयदीक्षितेन्द्रान्वयजस्य कृतिषु षोडशमञ्जर्याख्यं प्रकरणं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे ब्रह्मणस्त्रिलिङ्गकत्वं, सत्यादिविद्या, अष्टाङ्गयोगः, साधनचतुष्टयं, श्रवणमनननिदिध्यासनानि, जीवस्याणुत्वमहत्वचिन्तनं, जीवन्मुक्तविदेहमुक्तयोरनुभवः, चतुर्विधमहावाक्यार्थविचारः, दशद्वात्रिंशदष्टोत्तरशतोपनिषदामनुबन्धचतुष्टयनिरूपणं, सप्तभूमिकाः, साञ्चितादिकर्मक्षयविचारः, अणिमादिसिद्धीनां हेयत्वं च सम्यक्प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

## No. (814) B 241/2 षोडशमाला (सव्याख्या)

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—15 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—24 |
| प्रमाणम्—6½ × 3¼ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—ग्रन्थलिपिः | स्थितिः—शिथिला |
| पत्राणि—1-35 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सुन्दरेश्वरतातारव्यं सद्गुरुं शान्तमानसम् ।
नत्वा षोडशमालाख्यं ग्रन्थं विरचयाम्यहम् ॥

अत्र खल्वष्टोत्तरशतोपनिषद्भाष्य ब्रह्ममीमांसानुभूतिमीमांसा गीता-भाष्यभागवतैकादशव्याख्यादिषु प्रबलतरप्रबन्धेषु लोकोपकारार्थमस्माभिः प्रणीतेष्वपि बहुविस्तारवत्तया तदध्ययनाद्यवकाशरहितानां मुमुक्षूणां सद्योमुक्तेः क्रममुक्तेर्वा संसिध्यै सर्वोपनिषद्रहस्यार्थान् सङ्ग्रहेण प्रदर्शयितुमिदं षोडशमालाख्यं प्रकरणमारभ्यते । सव्याख्यस्यास्य प्रकरणस्याभ्यासमात्रेण जननमरणसंसारात्मकसर्वानर्थनिवृत्तिद्वारा नित्यशुद्धबुद्ध-

मुक्तस्वभावकेवलपरब्रह्मप्राप्तिलक्षणकैवल्यमुक्त्यानन्दावाप्तिं सर्वेषामप्यनायासमेवोत्पादयितुं वयमेव लग्नका भूत्वा श्रीमद्बादरायणाचार्यविरचितब्रह्मसूत्रानुरोधेन ब्रह्मजिज्ञासां प्रस्तुत्य हृदयग्रन्थिभेदसर्वसंशयच्छेदसर्वकर्मक्षयहेतुभूतपारावारपरमात्मसम्यग्दर्शनसाधनानां अनतिविस्तरेण प्रतिपिपादयिषया प्रारिप्सितेऽस्मिन्प्रकरणे मुमुक्षूणां परमश्रद्धा भवत्विति सद्गुरुचरणारविन्दध्यानात्मकमङ्गळाचरणपूर्वकं सरळतरवाक्यसन्दर्भैः सूत्रं प्राथमिकमित्यादि प्रथमश्लोकमुपक्रम्य व्याख्यास्यामहे—

मू—सूत्रं प्राथमिकं प्रमेयविषयं वैयासिकं यन्मतं
तार्तीयीकमपि प्रमाणविषयं यच्च स्फुटं दृश्यते ।
तत्संसिद्धमिदं प्रमातृविषयं मध्यस्थमत्यस्फुटं
जीवस्यैव हि मातृता कथमिदं तस्योद्भवाभाववाक् ॥

उपसंहारः—

तेषु यं कंचन लोकं प्रपद्य "वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" । इति श्रुतेः,

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ॥

इति स्मृतेः, "कार्यात्यये तदध्यक्षेण सहातः परमभिधाना" दितिसूत्राच्च परात्परं नित्यमविनाशि अमृतं तद्ब्रह्मैव प्रविवेश । ब्रह्मप्रविष्टस्य न पुनरावृत्तिरस्ति—"न च पुनरावर्तत" इति श्रुतेः । अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राच्चापुनरावृत्तिश्रवणात् । ननु ब्रह्मलोकप्राप्तिद्वारेणैव परमपदप्रवेशदर्शनाद्विष्णुलोकरुद्रलोकयोरश्रौतत्वप्रसङ्ग इति चेन्नायं दोषः; ब्रह्मलोकेष्विति श्रुतौ बहुवचनेन ब्रह्मलोकान्तर्गतयोरेव तारतम्येन ब्रह्मलोकापेक्षयोत्कृष्टयोर्वैकुण्ठकैलासाख्ययोः स्थानयोर्विद्यमानत्वात् । उक्तार्थस्यानुभूतिमीमांसादिषु निपुणमुपपाद्यत्वादलमतिप्रपञ्चेन । "श्रुतोपनिषत्कगत्यभिधानाच्चेति" सूत्रेण ज्ञानिन इव प्रकृताक्षिपुरुषविदोऽपि देवयानमार्गदर्शनात् व्यक्तममुक्तिसिद्धिरित्यवगन्तव्यम् ॥

इति श्रीमदप्पयदीक्षितेन्द्रान्वयोद्भवस्याप्पयदीक्षितस्य कृतिषु षोडशमालिका समाप्ता

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे जीवब्रह्मणोः स्वरूपं, तयोः शेषशेषित्वमंशांशित्वं कार्यकारणत्वं च, विवर्तवादपरिणामवादयोः पौर्वापर्यं उत्तमादिभेदेन अधिकारिभेदे तेषां साधनानि, ससाधनो योगः, विदेहकैवल्यरूपं फलं च सम्यक्प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (815) B 513 हंसोपनिषद्भाष्यम्

| | |
|---|---|
| ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः | प्रतिपुटं पङ्क्तयः—11 |
| पत्रविशेषः—कागदपत्रात्मकः | प्रतिपङ्क्त्यक्षराणि—22 |
| प्रमाणम्—$7\frac{1}{2} \times 6\frac{1}{4}$ अङ्गुलानि | कालः (कोशस्य)—? |
| लिपिः—आन्ध्रलिपिः | स्थितिः—समीचीना |
| पत्राणि—101–108 | समग्रोऽसमग्रो वा—समग्रः |

उपक्रमः—

सू—ओं पूर्णमद इति शान्तिः ।
भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
ब्रह्मविद्याप्रबोधो हि येनोपायेन जायते ॥
सनत्कुमार उवाच—
विचार्य सर्वधर्मेषु मतं ज्ञात्वा पिनाकिनः ।
पार्वत्या कथितं तत्त्वं शृणु गौतम तन्मतम् ॥
आनाख्येयमिदं गुह्यं योगिने कोशसन्निभम् ।
हंसस्य कृतिविस्तारं भुक्तिमुक्तिफलप्रदम् ॥

अथ हंसपरमहंसनिर्णयं व्याख्यास्यामो ब्रह्मचारिणे दान्ताय गुरुभक्ताय हंस हंसेति सदा ध्यायन् सर्वेषु देहेषु व्याप्य वर्तते ।

उपसंहार:—

भा—अन्यथा तस्योपासकस्य परब्रह्मताया औपचारिकत्वप्रसङ्गात्। केवलनादानुभवमात्रेण ब्रह्मणि विलीनमनसः पुरुषस्य सुप्तिमूर्छादाविव सामान्यलयवत्तुप्रसङ्गाच्च। तस्मादिति। यस्माच्छ्रवणादिद्वारा ब्रह्मणि लीनमना भवति तस्मान्मनसि विलीने मनोगतसङ्कल्प-विकल्पे च दग्धे सति पुण्यपापे च दह्येते इति शेषः। तदा सदाशिवः प्रकाशयति। स्वयं प्रकाशते। साधकस्यात्मानं स्वाभिन्नत्वेन भासयतीति वा। कथंभूतः सदाशिव इत्यत आह—ओंकारशक्त्यात्मेत्यादि स्पष्टार्थः॥

इत्यप्पय्यदीक्षिताचार्यकृतौ द्वात्रिंशोपनिषद्भाष्ये हंसोपनिषद्भाष्यं समाप्तम्

प्रतिपाद्यविषय:—

अस्मिन्ग्रन्थे हंसविद्या सपरिकरं निरूप्यते।

वक्तव्यविशेष:—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते। अमुद्रितश्च ज्ञायते॥

## No. (816) B 514 हयग्रीवोपनिषद्भाष्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेष:—कागदपत्रात्मक:
प्रमाणम्—$7\frac{1}{2}\times6\frac{1}{4}$ अङ्गुलानि
लिपि:—आन्ध्रलिपिः
पत्राणि—173-180

प्रतिपुटं पङ्क्तयः—11
प्रतिपङ्क्त्यक्षराणि—22
काल: (कोशस्य)—?
स्थिति:—समीचीना
समग्रोऽसमग्रो वा—समग्र:

उपक्रम:—

मू-ओं भद्रं कर्णेभिरिति शान्तिः।

ओं नारदो ब्रह्माणमुपसमेत्योवाच॥ अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां ययाऽचिरात्सर्वपापं व्यपोह्य ब्रह्मविद्यां लब्ध्वा ऐश्वर्यवान् भवति।

ब्रह्मोवाच—हयग्रीवदैवत्यान् मन्त्रान् यो वेद सश्रुतिस्मृतीतिहास-पुराणानि वेद स सर्वैऽश्वर्यवान् भवति।

त एते मन्त्राः—

विश्वोत्तीर्णस्वरूपाय चिन्मयानन्दरूपिणे ।
तुभ्यं नमो हयग्रीव विद्याराजाय विष्णवे ॥

स्वाहा स्वाहा नमः ।

ऋग्यजुस्सामरूपाय वेदाहरणकर्मणे ।
प्रणवोद्गीथवपुषे महाश्वशिरसे नमः ॥

स्वाहा स्वाहा नमः ।

उपसंहारः—

भाः—सकलसाम्राज्यस्य मुक्तिस्वरूपत्वात्तेन सिद्धिं कुर्वंति । तानेतान् न्त्रान् यो वेद सोऽपवित्रोऽपि पवित्रो भवतीत्यादि स्पष्टार्थम् । गृहपतिर्गृहमिव देही जीवः । देहान्ते गृहस्थानीयं परमात्मानं निर्गुणं प्रविशति । प्रज्ञानं ब्रह्मेत्यादिमहावाक्यचतुष्टयेन रहस्योपनिषदि व्याख्यातेन योऽर्थः प्रतिपादितस्तं ब्रह्मात्मैक्यरूपमर्थं त एते हयग्रीवमन्त्राः प्रतिपादयन्ति । स्वरव्यञ्जनभेदेन तु हयग्रीवमन्त्रः सगुणनिर्गुणपरतया द्विधायते । अथ हयग्रीवमन्त्रजपानन्तरम् अनुमन्त्रान्वक्ष्यमाणान्जपति ॥

इति श्रीमत्सुन्दरेश्वरवातपादशिष्याप्पयदीक्षिताचार्यकृतौ हयग्रीवोपनिषद्भाष्यम् समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे हयग्रीवमन्त्राः सर्षिच्छन्दोदैवताः, हयग्रीवस्य च सगुणनिर्गुणभेदेन द्वैविध्यं च प्रतिपाद्यते ॥

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ॥

## No. (817) B 241/1 हरिहरब्रह्मसामरस्यम्

ग्रन्थकर्ता—अप्पय्यदीक्षिताचार्यः
पत्रविशेषः—कागदपत्रात्मकः
प्रमाणम्—8×6½ अङ्गुलानि
लिपिः—ग्रन्थलिपिः
पत्राणि—1–208

प्रतिपुटं पङ्क्तयः—16
प्रतिपङ्क्त्यक्षराणि—20
कालः (कोशस्य)—?
स्थितिः—समीचीना
समग्रोऽसमग्रो वा—समग्रः

उपक्रमः —

श्रीमन्तं सद्गुरुं नत्वा वाग्विभूतिप्रदं हृदि ।
श्रौतं हरिहरब्रह्मसामरस्यं विधीयते ॥

अत्र खलु श्रुतिस्मृतीतिहासपुराणागमाख्यानां प्रसिद्धानां प्रमाणानामुत्तरोत्तरदौर्बल्येन पूर्वपूर्वप्राबल्याच्छ्रुतिरेव सर्वत्राकुण्ठितगतिरिति सर्वशिष्टसंमतम् । तत्रापि श्रुतिशिरोभूतानामुपनिषदां सर्वप्रमाणोत्तमत्वं प्रसिद्धम् । यदनुसारीण्येव स्मृत्यादिवाक्यानि यदुपब्रह्मणानीति यत्स्वरूपबुध्या शिष्टा उरीकुर्युः । तासु श्रीरामचन्द्रसङ्गृहीतास्वीशावास्यादिमुक्तिकान्ताष्टोत्तरशतोपनिषत्सु नित्यशुद्धबुद्धमुक्तस्वभावनिर्गुणनिष्कळादिशब्दगम्यपरब्रह्मपराणां कासांचिदुपनिषदां उमासहायत्व परमेश्वरत्व त्रिलोचनत्व नीलकण्ठत्व चन्द्रचूडत्वादिगुणविशिष्टपरमशिवपराणां कासांचिदुपनिषदां लक्ष्मीसहायत्व परमपुरुषत्व शङ्खचक्रगदापद्मधरत्व नीलमेघश्यामलत्व वनमालित्वादिगुणविशिष्टमहाविष्णुपराणां

उपसंहारः—

तत्त्वज्ञानमिति । वा अहस्ये श्रुतिशिरसि सरस्वतीरहस्योपनिषदि इत्यर्थः । ऋषयो ह वै भगवन्तमाश्वलायनं संपूज्य पप्रच्छुः । "केनोपायेन तज्ज्ञानं प्रसादार्थावभासकम् । यदुपासनया तत्त्वं जानासि भगवन्वद" । इत्युपक्रम्य सरस्वतीदशश्लोक्या सऋचा बीभत्समिश्रयः स्तुत्वा जप्त्वा परां सिद्धिमलभन्मुनिपुङ्गवाः । इत्युक्तत्वात् । ब्रह्मपत्न्याः सरस्वत्या उपासनया तत्त्वज्ञानसिद्धिरित्यवगम्यते ।

"आत्मविद्या मया लब्धा ब्रह्मणैव सनातना ।
ब्रह्मत्वं मे सदा नित्यं सच्चिदानन्दरूपतः" ॥

इत्यादिभिरुपरितनश्लोकैः सरस्वत्या उपदेष्टा चतुर्मुख इति चावगम्यते । प्रथमजत्वेन तस्य सर्वदेवोत्तमत्वात् सर्वाराध्यत्वं सिद्धम् । "वेदान्तविज्ञानसुनिश्चितार्था" इत्यादिश्रुत्यन्तरात्तस्य सकलयतिजनोपदेष्टृत्वं च भवति । एवं परमगुरुत्वावगमात् त्रयाणामपि ब्रह्मविष्णुरुद्राणां साम्यं सिध्यतीत्यतः सर्वेषामपि मतस्थानां सामरस्योपपत्तिरिति स्थितम् ।

इति श्रीमदप्पय्यदीक्षितेन्द्रान्वयजस्याप्पयदीक्षितस्य कृतिषु हरिहरब्रह्मसामरस्ये
तृतीयभागः समाप्तः

हरिहरब्रह्मसामरस्यं समाप्तम्

प्रतिपाद्यविषयः—

अस्मिन्ग्रन्थे अष्टोत्तरशतोपनिषद्गतवाक्येषु केषांचिद्ब्रह्मप्रतिपादकानां विष्णुप्रतिपादकानां रुद्रप्रतिपादकानां च वाक्यानां सयुक्तिकं सामरस्यमुपवर्ण्य, तत्प्रतिपाद्यानां ब्रह्मविष्णुरुद्राणां साम्यं च प्रतिपाद्यते ।

वक्तव्यविशेषः—

अस्मिन्कोशे ग्रन्थः समग्रो विद्यते । अमुद्रितश्च ज्ञायते ।

---

WD 4982—GTBPM—500 copies—13-5-66